शिञ्जिनी ज्या च

मूर्वा ज्यातृणविशेषस्तस्य विकारो मौर्वी ॥ ३ ॥ जीवत्यनया जीवा ॥ ४ ॥ गुण्यतेऽभ्यस्यते गुण ॥ ५ ॥ गोभ्यो बाणेभ्यो हिता गव्या स्त्रीक्लीबलिङ्ग, "गो स्वरे य" ॥६।१।२७॥ इति य. ॥ ६ ॥ शिङ्क्ते शब्दायते शिञ्जा ॥ ७ ॥ बाणा अस्यन्तेऽनेन बाणासनम् ॥ ८ ॥ द्रुणति हिनस्ति द्रुणा, द्रवत्यनया शर इति वा ॥ ९ ॥ शिङ्क्ते शिञ्जिनी ॥ १० ॥ जिनाति ज्या "क्वचित्" ॥५।१।१७१॥ इति ड ॥ ११ ॥

गोधा तु तलं ज्याघातवारणम् ॥ ४४० ॥

गुध्यते वेष्ट्यतेऽनया गोधा, भिदादित्वादङि साधु ॥ १ ॥ तलति तलं क्लीबलिङ्ग स्त्रियामपि, वैजयन्तीकारस्तु यदाह– "गोधा तला च ननरौ"। चर्मादिमय ज्याप्रहारानिवारणम् ॥ २ ॥ ४४० ॥

स्थानान्यालीढवैशाखप्रत्यालीढानि मण्डलम् ।

समपादं च

तिष्ठन्त्येभिरिति स्थानानि, जङ्घयोश्चारीनिवृत्तौ स्थितिविशेषा । आलेढि भुवमालीढम् ॥१॥ विशाखस्य स्कन्दस्येद वैशाखम् ॥१॥ प्रतिलोममालीढ प्रत्यालीढम् ॥ १ ॥ मण्डलाकृतित्वाद् मण्डलम् ॥ १ ॥ समौ पादावत्र समपादम् ॥ १ ॥

यद्धनुर्वेद —

अग्रतो वामपाद तु तीक्ष्ण चैवाऽनुकुञ्चितम् ।
आलीढ तु प्रकर्तव्य हस्तद्वयसविस्तरम् ॥ १ ॥
पादौ सविस्तरौ कार्यौ समहस्तप्रमाणत ।
वैशाखस्थानके वत्स ! कूटलक्ष्यस्य वेधने ॥ २ ॥
प्रत्यालीढे तु कर्तव्य सव्यस्तीक्ष्णोऽनुकुञ्चित ।
तिर्यग्वाम पुरस्तत्र दूरापाते विशिष्यते ॥ ३ ॥
समपादे समौ पादौ निष्कम्पौ च सुसङ्गतौ ।
मण्डले मण्डलाकारौ बाह्यतीक्ष्णौ विशेषत ॥ ४ ॥

एते क्लीबलिङ्गा, वैजयन्तीकारस्तु-"तत्र वैशाखमस्त्रियाम्" इत्याह ॥

वेध्य तु लक्षं लक्ष्य शरव्यकम् ॥ ४४१ ॥

वेध्यते वेध्यम् ॥ १ ॥ लक्ष्यते लक्ष "युवर्ण-" ॥ ५ । ३ । २८ ॥ इत्यल्, य एचात " ॥ ५ । १ । २८ ॥ इति ये लक्ष्यम् ॥ २ ॥ ३ ॥ शृणाति शरुहिंस्र, शरवे हित शरव्य "तस्मै हिते" ॥ ७ । १ । ३५ ॥ इति य, एते क्लीबलिङ्गा, वैजयन्ती तु-"वेध्य शरव्य न नरि" इत्याह ॥ ४ ॥ ४४१ ॥

शेषश्चात्र–वेध्ये निमित्तम् ॥

बाणे पृषत्कविशिखौ खगगार्ध्रपक्षौ
काण्डाशुगप्रदरसायकपत्रवाहाः ।
पत्रीष्वजिह्मगशिलीमुखकङ्कपत्र-
रोपाः कलम्बशरमार्गणचित्रपुङ्खाः ॥ ४४२ ॥

बणन्त्यस्मिन् पुङ्खा इति बाण पुंक्लीबलिङ्ग , "व्यञ्जनाद् घञ्" ॥ ५ । ३ । १३२ ॥ तत्र ॥ १ ॥ वर्षति सिञ्चति पृषत्क "निष्कतुरुष्क-" ॥ ( उणा–२६ ) ॥ इति के निपात्यते, पुङ्खादीना पृथक् षट्कमस्येति नैरुक्ता , यद्धनुर्वेद – "पुङ्ख शरस्तथा शल्यं पक्षस्नायुजतूनि षट्" इति ॥ २ ॥ विशेषेण श्यति विशिख "श्यतेरिच्च वा" ॥ ( उणा–८५ ) ॥ इति ख , विविधा शिखा अस्येति वा ॥३॥ खे गच्छति खग ॥ ४ ॥ गृध्रपक्षस्यायं गार्ध्रपक्ष ॥ ५ ॥ कणत्यनेनाऽऽहत काण्ड पुंक्लीबलिङ्ग , "कण्यणि-" ॥ ( उणा–१६९ ) ॥ इति णिद् ड ॥ ६ ॥ आशु गच्छत्याऽऽशुग ॥ ७ ॥ प्रदीर्यतेऽनेन प्रदर ॥ ८ ॥ स्यत्यन्त नयति सायक ॥ ९ ॥ पत्राणि वहति पत्रवाह ॥ १० ॥ पत्राण्यस्य सन्ति पत्री ॥११॥ इष्यति गच्छति इषुस्त्रिलिङ्ग ,"पृका-"॥(उणा–७२९)॥ किदु ॥१२॥ अजिह्ममृजु गच्छति अजिह्मग ॥ १३ ॥ शिलीव मुखमस्य शिलीमुख ॥ १४ ॥ कङ्कस्य पत्राण्यत्र कङ्कपत्र ॥ १५ ॥ रोप्यते लक्ष्ये निखन्यते रोप ॥ १६ ॥ कडति माद्यति कडम्ब , "कृकडि-" ॥ ( उणा–३२१ ) ॥ इत्यम्ब , लत्वे कलम्ब , के शिरसि कृतसधानो-लम्बत इति वा ॥ १७ ॥ शृणाति शीर्यते वाऽनेन शर पुंक्लीबलिङ्ग ॥ १८ ॥ मार्गयति मार्गण नन्द्यादित्वादन ॥१९॥ चित्रा पुङ्खा अस्य चित्रपुङ्ख ॥२०॥४४२॥

शेषश्चात्र–

बाणे तु लक्षहा मर्मभेदन ॥
वीरश्च वीरशङ्कुश्च कादम्बोऽऽप्यस्त्रकण्टक ।

प्रक्ष्वेडनः सर्वलौहो नाराच एषणश्च सः ।

प्रक्ष्वेडते प्रक्ष्वेडन ॥ १ ॥ लोहस्य विकारो लौह , सर्वश्चाऽसौ लौहश्च सर्वलौह ॥२॥नरमञ्चति नराची, नराच्यास्तुल्यो नाराच शर्करादेरण॥७।१।११८॥,नराच्येव वा प्रज्ञादित्वात् स्वार्थेऽण् , नारं नरसमूहमञ्चतीति वा ॥३॥ इष्यतेऽनेन एषण ॥४॥

शेषश्चात्र–

नाराचे लोहनालोऽस्त्रसायक

निरस्तः प्रहितः

निरस्यते स्म निरस्त ॥ १ ॥ प्रहीयते स्म प्रहित , क्षिप्त इत्यर्थ ॥

बाणे विषाऽक्ते दिग्धलिप्तकौ ॥ ४४३ ॥

बाणे विषेणाऽक्ते म्रक्षितपायित इत्यर्थ । दिह्यति स्म दिग्ध ॥ १ ॥ लिप्यते स्म लिप्त ॥ २ ॥ ४४३ ॥

बाणमुक्तिर्व्यवच्छेद

बाणस्य धनुर्यन्त्राद् मुष्टिना मोक्षण बाणमुक्ति ॥ १ ॥ विशेषेण अवच्छिद्यते उद्भिद्यते बाणोऽनेन व्यवच्छेद , यद्धनुर्वेद –

पञ्चाङ्गुलीभिर्युगपत् क्षिप्रश्रेष्ठत्वसिद्धये ।
मोक्षणं यच्च दुर्जेयं त व्यवच्छेदमादिशत् ॥ २ ॥

दीप्तिर्वेगस्य तीव्रता ।

बाणवेगस्य तीव्रता सुदु सहत्वम् , दीप्यते बाणोऽनया दीप्ति ॥ १ ॥

क्षुरप्रतद्बलार्द्धेन्दुतीरीमुख्यास्तु तद्भिदः ॥ ४४४ ॥

क्षुराभ लोह प्राति क्षुरप्रो धारामुखलोह ॥ १ ॥ तत् प्रसिद्धं बलमस्य तद्बल ,"यदाह– मूषिकपुच्छाकृतयस्तद्बलक नाम सायका " इति ॥ १ ॥ अर्धेन्दुमदृशमुखलोहत्वादर्धेन्दुरर्धचन्द्र ॥ १ ॥ तीरयति सग्राम पारयति तीरी, यदाह– "त्रिभागशरजा तीरी शेषाङ्गे लोहसम्भवा" । मुख्यग्रहणात् दण्डासन-तोमर-वावल्ल-भल्ल-गरुडा-ऽर्द्धनाराचप्रभृतयस्तस्य बाणस्य भेदा ॥१॥४४४॥

पक्षो वाजः

पच्यते इति पक्ष , गृध्रकङ्कपत्रादि ॥१॥ वजत्यनेन बाणो वाज , छदाऽऽवलि , पत्रपालीति यावत् ॥ २ ॥

पत्रणा तन्न्यास.

पत्रण पत्रणा, तस्य पक्षस्य शरस्कन्धे न्यसन तन्न्यास ॥ १ ॥

पुङ्खस्तु कर्त्तरी ।

पुनाति बाण पुङ्खो गुणविन्यासस्थानं पुंक्लीबलिङ्ग , "पूमुहो पुन्मूरौ च" ॥ (उणा–८६) ॥ इति खे साधु ॥१॥ कृत्यते छिद्यतेऽसौ कर्तरि काष्ठशृङ्गादिमयी, "नदिवल्लि-" ॥ ( उणा–६९८ ) ॥ इत्यरि , ङया कर्त्तरी ॥ २ ॥

तूणो निषङ्गस्तूणीर उपासङ्गः शराश्रय. ॥ ४४५ ॥

शरधिः कलापोऽपि

तूण्यते पूर्यते शरैस्तूणस्त्रिलिङ्ग ॥ १ ॥ निषज्ज्यन्ते बाणा अत्र निषङ्ग ॥२॥

तूण्यते तूणीर ,"जम्बार-" ॥(उणा-४२२)॥ इतीरे निपात्यते ॥३॥ उपासज्यन्तेऽत्र बाणा उपासङ्ग ॥ ४ ॥ शराणामाश्रय ॥ ५ ॥ ४४५ ॥ शरा धीयन्तेऽत्र शरधि पुलिङ्ग , यौगिकत्वादिषुधिर्बाणधिरित्यादय ॥६॥ कल्पन्ते बाणा अनेन कलाप ॥७॥

अथ चन्द्रहास

करवालनिस्त्रिंशकृपाणखड्गा ।

तरवारिकौक्षेयकमण्डलाग्रा-

असिर्ऋष्टिरिष्टी

चन्द्रवत् हास प्रभाऽस्य चन्द्रहास ॥१॥ करं पालयति करपाल , जपादित्वाद वत्वे करवाल , करे वालो वलनमस्येति वा ॥ २ ॥ निष्क्रान्तस्त्रिंशतोऽङ्गुलिभ्यो-निस्त्रिंश "नञव्ययात् सङ्ख्याया ड "॥७।३।१२३॥३॥ कल्पते कृपाण "कृपिविषि-" ॥(उणा-१९१)॥ इत्याणक् ॥४॥ खडति भिनत्ति खड्ग "गम्यमि-" ॥(उणा-९२)॥ इति ग ॥५॥ तर तरत् प्लवमान वार्यत्र तरवारि पुलिङ्ग ॥६॥ कुक्षौ भवो जात कौक्षेयक , कङ्ककुक्षिनिजीर्णेनाऽश्मना निर्मितत्वात् "कुलकुक्षि-" ॥६।३।१२॥ इत्ये-यकञ ॥७॥ मण्डलाकारमग्रमस्य मण्डलाग्र ॥८॥ अस्यतेऽसि पुलिङ्ग ,"पदिपठि-" ॥(उणा-६०७)॥ इती ॥ ९ ॥ ऋषति पाणिं गच्छति ऋष्टि स्वर्गादि ॥१०॥ रेषति हिनस्ति रिष्टि "दमुषि-"॥(उणा-६५१)॥ इति कित् ति , पुंस्त्रीलिङ्गावेतौ॥११॥

शेषश्चात्र- असिस्तु सायक ।

श्रीगर्भो विजय शास्ता व्यवहार प्रजाकर ।
धर्मपालोऽक्षरो देवस्तीक्ष्णकर्म्मा दुरासद ॥
प्रसङ्गो रुद्रतनयो मनुज्येष्ठ शिवङ्कर ।
करपालो विशसनस्तीक्ष्णधारा विषाग्रज ॥
धर्मप्रचारो धाराङ्गो धाराधारकरालिकौ ।
चन्द्रभासश्च शस्त्र

त्सरुरस्य मुष्टि. ॥ ४४६ ॥

अस्य खड्गस्य मुष्टिग्रहणस्थान मुष्टि , त्सरत्यनेन त्सरु पुंलिङ्ग ,"मृमृतॄत्सरि " ॥(उणा-७१६)॥ इत्यु , खड्गस्येत्युपलक्षणम् , तेनान्यस्याऽपि मुष्टिस्त्सरुरुच्यते । यदमर - "त्सरु खड्गादिमुष्टौ स्याद्" इति ॥ १ ॥ ४४६ ॥

प्रत्याकार परीवारः कोश खड्गपिधानकम् ।

प्रतिरूप आकारोऽस्य प्रत्याकार ॥ १ ॥ परिव्रियतेऽनेन परिवार , "घञ्युप-सर्गस्य-" ॥३।२।८६॥ इति दीर्घाच्च परीवार ॥ २ ॥ कुश्यते इति कोशस्त्रिलिङ्ग । खड्ग पिधीयतेऽनेन खड्गपिधानम् , स्वार्थे के खड्गपिधानकम् ॥ ३ ॥

अङ्कनं फलक चर्म खेटकाऽऽवरणस्फुराः॥ ४४७ ॥

'अद्ड् अभियोगे' अङ्कत्यनेन अङ्कन ॥१॥ फलति विशीर्यते फलम्, के फलकं फरकमपि, पुंक्लीबलिङ्ग ॥ २ ॥ चर्म्ममयत्वाच्चर्म ॥ ३ ॥ खेटयत्युत्त्रासयति खेटं पुंक्लीबलिङ्ग, के खेटकं ॥ ४ ॥ आव्रियते वपुरनेन आवरण ॥ ५ ॥ स्फुरति चलति स्फुर, स्फुरकोऽपि ॥ ६ ॥ ४४७ ॥

अस्य मुष्टिस्तु सग्राह.

अस्य फलकस्य मुष्टिग्रहणस्थान मुष्टि, संगृह्यतेऽनेन संग्राह, "समो मुष्टौ" ॥ ५ । ३ । ५८ ॥ इति घञ् ॥ १ ॥

क्षुरी छुरी कृपाणिका ।
शस्त्र्यसेर्धेनुपुत्र्यौ च

क्षुरति विखनति क्षुरी, क्षुरिकाऽपि ॥ १ ॥ छुरति छिनत्ति छुरी ॥ २ ॥ कल्पते कृपाणी, के कृपाणिका ॥ ३ ॥ शस्यतेऽनया शस्त्री "नीदाम्ब्-" ॥ ५ । २ । ८८ ॥ इति त्रट् ॥ ४ ॥ असिशब्दात् धेनु-पुत्र्यौ, चिन्तितार्थप्रदायित्वादासिरूपा धेनुरसिधेनु, असे पुत्रीव ह्रस्वत्वादसिपुत्री ॥ ५ ॥ ६ ॥

शेषश्चात्र–अथ क्षुर्यस्त्री कोशशायिका ॥
पत्र च धेनुका ।

पत्रपालस्तु साऽऽयता ॥ ४४८ ॥

सा क्षुरिका आयता दीर्घा । पत्रेण पालयति रक्षति पत्रपाल ॥१॥४४८॥

शेषश्चात्र–पत्रपाले तु हुलमातृका ।
कुट्टन्ती पत्रफला च

दण्डो यष्टिश्च लगुडः

दण्डयत्यनेन दण्ड पुंक्लीबलिङ्ग, "पञ्चमाड्" ॥ (उणा–१६८) ॥ इति डः ॥ १ ॥ इज्यतेऽनया यष्टि पुंस्त्रीलिङ्ग, "प्लुञ्ज्ञा" ॥ ( उणा–६४६ ) ॥ इति ति ॥ २ ॥ लगति प्रहारोऽनेन लगुड "लगेरुड" ॥ ( उणा–१७७) ॥ ३ ॥

स्यादीली करवालिका ।

ईड्यते ईली, एकधारोऽसिस्तुरुष्कायुधम् ॥१॥ अल्प करवाल करवालिका, तरवालिकेत्यन्ये। "न्युब्ज खड्ग कडितलम्" इति व्याडि, स चास्माभिर्देश्यामुक्त.॥२॥

भिन्दिपाले सृग·

भिन्दत. पालयति भिन्दिपालो नाम हस्तक्षेप्यो महाफलो दीर्घदण्ड आ-

युधविशेष, पृषोदरादित्वात् साधुस्तत्र ॥ १ ॥ सृज्यते सृग, स्यादित्वात् के न्यङ्क्वादित्वाद् गत्वं ॥ २ ॥

कुन्ते प्रासः

कुणति कुन्तस्तत्र ॥ १ ॥ प्रास्यते प्रास, हस्तधार्य शल्यः ॥ २ ॥

अथ द्रुघणो घन ॥ ४४९ ॥

मुद्गर. स्यात्

द्रुर्हन्यतेऽनेन द्रुघण "व्ययोद्रो करणे" ॥ ५ । ३ । ३८ ॥ इत्यलि घनादेशस्ततोऽरीहणादिपाठात् णत्वम्, द्रु घणतीति ग्रसते वा ॥ १ ॥ हन्यतेऽनेन घन, "मूर्तिनिचिता" ॥ ५ । ३ । ३७ ॥ इत्यलि साधु ॥ २ ॥ ४४९ ॥ मोदतेऽनेन मुद्गर पुंस्त्रीलिङ्ग, "मुदिगुरिभ्याम्-" ॥ ( उणा-४०३ ) ॥ इति टिदरो गोऽन्तश्च, मुद गिरति ग्रसते वा ॥ ३ ॥

कुठारस्तु परशु पर्शुपर्श्वधौ ।

परश्वध स्वधितिश्च

'कुठि सोत्र' कोठति कुठार पुंस्त्रीलिङ्ग, "तुपिकुठिभ्या किन्-" ॥ (उणा-४०८) ॥ इत्यार, कुठान् वृक्षान् इयर्तीति वा ॥ १ ॥ परान् शृणाति परशु "पराङ्भ्या शृखनिभ्या डित्-" ॥ ( उणा-७४२ ) इत्यु ॥ २ ॥ पृणाति पर्शु "प्र शु-" ॥ ( उणा-८२५ ) ॥ इति शु ॥ ३ ॥ पर्शुकाभिर्न धीयते पर्श्वध, स्यादित्वात् क ॥ ४ ॥ परान् श्यणाति परश्वध "परात् श्रो डित्-" ॥ ( उणा-२५५ ) ॥ इति वध ॥ ५ ॥ स्व धियाति धाग्यति स्वधिति. "तिक्कृतौ नाम्नि-" ॥ ५ । १ । ७१ ॥ इति तिक्, परश्वादय पुलिङ्गा ॥ ६ ॥

परिघः परिघातनः ॥ ४५० ॥

परिहन्यतेऽनेन परिघ, लोहबद्धो लगुड "परेर्घ-" ॥ ५ ॥ ३ ॥ ४० ॥ इत्यलि घादेश, लत्वे पलिघोऽपि ॥१। परिघात्यतेऽनेन परिघातन ॥२॥४५०॥

सर्व्वला तोमरे

सर्व्वान् लाति सर्व्वला ॥ १ ॥ ताम्यत्यनेन तोमर पुंक्लीबलिङ्गः, "जठर क्रकर-" ॥ ( उणा-४०३ ) ॥ इत्यरे निपात्यते, तत्र ॥ २ ॥

शल्यं शङ्कौ

शलत्यन्तर्विशति शल्यं पुंक्लीबलिङ्ग, "स्थाछामा" ॥ (उणा-३५७) ॥ इति य, अन्यत्रोपचारात् शल्यम् ॥१॥ शाम्यत्यनेन शङ्कु पुलिङ्ग, "कैशिशामि-" ॥ ( उणा-७४९ ) ॥ इति कुस्तत्र ॥ २ ॥

शूले त्रिशीर्षकम् ।

शूलति रुजति शूल पुंक्लीबलिङ्ग , तत्र॥१॥ त्रीणि शीर्षाण्यस्य त्रिशीर्षकम् ॥२॥

शक्तिपट्टिसदु.स्फोटचक्राद्याः

शस्त्रजातयः ॥ ४५१ ॥

शक्नोति जेतुमनया शक्ति ॥ १ ॥ पटत्यरातीन् पट्टिस "पटिवीभ्याम्-" ( उणा-५७९ ) इति टिस , अय तालव्य इत्यन्ये ॥ १ ॥ दु खं स्फोटयति दु स्फोट ॥ १ ॥ क्रियते प्रहारोऽनेन चक्र पुंक्लीबलिङ्ग . आदिग्रहणात् शतघ्नी-महाशिला-मुषुण्ढी चिरिका वराहकर्णकप्रभृतय ॥१॥४५१॥

शेषश्चात्र-

अथ शक्ति कासूर्महाफला ॥
अष्टतालाऽऽयता सा च पट्टिशस्तु खुरोपम ।
लोहदण्डस्तीक्ष्णधारो दुस्फोटाराफलौ समौ ॥
चक्र तु वलयप्रायमरसञ्चितमित्यपि ।
शतघ्नी तु चतुस्ताला लोहकण्टकसंचिता ॥
अय कण्टकसच्छन्ना शतघ्न्येव महाशिला ।
मुषुण्ढी स्याद् दारुमयी वृत्ताय कीलसचिता ॥
कणयो लोहमात्रोऽथ चिरिका तु हुलाग्रका ।
वराहकर्णकोऽन्वर्थे फलपत्राग्रके हुलम् ॥
मुनयोऽस्त्रशेखर च

खुरली तु श्रमो योग्याऽभ्यासः

खुरन्ति छिन्दन्त्यस्या खुरली, "मुरलोरल–"॥ (उणा-४७४) ॥ इत्यले निपात्यते॥१॥ श्राम्यत्यनेनश्रम ॥२॥ योगे चित्तैकाग्र्ये साध्वी योग्या "तत्र साधौ" ॥७।१।१५॥ इति य , योगाय शक्नोति वा " योगकर्मभ्या- " ॥६।४।९५॥ इति य. ॥ ३ ॥ शस्त्राणामभ्यसनमभ्यास ॥४॥

शेषश्चात्र-शराभ्यास उपासनम् ॥

तद्भूः खलूरिका ।

तस्य श्रमस्य साधनाय भूस्तद्भू ॥ १ ॥ खञ्यते लक्ष भिद्यतेऽत्र खञ्जूर " मीमासि- " ॥ (उणा-४२७)॥ इत्यूर , लत्वे खलूर , स्वार्थे के खलूरिका ॥२॥

सर्वाभिसारः सर्वौघः

सर्व्वसंनहनं समाः ॥ ४५२ ॥

सर्वेण सैन्येन अभिसरण सर्वाभिसार ॥ १ ॥ सर्वेषामोघो वहन सर्वौघ ॥ २ ॥ सर्व सनह्यतेऽत्र सर्वसनहनम् ॥ ३ ॥ ८५२ ॥

लोहाभिसारो दशम्यां विधिर्नीराजनात् पर. ।

अस्त्रभृता राज्ञा य शास्त्रतो विधि प्रस्थानात् प्राक् स । लोह शस्त्रमभिसार्यते प्रसार्यते प्रस्थाप्यतेऽत्रेति लोहाभिसार, नीरस्य शान्त्युदकस्य अजन क्षेपोऽत्र नीराजनम्, मन्त्रोक्त्या नि शेषवाहनादे राजन वा, तस्मात् परो विधि, यद्दुर्ग –

"लोहाभिसारस्तु विधि परो नीराजनाद् नृपै
दशम्या दर्शितै कार्य" इति । अमरस्तु–

"लोहाभिसारोऽस्त्रभृता राज्ञा नीराजनाविधि ।" इति ब्रुवन्नीराजनामेव लोहाभिसारमाह ॥ १ ॥

प्रस्थानं गमन व्रज्याऽभिनिर्याण प्रयाणकम् ॥ ४५३ ॥
यात्रा

प्रस्थीयते स्थानाचल्यते प्रस्थानम्, ॥ १ ॥ गम्यते गमन ॥ २ ॥ व्रजन व्रज्या 'आस्वटि-" ॥ ५ । ३ । ९७ ॥ इति क्यप ॥ ३ ॥ अभिनिर्यायतेऽभिनिर्याण ॥ ४ ॥ प्रयायते प्रयाणम्, स्वार्थे के प्रयाणक ॥ ५ ॥ ४५३ ॥ यान्त्यस्या यात्रा "हुयामा" ( उणा–४५१ ) इति त्र ॥ ६ ॥

अभिषेणनं तु स्यात्
सेनयाऽभिगमो रिपौ ।

सेनया रिपूनभियानमभिषेणन "णिज् बहुलं-" ॥ ३ । ४ । ४२ ॥ इति णिज्यऽनटि च "स्थासेनि-" ॥ २ ॥ ३ ॥ ४० ॥ इति षत्वम् ॥ १ ॥

स्यात् सुहृद्बलमासारः

आस्रियतेऽनेनेत्यासारोऽन्वागच्छन्मित्रबलम् ॥ १ ॥

प्रचक्र चलित बलम् ॥ ४५४ ॥

प्रस्थितं चक्र सैन्यं प्रचक्रम्, चलित प्रयाणकास्थितम् ॥ १ ॥ ४५४ ॥

प्रसारस्तु प्रसरण तृणकाष्ठादिहेतवे ।

सैन्याद् बहिस्तृणजलाद्यर्थं प्रसरण गमनं प्रसार, यल्लक्ष्यम्-निरुद्धवीववाऽऽसार प्रसारागा इव व्रज ॥१॥ अमरस्तु–"स्यादासार प्रसरणम्" इत्याह, तच्चाऽर्थशास्त्रिण न सवदतीति नादृतम् ॥

अभिक्रमो रणे यानमभीतस्य रिपून् प्रति ॥ ४५५ ॥

आभिमुख्येन अभिभूय, अरीनभि वा क्रमणमभिक्रम ॥ १ ॥ ४५५ ॥

अभ्यमित्र्योऽभ्यमित्रीयोऽभ्यमित्रीणोऽभ्यरित्रजन् ।

आभिमुख्येनाऽमित्रानलगामी अभ्यमित्र्य, अभ्यमित्रीय, अभ्यमित्रीण "अभ्यमित्रमीयश्च" ॥ ७ । १ । १०४ ॥ इति य, ईय, ईनञ्च ॥१।२।३॥

स्यादुरस्वानुरसिलः

उरसा बल लक्ष्यते, तदस्यास्ति उरस्वान् "तद-" ॥ ७ । २ । १ ॥ इति मतु ॥ १ ॥ पिच्छादित्वादिले उरसिल ॥ २ ॥

ऊर्जस्व्यूर्जस्वलौ समौ ॥ ४५६ ॥

ऊर्ग् बलमस्त्यस्य ऊर्जस्वी ॥ १ ॥ ऊर्जस्वल, ऊर्जातिशयान्वित "ऊर्जो-विन्वलावस् चान्त" ॥ ७ । २ । ५१ ॥ इति साधू, ऊर्जस्वानपि ॥२॥४५६॥

सायुगीनो रणे साधु

सयुगे साधु सायुगीन "प्रतिजनादेरीनञ्" ॥ ७।१।२०॥१ ॥

जेता जिष्णुश्च जित्वर. ।

जयनशीलो जेता "तृन्-" ॥ ५ । २ । २७ ॥ इति तृन् ॥१॥ "भूजे -" ॥ ५।२।३० ॥ इति ष्णुकि जिष्णु ॥ २ ॥ "सृजीण्-" ॥ ५।२।७७ ॥ इति ट्वरपि जित्वर ॥ ३ ॥

शेषश्चात्र–जिष्णौ तु विजयी जैत्र ॥

जय्यो यः शक्यते जेतुम्

जेतु शक्यो जय्य "क्षय्यजय्यौ-" ॥४।३।९०॥ इति ये साधु ॥ १ ॥

जेयो जेतव्यमात्रके ॥ ४५७ ॥

शक्यादन्यत्रेत्यर्थ ॥ १ ॥ ४५७ ॥

वैतालिका बोधकरा अर्थिका· सौखसुप्तिका· ।

विताल शब्द प्रयोजनमेषा वैतालिका प्रातर्बोधका ॥ १ ॥ बोधं प्रबोध कुर्वन्ति मङ्गलपाठैर्बोधकरा ॥ २ ॥ अर्थिन एव अर्थिका ॥ ३ ॥ सुखसुप्त पृच्छन्ति सौखसुप्तिका "सुस्नातादिभ्य पृच्छति" ॥ ६ । ४ । ४२ ॥ इतीकण्, सौखशायनिकसौखशाय्यकावपि ॥ ४ ॥

अमरस्तु–"वैतालिका बोधकरा" इति राज्ञोऽवसरपाठकानाह ॥

घाण्टिकाश्चाक्रिकाः

घण्टया चरन्ति घाण्टिका, ये घण्टा घातेन देवताद्यग्रे शसन्ति ते श्रावकाख्या ॥ १ ॥ चक्र राष्ट्र प्रयोजनमेषा चाक्रिका ॥ २ ॥

सूतो बन्दी मङ्गलपाठकः ॥ ४५८ ॥

सुनोति सूतः ॥ १ ॥ वन्दते स्तौति बन्दी, ग्रहादित्वाद् णिन् ॥ २ ॥ मङ्गलं पठतीति मङ्गलपाठकः ॥ ३ ॥ ४५८ ॥

मागधो मगधः

मगध एव मागधः प्रज्ञादित्वादण् ॥ १ ॥ 'मगध कण्ड्वादौ' मगधयति याचते मगधः, यशोदीरणेन यो याचते, यदाहु – "मागधाः स्तुतिवंशजाः" इति मङ्खोऽपि ॥ २ ॥

संशप्तका युद्धाऽनिवर्त्तिनः ।

संशपन्ति, पलायमानान् संशपथं युञ्जन्ते वा संशप्ताः, के संशप्तकाः ॥ १ ॥ युद्धान्न निर्वर्त्तन्ते युद्धाऽनिवर्त्तिनः ॥ २ ॥

नग्नः स्तुतिव्रतः

न वस्ते नग्नः, कौपीनमात्रजरद्वस्त्रपरिधानात् "दिननग्न-" ॥ ( उणा–२६८ ) ॥ इति ने निपात्यते, न विद्यन्ते ग्ना श्रियश्छन्दांसि वा अस्येति वा नखादित्वान्नात्राऽद्भावः ॥ १ ॥ स्तुतिरेव-व्रतमस्य स्तुतिव्रतः ॥ २ ॥

तस्य ग्रन्थो भोगावली भवेत् ॥ ४५९ ॥

तस्य नग्नस्य भोगः सुखं तद्धेतुत्वाद् भोगाः स्तुतयः, तासामावली भोगावली ॥ १ ॥ ४५९ ॥

प्राणः स्थाम तरः पराक्रमबलद्युम्नानि शौर्यौजसी
शुष्मं शुष्म च शक्तिरूर्ज्जसहसी

प्राणनं प्राणः ॥ १ ॥ तिष्ठन्त्यनेन स्थाम "मन्" ॥ ( उणा–९११ ) ॥ इति मन् ॥ २ ॥ तरन्त्यनेनापदं तरः "अस्" ॥ (उणा–९५२) ॥ इत्यस्, क्लीबलिङ्गावेतौ ॥ ३ ॥ पराक्रमन्तेऽनेन पराक्रमः ॥ ४ ॥ बलत्यनेन बलं पुंक्लीबलिङ्गः, "वर्षादयः क्लीबे" ॥ ५ । ३ । २९ ॥ इत्यल् ॥ ५ ॥ दिवि मीयते द्युम्नं "द्यु-सुनिभ्यो माडो डित्" ॥ ( उणा–२६६ ) ॥ इति नः, द्रविणमपि ॥ ६ ॥ शूरस्य भावः शौर्यम् ॥ ७ ॥ ओषत्यरीननेन ओजः क्लीबलिङ्गः, "उब्जेर्ज् च-" ॥ ( उणा–९५९ ) ॥ इत्यस् ॥ ८ ॥ शुष्यत्यनेनारिः शुष्मं "विलिभिलि-" ॥(उणा–३४०)॥ इति किद् मः ॥ ९ ॥ "सात्मन्नात्मन्-" ॥ ( उणा–९१६ ) ॥ इति मनि निपातनात् शुष्म क्लीबलिङ्गः ॥ १० ॥ शक्यतेऽस्या परो जेतुं शक्तिः ॥ ११ ॥ ऊर्ज्जनमूर्ज् पुंस्त्रीलिङ्गः, ऊर्गपि ॥ १२ ॥ सहते शत्रुमनेन सहः क्लीबलिङ्गः, "अस्" ॥ ( उणा–९५२ ) ॥ इत्यस् ॥ १३ ॥

युद्ध तु सङ्ख्यं कलि· ।
सग्रामाहवसम्प्रहारसमरा जन्य युदायोधनं
सस्फोट कलहो मृध प्रहरण सयद्रणो विग्रह• ॥ ४६० ॥
द्वन्द्व समाघातसमाह्वयाभि-
सम्पातसमर्दसमित्प्रघाताः ।
आस्कन्दनाजिप्रधनान्यनीक-
मभ्यागमश्च प्रविदारणं च ॥ ४६१ ॥
समुदाय समुदयो राटि· समितिसङ्गरौ ।
अभ्यामर्द· सम्पराय· समीक साम्परायिकम् ॥ ४६२ ॥
आक्रन्द· सयुगं च

युध्यन्तेऽत्र युद्धम् ॥ १ ॥ सचक्षतेऽत्र सङ्ख्य पुंक्लीबलिङ्ग·, "चक्षो वाचि-" ॥ ४ । ४ । ४ ॥ इति ख्यादेश ॥ २ ॥ कल्यते क्षिप्यतेऽत्र कलि पुंलिङ्ग, "पदिपठि–" ( उणा– ६०७ ) इति इ ॥ ३ ॥ सङ्ग्रामयन्तेऽत्र सङ्ग्राम ॥४॥ आहूयन्ते योद्धारोऽत्रेत्याहव, "आङो युद्धे" ॥ ५ । ३ । ४३ ॥ इत्यालि वस्योत्वं ॥ ५ ॥ सम्प्रहरन्तेऽन्योन्य घ्नन्त्यत्र सम्प्रहार ॥ ६ ॥ समियूते सङ्घट्टन्तेऽत्र समर पुक्लीब, "पुनाम्नि–" ॥ ५ । ३ । १३० ॥ इति घ ॥ ७ ॥ जायते विद्वेषाज्जन्यं "भव्यगेय–" ॥ ५ । १ । ७ ॥ इति य, पुक्लीबलिङ्गावेतौ ॥ ८ ॥ युध्यन्तेऽस्या युत् क्रुधादित्वात् क्विप् ॥ ९ ॥ आयुध्यन्तेऽस्मिन्नायोधनम् ॥ १० ॥ सस्फुटन्त्यत्र कातरहृदयानि सस्फोट, सस्फेट इत्यन्ये, संफेट इति भरत ॥ ११ ॥ कल्यते क्षिप्यतेऽत्र कलह, "कृपृकटि–" ॥ (उणा–५८९) ॥ इत्यह, कलं हीनबल हन्तीति वा "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड, कला जहातीति वा "ङ्यापो बहुलं–" ॥ २ । ४ । ९९ ॥ इति पूर्वस्य ह्रस्व ॥ १२ ॥ 'मृधूग् उन्दे' मर्धते शोणितैर्मृध "नाम्युपान्त्य–" ॥ ५ । १ । ५४ ॥ इति क ॥ १३ ॥ प्रहरन्तेऽत्र प्रहरणम् ॥ १४ ॥ सयतन्ते संयच्छन्ति वाऽत्र संयत् क्लीबलिङ्ग, अमरस्तु– "स्त्रिया संयत्" इत्याह ॥१५॥ रणन्ति दुन्दुभयोऽत्र रण पुक्लीबलिङ्ग, "पुनाम्नि–" ॥ ५।३।१३० ॥ इति बाहुलकाद् घ ॥१६॥ विगृह्णन्त्यत्र विग्रह ॥ १७ ॥ ४६० ॥ द्वौ द्वौ युध्येतेऽत्र द्वन्द्व पृषोदरादित्वात्, वन्द्यते वीरैरिति वा "प्रह्वाह्वा-" ॥(उणा–५१४)॥ इति वे निपात्यते, 'समासकलहयुग्मेषु' इति भोजः ॥ १८ ॥ सङ्गत्या घ्नन्ति परस्परमत्र समाघात ॥ १९ ॥ सपृच्छन्त्याह्वयं नामात्र समाह्वय ॥ २० ॥ अभिसम्पतन्त्यत्र अभिसम्पात ॥ २१ ॥ सम्मृद्नन्त्यत्र सम्मर्द ॥ २२ ॥ संयन्ति सङ्गच्छन्तेऽत्र समित् "कृत्सम्पदादि–" ॥ ५ । ३ । ११४ ॥ इति क्विप् ॥ २३ ॥

प्रकर्षेण घ्नन्त्यत्र प्रघात ॥ २४ ॥ आस्कन्दन्त्यत्र आस्कन्दनम् ॥ २५ ॥ अजन्त्यधिक्षिपन्त्यस्यामाजि स्त्रीलिङ्ग "पादाच्चात्याजि-" ॥ ( उणा- ६२० ) ॥ इति णिदि ॥ २६ ॥ प्रवनति हन्ति प्रवन, वनिर्मरणार्थोऽत्र निवनवत् ॥२७॥ अनन्ति जीवन्ति सुभटा अनेन अनीक पुक्लीबलिङ्ग , अनाक सैन्यमस्त्यत्र वा, अभ्रादित्वाद ॥२८॥ अभ्यागच्छन्त्यस्मिन्नभ्यागम ॥२९॥ प्रविदार्यतेऽत्र प्रविदारणम्॥३०॥ ॥ ४६१ ॥ समुदयन्ते मिलन्त्यत्र समुदाय ॥ ३१ समुद्यन्त्यत्र समुदय ॥ ३२ ॥ रटन्ति कलहायन्तेऽस्या राटि स्त्रीलिङ्ग , "कमिवमि-" ॥( उणा-६१८ )॥ इति बहुवचनाद् णिदि ॥ ३३ ॥ सयन्त्यस्या समिति , इत्रादित्वात् क्ति ॥ ३४ ॥ सङ्गिरन्ते सगृणन्ति वाऽत्र सङ्गर ॥ ३५ ॥ अभ्यामृदनन्ति अस्मिन्नभ्यामर्द ॥३६॥ सम्परैति मृत्युरत्र सम्पराय , पुक्लीबलिङ्ग ॥ ३७ ॥ समीयतेऽत्र समीक " सृणीकास्तिक-" ॥ ( उणा-५० ) ॥ इति के निपात्यत ॥ ३८ ॥ सम्परायो मृत्यु प्रयोजनमस्य साम्परायिकम् ॥ ३९ ॥ ४६२ ॥ आक्रन्दन्त्यत्र कातरा आक्रन्द ॥४०॥ सयुज्यन्तेऽत्र सयुग पुक्लीबलिङ्ग , स्यादित्वात् के न्यङ्क्वादित्वाद् गत्व, सङ्गता रथयुगा अत्रेति वा ॥ ४१ ॥

अथ नियुद्ध तद्भुजोद्भवम् ।

तत् युद्ध बाहुभिर्जनितम् , नियत युद्ध नियुद्धम् ॥ १ ॥

पटहाडम्बरौ तुल्यौ

पटे हन्यते स्म पटहो वाद्यविशेष , यद्वाचस्पति - "महासमरतूर्ये तु पटहाडम्बरावुभौ ॥ १ ॥ आदम्यते आडम्बर , "जठर-" ( उणा- ४०३ ) इत्यरे निपात्यते पुक्लीबलिङ्गावेतौ ॥ २ ॥

तुमुल रणसङ्कुलम् ॥ ४६३ ॥

ताम्यन्त्यनेन तुमुल, "कुमुलतुमुल-" ॥ (उणा-४८७) ॥ इत्युले निपात्यते ॥ १ ॥ रणेन सङ्कुल रणसङ्कुलम् ॥ २ ॥ ४६३ ॥

नासीर त्वग्रयान स्यात्

णासृङ् शब्दे' नासते नासीर, "जम्बीराभीर-" ॥ (उणा-४२२) ॥ इतीरे निपात्यते, स्त्रीक्लीबलिङ्गोऽयं, वैजयन्ती तु- "नासीरोऽस्त्री" इत्याह ॥ १ ॥ अग्रे यानमस्य अग्रयानम् ॥ २ ॥

अवमर्दस्तु पीडनम् ।

अवमर्दनमवमर्द ॥ १ ॥ पीड्यते पीडनम् ॥ २ ॥

प्रपातस्त्वभ्यवस्कन्दो धाट्यभ्यासादनं च सः ॥ ४६४ ॥

प्रपतन प्रपात छलादाक्रमणमित्यर्थ ॥ १ ॥ अभ्यवस्कन्दनमभ्यवस्कन्द, अवस्कन्दोऽपि ॥२॥ धावन्तोऽटन्त्यस्या धाटि पृषोदरादित्वात्, ङया धाटी ॥३॥ अभ्यासाद्यतेऽभ्यासादनम् ॥ ४ ॥ ४६४ ॥

तद् रात्रौ सौप्तिक

तदभ्यासादनं निशि सुप्तेषु भव सौप्तिकम्, अध्यात्मादित्वादिकण् ॥ १ ॥

वीराशसन त्वाजिभीष्मभू ।

वीरा आशस्यन्तेऽत्र वीराशंसनम् ॥ १ ॥ आजे सङ्ग्रामस्य भीष्माऽतिघोरा भूमि "वीराशसनी" इत्यमर ॥

नियुद्धभूरक्षवाट,

अक्षो मल्लाना युद्धस्य व्यवहारस्तस्य वाटोऽक्षवाटः ॥ १ ॥

मोहो मूर्च्छा च कश्मलम् ॥ ४६५ ॥

मोहन मोह प्रहार ॥ १ ॥ मूर्च्छन मूर्च्छा ॥ २ ॥ 'कश शब्दे' कशति वैचित्र्यादनेन कश्मल "रुचिकुटि–" (उणा– ५०२) इति मल ॥ ३ ॥ ४६५ ॥

वृत्ते भाविनि वा युद्धे पान स्याद्वीरपाणकम् ।

वीराणा मद्यपान वीरपाण "पानस्य भावकरणे" ॥ २ । ३ । ६९ ॥ इति णत्वम् ॥ १ ॥

पलायनमपयानं सदावद्रवविद्रवाः ॥ ४६६ ॥

अपक्रम समुत्प्रेभ्यो द्रावः

पलायते पलायनम् ॥ १ ॥ अपसृत्य यायतेऽपयानम् ॥२॥ संदवन संदाव, "युदुद्रो" ॥ ५ । ३ । ५९ ॥ इति घञ् ॥ ३ ॥ द्रवण द्रव ॥ ४ ॥ विद्रवण विद्रव ॥५॥४६६॥ अपावृत्य क्रमणमपक्रम ॥६॥ समुत्प्रेभ्य परो द्रावशब्द, सद्रवण संद्राव "युदुद्रो" ॥ ५।३।५९ ॥ इति घञ् ॥७॥ "युपूद्रो–" ॥५।३।५४॥ इति घञि उद्द्राव ॥ ८ ॥ "प्रास्नुद्रुस्तो" ॥ ५ । ३ । ६७ ॥ इति घञि प्रद्राव, नशनमपि ॥ ९ ॥

अथ विजयो जय ।

विजयनं विजय ॥ १ ॥ जीयते जय ॥ २ ॥

पराजयो रणे भङ्गः

पराजयन पराजय ॥ १ ॥

डमरे डिम्बविप्लवौ ॥ ४६७ ॥

दाम्यति डमर लुण्ठ्यादि अशस्तकलह इत्येके "दमेर्णिद्वा दश्च ड –" (उणा–४०२) इत्यर तत्र ॥ १ ॥ डयन्तेऽस्माद् डिम्ब पुंक्लीबलिङ्ग , डानी बध्नाति डिम्ब ॥ २ ॥ विप्लवन विप्लव ॥ ३ ॥ ४६७ ॥

शेषश्चात्र–

स्याच्छृगाली तु विप्लवे ।

**वैरनिर्यातन वैरशुद्धिर्वैरप्रतिक्रिया ।**

'यतण् निकारोपस्कारयो ' निर्यात्यते शोध्यते निर्यातन वैरस्य निर्यातन वैर-निर्यातनम् ॥१॥ वैरस्य शोधन वैरशुद्धि ॥२॥ वैरस्य प्रतिकारो वैरप्रतिक्रिया ॥३॥

**बलात्कारस्तु प्रसभ हठ ,**

'बलादित्यव्ययं हठार्थे' बलात् करण बलात्कार ॥ १ ॥ प्रगना सभा अत्र प्रसभं, सभया युक्तायुक्तविचारो लक्ष्यते क्लीबलिङ्गोऽयम्, वैजयन्ता तु– "प्रसभोऽस्त्री बलात्कार " इति पुस्यप्याह ॥ २ ॥ हठति हठ ॥ ३ ॥

**अथ स्खलित छलम् ॥ ४६८ ॥**

स्खलन मार्गाच्चलन स्खलितम् ॥ १ ॥ छयति छलम् ॥ २ ॥

**परापर्यऽभितो भूतो जितो भग्न. पराजितः ।**

परादिशब्देभ्य परो भूत पराभूत ॥१॥ परिभूत ॥२॥ अभिभूत ॥३॥ जीयते स्म जित ॥४॥ भज्यते स्म भग्न ॥ ५ ॥ पराजीयते स्म पराजित ॥ ६ ॥

**पलायितस्तु नष्टः स्याद् गृहीतदिक् तिरोहितः ॥ ४६९ ॥**

परावृत्य अयते पलायित॰, "उपसर्गस्यायौ" ॥ २ । ३ । १०० ॥ इति रस्य लत्वम् ॥ १ ॥ नश्यति स्म नष्ट ॥ २ ॥ गृहीता दिग् येन गृहीतदिक् ॥ ३ ॥ तिरोधत्ते स्म तिरोहित ॥ ४ ॥ ४६९ ॥

**जिताहवो जितकाशी**

जित आहवोऽनेन जिताहव ॥ १ ॥ जितेन काशते जितकाशी ॥ २ ॥

**प्रस्कन्नपतितौ समौ ।**

प्रस्कन्दते स्म प्रस्कन्न ॥ १ ॥ पतति स्म पतित ॥ २ ॥

**चारः कारा गुप्तौ**

चरन्त्यत्रेति चार , के चारकोऽपि ॥ १ ॥ क्रियते कीर्यते वाऽस्यां कारा भिदादित्वादङि साधु ॥ २ ॥ गुप्यतेऽस्यां गुप्तिर्बन्धनागारं तत्र ॥ ३ ॥

**बन्द्यां ग्रहकः प्रोपतो ग्रहः ॥ ४७० ॥**

वन्दते स्तौति भयेन बन्दी, हठाकृष्टा स्त्री, बलवतो हस्ते क्षिप्तो राजपुत्रादिश्च, यदाहु –'बन्दी स्यात् पणबन्धस्थ ' इति अचि गौरादित्वात् ङीस्तत्र ॥ १ ॥ गृह्यते ग्रह, के ग्रहक ॥ २ ॥ प्रोपशब्दाभ्या परो ग्रह प्रग्रह, उपग्रह. ॥३॥४॥४७०॥

**चातुर्वर्ण्यं द्विजक्षत्रवैश्यशूद्रा नृणां भिदः ।**

ब्राह्मण, क्षत्रिय, वैश्य, शूद्रश्चेति वक्ष्यमाणा मनुष्याणा भिदो जातिविशेषा, वर्ण्यन्ते इति वर्णा, चत्वारो वर्णाश्चातुर्वर्ण्यं भेषजादित्वात् स्वार्थे ष्यण्॥ १ ॥

**ब्रह्मचारी गृही वानप्रस्थो भिक्षुरिति क्रमात् ॥ ४७१ ॥**

**चत्वार आश्रमाः**

ब्रह्मचर्यादयोऽर्था द्विजातीना वक्ष्यमाणाश्चत्वार, आश्राम्यन्ति तपस्यन्त्येष्वि-त्याश्रमा, तात्स्थ्यात् पुमास पुंस्क्लीबलिङ्ग ॥ १ ॥ ४७१ ॥

**तत्र वर्णी स्याद् ब्रह्मचारिणि ।**

तेष्वाश्रमेषु आद्यो वर्णशब्दो ब्रह्मचर्यपयार्य, वर्णोऽस्ति अस्य वर्णी "वर्णाद् ब्रह्मचारिणि" ॥ ७ । २ । ६९ ॥ इतीन्, ब्रह्म वेदाः, ब्रह्म तप, ब्रह्म ज्ञानं च शाश्वत तच्चरत्यर्जयत्यवश्य ब्रह्मचारी तत्र ।॰ १ ॥

**ज्येष्ठाश्रमी गृहमेधी गृहस्थः स्नातको गृही ॥ ४७२ ॥**

ज्येष्ठश्चासौ आश्रमी च ज्येष्ठाश्रमी,

यन्मनु –

यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थैरेव धार्यन्ते तस्माद् ज्येष्ठाश्रमो गृही ॥ १ ॥

गृहेण मधते गृहमेधी ॥ २ ॥ गृहे तिष्ठति गृहस्थ ॥ ३ ॥ वेदं समाप्य स्नात स्नातक "स्नाताद्वेदसमाप्तौ" ॥ ७ । ३ । २२ ॥ इति क ॥ ४ ॥ गृहमस्यास्ति गृही ॥ ५ ॥ ४७२ ॥

**वैखानसो वानप्रस्थः**

विशेषेण खनति कन्दफलमूलानि वैखानस, "फनस-" ॥ (उणा–५७३) ॥ इत्यसे निपात्यते ॥ १८ प्रतिष्ठन्तेऽत्र प्रस्थ, वनस्य प्रस्थे भवो वानप्रस्थ ॥२॥

**भिक्षुः सान्यासिको यति. ।**

**कर्म्मन्दी रक्तवसनः परिव्राजकतापसौ ॥ ४७३ ॥**

**पाराशरी पारिकाङ्क्षी मस्करी पारिरक्षकः ।**

भिक्षणशीलो भिक्षु ॥१॥ कर्मणा संन्यास प्रयोजनमस्य सान्यासिकः ॥२॥

यततेऽपवर्गाय यति ॥ ३ ॥ कर्मन्देन प्रोक्त भिक्षुसूत्र वेत्त्यधीते वा कर्मन्दी, "कृशाश्वकर्मन्दात्-" ॥ ६ । ३ । १९० ॥ इतीन् ॥ ४ ॥ रक्त वसनमस्य रक्तवसन ॥ ५ ॥ परिव्रज्य सर्व सन्यस्य व्रजति परिव्राजक ॥ ६ ॥ तप शालमस्य तापस, "अङ्स्थाच्छत्रादे-" ॥ ६ । ४ । ६० ॥ इत्यञ्, तपोऽस्यास्तीति वा ज्योत्स्नादित्वादण्, तपस्व्यपि ॥ ७ । ४७३ ॥ पाराशर्येण प्रोक्त भिक्षुसूत्र वेत्त्यधीते वा पाराशरी, "शिलालिपाराशर्यान्नटभिक्षुसूत्रे" ॥ ६ । ३ । १८९ ॥ इति णिन् ॥ ८ ॥ परिकाङ्क्षति पारिकाङ्क्षी बाहुलकाद्दीर्घ ॥ ९ ॥ माकरणशीलो मस्करी स ह्याह-मा कृषत कर्माणि शान्तिर्व श्रेयसीति, वर्चस्कादित्वात् साधु ॥ १० ॥ परिरक्षा प्रयोजनमस्य पारिरक्षिक ॥ ११ ॥

स्थाण्डिलः स्थण्डिलशायी य शेते स्थण्डिले व्रतात् ॥ ४७४ ॥

स्थण्डिल एव शेते स्थाण्डिल, "स्थण्डिलाच्छेते व्रती" ॥ ६ । २ । १३९ ॥ इत्यण् ॥ १ ॥ स्थण्डिले शेते स्थण्डिलशायी, "व्राताऽऽभीक्ष्ण्ये" ॥५।१।१५७॥ इति णिन् ॥ २ ॥ ४७४ ॥

तप क्लेशसहो दान्तः

तप क्लेश सहते तप क्लेशसह, तप क्लेशाऽनुद्विग्न ॥ १ ॥ दम्यते स्म दान्त, "णौ दान्त-" ॥ ४ । ४ । ७४ ॥ इति क्ते साधु ॥ २ ॥

शान्त श्रान्तो जितेन्द्रिय ।

शाम्यति स्म शान्त ॥ १ ॥ श्राम्यति स्म श्रान्त ॥२॥ जितानीन्द्रियाण्यनेन जितेन्द्रिय ॥ ३ ॥

अवदानं कर्म्म शुद्धं

अवदीयतेऽनेन अवदानम् ॥ १ ॥ शुद्ध सोत्कर्ष कर्म चरितम् ॥ २ ॥

ब्राह्मणस्तु त्रयीमुखः ॥ ४७५ ॥

भूदेवो वाडवो विप्रो द्व्यग्राभ्यां जातिजन्मजा ।

वर्णज्येष्ठ. सूत्रकण्ठः षट्कर्मा मुखसम्भव ॥ ४७६ ॥

वेदगर्भः शमीगर्भः सावित्रो मैत्र एतस ॥

ब्रह्मणोऽपत्य ब्राह्मण, "ङसोऽपत्ये-" ॥ ६ । १ । २८ ॥ इत्यणि "जातौ"॥७।४।५८॥ इत्यत्र अनपत्य एवेति नियमात् "अचर्मणोऽमनो-" ॥७।४।५९॥ इत्यन्तस्वरादिलोपो न भवति, ब्रह्म अणति वा पृषोदरादित्वात्, ब्रह्माप्यभेदोपचारात् ॥ १ ॥ त्रयी ऋग्यजु सामवेदा मुखेऽस्य त्रयीमुख ॥ २ ॥ ४७५ ॥ भुवि देवो भूदेव ॥ ३ ॥ वाडव इवाऽतृप्तत्वाद् वाडव, वडवा ब्राह्मणी तदपत्यमिति

वा ॥४॥ विविधं प्राति पूरयति विप्र , विशेषेण पातीति वा "खुरक्षुर–" ॥(उणा–३९६)॥ इति रे निपात्यते ॥५॥ द्यग्राभ्या परे जातिजन्मजा , "मातुरग्रे विजनन द्वितीय मौञ्जिबन्धनम्" इति स्मृते , द्वे जाती जन्मनी वाऽस्य द्विजाति ॥६॥ द्विजन्मा ॥७॥ द्विर्जातो द्विज ॥८॥ अग्रे आदौ, अग्राद् मुखाद् वा जातिजन्म चाऽस्य अग्र-जाति ॥ ९ ॥ अग्रजन्मा ॥ १० ॥ अग्रे अग्राद् वा जातोऽग्रज ॥११॥ वर्णाना ज्येष्ठो वर्णज्येष्ठ ॥१२॥ सूत्र यज्ञोपवीत कण्ठेऽस्य सूत्रकण्ठ ॥१३॥षड् अध्ययनम्, अध्यापनम्, यजनम्, याजनम्, दानम्, प्रतिग्रहश्चेति कर्माण्यस्य षट्कर्मा॥१४॥ब्रह्मणो मुखात् सम्भवति मुखसम्भव ,यच्छ्रुति -"ब्राह्मणोऽस्य मुखमासीत्"इति॥१५॥४७६॥ वेदा गर्भेऽस्य वेदगर्भ ॥१६॥ शमीगर्भोऽग्नि , स इव घस्मरत्वात् शमीगर्भ ॥१७॥ सावित्री देवताऽस्य सावित्र , सावित्र्यनुवचन विना मौञ्जीबन्धनाऽभावात्,यन्मनु:–

"तत्र यद् ब्रह्मजन्माऽस्य मौञ्जीबन्धनचिह्नितम् ।
तत्राऽस्य माता सावित्री पिता त्वाचार्य उच्यते ॥" इति

॥ १८ ॥ मित्रो देवताऽस्य मैत्र ॥ १९ ॥ एतीत्येतस " इण. " ॥ ( उणा–५८१ ) ॥ इति तस ॥ २० ॥

**वटुः पुनर्माणवकः**

वटति वेष्टयति मौञ्जीं वटु , "भृमृतृ-"॥(उणा–७१६)॥ इत्यु ॥१॥ मनोरपत्य कुत्सित मूढ माणव , "माणव कुत्सायाम्" ॥ ६।१।९५ ॥ इत्यणि साधु , मणति शब्दायते इति वा "मणिवसेर्णित्" ॥ (उणा–५१६) ॥ इत्यव , के माणवक ॥२॥

**भिक्षा स्याद् ग्रासमात्रकम् ॥ ४७७ ॥**

भिक्ष्यते भिक्षा, ग्रास इव ग्रासमात्रम्, यदाहु –

"ग्रासप्रमाण भिक्षा स्यादग्रग्रासचतुष्टयम् ।
अग्रं चतुर्गुण प्राहुर्हन्तकार द्विजोत्तमा " ॥ इति ॥ १ ॥ ४७७ ॥

**उपनायस्तूपनयो वटूकरणमानय ।**

उपनायमुपनायो मौञ्जीबन्धनम्, यन्मनु –"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्यो-पनायनम् ॥ १ ॥ उपनयनमुपनय ॥२॥ अवटुर्वटु क्रियतेऽनेन वटूकरणम् ॥३॥ आनयनमानय ॥ ४ ॥

**अग्नीन्धन त्वग्निकार्यमाग्नीध्रा चाग्निकारिका ॥ ४७८ ॥**

अग्निरिध्यतेऽस्मिन् अग्नीन्धनम् ॥ १ ॥ अग्ने कार्यमग्निकार्यम् ॥ २ ॥ अग्नि-मिन्धेऽग्नीध् ऋत्विग्विशेष , तस्येयमाग्नीध्रा,"गृहेऽग्नीधो रण् धश्च" ॥ ६।३।१७४ ॥ इति रण्, प्रज्ञादित्वात् स्वार्थेऽणि आग्नीध्रीत्यपि ॥ ३ ॥ अग्ने. करणमग्निकारिका "भावे" ॥ ५।३।१२२ ॥ इति णक ॥ ४ ॥ ४७८ ॥

पालाशो दण्ड आषाढो व्रते

व्रते ब्रह्मचर्याश्रमकर्मणि, पलाशस्य विकारोऽवयवो वा पालाश , "प्राण्यौषधि-" ॥ ६।२।३१ ॥ इत्यण् ॥ १ ॥ दण्डो यष्टि, आषाढा प्रयोजनमस्य आषाढ "विशाखाऽऽषाढाद् मन्थदण्डे" ॥ ६।४।१२० ॥ इत्यण् ॥ २ ॥

राम्भस्तु वैणव ।

व्रते दण्ड इत्येव, रम्भा वेणुपर्याय , रम्भाया विकारो राम्भ , "प्राण्यौषधि-" ॥६।२।३१॥ इत्यण् ॥ १ ॥ वेणोर्विकारो वैणव , "ह्लक्षादे -" ॥६।२।५९॥ इत्यण् ॥ २ ॥

बैल्वः सारस्वतो रौच्यः

व्रते दण्ड इत्येव, बिल्वस्य विकारोऽवयवो वा बैल्व ॥ १ ॥ सारस्वती रुच्यशब्दौ बिल्वपर्यायौ, सरस्वत्या विकार सारस्वत ॥ २ ॥ रुच्यस्य रौच्य ॥ ३ ॥

पैलवस्त्वौपरोधिक. ॥ ४७९ ॥

व्रते दण्ड इत्येव, पीलोर्विकार पैलव ॥ १ ॥ समीपमागच्छता दुष्टसत्त्वाना रोधो निवारण प्रयोजनमस्य इकणि, पृषोदरादित्वात् औपरोधिक ॥२॥४७९॥

आश्वत्थस्तु जितनेमिः

व्रते दण्ड इत्येव, अश्वत्थस्य विकारोऽवयवो वाऽऽश्वत्थ ॥ १ ॥ क्षुद्रजन्तुघातेन जिता नेमिरनेन जितनेमि ॥ २ ॥

औदुम्बर उलूखलः ।

व्रते दण्ड इत्येव, उदुम्बरस्य विकारोऽवयवो वा औदुम्बर ॥ १ ॥ उदुम्बरपर्याय उलूखलशब्द , उलूखलस्य विकारोऽवयवो वा उलूखल , "प्राण्यौषधि-" ॥६।२।३१॥ इत्यण्, "लुब् बहुल पुष्पमूले" ॥६।२।५७॥ इति तस्य लुप् ॥ २ ॥

मनुस्तु- ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मत ॥ इत्याह ।

जटा सटा

जायते तपसि जटा, तपस्विना ग्रथित केशसङ्घात ॥ १ ॥ सन्यते सटा "नमितनि-"॥ (उणा- १३९) ॥ इति टो न लुक् च, 'जट इत्यनयोर्वाऽच् ॥ २ ॥

वृषी पीठं

तपस्विना पीठम्, ब्रुवन्त- सीदन्त्यस्या वृषी, पृषोदरादित्वात् स , गौरादित्वात् ङी , वृसीत्यपि ॥ १ ॥ २ ॥

कुण्डिका तु कमण्डलुः ॥ ४८० ॥

कुण्डते कुण्डी "भाजगोण-" ॥ २।४।३० ॥ इति ङी, के कुण्डिका ॥ १ ॥ क पानीयमनित्यऽत्र कमण्डलु पुक्लीबलिङ्ग, "गूहलुगुग्गलुकमण्डलव" ॥ (उणा-८२४) ॥ इति साधु, कं जल अण्डे मध्ये लाति वा ॥ २ ॥ ४८० ॥

श्रोत्रियश्छान्दसः

छन्दोऽधीते श्रोत्रिय, "छन्दोऽधीते श्रोत्रश्च वा" ॥७।१।१७३ ॥ इतीय श्रोत्रादेशश्च, पक्षे "तद् वेत्त्य-" ॥ ६।२।११७ ॥ इत्यणि छान्दस ॥ १ ॥ २ ॥

यष्टा त्वादेष्टा स्याद् मखे व्रती ।
याजको यजमानश्च

यजते यष्टा ॥ १ ॥ आदिशति स्वाम्येन आदेष्टा, मखे यज्ञे व्रती सनियम ॥ २ ॥ यजात याजक ॥३॥ यजते यजमान "पूङ्यज शान" ॥५।२।२३॥४॥

सोमयाजी तु दीक्षित. ॥ ४८१ ॥

सोमेन यजति सोमयाजी ॥ १ ॥ दीक्षा सजाताऽस्य दीक्षित ॥ २ ॥ ४८१ ॥

इज्याशीलो यायजूकः

इज्या यजनं शीलमस्य इज्याशील ॥ १ ॥ भृश यजनशीलो यायजूक, "यजिजपि-" ॥ ५।२।४७ ॥ इति यङन्तात् यजेरूक ॥ २ ॥

यज्वा स्यादासुतीबलः ।

इष्टवान् यज्वा, "सुयजोर्ङ्वनिप्" ॥५।१।१७२॥१॥ आसुति. सोमसंधानमस्त्यऽस्य आसुतीबल कृष्यादित्वाद् बलच्, "बलच्यपित्रादे" ॥३।२।८२॥ इति दीर्घ· १ ॥ २ ॥

सोमप· सोमपीथी स्यात्

सोम पिबति सोमप ॥१॥ पानं पीथी, "नीनूर-" ॥ (उणा-२२७) ॥ इति कित् थ, सोमपस्य पीथोऽस्त्यस्य सोमपीथी ॥ २ ॥

स्थपतिर्गी पतीष्टिकृत् ॥ ४८२ ॥

गी पतेर्बृहस्पते इष्टि यज्ञ करोतीति गी पतीष्टिकृत्, बृहस्पतिसवेन हेतुना स्थापयतीति स्थपति ॥ १ ॥२॥४८२ ॥

सर्ववेदास्तु सर्वस्वदक्षिण यज्ञमिष्टवान् ।

सर्वं विदन्त्यस्मात् सर्ववेदा, "अस्" ॥(उणा-९५२)॥ इत्यस् ॥१॥ सर्वस्व दक्षिणाऽत्र सर्वस्वदक्षिणस्तमिष्टवान् ॥ २ ॥

यजुर्विदध्वर्य्युः

यजुर्वेदं वेत्ति यजुर्वित् ॥१॥ अध्वरं याति अध्वर्युः, "केवयुभुरणु-" ॥ (उणा-७४६) ॥ इति निपात्यते ॥ २ ॥

ऋग्विद् होता

ऋग्वेदं वेत्ति ऋग्वित् ॥१॥ जुहोतीति होता, "हृपूद्र-" ॥ (उणा-८६३) ॥ इति तृ ॥ २ ॥

उद्गाता तु सामवित् ॥ ४८३ ॥

सामान्युद्गायति उद्गाता, "हृपूद्र-" ॥ (उणा-८६३) ॥ इति तृ ॥ १ ॥ सामवेदं वेत्तीति सामवित् ॥ २ ॥ ४८३ ॥

यज्ञो योगः सवः सत्रं स्तोमो मन्युर्मखः क्रतुः ।

संस्तरः सप्ततन्तुश्च वितानं बर्हिरध्वरः ॥ ४८४ ॥

इज्यते यज्ञः, "यजिस्वपि-" ॥ ५।३।८५ ॥ इति नः ॥ १ ॥ घञि यागः ॥ २ ॥ सूयते सोमोऽत्र सवः ॥ ३ ॥ सीदन्त्यत्र देवाः सत्रम्, "हुयामा-" (उणा-४५१) ॥ इति त्रः ॥ ३ ॥ स्तुवन्ति अत्र यज्वानः स्तोमः, "अर्त्तीरि-" (उणा-३३८) ॥ इति मः, स्तोम्यते श्लाध्यते वा ॥५॥ मन्यतेऽसौ मन्युः पुलिङ्गः, "यजिशुन्धि-" ॥ (उणा-८०१) ॥ इति युः ॥६॥ मह्यन्ते देवा अत्र मखः, "महेरुच्चास्य वा" ॥ (उणा-८९) ॥ इति खो हलुक्, मखति धर्म्ममेति वा ॥ ७ ॥ क्रियते स्वर्गकामैः क्रतुः पुलिङ्गः, "कृलाभ्यां कित्" ॥ (उणा-७८०) ॥ इत्यतुः ॥८॥ सस्तीर्यन्ते दर्भा अत्र संस्तरः, "पुनाम्नि" ॥ ५।३।१३० ॥ इति घः ॥९॥ पशुबन्धार्थं सप्त तन्तवोऽत्र सप्ततन्तुः पुलिङ्गः, यद्वा सप्तसङ्ख्यास्तन्तवो भेदा अस्य, यदाह–'अग्निष्टोमादयः संस्था भेदाः सप्ताऽस्य तन्तवः' इति ॥१०॥ वितन्यते वितानं पुंक्लीबलिङ्गः ॥ ११ ॥ बृंहति वर्धते धर्म्मोऽत्र बर्हिः, क्लीबलिङ्गः "बर्हिवृंहेर्नलुक् च" ॥ (उणा-९९०) ॥ इतीस् ॥ १२ ॥ न ध्वरत्यध्वरः, अध्वानं रातीति वा ॥ १३ ॥ ४८४ ॥

अध्ययनं ब्रह्मयज्ञः

अधीयतेऽध्ययनं स्वाध्यायः ॥ १ ॥ ब्रह्मणे यजनं दानं ब्रह्मयज्ञः ॥ २ ॥

स्याद् देवयज्ञ आहुतिः ।

होमो होत्रं वषट्कारः

देवेभ्यो यजनं देवयज्ञः ॥ १ ॥ आहूयतेऽसावग्नावाहुतिः ॥ २ ॥ हूयते होमः, "अर्त्तीरि-" ॥ (उणा-३३८) ॥ इति मः ॥३॥ "हुयामा-" ॥ (उणा-

४५१ ) ॥ इति त्रे होत्रम् ॥ ४ ॥ वषट्करणं वषट्कार ॥ ५ ॥

पितृयज्ञस्तु तर्पणम् ॥ ४८५ ॥

तच्छ्राद्ध पिण्डदानं च

पितृभ्यो यजन पितृयज्ञ ॥ १ ॥ तर्प्यतेऽनेन तर्पणम् ॥ २ ॥ ४८५ ॥ श्रद्धा प्रयोजनमस्य श्राद्ध पुक्लीबलिङ्ग , चूडादित्वादण् ॥ ३ ॥ पिण्डो दीयतेऽस्मिन् पिण्डदानम् ॥ ४ ॥

नृयज्ञोऽतिथिपूजनम् ।

नृभ्यो यजनं दान नृयज्ञ ॥ १ ॥ अतिथय पूज्यन्तेऽस्मिन्निति अतिथिपूजनम् ॥ २ ॥

भूतयज्ञो बलिः

भूतेभ्यो काकादिभ्यो यजन भूतयज्ञ ॥१॥ बलत्यनेनेति बलिः पुंस्त्रीलिङ्ग ॥२॥

उपसहारमाह–

पञ्च महायज्ञा भवन्त्यमी ॥ ४८६ ॥

अमी ब्रह्मयज्ञादय , यन्मनु –

अध्यापन ब्रह्मयज्ञ पितृयज्ञस्तु तर्पणम् ।
होमो देवो बलिभूतो नृयज्ञाऽतिथिपूजनम् ॥ इति ॥ ४८६ ॥

पौर्णमासश्च दर्शश्च यज्ञौ पक्षान्तयोः पृथक् ।

शुक्लपक्षान्ते यज्ञ पूर्णमास्या भव पौर्णमास , "भर्तुसन्ध्यादेरण्"॥६।३।८९॥ ॥ १ ॥ कृष्णपक्षान्ते यज्ञ दर्शभवत्वाद् दर्श , आमावास्य इत्यर्थ ॥ १ ॥

सौमिकी दीक्षणीयेष्टिः

सोम प्रयोजनमस्या सौमिकी ॥ १ ॥ दीक्षणीयस्य दीक्षार्हस्य इष्टिर्दीक्षणीयेष्टि ॥ २ ॥

दीक्षा तु व्रतसंग्रहः ॥ ४८७ ॥

दीक्षण दीक्षा ॥ १ ॥ व्रतं शास्त्रतो नियमस्तस्य संग्रह ॥ २ ॥ ४८७ ॥

वृतिः सुगहना कुम्बा

व्रियतेऽनया वृति' कण्टकाद्यावरण प्रस्तावाद् यज्ञवाटस्य, सा सुगहना निचिता कुम्ब्यते आच्छाद्यतेऽनया कुम्बा, "भिषिभूषि–" ॥५।३।१०९॥ इति अङ् ॥ १ ॥

वेदी भूमिः परिष्कृता ।

परिष्कृता चातुरस्रेण यागार्थं भूषिता भूमि ॥ १ ॥ विदन्त्येना वेदी, " वि-

दिवृतेर्वा'' ॥ ( उणा- ६१० ) ॥ इति इ , इया वेदा ॥ २ ॥

स्थण्डिल चत्वर चान्या

अन्या यागार्थमसस्कृता भूमि 'स्थल स्थाने' स्थलन्ति तिष्ठन्त्यत्र स्थण्डिल, "स्थाण्डिलकपिल-" ॥ ( उणा- ४८४ ) ॥ इतीले निपात्यते ॥ १ ॥ चल्यते चत्वर "कृगृशृ-" ॥ ( उणा- ४४१ ) ॥ इति वरट् ॥ २ ॥

यूप स्याद् यज्ञकीलक ॥ ४८८ ॥

यूयते पशुरनेन यूप , "युसुकु" ॥ ( उणा-२९७ ) ॥ इति प ऊत्व च पुलिङ्गोऽयम् वैजयन्ती तु- "यूपोऽस्त्री सस्कृतस्तम्भ" इति क्लीबेऽप्याह। यज्ञे पशुविशसनाय कीलको यज्ञकीलक ॥ १ ॥ ४८८ ॥

चषालो यूपकटके

तक्ष्णा घटितो यूपाग्रे कटकाकृति , चष्यते उत्कीर्यते चषाल पुक्लीबलिङ्ग , "ऋकृमृ-" ॥ ( उणा- ४७५ ) ॥ इत्याल ॥ १ ॥

यूपकर्णो घृतावनौ ।

यूपस्य कर्णो यूपकर्ण । घृतस्य अवनिर्निषेकस्थानं घृतावनिस्तत्र ॥१॥

यूपाग्रभागे स्यात् तर्म

तरन्त्यनेन यूप तर्म, "मन्" ॥ ( उणा- ९११ ) ॥ इति मन् क्लीबोऽयम्, वाचस्पतिस्तु- "यूपाग्र तर्म न स्त्रियाम्" इति पुंस्यप्याह ॥ १ ॥

अरणिर्निर्मन्थदारुणि ॥ ४८९ ॥

इयर्ति वह्निरस्मिन् अरणि पुंस्त्रीलिङ्ग , "ऋहृसृ-" ॥ (उणा- ६३८) ॥ इत्यणि , अग्नेर्निर्मथनाय दारु काष्ठं तत्र ॥ १ ॥ ४८९ ॥

स्युर्दक्षिणाऽऽहवनीयगार्हपत्यास्त्रयोऽग्नय ।

दक्षिणे स्थाप्यत्वाद् दक्षिण ॥ १ ॥ आहोतव्य आहवनीय ॥ १ ॥ गृह-पतिना सप्रयुक्तो गार्हपत्य , "हृद्यपद्य-" ॥ ७।१।११ ॥ इति ये निपात्यते ॥ १ ॥

इदमग्नित्रयं त्रेता

इदमुक्तम्, त्रीन् इता प्राप्ता त्रेता पृषोदरादित्वाद् एत्व ॥ १ ॥

प्रणीतः संस्कृतोऽनल. ॥ ४९० ॥

मन्त्रादिना सस्कृतोऽनल । प्रणीयते स्म प्रणीत ॥ १॥४९० ॥

ऋक् सामिधेनी धाय्या च समिदाधीयते यया ।

समिधामाधानी सामिधेनी ऋक्, "समिध आधाने-" ॥६।३।१६२॥ इति टेन्यण् ॥ १ ॥ धीयते समिदग्नावनया "धाय्यापाय्य-" ॥५।१। २४ ॥ इति ध्यणि निपात्यते ॥ २ ॥

समिदिन्धनमेधेध्मतर्पणैधांसि.

समिध्यते वह्निरनया समित्, सपदादित्वात् क्विप् ॥१॥ इध्यतेऽनेन इन्धनम्॥२॥ "दशनाऽवोदै-" ॥४।२।५४॥ इति निपातनाद् नलोपे घञि एध ॥३॥ "विलिभिलि– ॥(उणा–३४०)॥ इति मे इध्म क्लीबलिङ्गोऽयम्, वैजयन्ती तु–"होमेन्धन स्यादिध्मोऽस्त्री" इति पुंस्यप्याह ॥४॥ तृप्यत्यग्निरनेन तर्पणम् ॥५॥ इध्यतेऽनेन एध क्लीबलिङ्ग, "येन्धिभ्या यादेधौ च" ॥ (उणा–९६८) ॥ इत्यस् ॥ ६ ॥

भस्म तु ॥ ४९१ ॥

स्याद् भूतिर्भसितं रक्षा क्षारः

'भस भर्त्सनदीप्त्यो' सौत्र., भसित तदिति भस्म क्लीबलिङ्ग., "मन्" ॥ (उणा–९११) ॥ इति मन् ॥ १ ॥ ४९१ ॥ भूयतेऽनया भूति ॥ २ ॥ बभस्ति वह्निना भसितम् ॥ ३ ॥ रक्ष्यतेऽनया रक्षा ॥ ४ ॥ क्षरति क्षार, ज्वलादित्वाद् ण ॥ ५ ॥

पात्रं स्रुवादिकं ।

पिबन्त्यनेन पात्र "नीदाम्ब्-" ॥ ५।२।८८ ॥ इति त्रट् ॥ १ ॥

स्रुव' स्रुक्

स्रवत्यस्मात् स्रुव, "निघृषी-" ॥(उणा–५११)॥ इति किद् व ॥१॥ स्रवति हविरस्या स्रुक् स्त्रीलिङ्ग, "स्रोश्चिक्" ॥ (उणा–८७१) ॥ इति चिक् ॥ २ ॥

अधरा सोपभृत्

सा स्रुक् अधरा। उपभ्रियते उपभृत्, सपदादित्वात् क्विप् ॥ १ ॥

जुहूः पुनरुत्तरा ॥ ४९२ ॥

जुह्वत्यनया जुहू, "दिद्युद्दद्-" ॥ ५।२।८३ ॥ इति क्विपि साधु ॥ १ ॥ ॥ ४९२ ॥

ध्रुवा तु सर्वसंज्ञार्थं यस्यामाज्य निधीयते ।

ध्रुवति ध्रुवा "अच्" ॥५।१।४९॥ इत्यच्, कुटादित्वाद् गुणाभाव ॥१॥

योऽभिमन्त्र्य निहन्येत स स्यात् पशुरुपाकृत ॥ ४९३ ॥

उप आमन्त्र्य क्रियते हन्यते स्म उपाकृत ॥ १ ॥ ४९३ ॥

परम्पराक शसनं प्रोक्षण च मखे वध ।

परम्परामकति परम्पराकम् ॥ १ ॥ शस्यते शसनम्, शमनमित्यन्ये ॥२॥ प्रोक्ष्यते प्रोक्षण लक्षणया वध, प्रोक्ष्य हि यज्ञे पशुर्हन्यते ॥ ३ ॥

हिंसार्थ कर्माभिचार स्यात्

विपक्षादीना हिंसानिमित्त कर्म उच्चाटनमारणादि, अभिभवितु चरणमभिचार ॥ १ ॥

यज्ञार्हे तु यज्ञियम् ॥ ४९४ ॥

यज्ञमर्हति यज्ञियम्, "यज्ञादिय" ॥ ६।४।१७९ ॥ १ ॥ ४९४ ॥

हवि. सान्नाय्यम्

हूयते हवि क्लीबलिङ्ग ॥ १ ॥ संनीयते सानाय्यम्, "धाय्यापाय्य" ॥ ५।१।२४ ॥ इति ध्यणि निपात्यते ॥ २ ॥

आमिक्षा शृतोष्णक्षीरग दधि ।

क्षीरशर: पयस्या च

आमृद्नाति चित्तम्, आमीयते क्षिप्यते दध्यत्रेति वा आमिक्षा "लाक्षाद्राक्षा-" ॥ (उणा–५९७) ॥ इति निपात्यते, शृत पक्वमुष्णं तप्तं च तद्गत दधि ॥ १ ॥ क्षीरस्य शरो मण्ड इव क्षीरशर ॥ २ ॥ पयसो विकार पयस्या "पयोद्रोर्य" ॥ ६।२।३५ ॥ इति य ॥ ३ ॥

तन्मस्तुनि तु वाजिनम् ॥ ४९५ ॥

तस्या आमिक्षाया मस्तुनि मण्डे वजति वाजिनम्, "विपिनाजिना-" (उणा–२८४) ॥ इति इने निपात्यते ॥ १ ॥ ४९५ ॥

हव्य सुरेभ्यो दातव्यं

हूयते हव्यम्, अग्निमुखेन सुरेभ्यो दातव्यमोदनम् ॥ १ ॥

पितृभ्य: कव्यमोदनम् ।

ब्राह्मणमुखेन पितृभ्यो दातव्यमोदनम्, कूयते शब्दायते पितृभि. कव्यम् ॥१॥ उभयमुभयत्रेति श्रुतिज्ञा ।

तइअकसायाणुदए पच्चक्खाणाऽऽवरणनामधिज्जाण ।
देसिक्कदेसविरइ चरित्तलंभ न उ लहन्ति ॥ ३१ ॥
मूलगुणाण लभं न लहइ मूलगुणघाईणं उदए ।
सजलणाणं उदये न लहइ चरणमहक्खाय ॥ ३२ ॥
सव्वे वि अइआरा सजलणाण तु उदयओ हुंति ।
मूलछिज्ज पुण होइ बारसण्ह कसायाण ॥ ३३ ॥
बारसविहे कसाये खविए उवसामिए व जोएहिं ।
लब्भइ चरित्तलंभो तस्स विसेसा इमे पच ॥ ३४ ॥
सामाइअ पढमं छेओवट्ठावण भवे बीअ ।
परिहारविसुद्धीअ सुहुम तह संपराय च ॥ ३५ ॥
तत्तो अ अहक्खाय खाय सव्वम्मि जीवलोगम्मि ।
ज चरिऊण सुविहिआ वच्चंतयरामरं ठाण ॥ ३६ ॥
अण-दस नपुसि-त्थीवेअ छक्क च पुरिसवेअ च ।
दो दो एगतरिए सरिसे सरिस उवसमेइ ॥ ३७ ॥

तृतीयकषायाणामुदये प्रत्याख्यानाऽऽवरणनामधेयानाम् ।
देशैकदेशविरतिं चारित्रलाभ न तु लभन्ते ॥ ३१ ॥
मूलगुणाना लाभ न लभते मूलगुणघातिनामुदये ।
संज्वलनानामुदये न लभते चरण यथाख्यातम् ॥ ३२ ॥
सर्वेऽप्यतिचारा सज्वलनाना तूदयतो भवन्ति ।
मूलच्छेद्य पुनर्भवति द्वादशाना कषायाणाम् ॥ ३३ ॥
द्वादशविधे कषाये क्षपिते उपशमिते वा योगै ।
लभ्यते चारित्रलाभस्तस्य विशेषा इमे पञ्च ॥ ३४ ॥
सामायिक प्रथमं छेदोपस्थापन भवेद् द्वितीयम् ।
परिहारविशुद्धिक सूक्ष्म तथा संपराय च ॥ ३५ ॥
ततश्च यथाख्यातं क्षायिकं सर्वस्मिन् जीवलोके ।
यच्चरित्वा सुविहिता व्रजन्त्यजरामर स्थानम् ॥ ३६ ॥
अनन्तानुबन्धिनो दर्शनं नपुसक-स्त्रीवेदं षट्कं च पुरुषवेदं च ।
द्वौ द्वावेकान्तरितौ सदृशौ सदृशमुपशमयति ॥ ३७ ॥

१ समुदायशब्दानामवयवे वृत्तिदर्शनात्, निर्युक्तौ अण-इत्यपि अनन्तानुबन्धनामुपलक्षकम् । २, हास्यादिषट्कम् ।

लोभाणू वेअंतो जो खलु उवसामओ व खमओ वा ।
सो सुहुमसपराओ अहक्खाया ऊणओ किंचि ॥३८॥
उवसाम उवणीआ गुणमहया जिणचरित्तसरिस पि ।
पडिवायति कसाया, किं पुण सेसे सरागत्थे [1]॥ ३९ ॥
जइ उवसतकसाओ लहइ अणतं पुणो वि पडिवाय ।
न हु भे ! वीससिअव्वं थेवे वि कसायसेसम्मि ॥४०॥
अणथोवं वणथोवं अग्गीथोवं कसायथोव च ।
न हु भे ! वीससिअव्वं थेवं पि हु तं बहुं होइ ॥४१॥
दासत्त देइ रिण अइरा मरणं वणो वि उवसप्पन्तो ।
सव्वस्स दाहमग्गी दिंति कसाया भवमणंत ॥४२॥
अण-मिच्छ-मीस-सम्म अट्ठ नपुसि-त्थिवेय छक्कं च ।
पुमवेअ च खवेइ कोहाइए अ संजलणे ॥ ४३ ॥
गइ-आणुपुव्वि दो दो जाइनामं च जाव चउरिंदी ।
आयावं उज्जोअं थावरनामं च सुहुमं च ॥ ४४ ॥

---

लोभाणून् वेदयन् य खलूपशमको वा क्षमको वा ।
स सूक्ष्मसंपरायो यथाख्यातादूनक किञ्चित् ॥ ३८ ॥
उपशममुपनीता गुणमहता जिनचारित्रसदृशमपि ।
प्रतिपातयन्ति कषायाः, किं पुन शेषान् सरागस्थान् [1] ॥ ३९ ॥
यद्युपशान्तकषायो लभतेऽनन्त पुनरपि प्रतिपातम् ।
न खलु भो ! विश्वसितव्य स्तोकेऽपि कषायशेषे ॥ ४० ॥
ऋणस्तोकं व्रणस्तोकमग्निस्तोकं कषायस्तोकं च ।
न खलु भो ! विश्वसितव्यं स्तोकमपि खलु तद् बहु भवति ॥४१॥
दासत्वं ददाति ऋणमचिराद् मरणं व्रणोऽप्युपसर्पन् ।
सर्वस्य दाहमग्निर्ददति कषाया भवमनन्तम् ॥ ४२ ॥
अनन्तानुबन्धिनो मिथ्यात्वं मिश्रं सम्यक्त्वमष्टौ[2] नपुसकस्त्रीवेद षट्कं च ।
पुम्वेदं च क्षपयति क्रोधादिकांश्च संज्वलनान् ॥ ४३ ॥
गत्याऽऽनुपूर्व्यौ द्वौ द्वौ जातिनाम च यावच्चतुरिन्द्रिया ।
आतापमुद्द्योतं स्थावरनाम च सूक्ष्मं च ॥ ४४ ॥

---

१ ग, णुं इत्यपि । २, अष्टावप्रत्याख्यानादीन् ।

साहारणमपज्जत्तं निद्दानिद्द च पयलपयलं च ।
थीण खवेइ ताहे अवसेसं ज च अट्ठण्ह ॥ ४५ ॥
वीसमिऊण निअठो दोहिं समएहि केवले सेसे ।
पढमे निद्द पयलं नामस्स इमाओ पयडीओ ॥ ४६ ॥
देवगइ-आणुपुव्वी-विउव्वि-संघयण-पढमवज्जाइं ।
अन्नयर सठाणं तित्थयराहारनामं च ॥ ४७ ॥
चरमे नाणावरणं पंचविहं दंसण चउविगप्प ।
पञ्चविहमन्तराय खवइत्ता केवली होइ ॥ ४८ ॥
सभिन्नं पासंतो लोगमलोगं च सव्वओ सव्वं ।
त नत्थि जं न पासइ भूअं भव्वं भविस्स च ॥ ४९ ॥
जिणपवयणउप्पत्ती पवयणएगट्ठिआ विभागो अ ।
दारविही अ नयविही वक्खाणविही अ अणुओगो ॥५०॥
एगट्ठिआणि तिण्णि उ पवयण सुत्तं तहेव अत्थो अ ।
इक्किक्कस्स य इत्तो नामा एगट्ठिआ पञ्च ॥ ५१ ॥

---

साधारणमपर्याप्तं निद्रानिद्रां च प्रचलाप्रचला च ।
स्त्यानर्द्धि क्षपयति तस्मिन्नवशेषं यच्चाष्टानाम् ॥ ४५ ॥
विश्रम्य निर्ग्रन्थो द्वाभ्या समयाभ्या केवले शेषे ।
प्रथमे निद्रा प्रचलां नाम्न इमा प्रकृतय ॥ ४६ ॥
देवगत्या-नुपूर्वी-वैकुर्विक-सहनन-प्रथमवर्जानि ।
अन्यतरत् सस्थान तीर्थकराऽऽहारनाम्नी च ॥ ४७ ॥
चरमे ज्ञानावरणं पञ्चविध दर्शन चतुर्विकल्पम् ।
पञ्चविधमन्तरायं क्षपयित्वा केवली भवति ॥ ४८ ॥
सभिन्न पश्यंल्लोकमलोक च सर्वत सर्वम् ।
तन्नास्ति यन्न पश्यति भूतं भव्य भविष्यच्च ॥ ४९ ॥
जिनप्रवचनोत्पत्ति प्रवचनैकार्थिकानि विभागश्च ।
द्वारविधिश्च नयविधिर्व्याख्यानविधिश्चानुयोग ॥ ५० ॥
एकार्थिकानि त्रीणि तु प्रवचनं सूत्रं तथैवाऽर्थश्च ।
एकैकस्य चेत नामान्येकार्थिकानि पञ्च ॥ ५१ ॥

---

१, भीमो भीमसेन इति न्यायेन स्त्याना स्त्यानर्धिम्।

सुअधम्मं तित्थ मग्गो पावयणं पवयण च एगट्ठा ।
सुत्त तत गथो पाढो सत्थ च एगट्ठा ॥ ५२ ॥
अणुओगो अ निओगो भास विभासा य वत्तिअ चेव ।
एए अणुओगस्स उ नामा एगट्ठिआ पञ्च ॥ ५३ ॥
नाम ठवणा दविए खित्ते काले अ वयण भावे अ ।
एसो अणुओगस्स उ निक्खेवो होइ सत्तविहो ॥ ५४ ॥
वच्छग गोणी खुज्जा सज्जाए चेव बहिरुल्लावे ।
गामिल्लए अ वयणे सत्तेव य हुति भावम्मि ॥ ५५ ॥
सावगभज्जा सत्तवईए य कुकणगदारए नउले ।
कमलामेला संबस्स साहस सेणिए कोवो ॥ ५६ ॥
कट्ठे पुच्छे चित्ते सिरिघरिए पुड देसिए चेव ।
भासग विभासए वा वित्तीकरणे अ आहरणा ॥ ५७ ॥
गोणी चदणकंथा चेडीओ सावए बहिर गोहे ।
टकणओ ववहारो पडिवक्खो आयरिअसीसे ॥ ५८ ॥

---

श्रुतधर्मस्तीर्थं मार्ग प्रावचनं प्रवचन चैकार्था ।
सूत्रं तन्त्रं ग्रन्थ पाठ शास्त्रं चैकार्था ॥ ५२ ॥
अनुयोगश्च नियोगो भाषा विभाषा च वार्तिकं चैव ।
एतेऽनुयोगस्य तु नामान्येकार्थिकानि पञ्च ॥ ५३ ॥
नाम स्थापना द्रव्यं क्षेत्रं कालश्च वचनं भावश्च ।
एषोऽनुयोगस्य तु निक्षेपो भवति सप्तविध. ॥ ५४ ॥
वत्सका गौ कुब्जा स्वाध्यायश्चैव बधिरोल्लापाः ।
ग्रामीणं च वचन सप्तैव भवन्ति भावे ॥ ५५ ॥
श्रावकभार्या साप्तपदिकश्च कोङ्कणकदारको नकुल ।
कमलामेला शम्बस्य साहस श्रेणिके कोप. ॥ ५६ ॥
काष्ठे पुस्ते चित्रे श्रीगृहे पोण्डे देशिके चैव ।
भाषके विभाषके वा व्यक्तिकरणे उदाहरणानि ॥ ५७ ॥
गौश्चन्दनकन्था चेट्य श्रावको बधिरो गोदोह ।
टङ्कणको व्यवहार प्रतिपक्ष आचार्यशिष्ययो ॥ ५८ ॥

कस्स न होही वेसो अणब्भुवगओ अनिरुवयारी अ [१]।
अप्पच्छंदमईओ पट्ठिओ गन्तुकामो अ ॥ ५९ ॥
विणओणएहिं कयपंजलिउडेहिं छदमणुअत्तमाणेहि ।
आराहिओ गुरुजणो सुअं बहुविहं लहुं देइ ॥ ६० ॥
सेल घण कुडग चालणि परिपूणग हंस महिस मेसे अ ।
मसग जलूग बिराली जाहग गो भेरि आभीरी ॥ ६१ ॥
उद्देसे निद्देसे अ निग्गमे खित्त काल पुरिसे अ ।
कारण पच्चय लक्खण नए समोआरणाणुमए ॥ ६२ ॥
कि कइविह कस्स कहि केसु कह किच्चिर हवइ काल ।
कइ सतरमविरहिअ भवागरिस फासण निरुत्ती ॥ ६३ ॥
नाम ठवणा दविए खित्ते काले समासमुद्देसे ।
उद्देसुद्देसम्मि य भावम्मि अ होइ अट्ठमओ ॥ ६४ ॥
एमेव य निद्देसो अट्ठविहो सो होइ नायव्वो ।
अविसेसिओ उद्देसो विसेसिओ होइ निद्देसो ॥ ६५ ॥

---

कस्य न भविष्यति द्वेष्योऽनभ्युपगतश्च निरुपकारी च [१]।
आत्मच्छन्दमतिक. प्रस्थितो गन्तुकामश्च ॥ ५९ ॥
विनयावनतै. कृतप्राऽञ्जलिपुटैश्छन्दमनुवर्तमानै ।
आराधितो गुरुजन श्रुतं बहुविध लघु ददाति ॥ ६० ॥
शैलो घन कुटकश्चालनी परिपूणको हंसो महिषो मेषश्च ।
मशको जलौका बिडाली जाहको गौर्भेर्याभीरी ॥ ६१ ॥
उद्देशो निर्देशश्च निर्गम क्षेत्रं काल पुरुषश्च ।
कारण प्रत्ययो लक्षणं नया समवतरणाऽनुमते ॥ ६२ ॥
किं कतिविध कस्य कुत्र केषु कथ कियच्चिर भवति कालम् ।
कति सान्तरमविरहित भवा आकर्ष· स्पर्शना निरुक्ति ॥ ६३ ॥
नाम स्थापना द्रव्य क्षेत्र काल समासोद्देश ।
उद्देशोद्देशो भावश्च भवत्यष्टमक ॥ ६४ ॥
एवमेव च निर्देशोऽष्टविध स भवति ज्ञातव्य ।
अविशेषित उद्देशो विशेषितो भवति निर्देश ॥ ६५ ॥

---

१ क, कयपंजलीहि-ख, पञ्जलीहि ।

दुविहं पि नेगमनओ निद्दिट्ठ संगहो अ ववहारो ।
निद्देसगमुज्जुसुओ उभयसरिच्छ च सद्दस्स ॥ ६६ ॥
नाम ठवणा दविए खित्ते काले तहेव भावे अ ।
एसो उ निग्गमस्स निक्खेवो छव्विहो होइ ॥ ६७ ॥
जह मिच्छत्ततमाओ विणिग्गओ जह य केवल पत्तो ।
जह य पयासिअमेअं सामाइअं तह पवक्खामि ॥ ६८ ॥
पंथ किर देसित्ता साहूण अडविविप्पणट्ठाण ।
सम्मत्तपढमलभो बोधव्वो वद्धमाणस्स ॥ ६९ ॥
अवरविदेहे गामस्स चिंतओ रायदारुवणगमण ।
साहू भिक्खनिमित्त सत्था हीणे तहिं पासे ॥ ७० ॥
दाणन्नपंथनयण अणुकपगुरूण कहण सम्मत्त ।
सोहम्मे उववन्नो पलिआऊ सुरो महड्ढिओ ॥ ७१ ॥
लद्धूण य सम्मत्त अणुकपाए उ सो सुविहिआण ।
भासुरवरबुंदि[1]धरो देवो वेमाणिओ जाओ ॥ ७२ ॥

---

द्विविधमपि नैगमनयो निर्दिष्ट सग्रहश्च व्यवहार ।
निर्देशकमृजुसूत्र उभयसदृश च शब्दस्य ॥ ६६ ॥
नाम स्थापना द्रव्य क्षेत्र कालस्तथैव भावश्च ।
एष तु निर्गमस्य निक्षेप षड्विधो भवति ॥ ६७ ॥
यथा मिथ्यात्वतमसो विनिर्गतो यथा च केवलं प्राप्त ।
यथा च प्रकाशितमेतत् सामायिकं तथा प्रवक्ष्यामि ॥ ६८ ॥
पन्थं किल दर्शयित्वा साधूनामटवीविप्रनष्टानाम् ।
सम्यक्त्वप्रथमलाभो बोद्धव्यो वर्धमानस्य ॥ ६९ ॥
अवरविदेहे ग्रामस्य चिन्तको राजदारुवनगमनम् ।
साधून् भिक्षानिमित्त सार्थाद् हीनान् तत्र ददर्श ॥ ७० ॥
दानान्नपथिनयनमनुकम्प[2]गुरूणा कथनात् सम्यक्त्वम् ।
सौधर्मे उपपन्न- पल्योपमायु सुरो महर्धिक ॥ ७१ ॥
लब्ध्वा च सम्यक्त्वमनुकम्पया तु स सुविहितेभ्य ।
भास्वरवरशरीरधरो देवो वैमानिको जात ॥ ७२ ॥

---

१ देश्योऽय बुन्दि-शब्द, 'रूवमुहतणूसु बुन्दि' इति देशीनाममालाया षष्ठे वर्गे ।
२ अनुकम्पन्त इति अनुकम्पा, अनुकम्पावन्त इत्यर्थ ।

चइऊण देवलोगा इह चेव य भारहम्मि वासम्मि।
इक्खागकुले जाओ उसभसुअसुओ मरीइ त्ति ॥ ७३ ॥
इक्खागकुले जाओ इक्खागकुलस्स होइ उप्पत्ती।
कुलगरवंसे ईए भरहस्स सुओ मरीइ त्ति ॥ ७४ ॥
ओसप्पिणीइ मीसे तइआइ समाइ पच्छिमे भागे।
पलिओवमट्ठभागे सेसम्मि उ कुलगरुप्पत्ती ॥ ७५ ॥
अद्धभरहमज्झिल्लतिभागे गंगसिंधुमज्झम्मि।
इत्थ बहुमज्झदेसे उपन्ना कुलगरा सत्ता ॥ ७६ ॥
पुव्वभव कुलगराणं उसभजिणिन्दस्स भरहरण्णो अ।
इक्खागकुलउप्पत्ती नेअव्वा आणुपुव्वीए ॥ ७७ ॥
पुव्वभव जम्म नाम प्पमाण सघयणमेव संठाणं।
वण्णित्थिआउ भागा भवणोवाओ अ नीई य ॥ ७८ ॥
अवरविदेहे दो वणिअ वयसा माइउज्जुए चेव।

---

च्युत्वा देवलोकादिह चैव च भारते वर्षे।
इक्ष्वाकुकुले जात ऋषभसुतसुतो मरीचिरिति ॥ ७३ ॥
इक्ष्वाकुकुले जात इक्ष्वाकुकुलस्य भवत्युत्पत्ति ।
कुलकरवंश आदौ भरतस्य सुतो मरीचिरिति ॥ ७४ ॥
अवसर्पिण्या मिश्रे तृतीयाया समाया पश्चिमे भागे।
पल्योपमाष्टभागे शेषे तु कुलकरोत्पत्ति ॥ ७५ ॥
अर्धभरतमध्यत्रिभागे गङ्गासिन्धुमध्ये।
अत्र बहुमध्यदेशे उत्पन्ना कुलकरा सत्त्वा ॥ ७६ ॥
पूर्वभव कुलकराणा वृषभजिनस्य भरतराजस्य च।
इक्ष्वाकुकुलोत्पत्तिर्नेतव्याऽऽनुपूर्व्या ॥ ७७ ॥
पूर्वभवो जन्म नाम प्रमाणं संहननमेव संस्थानम्।
वर्ण स्त्रियो भागा भवनोपपातश्च नीतयश्च ॥ ७८ ॥
अवरविदेहे द्वौ वणिजौ वयस्यौ मातृऋजुकौ चैव।

कालगया इह भरहे हत्थी मणुओ अ आया य ॥ ७९ ॥
दट्ठु सिणेहकरण गयमारुहण च नामनिप्फत्ती ।
परिहाणि गेहि कलहो सामत्थण विन्नवणह त्ति ॥ ८० ॥
पढमित्थ विमलवाहण चक्खुम जसम चउत्थमभिचन्दे ।
तत्तो अ पसेणिइए मरुदेवो चेव नाभी अ ॥ ८१ ॥
नवधणुसयाइं पढमो अट्ठयसत्तद्धसत्तमाइ च ।
छच्चेव अद्धछट्ठा पञ्चसया पन्नवीसा य ॥ ८२ ॥
वज्जरिसहसघयणा समचउरंसा हुति संठाणा ।
वण्ण पि अ वुच्छामि पत्तेअं जस्स जो आसि ॥ ८३ ॥
चक्खुम जसमं च पसेणइअ एए पिअंगुवण्णाभा ।
अभिचदो ससिगोरो निम्मलकणगप्पभा सेसा ॥ ८४ ॥
चंदजस चदकता सुरूव पडिरूव चक्खुकंता य ।
सिरीकन्ता मरुदेवी कुलगरपत्तीण नामाइ ॥ ८५ ॥

कालगताविह भरते हस्ती मनुष्यश्चाऽऽयातौ च ॥ ७९ ॥
द्रष्ट्वा स्नेहकरण गजारोहणं च नामनिष्पत्ति. ।
परिहानिर्गृद्धि कलह स्वाम्यर्थन विज्ञापनेहेति ॥ ८० ॥
प्रथमोऽत्र विमलवाहनश्चक्षुष्मान् यशस्वी चतुर्थोऽभिचन्द्र ।
ततश्च प्रसेनजित् मरुदेवश्चैव नाभिश्च ॥ ८१ ॥
नवधनु शतानि प्रथमोऽष्टसप्तार्धसप्तमानि च ।
षडेव चार्धषड् पञ्चशतानि पञ्चविंशतिश्च ॥ ८२ ॥
वज्रऋषभसंहनना समचतुरस्राश्च भवन्ति संस्थानात् ।
वर्णमपि च वक्ष्यामि प्रत्येकं यस्य य आसीत् ॥ ८३ ॥
चक्षुष्मान् यशस्वी च प्रसेनजित्, एते प्रियङ्गुवर्णाभा ।
अभिचन्द्र शशिगौरो निर्मलकनकप्रभा. शेषा ॥ ८४ ॥
चन्द्रयशाश्चन्द्रकान्ता सुरूपा प्रतिरूपा चक्षु कान्ता च ।
श्रीकान्ता मरुदेवी कुलकरपत्नीना नामानि ॥ ८५ ॥

१ क, पञ्चसया पन्नवीससहिआ

संघयण संठाणं उच्चत्त चेव कुलगरेहि समं ।
वण्णेण एगवण्णा सव्वाओ पियंगुवण्णाओ ॥ ८६ ॥
पलिओवमदसभागो पढमस्साऽऽउ तओ असंखिज्जा ।
ते आणुपुव्विहीणा पुव्वा नाभिस्स संखिज्जा ॥ ८७ ॥
जं चेव आउअं कुलगराण तं चेव होइ तासि पि ।
जं पढमगस्स आउं तावइअं होइ हत्थिस्स ॥ ८८ ॥
जं जस्स आउअं खलु तं दसभागे समं विभइऊण ।
मज्झिल्लट्ठतिभागे कुलगरकालं वियाणाहि ॥ ८९ ॥
पढमो अ कुमारत्ते भागो चरिमो अ वुड्ढभावम्मि ।
ते पयणुपेम्मदोसा सव्वे देवेसु उववन्ना ॥ ९० ॥
दो चेव सुवण्णेसु उयहिकुमारेसु हुंति दो चेव ।
दो दीवकुमारेसु एगो नागेसु उववन्नो ॥ ९१ ॥
हत्थी छच्चित्थीओ नागकुमारेसु हुन्ति उववन्ना ।
एगा सिद्धिं पत्ता मरुदेवी नाभिणो पत्ती ॥ ९२ ॥

---

संहननं संस्थानमुच्चत्वं चैव कुलकरैः समम् ।
वर्णेनैकवर्णाः सर्वाः प्रियङ्गुवर्णाः ॥ ८६ ॥
पल्योपमदशभागः प्रथमस्यायुस्ततोऽसंख्येयानि ।
तान्यानुपूर्वीहीनानि पूर्वाणि नाभेः संख्येयानि ॥ ८७ ॥
यदेवाऽऽयुः कुलकराणां तदेव भवति तासामपि ।
यत् प्रथमकस्याऽऽयुः तावद् भवति हस्तिनः ॥ ८८ ॥
यद् यस्याऽऽयुः खलु तद् दशभागान् समं विभज्य ।
मध्यमार्ष्टत्रिभागे कुलकरकालं विजानीहि ॥ ८९ ॥
प्रथमश्च कुमारत्वे भागश्चरमश्च वृद्धभावे ।
ते प्रतनुप्रेमदोषाः सर्वे देवेषूपपन्नाः ॥ ९० ॥
द्वौ चैव सुपर्णेषूदधिकुमारेषु भवतो द्वावेव ।
द्वौ द्वीपकुमारेष्वेको नागेषूपपन्नः ॥ ९१ ॥
हस्ती षड् च स्त्रियो नागकुमारेषु भवन्त्युपपन्नाः ।
एका सिद्धिं प्राप्ता मरुदेवी नाभेः पत्नी ॥ ९२ ॥

हक्कारे मक्कारे धिक्कारे चेव दडनीईओ ।
वुच्छ तासि विसेस जहक्कम्म आणुपुव्वीए ॥ ९३ ॥
पढमबिइआण पढमा तइअचउत्थाण अभिणवा बीआ ।
पञ्चमछट्ठस्स य सत्तमस्स तइआ अ अहिणवा उ ॥ ९४ ॥
सेसाओ दडनीई माणवगनिही उ होइ भरहस्स ।
उसभस्स गिहावासे असक्कओ आसि आहारो ॥ ९५ ॥
परिभासणा उ पढमा मडलिबधो होइ बीआ ओ ।
चारगच्छविच्छेआई भरहस्स चउव्विहा नीई ॥ ९६ ॥
नाभीविणीअभूमी मरुदेवी उत्तरा असाढाअ ।
राया य वइरनाहो विमाणसव्वट्ठसिद्धाओ ॥ ९७ ॥
धण मिहुण सुर महब्बल ललिअग य वइरजघ मिहुणे अ ।
सोहम्म विज्ज अच्चुअ चक्की सव्वट्ठ उसभे अ ॥ ९८ ॥
धणसत्थवाहघोसण जइगमणं अडविवासठाण च ।
बहु वोलीणे वासे चिता घयदाणमासि तया ॥ ९९ ॥

---

हक्कारो मक्कारो धिक्कारश्चैव दण्डनीतय ।
वक्ष्ये तासा विशेष यथाक्रममानुपूर्व्या ॥ ९३ ॥
प्रथमाद्वितीययो प्रथमा तृतीयचतुर्थयोरभिनवा द्वितीया ।
पञ्चमषष्ठयोश्च सप्तमस्य तृतीया चाऽभिनवा तु ॥ ९४ ॥
शेषा दण्डनीतयो माणवकनिधेस्तु भवति भरतस्य ।
ऋषभस्य गृहावासेऽसस्कृत आसीदाहार ॥ ९५ ॥
परिभाषणा तु प्रथमा मण्डलिबन्धो भवति द्वितीया तु ।
चारकषड्विच्छेदादिर्भरतस्य चतुर्विधा नीति ॥ ९६ ॥
नाभिविनीतभूमिर्मरुदेवी उत्तराऽषाढायाम् ।
राजा च वैरनाभो विमानसर्वार्थसिद्धात् ॥ ९७ ॥
धनो मिथुनं सुरो महाबलो ललिताङ्गश्च वज्रजङ्घो मिथुनं च ।
सौधर्मो वैद्योऽच्युतश्चक्री सर्वार्थसिद्धे ऋषभश्च ॥ ९८ ॥
धनसार्थवाहघोषण यतिगमनमटवीवासस्थान च ।
बह्वतिक्रान्ते वर्षे चिन्ता घृतदानमासीत् तदा ॥ ९९ ॥

उत्तरकुरु सोहम्मे महाविदेहे महाबलो राया ।
ईसाणे ललिअगो महाविदेहे वइरजघो ॥ १०० ॥
उत्तरकुरु सोहम्मे विदेहे तेगिच्छिअस्स तत्थ सुओ ।
रायसुअसिट्ठिमच्चासत्थाहसुआ वयसा से ॥ १०१ ॥
विज्जसुअस्स य गेहे किमिकुट्ठोवहुअ जइं दट्ठुं ।
बिंति अ ते विज्जसुअ करेहि एअस्स तेगिच्छ ॥ १०२ ॥
तिल्ल तेगिच्छिसुओ कबलग चदण च वाणिअओ ।
दाउं अभिनिक्खन्तो तेणेव भवेण अंतगडो ॥ १०३ ॥
साहुं तिगिच्छिऊण सामन्नं देवलोगगमण च ।
पुडरिगिणीइ अ चुआ तओ सुआ वइरसेणस्स ॥ १०४ ॥
पढमित्थ वइरनाहो बाहु सुबाहु अ पीढ महपीढो ।
तेसिं पिआ तित्थयरो निक्खन्ता ते वि तत्थेव ॥ १०५ ॥
पढमो चउद्दसपुव्वी सेसा इक्कारसगवी चउरो ।
बिईओ वेआवच्च किइकम्मं तइओ कासी ॥ १०६ ॥

---

उत्तरकुरौ सौधर्मे महाविदेहे महाबलो राजा ।
ईशाने ललिताङ्गो महाविदेहे वज्रजङ्घ ॥ १०० ॥
उत्तरकुरौ सौधर्मे विदेहे चिकित्सकस्य तत्र सुत ।
राजसुतश्रेष्ठ्यऽमात्यसार्थवाहसुता वयस्यास्तस्य ॥ १०१ ॥
वैद्यसुतस्य च गेहे कृमिकुष्ठोपद्रुत यतिं दृष्ट्वा ।
ब्रुवते च ते वैद्यसुत कुर्वेतस्य चिकित्साम् ॥ १०२ ॥
तैल चिकित्सिसुत कम्बलक चन्दनं च वणिज ।
दत्त्वाऽभिनिष्क्रान्तस्तेनैव भवेनाऽन्तकृत् ॥ १०३ ॥
साधु चिकित्सित्वा श्रामण्य देवलोकगमन च ।
पुण्डरिकिण्या च च्युतास्तत सुता वज्रसेनस्य ॥ १०४ ॥
प्रथमोऽत्र वज्रनाभो बाहु सुबाहुश्च पीठो महापीठः ।
तेषा पिता तीर्थकरो निष्क्रान्तास्तेऽपि तत्रैव ॥ १०५ ॥
प्रथमश्चतुर्दशपूर्वी शेषा एकादशाङ्गविदश्चत्वार ।
द्वितीयो वैयावृत्य कृतिकर्म तृतीयकोऽकार्षीत् ॥ १०६ ॥

भोगफले बाहुबल पसमण जिट्ठ इअर अचिअत्तं ।
पढमो तित्थयरत्त वीसहि ठाणेहि कामी अ ॥ १०७ ॥
अरहत सिद्ध पवयण गुरु थेर बहुस्सुअे तवस्सीसुं ।
वच्छलया य एसि अभिक्ख नाणोवओगे अ ॥ १०८ ॥
दसणं विणए आवस्सए सीलव्वए निरइआरो ।
खणलव तवच्चिआए वेआवच्चे समाही अ ॥ १०९ ॥
अपुव्वनाणगहणे सुअभत्ती पवयणे पहावणया ।
एएहि कारणेहि तित्थयरत्त लहइ जीवो ॥ ११० ॥
पुरिमेण पच्छिमेण य एए सव्वे वि फासिआ ठाणा ।
मज्झिमएहि जिणेहिं इक्क दो तिण्णि सव्वे वा ॥ १११ ॥
त च कह वेइज्जइ अगिलाए धम्मदेसणाईहि[1] ।
बज्झइ त तु भगवओ तइअभवोसक्कइत्ता ण ॥ ११२ ॥
निअमा मणुअगईए इत्थी पुरिसेअरो व सुहलेसो ।
आसेविअबहुलेहिं वीसाए अन्नयरेहि ॥ ११३ ॥

भोगफले बाहुबल प्रशमन ज्येष्ठयोरितरयोर्मात्सर्यम् ।
प्रथमस्तीर्थकरत्वं विशत्या स्थानैरकार्षाच्च ॥ १०७ ॥
अर्हत्सिद्ध-प्रवचन-गुरु-स्थविर-बहुश्रुतास्तपस्विषु ।
वत्सलता चैषामभीक्ष्ण ज्ञानोपयोगश्च ॥ १०८ ॥
दर्शनं विनय आवश्यक शीलव्रत निरतिचार ।
क्षणलवस्तपस्त्यागौ वैयावृत्यं समाधिश्च ॥ १०९ ॥
अपूर्वज्ञानग्रहणं श्रुतभक्ति प्रवचने प्रभावनता ।
एतै कारणैस्तीर्थकरत्व लभते जीव ॥ ११० ॥
पूर्वेण पश्चिमेन चैतानि सर्वाण्यऽपि स्पृष्टानि स्थानानि ।
मध्यमकैर्जिनैरेकं द्वे त्रीणि सर्वाणि वा ॥ १११ ॥
तच्च कथं वेद्यतेऽग्लान्या धर्मदेशनादिभि ? ।
बध्यते तत्तु भगवतस्तृतीयभवमवष्वष्क्य ॥ ११२ ॥
नियमाद् मनुजगतौ स्त्री पुरुष· स्त्रीपुरुषेतरो वा शुभलेश्य ।
आसेवितबहुलैर्विंशतावन्यतरै ॥ ११३ ॥

१ क, णं ।

उववाओ सव्वट्ठे सव्वेसि पढमओ चुओ उसभो ।
रिक्खेणाऽसाढाहिं असाढबहुले चउत्थीए ॥ ११४ ॥
[1]जम्मणे नाम वुड्ढी अ जाईसरणे इअ ।
वीवाहे अ अवच्चे अभिसेए रज्जसगहे ॥ ११५ ॥
चित्तबहुलट्ठमीए जाओ उसभो असाढनक्खत्ते ।
जम्मणमहो अ सव्वो नेयव्वो जाव घोसणय ॥ ११६ ॥
मेरु अह उड्ढलोआ चउदिसि रुअगओ अट्ठ पत्तेअ ।
चउ विदिसि मज्झरुअगा इति छप्पन्न दिसि कुमरी ॥११७॥
संवट्टमेह आयसगा य भिगार तालिअटा य ।
चामर जोई रक्ख करिति एअ कुमारीउ ॥ ११८ ॥
दे[2]सूणगं च वरिम सक्कागमण च वसठवणा य ।
आहारमगुलीए ठेवन्ति देवा मणुण्ण तु ॥ ११९ ॥
सक्को वंसठवणे इक्खु अगू तेण हुति इक्खागो ।
[3]ज च जहा जम्मि वए जोग कासी अ त सव्व ॥ १२० ॥

उपपात सर्वार्थे सर्वेषा प्रथमतश्च्युतो वृषभ ।
ऋक्षेणऽषाढाभिरषाढबहुले चतुर्थ्याम् ॥ ११४ ॥
जन्म नाम वृद्धिश्च जातिस्मरणमिति ।
विवाहश्चापत्यमभिषेको राज्यसग्रह ॥ ११५ ॥
चैत्रबहुलाष्टम्या जातो वृषभोऽषाढानक्षत्रे ।
जननमहश्च सर्वो ज्ञातव्यो यावद् घोषणकम् ॥ ११६ ॥
मेरोरध ऊर्ध्वलोकात् चतुर्दिशि रुचकतोऽष्टौ प्रत्येकम् ।
चतुर्विदिशि मध्यरुचकादागच्छन्ति षट्पञ्चाशत् दिक्कुमार्य ॥११७॥
संवर्तमेघ आदर्शकाश्च भृङ्गारास्तालवृन्ताश्च ।
चामर ज्योती रक्षा कुर्वन्त्येतत् कुमार्य ॥ ११८ ॥
देशोनकं च वर्ष शक्राऽऽगमन च वशस्थापना च ।
आहारमङ्गुल्या स्थापयन्ति देवा मनोज्ञ तु ॥ ११९ ॥
शक्रो वशस्थापन इक्षु भक्षयसि तेन भवन्ति इक्ष्वाका ।
यच्च यथा यस्मिन् वयसि योग्यमकार्षीश्च तत्सर्वम् ॥ १२० ॥

१ ख, जम्मेण   २ ख, विहिंति   ३ क, तालफलाहयभगिणी होही पत्तित्ति सारवणा ( तालफलाहतभगिनी भविष्यति पत्नीति समारचना )

अह वड्ढइ सो भयव दिवलोअचुओ अणोवमसिरीओ ।
देवगणसुपरिवुडो नन्दाइ सुमङ्गलासहिओ ॥ १२१ ॥
असिअसिरओ सुनयणो बिम्बुट्ठो धवलदन्तपन्तीओ ।
वरपउमगब्भगोरो फुल्लुप्पलगन्धनीसासो ॥ १२२ ॥
जाईसरो य भयव अप्पडिवडिएहिं तीहि उ नाणेहिं ।
कन्तीइ[1] अ बुद्धीइ अ अब्भहिओ तेहि मणुएहिं ॥ १२३ ॥
पढमो अकालमच्चू तहिं तालफलेण दारओ पहओ ।
कन्ना य कुलगरेण सिट्ठे गहिआ उसभपत्ती ॥ १२४ ॥
भोगसमत्थ नाउ वरकम्म तस्स कासि देविन्दो ।
दुण्ह वरमहिलाणं वहुकम्म कासि देवीओ ॥ १२५ ॥
छपुव्वसयसहस्सा पुव्वि जायस्स जिणवरिन्दस्स ।
तो भरह बभि सुदरि बाहुबली चेव जायाइ ॥ १२६ ॥

---

अथ वर्धते स भगवान् दिवलोकच्युतोऽनोपमश्रीक[2] ।
देवगणसपरिवृतो नन्दया सुमङ्गलासहित ॥ १२१ ॥
असितशिरज[3] सुनयनो बिम्बोष्ठो धवलदन्तपङ्क्तिक ।
वरपद्मगर्भगौर फुल्लोत्पलगन्धनिश्वास ॥ १२२ ॥
जातिस्मरश्च भगवानप्रतिपतितैस्त्रिभिस्तु ज्ञानै ।
कान्त्या च बुद्ध्या चाऽभ्यधिकस्तैर्मनुजै ॥ १२३ ॥
प्रथमोऽकालमृत्युस्तत्र तालफलेन दारक प्रहत ।
कन्या च कुलकरेण शिष्टे गृहीता वृषभपत्नी ॥ १२४ ॥
भोगसामर्थ्यं ज्ञात्वा वरकर्म तस्याऽकार्षीद् देवेन्द्र ।
द्वयोर्वरमहिलयोर्वधूकर्माऽकार्षुर्देव्य ॥ १२५ ॥
षट्पूर्वशतसहस्रात् पूर्वं जातस्य जिनवरेन्द्रस्य ।
ततो भरतो ब्राह्मी सुन्दरी बाहुबली चैव जातानि ॥ १२६ ॥

---

१ ख, कन्तीहि, बुद्धीहि

२ 'अनुपमं स्यादनोपमम्' इति शब्दरत्नाकरे षष्ठकाण्डस्यैकषष्टितमे श्लोके ।

३ 'शिरोऽदन्त. स्मृतो नरि' इति तत्रैव तृतीयकाण्डस्थचतुष्पञ्चाशदधिकशततमिते श्लोके ।

देवीए सुमंगलाए भरहो बंभी य मिहुणयं जाय ।
देवीए सुनन्दाए बाहुबली सुदरी चेव ॥ १२७ ॥
अउणापन्न जुअले पुत्ताण सुमगला पुणो पसवे ।
नीईणमइक्कमणे निवेअण उसभसामिस्स ॥ १२८ ॥
राया करेइ दड सिट्ठे ते बिन्ति अम्ह वि स होउ ।
मग्गह य कुलगर सो य बेइ उसभो य भे राया ॥ १२९ ॥
आभोएउ सक्को उवागओ तस्स कुणइ अभिसेअ ।
मउडाइ अलकार नरिदजोगं च से कुणइ ॥ १३० ॥
भिसिणीपत्तेहिअरे उदय घित्तुं छुहति पायेसु ।
साहुविणीआ पुरिसा विणीअनयरी अह निविट्ठा ॥१३१॥
आसा हत्थी गावो गहिआइ रज्जसगहनिमित्त ।
घित्तूण एवमाई चउव्विह सगह कुणइ ॥ १३२ ॥
उग्गा भोगा रायण्ण खत्तिआ सगहो भवे चउहा ।

देव्या सुमङ्गलाया भरतो ब्राह्मी च मिथुनक जातम् ।
देव्या सुनन्दाया बाहुबली सुन्दरी चैव ॥ १२७ ॥
एकोनपञ्चाशद् युगलानि पुत्राणा सुमङ्गला पुन प्रसुषुवे ।
नीतीनामतिक्रमणे निवेदन वृषभस्वामिन ॥ १२८ ॥
राजा करोति दण्ड शिष्टे ते ब्रुवतेऽस्माकमपि स स्यात् ।
मार्गयत च कुलकर स च ब्रवीति ऋषभश्च भवता राजा ॥ १२९ ॥
आभाग्य[2] शक्र उपागतस्तस्य करोत्यभिषेकम् ।
मुकुटाद्यलङ्कार नरेन्द्रयोग्य च तस्य करोति ॥ १३० ॥
बिसिनीपत्रैरितरे उदक गृहीत्वा क्षिपान्त पादेषु ।
साधुविनीता पुरुषा विनीतनगर्यथ निविष्टा ॥ १३१ ॥
अश्वा हस्तिनो गावो गृहीतानि राज्यसग्रहनिमित्तम् ।
गृहीत्वैवमादि चतुर्विध सग्रह करोति ॥ १३२ ॥
उग्रा भोगा राजन्या क्षत्रिया सग्रहो भवेच्चतुर्धा ।

१ क, आगन्तु तस्स कासि अभिसेअं जोग च से कासी (आगत्य तस्याऽकार्षीदभिषेक योग्य च तस्याऽकार्षीत्)

२ सोपयोगमवधिना विज्ञायेत्यर्थ ।

आरक्खि गुरु वयसा सेसा जे खत्तिआ ते उ ॥ १३३ ॥
आहारे सिप्प कम्मे अ मामणा य विभूसणा ।
लेहे गणिए अ रूवे अ लक्खणे माण पोअए ॥ १३४ ॥
ववहारे नीई जुद्धे अ इसत्थे अ उवासणा ।
तिगिच्छा अत्थसत्थे अ बंधे घाए अ मारणा ॥ १३५ ॥
जण्णूसवसमवाए मंगले कोउइए अ ।
वत्थे गंधे अ मल्ले अ अलंकारे तहेव य ॥ १३६ ॥
चोलोवण विवाहे अ दत्तिआ मडगपूअणा ।
झावणा थूभ सद्दे अ छेलावणग पुच्छणा ॥ १३७ ॥
आसी य कंदाहारा मूलाहारा य पत्तहारा य ।
पुप्फफलभोइणो विअ जइआ किल कुलगरो उसभो ॥१३८॥
आसी अ इक्खुभोई इक्खागा तेण खत्तिआ हुन्ति ।
सणसत्तरस धन्न आम ओम च भुञ्जीअ ॥ १३९ ॥

---

आरक्षका गुरवो वयस्या शेषा ये क्षत्रियास्ते तु ॥ १३३ ॥
आहार शिल्प कर्म च ममता च विभूषणा ।
लेखो गणित च रूप च लक्षण मान प्रोतके ॥ १३४ ॥
व्यवहारो नीतिर्युद्धं चेषुशास्त्रं चोपासना ।
चिकित्साऽर्थशास्त्रं च बन्धो घातश्च मारणा ॥ १३५ ॥
यज्ञो-त्सव-समवाया मङ्गल कौतुकित च ।
वस्त्र गन्धो माल्यं चालङ्कारास्तथैव च ॥ १३६ ॥
चूडोपनयन विवाहश्च दत्तिका मृतकपूजना ।
अध्यापना स्तूप शब्दश्चोत्कृष्टनाद प्रच्छना ॥ १३७ ॥
आसश्च कन्दाऽऽहारा मूलाहाराश्च पत्राहाराश्च ।
पुष्पफलभोजिनोऽपि च यदा किल कुलकरो वृषभ ॥ १३८ ॥
आसंश्चेक्षुभोजिन इक्ष्वाकास्तेन क्षत्रिया भवन्ति ।
शणसप्तदशं धान्यमाममवम चाभुक्षत ॥ १३९ ॥

ओम प्पाऽऽहारंता अजीरमाणम्मि ते जिणमुवेन्ति ।
हत्थेहिं घसिऊण आहारेह त्ति ते भणिआ ॥ १४० ॥
आसी य पाणिघसी तिम्मिअतडुलपवालपुडभोई[1] ।
हत्थतलपुडाहारा जइआ किर कुलगरो उसहो ॥ १४१ ॥
घसेऊण तिम्मण घसणतिम्मणपवालपुडभोई ।
घंसण तिम्म पवाले हत्थउडे कक्खसेए अ ॥ १४२ ॥
अगणिस्स य उट्ठाण वणघसा दट्ठु भीइपरिकहण ।
पासेसु परिछिन्दह गिण्हह पाग च तो कुणह ॥ १४३ ॥
पक्खेव डहणमोसहि कहण निग्गमण हत्थिसीसम्मि ।
पयणारम्भपवित्ती ताहे कासी अ ते मणुआ ॥ १४४ ॥
[2]मेंठेण हत्थिसीसे मट्टिअपिण्डं गहाय कुडगं तु ।
निव्वत्तेसी तइआ जिणोवइट्ठेण मग्गेण ॥ १४५ ॥
निव्वत्तिए समाणे भणइ अ राया तओ बहुजणस्स ।

---

अवममप्याऽऽहरन्तोऽजीर्यति ते जिनमुपयन्ति ।
हस्ताभ्या घृष्ट्वाऽऽहरतेति ते भणिता ॥ १४० ॥
आसश्च पाणिघर्षिणस्तीमितण्डुलप्रवालपुटभोजिन ।
हस्ततलपुटाहारा यदा किल कुलकर ऋषभ ॥ १४१ ॥
घृष्टवा तीमन घर्षणतीमनप्रवालपुटभोजिन ।
घर्षण तीमनं प्रवाले हस्तपुटे कक्षास्वेदे च ॥ १४२ ॥
अग्नेश्चोत्थान वनघर्षाद् दृष्ट्वा भीतिपरिकथनम् ।
पार्श्वेषु परिच्छिन्त, गृण्हीत पाक च तत कुरुत ॥ १४३ ॥
प्रक्षेपो दहनमौषधीनाम्, कथनं निर्गमनं हस्तिशीर्षे ।
पचनारम्भप्रवृत्तिस्तास्मिन्नकार्षुश्च ते मनुजा ॥ १४४ ॥
हस्तिपकेन हस्तिशीर्षे मृत्तिकापिण्ड गृहीत्वा कुटकं तु ।
निरवीवृतस्तदा जिनोपदिष्टेन मार्गेण ॥ १४५ ॥
निर्वर्तिते सति भणति च राजा ततो बहुजनस्य ।

---

१ क, दुम- २ मेठ-इत्यय शब्दो हस्तिपकाभिधायी, "हत्थिवए मेठो" इति देशनाममालाया षष्ठवर्गे शताधिकाष्टात्रिंशत्प्रमिते श्लोके ।

एवइआ भे कुव्वह पयट्टिअ पढमसिप्प तु ॥ १४६ ॥
पञ्चेव य सिप्पाइ घड लोह चित्त णत कासवग् ।
इक्किक्कस्स य इत्तो वीस वीस भवे भेआ ॥ १४७ ॥
कम्म किसिवाणिज्जाइ मामणा जा परिग्गहे ममया ।
पुव्वि देवेहिं कया विभूसणा मण्डणा गुरुणो ॥ १४८ ॥
लेह लिवीविहाणं जिणेण बभीए दाहिणकरेण ।
गणिअं सखाणं सुदरीइ वामेण उवइट्ठ ॥ १४९ ॥
भरहस्स रूवकम्म नराइलक्खणमहोइअ बलिणो ।
माणु-म्माण-वमाण-प्पमाणगणिमाइ वत्थूण ॥ १५० ॥
मणिआई दोराईसु पोआ तह सागरम्मि वहणाइ ।
ववहारो लेहवण कज्जपरिच्छेअणत्थ वा ॥ १५१ ॥
नीई हक्काराई सत्तविहा अहव सामभेआई ।
जुद्धाइ बाहुजुद्धाइआइ वट्टाइआण वा ॥ १५२ ॥

---

एतावद् यूयं कुरुत, प्रवर्तित प्रथमशिल्प तु ॥ १४६ ॥
पञ्चैव च शिल्पानि घटो लोह चित्र वस्त्र काश्यपक ।
एकैकस्य चेतो विशतिर्विशतिर्भवेयुर्भेदा ॥ १४७ ॥
कर्म कृषिवाणिज्यादि ममता या परिग्रहे ममता ।
पूर्व देवै कृता विभूषणा मण्डना गुरो ॥ १४८ ॥
लेखो लिपीविधान जिनेन ब्राह्म्या दक्षिणकरेण ।
गणित सङ्ख्यानं सुन्दर्या वामेनोपदिष्टम् ॥ १४९ ॥
भरतस्य रूपकर्म नरादिलक्षणमथोदित बलिन ।
मानो-न्मानो पमान-प्रमाण-गणिमानि वस्तूनाम् ॥ १५० ॥
मणिकादयो दवरादिषु प्रोतास्तथा सागरे वहनानि ।
व्यवहारो लेखन कार्यपरिच्छेदनार्थं वा ॥ १५१ ॥
नीतयो हक्कारादय सप्तविधा अथवा सामभेदादय ।
युद्धानि बाहुयुद्धादिकानि वर्तादिकाना वा ॥ १५२ ॥

---

१ एतानि कुम्भकार-लोहकार-चित्रकार-तन्तुवाय नापितशिल्पाना समुपलक्षकानि । २ अय ध्वनिर्देश्यो वस्त्रवाची ।

ईसत्थ धणुवेओ उवासणा मसुकम्ममाईआ ।
गुरुरायाईण वा उवासणा पज्जुवासणया ॥ १५३ ॥
रोगहरण तिगिच्छा, अत्थागमसत्थमत्थसत्थ ति ।
निअलाइजमो बधो घाओ दण्डाइताडणया ॥ १५४ ॥
मारणया जीववहो जन्ना नागाइआण पूआओ ।
इन्दाइमहा पायं पइनिअया ऊसवा हुन्ति ॥ १५५ ॥
समवाओ गुट्ठीणं गामाईण च सपसारो वा ।
तह मंगलाइ सोत्थिअ-सुवण्ण-सिद्धत्थयाईणि ॥ १५६ ॥
पुव्वि कयाइं पहुणो सुरेहि रक्खाइकोउआइ च ।
तह वत्थगंधमल्लाऽलङ्कारा केसभूसाई ॥ १५७ ॥
त दट्ठूण पवत्तोऽलङ्कारेउं जणोऽवसेसो वि ।
विहिणा चूलाकम्म बालाणं चोलय नाम ॥ १५८ ॥
उवणयण तु कलाण गुरुमूले साहुणो तओ धम्मं ।
चित्तु हवन्ति सड्ढा केई दिक्ख पवज्जन्ति ॥ १५९ ॥

---

इषुशास्त्र धनुर्वेद उपासना श्मश्रुकर्मादिका ।
गुरुराजादीना वोपासना पर्युपासना ॥ १५३ ॥
रोगहरण चिकित्सा, अर्थागमशास्त्रमर्थशास्त्रमिति ।
निगडादियमो बन्धो घातो दण्डादिताडनता ॥ १५४ ॥
मारणता च जीववधो यज्ञा नागादिकाना पूजा ।
इन्द्रादिमहा प्राय प्रतिनियता उत्सवा भवन्ति ॥ १५५ ॥
समवायो गोष्ठीना ग्रामादीनां च संप्रसारो वा ।
तथा मङ्गलानि स्वस्तिक-सुवर्ण सिद्धार्थकादीनि ॥ १५६ ॥
पूर्व कृतानि प्रभो सुरै रक्षादिकौतुकानि च ।
तथा वस्त्र-गन्ध माल्या-ऽलङ्कारा. केशभूषादि ॥ १५७ ॥
तद् दृष्ट्वा प्रवृत्तोऽलङ्कर्तु जनोऽवशेषोऽपि ।
विधिना चूडाकर्म बालाना चूडा नाम ॥ १५८ ॥
उपनयन तु कलाना गुरुमूले साधोस्ततो धर्मम् ।
गृहीत्वा भवन्ति श्राद्धा केचिद् दीक्षा प्रपद्यन्ते ॥ १५९ ॥

दट्ठुं कय विवाहं जिणस्स लोगो वि काउमारद्धो ।
गुरुदत्तिआ य कन्ना परिणिज्जन्ते तओ पाय ॥ १६० ॥
दत्ति व्व दाणमुसभं दित दट्ठु जणम्मि वि पवत्तं ।
जिणभिक्खादाण पि हु दट्ठु भिक्खा पवत्ताओ ॥ १६१ ॥
मडय मयस्स देहो त मरुदेवीए पढमसिद्धु त्ति ।
देवेहि पुरा महिअं झावणया अग्गिसक्कारो ॥ १६२ ॥
सो जिणदेहाईण कओ चिआसु थूभाइ ।
सद्दो अ रुण्णसद्दो लोगो वि तओ तहा पगओ ॥ १६३ ॥
छेलावणमुक्किट्ठाइ बालकीलावण च सिंटाई ।
इङ्खिणिआइरुअ वा पुच्छापण कि कहं कज्जं ॥ १६४ ॥
अहव निमित्ताईण सुहसइआइसुहदुक्खपुच्छा वा ।
इच्चेवमाइ पाएणुप्पन्न उसभकालम्मि ॥ १६५ ॥
किंचिच्च भरहकाले कुलगरकाले वि किंचि उप्पन्न ।

---

दृष्ट्वा कृत विवाह जिनस्य लोकोऽपि कर्तुमारब्ध ।
गुरुदत्तिकाश्च कन्या परिणीयन्ते तत प्राय ॥ १६० ॥
दत्तिर्वा दानम्, ऋषभं ददत दृष्ट्वा जनेऽपि प्रवृत्तम् ।
जिनभिक्षादानमपि खलु दृष्ट्वा भिक्षा प्रवृत्ता ॥ १६१ ॥
मृतक मृतस्य देहस्तद् मरुदेव्या प्रथमसिद्ध इति ।
देवै पुरा महित ध्यापनताऽग्निसंस्कार ॥ १६२ ॥
स जिनदेहादीना कृत , चितासु स्तूपा ।
शब्दश्च रुदितशब्दो लोकोऽपि ततस्तथा प्रकृत ॥ १६३ ॥
छेलापनमुत्कृष्टादि बालक्रीडन च शेण्टितादि ।
इङ्खिणिकादिरुत वा प्रच्छन कि कथ कार्यम् ॥ १६४ ॥
अथवा निमित्तादीना सुखशयितादिसुखदु खपृच्छा वा ।
इत्येवमादि प्रायेणोत्पन्न वृषभकाले ॥ १६५ ॥
किञ्चिच्च भरतकाले कुलकरकालेऽपि किञ्चिदुत्पन्नम् ।

---

१ निर्युक्तिविवृतौ तु-माइआइ (आदितया), इत्यपि । २ अनुकरणमिदम् ।

३ इङ्खिणिका तु स्वमन्दिरे बाहीकजनप्रवेशसूचिका घण्टिकेत्यावश्यकनिर्युक्ति-विवरणम् ।

पहुणा य देसिआइ सव्वकलासिप्पकम्माइ ॥ १६६ ॥
उसभचरिआहिगारे सव्वेसि जिणवराण सामन्नं ।
सबोहणाइ वुत्तु वुच्छ पत्तेअमुसभस्स ॥ १६७ ॥
सबोहण परिच्चाए पत्तेअ उवहिम्मि अ ।
अण्णलिंगे कुलिङ्गे अ गामायरपरिसहे ॥ १६८ ॥
जीवोवलम्भ सुअलम्भे पच्चक्खाणे अ सञ्जमे ।
छउमत्थ तवोकम्मे उप्पयानाण सङ्गहो ॥ १६९ ॥
तित्थ गणो गणहरा धम्मो चायस्स देसगो ।
परिआय अन्तकिरिआ कस्स केण तवेण वा ॥ १७० ॥
सव्वे वि सयबुद्धा लोगन्तिअबोहिआ जीअ ति ।
सव्वेसि परिच्चाओ संवच्छरिअ महादाण ॥ १७१ ॥
रज्जाइच्चाओ वि अ पत्तेअ को व कित्तिअसमग्गो ।
को कस्सुवही को वाऽणुण्णाओ केण सीसाण ॥ १७२ ॥
सारस्सयमाइच्चा वण्ही वरुणा अ गद्दतोआ य ।

---

प्रभुणा च देशितानि सर्वकलाशिल्पकर्माणि ॥ १६६ ॥
ऋषभचरिताधिकारे सर्वेषा जिनवराणा सामान्यम् ।
सबोधनादि वक्तुं वक्ष्ये प्रत्येकमृषभस्य ॥ १६७ ॥
सबोधनं परित्याग प्रत्येकमुपधौ च ।
अन्यलिङ्गे कुलिङ्गे च ग्रामाकरपरिषहान् ॥ १६८ ॥
जीवोपलम्भ श्रुतलाभ प्रत्याख्यान च सयम ।
छद्मस्थ तप कर्म ज्ञानोत्पाद सग्रह ॥ १६९ ॥
तीर्थं गणो गणधरा धर्मस्त्यागस्य देशक ।
पर्यायोऽन्तक्रिया कस्य केन तपसा वा ॥ १७० ॥
सर्वेऽपि स्वयबुद्धा लोकान्तिकबोधिता जीत[1]मिति ।
सर्वेषा परित्याग सावत्सरिक महादानम् ॥ १७१ ॥
राज्यादित्यागोऽपि च प्रत्येक को वा कियत्समग्र ।
क कस्योपधि को वाऽनुज्ञात केन शिष्याणाम् ॥ १७२ ॥
सारस्वता आदित्या वह्नयो वरुणाश्च गर्दतोयाश्च ।

---

१ आचारपर्यायोऽय जीतशब्दो जैनागमे प्रसिद्ध ।

तुसिआ अव्वाबाहा अग्गि वा चेव रिट्ठा य ॥ १७३ ॥
एए देवनिकाया भवय बोहेन्ति जिणवरिन्द तु ।
सव्वजगजीवहिअ भयव तित्थ पवत्तेहि ॥ १७४ ॥
सवच्छरेण होही अभिनिक्खमण तु जिणवरिन्दाण ।
तो अत्थसम्पयाण पवत्तए पुव्वसुरम्मि ॥ १७५ ॥
एगा हिरण्णकोडी अट्ठेव अणूणगा सयमहस्सा ।
सूरोदयमाइअ दिज्जइ जा पायरासाओ ॥ १७६ ॥
सिङ्घाडग-तिग-चउक्क-चच्चर-चउमुह-महापहपहेसु ।
दारेसु पुरवराण रच्छामुहमज्झयारेसु ॥ १७७ ॥
वरवरिआ घोसिज्जइ किमिच्छिअ दिज्जए बहुविहीअं ।
सुरअसुरदेवदाणवनरिन्दमहिआण निक्खमणे ॥ १७८ ॥
तिण्णेव य कोडिसया अट्ठासीइ च हुन्ति कोडीओ ।

---

तुषिता अव्याबाधा अग्नयो वा चैव रिष्टाश्च ॥ १७३ ॥
एते देवनिकाया भगवन्त बोधयन्ति जिनवरेन्द्र तु ।
सर्वजगज्जीवहितं भगवन् ! तीर्थं प्रवर्तय ॥ १७४ ॥
सवत्सरेण भविष्यत्यभिनिष्क्रमण तु जिनवरेन्द्राणा ।
ततोऽर्थसप्रदानं प्रवर्तते पूर्वसूर्ये ॥ १७५ ॥
एका हिरण्यकोटिरष्टावेवाऽन्यूनकानि शतसहस्राणि ।
सूर्योदयादौ दीयते यावत् प्रातराशात्[1] ॥ १७६ ॥
श्रृङ्गाटक-त्रिक चतुष्क-चत्वर-चतुर्मुख-महापथपथेषु ।
द्वारेषु पुरवराणा रथ्यामुखमध्यकारेषु ॥ १७७ ॥
[2]वरवरिका घोष्यते [3]किमिच्छितं दीयते बहुविधिकम् ।
सुरासुरदेवदानवनरेन्द्रमहिताना निष्क्रमणे ॥ १७८ ॥
त्रीण्येव कोटिशतानि अष्टाशीतिश्च भवन्ति कोटय ।

---

१ प्रातराशो प्रातर्भोजनम् । २ वरं याचस्व, वर याचस्वेति यस्या कथाया सा वरवरिकेति हृदयम् । ३ का चासाविच्छा च किमिच्छा, सा सजाताऽस्येति किमिच्छितमिति पूर्वर्षिपादा ।

असिइ च सयसहस्सा एअ सवच्छरे दिन्न ॥ १७९ ॥

॥ पढमा[1] वरवरिआ सम्मत्ता ॥

वीर अरिट्ठनेमि पास मल्लिं च वासुपुज्ज च ।
एए मुत्तूण जिणे अवसेसा आसि रायाणो ॥ १ ॥
रायेकुलेसु वि जाया विसुद्धवसेसु खत्तिअकुलेसु ।
न य इच्छिआभिसेओ कुमारवासम्मि पव्वइआ ॥ २ ॥
सती कुथू अ अरो अरहतो चेव चक्कवट्टी अ ।
अवसेसा तित्थयरा मडलिआ आसि रायाणो ॥ ३ ॥
एगो भवय वीरो पासो मल्ली अ तीहि तीहि सयेहि ।
भयव च वासुपुज्जो छहि पुरिससयेहि निक्खन्तो ॥ ४ ॥
उग्गाणं भोगाणं रायण्णाणं च खत्तिआण च ।
चउहि सहस्सेहुसभो सेसाओ सहस्सपरिवारा ॥ ५ ॥

---

अशीतिश्च शतसहस्राण्येतत् संवत्सरे दत्तम् ॥ १७९ ॥

॥ प्रथमा वरवरिका समाप्ता ॥

वीरमरिष्टनेमि पार्श्वं मल्लिं च वासुपूज्य च ।
एतान् मुक्त्वा जिनानवशेषा आसन् राजान ॥ १ ॥
राजकुलेष्वपि जाता विशुद्धवंशेषु क्षत्रियकुलेषु ।
न चेष्टोऽभिषेक, कुमारवासे प्रव्रजिता ॥ २ ॥
शान्ति कुन्थुश्चाऽरोऽर्हन्तश्चैव चक्रवर्तिनश्च ।
अवशेषास्तीर्थंकरा माण्डलिका आसन् राजान ॥ ३ ॥
एको भगवान् वीर पार्श्वो मल्लिश्च त्रिभिस्त्रिभि शतै ।
भगवांश्च वासुपूज्य षड्भि पुरुषशतैर्निष्क्रान्त ॥ ४ ॥
उग्राणा भोगाना राजन्याना च क्षत्रियाणा च ।
चतुर्भि सहस्रैर्वृषभ शेषा सहस्रपरिवारा ॥ ५ ॥

---

१ ख, लघुवरवरीत्यपि ।

सुमइ त्थ निच्चभत्तेण निग्गओ वासुपुज्जो जिणो चउत्थेण ।
पासो मल्ली विअ अट्ठमेण सेसा उ छट्ठेण ॥ ६ ॥
उसभो अ विणीआए बारवईए अरिट्ठवरनेमी ।
अवसेसा तित्थयरा निक्खन्ता जम्मभूमीसु ॥ ७ ॥
उसभो सिद्धत्थवणम्मि वासुपुज्जो विहारगेहम्मि ।
धम्मो य वप्पगाए नीलगुहाए अ मुणिनामा ॥ ८ ॥
आसमपयम्मि पासो वीरजिणिन्दो अ नायसडम्मि ।
अवसेसा निक्खन्ता सहस्सबवणम्मि उज्जाणे ॥ ९ ॥
पासो अरिट्ठनेमी सिज्जसो सुमइ मल्लि नामो अ ।
पुव्वण्हे निक्खन्ता सेसा पुण पच्छिमण्हम्मि ॥ १० ॥
गामायरा विसया निसेविआ ते कुमारवज्जेहिं ।
गामागराइएसु व केसु विहारो भवे कस्स ॥ ११ ॥
मगहा रायगिहाइ मुणओ खेत्तारिएसु विहरिसु ।
उसभो नेमी पासो वीरो अ अणारिएसु पि ॥ १२ ॥

सुमतिरत्र नित्यभक्तेन निर्गतो वासुपूज्यो जिनश्चतुर्थेन ।
पार्श्वो मल्लिरप्यष्टमेन शेषास्तु षष्ठेन ॥ ६ ॥
ऋषभश्च विनीताया द्वारावत्यामरिष्टवरनेमि ।
अवशेषास्तीर्थकरा निष्क्रान्ता जन्मभूमिषु ॥ ७ ॥
ऋषभ सिद्धार्थवने वासुपूज्यो विहारगेहे ।
धर्मश्च वप्रकाया नीलगुहाया च मुनिनामा ॥ ८ ॥
आश्रपपदे पार्श्वो वीरजिनेन्द्रश्च ज्ञातखण्डे ।
अवशेषा निष्क्रान्ता सहस्राम्रवणे उद्याने ॥ ९ ॥
पार्श्वोऽरिष्टनेमि श्रेयास सुमतिर्मल्लिर्नाम च ।
पूर्वाण्हे निष्क्रान्ता शेषा पुन पश्चिमाह्नि ॥ १० ॥
ग्रामाकरा विषया निसेवितास्ते कुमारवर्जै ।
ग्रामाकरादिषु वा केषु विहारो भवेत् कस्य ॥ ११ ॥
मगधान् राजगृहादि मुनय क्षेत्रार्येषु व्यहार्षु ।
ऋषभो नेमि पार्श्वो वीरश्चाऽनार्येष्वपि ॥ १२ ॥

१ मुनिसुव्रत इत्यर्थ ।

उइआ परीसहासि पराइआ ते अ जिणवरिन्देहिं ।
नव जीवाइपयत्थे उवलभिऊणं च निक्खन्ता ॥ १३ ॥
पढमस्स बारसंगं सेसाणिक्कारसगसुअलम्भो ।
पच जमा पढमंतिमजिणाण सेसाण चत्तारि ॥ १४ ॥
पच्चक्खाणमिण सजमो अ पढमंतिमाण दुविगप्पो ।
सेसाण सामइओ सत्तरसंगो अ सव्वेसि ॥ १५ ॥
वाससहस्स बारस चोद्दस अट्ठारस वीस वरिसाइ ।
मासा छ ण्णव तिण्णि अ चउ तिग दुगमिक्कग दुग च ॥१६॥
तिग दुगमिक्कग सोलस वासा तिण्णि तहेव अहोरत्त ।
मासिक्कारस नवग चउपन्न दिणाइ चुलसीई ॥ १७ ॥
तह बारस वासाइ जिणाण छउमत्थकालपरिमाण ।
उग्ग च तवोकम्म विसेसओ वद्धमाणस्स ॥ १८ ॥
फग्गुणबहुलिक्कारसि उत्तरसाढाहिं नाणमुसभस्स ।

---

उदिता परीषहा एषा पराजितास्ते जिनवरेन्द्रै ।
नव जीवादिपदार्थानुपलभ्य च निष्क्रान्ता ॥ १३ ॥
प्रथमस्य द्वादशाङ्ग शेषाणामेकादशाङ्गश्रुतलाभ ।
पैञ्च यमा प्रथमाऽन्तिमयो शेषाणा चत्वार ॥ १४ ॥
प्रत्याख्यानमिद संयमश्च प्रथमान्तिमयोर्द्विविकल्प ।
शेषाणा सामयिक सप्तदशाङ्गश्च सर्वेषाम् ॥ १५ ॥
वैर्षसहस्रं द्वादश चतुर्दशाऽष्टादश विशतिर्वर्षाणि ।
मासा षड् नव त्रयश्च चत्वारस्त्रयो द्वावेको द्विक च ॥ १६ ॥
त्रीणि द्वे एक षोडश वर्षाणि, त्रीणि च तथैवाऽहोरात्रम् ।
मासा एकादश नवकम् , चतुष्पञ्चाशद्दिनानि चतुरशीति ॥ १७ ॥
तथा द्वादश वर्षाणि जिनाना छद्मस्थकालपरिमाणम् ।
उग्र च तप कर्म विशेषतो वर्धमानस्य ॥ १८ ॥
फाल्गुनबहुलैकादश्यामुत्तराषाढाभिर्ज्ञानमृषभस्य ।

---

१ अहिसा-सूनृता-ऽस्तेय-ब्रह्माऽकिञ्चनता यमा ॥ ८१ ॥ इत्यभिधानचिन्तामणौ देवाधिदेवकाण्डे भगवत्-श्रीहेमचन्द्रसूरिपादा । २ अनेन श्लोकेन निर्दिष्टश्छद्मस्थकाल सर्वेषा जिनाना क्रमेण योज्य ।

पोसिक्कारसि सुद्धे रोहिणिजोएण अजिअस्स ॥ १९ ॥
कत्तिअबहुले पञ्चमि मिगसिरजोएण संभवजिणस्स ।
पोसे सुद्धचउद्दसि अभिइ अभिनंदणजिणस्स ॥ २० ॥
चित्ते सुद्धिक्कारसि महाहि सुमइस्स नाणमुप्पन्न ।
चित्तस्स पुण्णिमाए पउमाभजिणस्स चित्ताहि ॥ २१ ॥
फग्गुणबहुले छट्ठी विसाहजोगे सुपासनामस्स ।
फग्गुणबहुले सत्तमि अणुराह ससिप्पहजिणस्स ॥ २२ ॥
कत्तिअसुद्धे तइआ मूले सुविहिस्स पुप्फदन्तस्स ।
पोसे बहुलचउद्दसि पुव्वासाढाहि सीअलजिणस्स ॥ २३ ॥
पन्नरसि माहबहुले सिज्जंसजिणस्स सवणजोएणं ।
सयभिसय वासुपुज्जे बीआए माहसुद्धस्स ॥ २४ ॥
पोसस्स सुद्धच्छट्ठी उत्तरभद्दवय विमलनामस्स ।
वइसाहबहुलचउद्दसि रेवइजोएण णतस्स ॥ २५ ॥
पोसस्स पुण्णिमाए नाणं धम्मस्स पुस्सजोएणं ।

---

पौषैकादश्या शुद्धे रोहिणीयोगेनाऽजितस्य ॥ १९ ॥
कार्तिकबहुले पञ्चमी मृगशिरोयोगेन सभवजिनस्य ।
पौषे शुद्धचतुर्दश्यामैहौ अभिनन्दनजिनस्य ॥ २० ॥
चैत्रे शुद्धैकादश्या मघाभि सुमतेर्ज्ञानमुत्पन्नम् ।
चैत्रस्य पूर्णिमाया पद्माभजिनस्य चित्राभि ॥ २१ ॥
फाल्गुनबहुले षष्ठ्या विशाखायोगे सुपार्श्वनाम्न ।
फाल्गुनबहुले सप्तम्यामनुराधाया शशिप्रभजिनस्य ॥ २२ ॥
कार्तिकशुद्धे तृतीयाया मूले सुविधे पुष्पदन्तस्य ।
पौषे बहुलचतुर्दश्या पूर्वाषाढाभि शीतलजिनस्य ॥ २३ ॥
पञ्चदश्या माघबहुले श्रेयासजिनस्य श्रवणयोगेन ।
शतभिषजि वासुपूज्ये द्वितीयस्या माघशुद्धस्य ॥ २४ ॥
पौषस्य शुद्धषष्ठ्यामुत्तरभद्रपदाया विमलनाम्न ।
वैशाखबहुलचतुर्दश्या रेवतीयोगेनाऽनन्तस्य ॥ २५ ॥
पौषस्य पूर्णिमाया ज्ञान धर्मस्य पुष्ययोगेण ।

---

१ पूर्वभद्रपदानक्षत्रे ।

पोसस्स सुद्धनवमी भरणीजोगेण संतिस्स ॥ २६ ॥
चित्तस्स सुद्धतईआ कत्तिअजोगेण नाण कुथुस्स ।
कत्तिअसुद्धे बारसि अरस्स नाणं तु रेवईहि ॥ २७ ॥
मग्गसिरसुद्धइक्कारसीइ मल्लिस्स अस्सिणीजोएण ।
फग्गुणबहुले बारसि सवणेणं सुव्वयजिणस्स ॥ २८ ॥
मिगसिरसुद्धिक्कारसि अस्सिणिजोगेण नमिजिणिंदस्स ।
आसो अमावसाए नेमिजिणिन्दस्स चित्ताहिं ॥ २९ ॥
चित्ते बहुलचउत्थी विसाहजोगेण पासनामस्स ।
वइसाहसुद्धदसमी हत्थुत्तरजोएण वीरस्स ॥ ३० ॥
तेवीसाए नाण उप्पन्न जिणवराण पुव्वण्हे ।
वीरस्स पच्छिमण्हे पमाणपत्ताए चरिमाए ॥ ३१ ॥
उसभस्स पुरिमताले वीरस्सुजुवालिआनईतीरे ।
सेसाण केवलाइं जेसुज्जाणेसु पव्वइआ ॥ ३२ ॥

---

पौषस्य शुद्धनवम्या भरणीयोगेन शान्ते ॥ २६ ॥
चैत्रस्य शुद्धतृतीयाया कृत्तिकायोगेन ज्ञानं कुन्थो ।
कार्तिकशुद्धे द्वादश्यामरस्य ज्ञान तु रेवतिभि ॥ २७ ॥
मृगशिरशुद्धैकादश्या मल्लेरश्विनीयोगेन ।
फाल्गुनबहुले द्वादश्या श्रवणेन सुव्रतजिनस्य ॥ २८ ॥
मृगशिरशुद्धैकादश्यामश्विनीयोगेन नमिजिनेन्द्रस्य ।
आश्विन अमावास्याया नेमिजिनेन्द्रस्य चित्राभि ॥ २९ ॥
चैत्रे बहुलचतुर्थ्या विशाखायोगेन पार्श्वनाम्न ।
वैशाखशुद्धदशम्या हस्तोत्तरायोगेन वीरस्य ॥ ३० ॥
त्रयोविंशतेर्ज्ञानमुत्पन्नं जिनवराणा पूर्वाण्हे ।
वीरस्य पश्चिमाहनि प्रमाणप्राप्ताया चरमायाम् ॥ ३१ ॥
ऋषभस्य पुरिमताले वीरस्य ऋजुपालिकानदीतीरे ।
शेषाणा केवलानि येषूद्यानेषु प्रव्रजिता ॥ ३२ ॥

---

१ मुनिसुव्रत सुव्रतौ तुल्यौ ॥ २९ ॥ अभिधानप्रथमकाण्डे ।
२ पौरुष्यामिति अभ्याहरणीयम् ।

अट्ठमभत्तंतम्मि पासो-सभ-मल्लि-रिट्ठनेमीण ।
वसुपुज्जस्स चउत्थेण छट्ठभत्तेण सेसाण ॥ ३३ ॥
चुलसीइ च सहस्सा एगं च दुवे य तिण्णि लक्खाइं ।
तिण्णि य वीसहिआइ तीसहिआइ तु तिण्णेव ॥३४॥
तिण्णि अ अड्ढाइज्जा दुवे अ एगं च सयसहस्साइ ।
चुलसीइं च सहस्सा बावत्तरि अट्ठसट्ठि च ॥ ३५ ॥
छावट्ठिं चोवट्ठि बासट्ठि सट्ठिमेव पण्णास ।
चत्ता तीसा वीसा अट्ठारस सोलस सहस्सा ॥ ३६ ॥
चउदस य सहस्साइं जिणाण जइसीससगहपमाण ।
अज्जासंगहमाण उसभाईण अओ वुच्छ ॥ ३७ ॥
तिण्णेव य लक्खाइ तिण्णि य तीसाइ तिण्णि छत्तीसा ।
तीसा य छच्च पच य तीसा चउरो अ वीसा अ ॥ ३८ ॥
चत्तारि य तीसाइं तिण्णि अ असीआ य तिण्णि मित्तो अ ।
वीसुत्तरं छलहिअं तिसहस्सहिअ च लक्खं च ॥ ३९ ॥

---

अष्टमभक्तान्ते पार्श्व-र्षभ-मल्ल्य रिष्टनेमीनाम् ।
वासुपूज्यस्य चतुर्थेन षष्ठभक्तेन शेषाणाम् ॥ ३३ ॥
चतुरशीतिश्च सहस्राणि एक च द्वे च त्रीणि लक्षाणि ।
त्रीणि च विंशत्यधिकानि त्रिंशदधिकानि तु त्रीण्येव ॥ ३४ ॥
त्रीणि चार्धतृतीयानि द्वे चैकं च शतसहस्राणि ।
चतुरशीतिश्च सहस्राणि द्वासप्ततिरष्टषष्टिश्च ॥ ३५ ॥
षट्षष्टिश्चतु षष्टिर्द्वाषष्टि षष्टि पञ्चाशत् ।
चत्वारिंशद् त्रिंशद् विंशतिरष्टादश षोडश सहस्राणि ॥ ३६ ॥
चतुर्दश च सहस्राणि जिनाना यतिशिष्यसंग्रहप्रमाणम् ।
आर्यासंग्रहमानं वृषभादीनामतो वक्ष्ये ॥ ३७ ॥
त्रीण्येव च लक्षाणि, त्रीणि च त्रिंशानि, त्रीणि षट्त्रिंशत् ।
त्रिंशच्च षट् च, पंच च त्रिंशत्, चत्वारि च विंशतिश्च ॥ ३८ ॥
चत्वारि च त्रिंशत्, त्रीणि च अशीतिश्च, त्रीणि मात्र च ।
विंशत्युत्तरम्, षडधिकम्, त्रिसहस्रितं च लक्षं च ॥ ३९ ॥

---

१ क, बिसत्तरिं ।

लक्खं अट्ठसयाणि य बासट्ठि सहस्स चउसयसमग्गा ।
एगट्ठी छच्च सया सट्ठिसहस्सा सया छच्च ॥ ४० ॥
सट्ठि पणपन्न पन्नग चत्त चत्ता तहट्ठवीस च ।
छत्तीसं च सहस्सा अज्जाणं संगहो एसो ॥ ४१ ॥
पढमाणुओगसिद्धो पत्तेअं सावयाइआण पि ।
नेओ सव्वजिणाण सीसाणं सगहो एसो ॥ ४२ ॥
तित्थं चाउवण्णो सघो सो पढमअे समोसरणे ।
उप्पन्नो उ जिणाण वीरजिणिन्दस्स बिईअम्मि ॥ ४३ ॥
चुलसीई पचनउई बिउत्तर सोलसुत्तरसय च ।
सचहिअ पणनउई तेणउई अट्ठसीई अ ॥ ४४ ॥
इक्कासीई छावत्तरी अ छावट्ठि सत्तवन्ना य ।
पन्ना तेआलीसा छत्तीसा चेव पणतीसा ॥ ४५ ॥
तित्तीस अट्ठवीसा अट्ठारस चेव तह य सत्तरस ।
इक्कारस दस नवग गणाणं माण जिणिन्दाण ॥ ४६ ॥

लक्षम्, अष्ट शतानि च, द्वाषष्टि सहस्राणि चतु शतसमग्राणि ।
एकषष्टि षट् च शतानि, षष्टिसहस्रा शतानि षट् च ॥ ४० ॥
षष्टि[1], पञ्च पञ्चाशत, पञ्चाशत्, चत्वारिंशत्, चत्वारिशत् तथाऽष्टाविंशतिश्च ।
षट्त्रिंशच्च सहस्राणि, आर्याणा संग्रह एष ॥ ४१ ॥
प्रथमानुयोगसिद्ध प्रत्येक श्रावकादिकानामपि ।
ज्ञेय सर्वजिनाना शिष्याणा संग्रह एष ॥ ४२ ॥
तीर्थं चतुर्वर्णं संघ स प्रथमके समवसरणे ।
उत्पन्नस्तु जिनाना वीरजिनेन्द्रस्य द्वितीये ॥ ४३ ॥
चतुरशीति , पञ्चनवति., द्व्युत्तरं षोडशोत्तर शतं च ।
सैप्ताधिकम्, पञ्चनवति , त्रिनवति , अष्टाशितिश्च ॥ ४४ ॥
एकाशीति , षट्सप्ततिश्च, षट्षष्टि , सप्तपञ्चाशच्च ।
पञ्चाशत् , त्रिचत्वारिंशत् , षट्त्रिंशच्चैव, पञ्चत्रिंशत् ॥ ४५ ॥
त्रयस्त्रिंशत् , अष्टाविंशति , अष्टादश चैव, तथा च सप्तदश ।
एकादश, नव, दशकम् , गणाना मान जिनेन्द्राणाम् ॥ ४६ ॥

१ द्व्युत्तरं शतम् , षोडशोत्तरं शतम् , शतं केवल चेति तत्त्वम् ।
२ शतमित्यनुयोज्यम् ।

इक्कारस उ गणहरा जिणस्स वीरस्स सेसयाणं तु ।
जावइआ जस्स गणा तावइआ गणहरा तस्स ॥ ४७ ॥
धम्मोवाओ पवयणमहवा पुव्वाइ देसगा तस्स ।
सव्वजिणाण गणहरा चउदसपुव्वी य जे जस्स ॥ ४८ ॥
सामाइआइआ वा वयजीवनिकाया भावणा पढमा ।
एसो धम्मोवाओ जिणेहि सव्वेहि उवइट्ठो ॥ ४९ ॥
उसभस्स पुव्वलक्खं पुव्वगूणमजिअस्स त चेव ।
चउरगूणं लक्खं पुणो पुणो जाव सुविहि त्ति ॥ ५० ॥
पणवीस तु सहस्सा पुव्वाण सीअलस्स परिआओ ।
लक्खाइं इक्कवीस सिज्जंसजिणस्स वासाणं ॥ ५१ ॥
चउपन्नं पन्नारस तत्तो अद्धट्ठमाइं लक्खाइं ।
अड्ढाइज्जाइं तओ वाससहस्साणि पणवीसं ॥ ५२ ॥
तेवीस च सहस्सा सयाणि अद्धट्ठमाणि अ हवन्ति ।
इगवीस च सहस्सा वाससऊणा य पणपन्ना ॥ ५३ ॥

---

एकादश तु गणधरा जिनस्य वीरस्य शेषकाणा तु ।
यावन्तो यस्य गणा तावन्तो गणधरास्तस्य ॥ ४७ ॥
धर्मोपाय प्रवचनमथवा पूर्वाणि देशकास्तस्य ।
सर्व जिनाना गणधराश्चतुर्दशपूर्विणश्च ये यस्य ॥ ४८ ॥
सामायिकादिका वा व्रतजीवनिकायभावना प्रथमा ।
एष धर्मोपायो जिनै सर्वैरुपदिष्ट ॥ ४९ ॥
ऋषभस्य पूर्वलक्षम्, पूर्वाङ्गोनमजितस्य तदेव ।
चतुरङ्गोन लक्षं पुन पुन यावत् सुविधिरिति ॥ ५० ॥
पञ्चविशतिस्तु सहस्राणि पूर्वाणा शीतलस्य पर्याय ।
लक्षाण्येकविशति श्रेयासजिनस्य वर्षाणाम् ॥ ५१ ॥
चतुष्पञ्चाशत्, पञ्चदश, ततश्चार्धाऽष्टमानि लक्षाणि ।
अर्धतृतीयानि ततो वर्षसहस्राणि पञ्चविशति ॥ ५२ ॥
त्रयोविंशतिश्च सहस्राणि शतान्यर्धाष्टमानि च भवन्ति ।
एकविशतिश्च सहस्राणि वर्षशतोनानि च पञ्चपञ्चाशत् ॥ ५३ ॥

अद्धट्ठमा ससहस्सा अड्ढाइज्जा य सत्तयसयाइं ।
सयरी वि चत्त वासा दिक्खाकालो जिणिन्दाण ॥ ५४ ॥
उसभस्स कुमारत्त पुव्वाण वीसई सयसहस्सा ।
तेवट्ठी रज्जम्मि य अणुपालेऊण निक्खन्तो ॥ ५५ ॥
अजिअस्स कुमारत्तं अट्ठारस पुव्वसयसहस्साइ ।
तेवन्न रज्जम्मि पुव्वंग चेव बोद्धव्वं ॥ ५६ ॥
पन्नरससयसहस्सा कुमारवासो अ संभवजिणस्स ।
चोआलीसं रज्जे चउरंग चेव बोद्धव्व ॥ ५७ ॥
अद्धतेरस लक्खा पुव्वाणमभिणदणे कुमारत्त ।
छत्तीसा अद्ध चिअ अट्ठगा चेव रज्जम्मि ॥ ५८ ॥
सुमइस्स कुमारत्त हवन्ति दस पुव्वसयसहस्साइ ।
अउणातीसं रज्जे बारस अगाइ बोद्धव्वा ॥ ५९ ॥
पउमस्स कुमारत्त पुव्वाणद्धट्ठमा सयसहस्सा ।
अद्ध च एगवीसा सोलस अगाइ रज्जम्मि ॥ ६० ॥

---

अर्धाष्टमानि ससहस्राणि, अर्धतृतीयानि च सप्तकशतानि ।
सप्तनिरपि चत्वारिंशद् वर्षाणि दीक्षाकालो जिनेन्द्राणाम् ॥ ५४ ॥
ऋषभस्य कुमारत्वं पूर्वाणा विंशति शतसहस्राणि ।
त्रिषष्टिश्च राज्ये चानुपाल्य निष्क्रान्त ॥ ५५ ॥
अजितस्य कुमारत्व अष्टादशपूर्वशतसहस्राणि ।
त्रिपञ्चाशद् राज्ये पूर्वाङ्गं चैव बोद्धव्यम् ॥ ५६ ॥
पञ्चदश शतसहस्राणि कुमारवासश्च सभवजिनस्य ।
चत्वारिंशद् राज्ये चतुरङ्ग चैव बोद्धव्यम् ॥ ५७ ॥
अर्धत्रयोदशानि लक्षाणि पूर्वाणामभिनन्दने कुमारत्वम् ।
षट्त्रिंशदर्धमेवाऽष्टाऽङ्गानि चैव राज्ये ॥ ५८ ॥
सुमते कुमारत्व भवन्ति दश पूर्वशतसहस्राणि ।
एकोनत्रिंशद् राज्ये द्वादशाङ्गानि बोद्धव्यानि ॥ ५९ ॥
पद्मस्य कुमारत्व पूर्वाणामर्धाष्टमानि शतसहस्राणि ।
अर्ध चैकविंशति षोडशाङ्गानि राज्ये ॥ ६० ॥

पुव्वसयसहस्साइ पच सुपासे कुमारवासो अ ।
चउदस पुण रज्जम्मि वीस अगा य बोद्धव्वा ॥ ६१ ॥
अड्ढाइज्जा लक्खा कुमारवासो ससिप्पहे होइ ।
अद्ध छच्चिअ रज्जे चउवीसगाइ बोद्धव्वा ॥ ६२ ॥
पन्नं पुव्वसहस्सा कुमारवासो उ पुप्फदन्तस्स ।
तावइअ रज्जम्मि अट्ठावीस तु पुव्वगा ॥ ६३ ॥
पणवीस सहस्साइ पुव्वाण सीअले कुमारत्त ।
तावइअ परिआओ पन्नास चेव रज्जम्मि ॥ ६४ ॥
वासाण कुमारत्त इगवीस लक्ख हवन्ति सिज्जसे ।
तावइअं परिआओ बायालीस च रज्जम्मि ॥ ६५ ॥
गिहवासे अट्ठारस वासाण सयसहस्स निअमेण ।
चउपन्न सयसहस्सा परिआओ होइ वसुपुज्जे ॥ ६६ ॥
पन्नरस सयसहस्सा कुमारवासो अ तीसई रज्जे ।
पन्नरस सयसहस्सा परिआओ होइ विमलस्स ॥ ६७ ॥

---

पूर्वशतसहस्राणि पञ्च सुपार्श्वे कुमारवासश्च ।
चतुर्दश पुना राज्ये विंशतिरङ्गानि च बोद्धव्यानि ॥ ६१ ॥
अर्धतृतीयानि लक्षाणि कुमारवास. शशिप्रभे भवति ।
अर्ध षष्ठान्येव राज्ये चतुर्विंशतिरङ्गानि बोद्धव्यानि ॥ ६२ ॥
पञ्चाशत् पूर्वसहस्राणि कुमारवासस्तु पुष्पदन्तस्य ।
तावत्क राज्ये अष्टाविंशतिस्तु पूर्वाङ्गानि ॥ ६३ ॥
पञ्चविंशति सहस्राणि पूर्वाणा शीतले कुमारत्वम् ।
तावत्कं पर्याय पञ्चाशदेव राज्ये ॥ ६४ ॥
वर्षाणा कुमारत्वमेकविंशतिर्लक्षाणि भवन्ति श्रेयासे ।
तावत्कं पर्यायो द्विचत्वारिंशच्च राज्ये ॥ ६५ ॥
गृहवासेऽष्टादश वर्षाणा शतसहस्राणि नियमेन ।
चतुष्पञ्चाशत् शतसहस्राणि पर्यायो भवति वासुपूज्ये ॥ ६६ ॥
पञ्चदश शतसहस्राणि कुमारवासश्च त्रिंशद् राज्ये ।
पञ्चदश शतसहस्राणि पर्यायो भवति विमलस्य ॥ ६७ ॥

क्षयोपशमव्यञ्जकत्वात्, तद्भावे तु तदभावेऽपि भावात्, क्वचित् तथोपलब्धेः, अन्यथा सदा तदपेक्षा स्यात्। एवं च 'पुरुषेच्छातोऽर्थानां स्वभावापरावृत्तेरित्यादि यावदशब्दसंयोजनमेवार्थं पश्यति दर्शनात्' इति। एतन्निर्विषयमेव, अत्र ह्यनेकस्वभावतापत्त्या वस्तुनो नैरात्म्यमिति परं दूषणम्। एतच्चैकानेकस्वभावतयाऽस्य तत्त्वतोऽदूषणमेव, अन्यथा तदसत्त्वप्रसङ्गादित्युक्तप्रायम्। अतो विरोधिशब्दवाच्यत्वेऽपि तत्तत्स्वभावतया तथोपलब्धेर्न कश्चिद् दोषः ॥

यत्पुनरित्यादि। यत्पुनरेतदाशङ्कितं परेण। किमित्याह– 'अभिपतन्नेवार्थः प्रबोधयत्यान्तरं संस्कारं, तेन स्मृतिर्नार्थदर्शनादिति। एतदर्थतः अर्थमधिकृत्य, साध्वेव शोभनमेव। कथमित्याह– तदनुसारेण अर्थाभिपतनानुसारेण, तत्प्रवृत्तिसंभवात् क्षयोपशमप्रवृत्तिसंभवादिति। यत् पुनरिदमुक्तं पूर्वपक्षग्रन्थ एव,–'न, तत्संबन्धस्याऽस्वाभाविकत्वात्' इति। एतदसाधु अशोभनम्। कुत इत्याह– उक्तवद् यथोक्तं प्राक् 'सर्ववस्तूनामेव प्रायस्तथा तथा सर्वशब्दवाच्यस्वभावत्वादित्यादिना' तथा, अस्वाभाविकत्वासिद्धेस्तत्संबन्धस्य वक्ष्यमाणत्वाच्चापोहाधिकारे, तदसाध्विति। अतः समयादर्शनेऽभावादिति यदुक्तम्, तदयुक्तम्। कुत इत्याह– तस्य समयस्य, क्षयोपशमव्यञ्जकत्वात्, तद्भावे तु क्षयोपशमभावे तु, तदभावेऽपि समयाभावेऽपि, भावाद् शब्दविशेषस्मृतेरिति प्रक्रम। शब्दविशेषस्मृतिग्रहण चाऽत्र प्रतिपत्त्युपलक्षण वेदितव्यम्। भावश्च काचिद् विशिष्टक्षयोपशमवति प्रमातरि, तथोपलब्धे समयाभावेऽपि शब्दविशेषस्मृत्युपलब्धे। इत्थं चैतदङ्गीकर्तव्यमित्याह– अन्यथेत्यादि। अन्यथा क्षयोपशमभावेऽपि, समयापेक्षाभ्युपगमे, सदा सर्वकाल, तदपेक्षा स्यात् समयापेक्षा स्यात्, ततश्च सदा सकेताकरणाप्त्या व्यवहाराभाव। एव च 'पुरुषेच्छातोऽर्थानां स्वभावाऽपरावृत्तेरित्यादि पूर्वपक्षवचनं यावदशब्दसयोजनमेवार्थं पश्यति दर्शनात्' इत्येतत्, निर्विषयमेव। कुत इत्याह– अत्रेत्यादि। अत्र यस्माद्, अनेकस्वभावतापत्त्या वस्तुनो नैरात्म्यमिति परं दूषणमुक्तम्। एतच्च दू-

षणमेकानेकस्वभावतयाऽस्य वस्तुनस्तत्त्वतोऽदूषणमेव, अन्यथैवमनभ्युपगमे, तदसत्त्वप्रसङ्गाद् वस्तुनोऽसत्त्वप्रसङ्गात्, इत्युक्तप्राय प्रायेणोक्तम्, अतो विरोधिशब्दवाच्यत्वेऽपि सति, वस्तुन इति प्रक्रमः, तत्तत्स्वभावतया कारणेन, तथोपलब्धेर्विरोधिशब्दवाच्यत्वेनोपलब्धे , नित्यानित्यादिशब्दप्रवृत्तितया न कश्चिद् दोष इति प्रस्तुताधिकारनिगमनम् ॥

स्यादेतत् . अनलशब्दो ह्यनले तदभिधानस्वभावतया यमभिधेयपरिणाममाश्रित्य प्रवर्त्तते, स जले नास्ति, जलानलयोरभेदप्रसङ्गात्। प्रवर्त्तते च समयाज्जलेऽनलशब्दः, तथाप्रतीतेः। इति कथमनयोर्वास्तवो योगः? इति। उच्यते– शब्दस्यानेकस्वभावत्वात्, न ह्यनलशब्दस्याऽनलगताभिधेयपरिणामापेक्षी तदभिधानस्वभाव एवैकः स्वभावः, अपि तु तथाविलम्बितादित्वेन जलगताभिधेयपरिणामापेक्षी तदभिधानस्वभावोऽपि, तथा तत्प्रतीतेः, तद्वैचित्र्येण दोषाभावात्, क्षयोपशमवैचित्र्यतस्तथाप्रवृत्तेः, अन्यथा अहेतुकत्वेन तदभावप्रसङ्गादिति। एतेन तथानुभवसिद्धेन शब्दार्थक्षयोपशमस्वभाववैचित्र्येण, एतदपि प्रत्युक्तम्, यदुक्तम्– 'शब्देन्द्रियार्थयोर्भेद एव, अव्यापृतेन्द्रियस्याऽन्यवाङ्मात्रेणैवेन्द्रियार्थाविभावनात्, इन्द्रियादेव च शब्दार्थाप्रतीतेः' इत्यादि। न खल्वऽव्यापृतेन्द्रियोऽपि तत्क्षयोपशमयुक्तः, अन्यवाङ्मात्रेण न विभावयत्येवेन्द्रियार्थम्, तद्वर्णमानचिह्नादिनिश्चितेः, तदन्यतुल्यजातीयमध्येऽपि भेदेन प्रवर्त्तनात्, क्वचित्तत्प्राप्तेस्तथा निवेदनात्, तथाऽस्पष्टं तु तत्साक्षात्कारेणाक्षव्यापारवैकल्यात्, न त्वतद्विषयत्वेन। एवमिन्द्रियादपि क्वचित्तथाविधक्षयोपशमभावे, सङ्केतमन्तरेणापि भवति शब्दार्थविभावनम्, तथान्तर्जल्पाकारादिबोधसिद्धेः, लोकानुभवप्रामाण्यादिति ॥

स्यादेतदित्यादि। स्यादेतत्,अनलशब्दो ह्यनलेऽभिधेये तदभिधानस्वभावतया अनलाभिधानस्वभावत्त्वेन, यमभिधेयपरिणाममाश्रित्य प्रवर्त्तते, वास्तवं स जले नास्ति परिणाम.। कुत इत्याह– जलानलयोरभे-

**दप्रसङ्गात्** तदेकाभिधेयपरिणामभावेन । यदि नामैवं तत. किम्?, इत्याह—**प्रवर्त्तते च समयात्** सङ्केतेन, जलेऽनलशब्द. । कुत इत्याह—**तथाप्रतीतेः** समयद्वारेण प्रवृत्तिप्रतीते., इत्येव कथमनयो. प्रक्रमाद् वस्तुवाचकयोः, वास्तवो योगस्तात्त्विक सम्बन्धः ? इति । एतदाशङ्क्याह— **उच्यते** तत्र परिहार ,शब्दस्यानेकस्वभावत्वात्, शब्दग्रहणं वस्तूपलक्षणम्, उभयोरनेकस्वभावत्वात्, अनयोर्वास्तवो योग इति । अमुमेवार्थं प्रकटयन्नाह—**न ह्यनलेत्यादि** । न यस्माद्, अनलशब्दस्याऽनलगताभिधेयपरिणामापेक्षी अनलगतमभिधेयपरिणाममपेक्षते तच्छीलश्च इति विग्रह ,तदभिधानस्वभाव एव अनलाभिधानस्वभाव एव, एकस्वभाव., अपि तु तथाविलम्बितादित्वेन समयापेक्षिततत्स्मृतिपूर्वकत्वेन, जलगताभिधेयपरिणामापेक्षी, तदभिधानस्वभावोऽपि जलाभिधानस्वभावोऽपि । कुत इत्याह— **तथा तत्प्रतीतेः** तथाविलम्बितादित्वेन जलप्रतीतेरिति । **तद्वैचित्र्येण** प्रक्रमादनलशब्दस्वभाववैचित्र्येण, **दोषाभावात्** पूर्वोक्तदोषनिवृत्तेरित्यर्थ । क्षयोपशमवैचित्र्यत. कारणात्, तथाप्रवृत्तेर्जलेऽनलशब्दसमयप्रवृत्ते । अन्यथैवमनभ्युपगमे, अहेतुकत्वेन, तदभावप्रसङ्गात् तथा प्रवृत्त्यभावप्रसङ्गादिति । एतेनाऽनन्तरोदितेन, तथानुभवसिद्धेनोक्तनीत्या , समयाद् जलेऽप्यनलशब्दात्, प्रतीतिभावत सवेदनसिद्धेन शब्दार्थक्षयोपशमानां स्वभाववैचित्र्येण, किमित्याह—**एतदपि प्रत्युक्तम्** । **यदुक्तं परै**, किं तदित्याह— **शब्देन्द्रियार्थयोः** शब्दश्चेन्द्रियं च शब्देन्द्रिये, तयोरर्थौ विषयौ तयोर्भेद एव । कुत इत्याह— **अव्यापृतेन्द्रियस्य पुंस**, अन्यवाग्मात्रेणैव अन्यस्माद् वाग्मात्र तेनैव, इन्द्रियार्थाऽविभावनात् इन्द्रियार्थाऽदर्शनाद्, विभावन दर्शन, तथाहि— प्रतीतमेतत्, न शब्दादेव पश्यतीति । तथेन्द्रियादेव च सकाशात्, शब्दार्थाप्रतीतेर्नहि पनस पश्यन्नप्यकृतसमयो वाह्लीक. पनसमित्यवैतीत्यादि । आदिशब्दात्—

"अन्यदेवेन्द्रियग्राह्यमन्य शब्दस्य गोचर. ।
शब्दात् प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते" ॥ १ ॥

इत्याद्येतत समान गृह्यते, इत्येतदपि प्रत्युक्तम् । यथा प्रत्युक्तम्, तथा मन्दमतिहिताय मनागुपदर्शयन्नाह– **न खल्वित्यादिना।** न खलु नैव, अव्याप्तेन्द्रियोऽपि पुमान् । किं विशिष्ट इत्याह– **तत्क्षयोपशमयुक्तः** प्रक्रमात्, इन्द्रियज्ञानावरणक्षयोपशमयुक्त, अन्यवाङ्मात्रेण हेतुना, न विभावयत्येव न पश्यत्येव, मत्याभोगेनेन्द्रियार्थम्, " द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः " इति कृत्वा, किं तु विभावयत्येव। कुत इत्याह– **तद्वर्णमानचिह्नादिनिश्चितेः** तस्येन्द्रियार्थस्य, वर्ण. कृष्णादि, मान प्रमाण महदल्पादि, चिह्नं खण्डादि, आदिशब्दात् मसृणत्वादिग्रह, एतन्निश्चिते । तथाहि– कृष्णं महान्तं खण्डं मसृणमपूर्वमपवरकाद् घटमानयेत्युक्ते तज्ज्ञानावरणक्षयोपशमयुक्त पुमानध्यक्षमिव मत्या तथैव प्रतिपद्यते। कथमेतदेवम्?, इत्याह–**तदन्यतुल्यजातीयमध्येऽपि** तदाऽऽनयनाय त प्रति भेदेन प्रवर्त्तनात् । न ह्यसौ तथा भोगशून्य. प्रवर्त्तत इति भावनीयम् । तथा क्वचित् प्रतिबन्धाभावे, तत्प्राप्ते प्रक्रमात् तस्यान्यवाङ्मात्रोक्तस्य प्राप्ते, तथा निवेदनात् तथाऽन्यवाङ्मात्रबोधि[1]तत्वेन निवेदनात्, नैव न विभावयति, इन्द्रियार्थमिति। तथाऽस्पष्ट तु तद्विभावनम्, साक्षात्कारेणाऽक्षव्यापारवैकल्यात्, नत्वतद्विषयत्वेन न पुनरिन्द्रियार्थाविषयत्वेन, प्रणिधानव्यापारेण तत्रेन्द्रियव्यापारादिति। एवमिन्द्रियादपि सकाशात्, क्वचित् न सर्वत्र, तथाविधक्षयोपशमभावे सङ्केतानपेक्षशब्दार्थविभावनफलक्षयोपशमभावे, सङ्केतमन्तरेणाऽपि, किमित्याह– **भवति शब्दार्थविभावनम्।** कुत इत्याह– **तथाऽन्तर्जल्पाकारादिबोधसिद्धेः** किमिदमित्यालोचयतस्तदिदं पूर्वोक्तलिङ्गवत् पनसमितिबोधसिद्धेरित्यर्थ, सिद्धिश्च लोकानुभवप्रामाण्यादिति ॥

**स्यादेतत्, इत्थमनेकस्वभावत्वे वस्तुनोऽनेकस्यैवाऽनेकप्रमातृभिरवसायः, तथाहि– यदि य एव तत्स्वभाव एकावसायस्य निमित्तं स एवापरावसायस्य, ततस्तयोरैक्यं सर्वथैकनिमित्त-**

---

१ चोदितत्वेनेत्यपि ।

त्वात्, इतरेतरस्वात्मवत्, तदभेदेऽपि तदवसायभेदे, तदेकस्वभावतापत्तिः, तदन्यकार्याणामपि तत्तथातयाऽविरोधादिति । अत्रोच्यते-एकान्तवादिन एवायं दोषः, नानेकान्तवादिनः, तस्य ह्यचित्रमेवैकम् । न चानेककार्यजननैकस्वभावतां विहाय ततोऽनेकं भवति, अनेककार्यजनने च नाचित्रमेकत्वं, तद्भावेऽपि कार्त्स्न्येनैकेन तद्ग्रहात् तदपरावसायग्रहणप्रसङ्गः, तस्य तज्जननस्वतत्त्वस्याऽन्यथा ग्रहणायोगात्, तत्सावधिकत्वात् न निरवधिकं ग्रहणं तद्ग्रहणमिति भावनीयम् । मलसामर्थ्यात् तदग्रहणं, तदग्रहणमेव सर्वथैकत्वात्, अन्यथाऽस्य ग्रहणाग्रहणप्रसङ्गः, तथा च सत्यस्मन्मतानुवाद एव गृह्यमाणागृह्यमाणयोरेकत्वविरोधादिति । तच्चित्रतयैव कथंचित् तद्ग्रहणादेकस्याप्यनेकप्रमातृभिरवसायः,नान्यथा, इत्युक्तदोषानतिवृत्तेरित्यलं प्रसङ्गेन

स्यादेतत्, इत्थमुक्तनित्याऽनेकस्वभावत्वे, वस्तुन इन्द्रियार्थाद', नैकस्यैवाऽनेकप्रमातृभिरवसाय । एतदेव भावयति– तथाहीत्यादिना। तथाहि यदि य एव तत्स्वभावो वस्तुस्वभाव , एकावसायस्यैकस्य प्रमातुरिति प्रक्रम', अवसाय एकावसायस्तस्य, निमित्तं स एवाऽपराऽवसायस्य प्रमात्रन्तरावसायस्य, ततस्तयोरवसाययोरैक्यम् । कुत इत्याह– सर्वथैकनिमित्तत्वात्, अधिकृतवस्तुस्वभावैकत्वेन इतरेतरस्वात्मवदिति निदर्शनम् । एतच्च 'यत' स्वभावतो जातमेकम्' इत्यादिना त्वयाऽप्युक्तमेव । तदभेदेऽपि तत्स्वभावाभेदेऽपि, तदवसायभेदे एकाऽपरप्रमात्रवसायभेदे, तदेकस्वभावतापत्ति. तस्य वस्तुनः एकस्वभावतापत्ति । कुत इत्याह– तदन्यकार्याणामपि तस्माद् विवक्षितस्वभावादन्ये तदन्ये स्वभावा इति प्रक्रम, तेषा कार्याणि सदादिविज्ञानादीनि तत्कार्याणि तेषामपि, तत्तथातया तस्य वस्तुन',तथाता एकजातीयविज्ञानापेक्षया एकस्वभावा अनेककार्यजननैकस्वभावता, तया सामान्येनाऽप्येकस्वभावापेक्षया सदाद्यनेकविज्ञानादिकार्यजननैकस्वभावतया, अविरोधात् तदेकस्वभावतापत्तिरिति ।

एतदाशङ्क्याह- **अत्रोच्यते**, एकान्तवादिन एवायमनन्तरोदित -'ततस्तयोरैक्यम्' इत्यादिलक्षणो दोष , नानेकान्तवादिन । कुत एतदित्याह- **तस्येत्यादि** । तस्य एकान्तवादिन ; यस्मात्, चित्रमेवैकमेकान्तेकरूपम् । यदि नामैव तत किमित्याह- **न चानेककार्यजननैकस्वभावतां विहाय तत** एकस्मात्, इह प्रक्रमे, अधिकृतैकस्वभावात्, अनेक भवत्येकापरविज्ञानादि । यदि नामैव तत किमित्याह- **अनेककार्यजनने वा नाऽचित्रमेकत्वं** । अनेकगर्भैकत्वस्य सर्वथैकत्वविरोधात् । दोषान्तरमाह- **तद्भावेऽपीत्यादिना** । तद्भावेऽपि अचित्रैकस्वभावेऽपि, कार्त्स्न्येन सामस्त्येन, एकेन प्रमात्रा, तद्ग्रहात् अधिकृतस्वभावग्रहात्, तदपरावसायग्रहणप्रसङ्ग - तस्मादेकस्मात् प्रमातुरपरे प्रक्रमात्, प्रमातार एव तदपरे तेषामवसाया ज्ञानानि तेषा ग्रहणमवगमस्तत्प्रसङ्ग इति समास । कुत इत्याह- **तस्येत्यादि** । तस्याऽधिकृतस्वभावस्य, कि विशिष्टस्येत्याह- **तज्जननस्वतत्त्वस्य** अपरावसायजननस्वभावत्वस्य, अन्यथा तदपराऽवसायग्रहणमन्तरेण, ग्रहणाऽयोगात्, अयोगश्च तत्सावधिकत्वात् ,- तदपरावसायजननस्वभावो ह्यसाविति तत्सावधिक । यदि नामैव तत. किमित्याह- **न निरवधिकं ग्रहणं** तदपराऽवसायजननस्वभावविकल ग्रहणम्, तद्ग्रहण तदपरावसायजननस्वभावग्रहणमिति भावनीयमेतत् । पराभिप्रायमाह- **मलसामर्थ्याद् हेतो** , तदग्रहण अपरावसायाख्यावध्यग्रहणम् । एतदाशङ्क्याऽऽह- **तदग्रहणमेव** तस्याधिकृतस्वभावस्याऽग्रहणमेव । कुत इत्याह- **सर्वथैकत्वात्** एक एव ह्यसौ तदपराऽवसायजननस्वभाव इति, तदग्रहणेऽग्रहणमिति गर्भ । इत्थं चैतदङ्गीकर्त्तव्यमित्याह- **अन्यथा** एवमनभ्युपगमे तदवधिग्रहणानभ्युपगमे, अस्य स्वभावस्य, ग्रहणाऽग्रहणप्रसङ्ग । सामान्येन ग्रहणात् अवधिमत्तयाऽग्रहणात् । यदि नामैव तत किमित्याह- **तथाच सति** एवं च सति, अस्मन्मतानुवाद एव तच्चित्रताविधानेन, अत एवाह- **गृह्यमाणाऽगृह्यमाणयोर्द्धर्मयो**,एकत्वविरोधादिति । एव तच्चित्रतयैव स्वभावचित्रतयैव, कथचित् केनाचित् प्रकारेण, तद्ग्रहणात् अधिकृतस्व-

भावग्रहणात्, एकस्याऽपि वस्तुन', सामान्येन अनेकप्रमातृभिरवसाय', नान्यथा। कुत इत्याह– उक्तदोषानतिवृत्तेः 'ततस्तयोरैक्यम्' इत्याद्युक्तदोषानतिवृत्ते, इत्यल प्रसङ्गेनेति ॥

यच्चोक्तम्– किञ्च विकल्पात्मकत्वेऽस्य 'निश्चयात्मकमिदम्' इत्यनेकप्रमाणवादहानिः, तेनैव वस्तुनो निश्चयात्, नित्यत्वादौ भ्रान्त्यनुपपत्तेः, अनेकधर्मके वस्तुन्यन्यतरधर्मनिश्चयात्, तदन्यनिश्चयाय प्रमाणान्तरसाफल्यमिति चेत्, इत्याशङ्क्य–'नैकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया निश्चयात्, प्रमाणान्तरस्य निश्चितमेव विषयीकुर्वतः स्मृतिरूपानतिक्रमात्, एकधर्मद्वारेणाऽपि तद्वतो निश्चयात्मना प्रत्यक्षेण विषयीकरणे सकलधर्मोपकारकशक्त्यभिन्नात्मनो निश्चयात्' इत्यादि, तदप्ययुक्तम्। छद्मस्थज्ञानस्येत्थमप्रवृत्तेः, ज्ञेयतज्ज्ञानक्षयोपशमानां तथास्वभावत्वादित्युक्तप्रायम्, केवलिनां तु तथानिश्चयः, प्रमाणान्तराभावश्च,इति न कश्चिद्दोषः। आह– एवमप्यनेकस्वभावतया ततस्तथानियतात् कथमनन्तानां केवलिनां तदविकलात्मग्राहकज्ञानभावः, एकत्र कात्स्न्र्योपयोगित्वेन तत्तज्जननस्वभावत्वात्, अपरस्यापि तद्भावापत्तेर्हेत्वविशेषादिति, न, हेत्वविशेषासिद्धेः, ज्ञानिनोऽन्यत्वात्, अधिकृतवस्तुनश्च विचित्रत्वात्, तत्तज्ज्ञान्यपेक्षया तत्र तत्र तदा तदाऽविकलात्मग्राहकज्ञानाभिव्यञ्जकात्मकत्वेनैकत्र कार्त्स्न्योपयोगित्वादिति। न चैवमपरस्यापि तद्भावापत्तिः, अधिकृतवस्तुनस्तथात्वविरोधादिति सूक्ष्मधिया भावनीयम्। एकान्तैकस्वभाववस्तुवादिनस्त्वेष दोषोऽनिवारितप्रसर एव, तद्भेदनिबन्धनाधिकृतवस्तुवैचित्र्यानुपपत्तेरिति। किञ्च निर्विकल्पकेनाऽपि प्रत्यक्षेणैकस्वभावे वस्तुनि परिच्छिन्ने कथं नाऽनेकप्रमाणवादहानिरिति चिन्त्यम्?। प्रत्यक्षस्यानिश्चयरूपत्वाच्चिन्तितमेवैतत् ॥

यच्चोक्त पूर्वपक्षे, किञ्च विकल्पात्मकत्वेऽस्येत्यादि। यावदेकधर्म्मद्वारेणाऽपि तद्वतो निश्चयात्मना प्रत्यक्षेण विषयीकरणे सक-

लधर्म्मोपकारकशक्त्यभिन्नात्मनो निश्चयादित्यादि, तदप्ययुक्तम् । कुत इत्याह- **छद्मस्थज्ञानस्येत्थमप्रवृत्तेः** कारणात्, अप्रवृत्तिश्च ज्ञेय-तज्ज्ञानक्षयोपशमाना त्रयाणामपि; तथास्वभावत्वात् चित्रतया असर्व-धर्मवत्तया निश्चयनिबन्धनस्वभावत्वात्, इत्युक्तप्राय प्रायेणोक्तम्। केव-लिना तु क्षीणसकलावरणानां, तथानिश्चय सकलधर्म्मवत्तया निश्चयः, प्रमाणान्तराभावश्च केवलिनामनुमानाद्यभावश्चेति । न कश्चिद्दोषः। आह- **एवमपि** केवलिनां तु तथानिश्चयेऽपि सति, अनेकस्वभावतया,ततो वस्तुन', तथानियतात् समग्रानेकस्वभावतया नियतात्, एकस्वभाव-त्वाविकल्पादित्यर्थ. । कथमनन्तानां प्रमातॄणां केवलिना वृषभादीनाम्, तद्विकलात्मकग्राहकज्ञानभाव तस्यानेकस्वभावतया तथानियतस्य व-स्तुनोऽविकलो य आत्मा, तद्ग्राहकज्ञानोत्पादस्तत कथम्?, नैवेत्यर्थ.। कथ नेत्याह- **एकत्रेत्यादि** । एकत्र ऋषभादिज्ञाने, कार्त्स्न्योपयोगित्वे-न हेतुना, तत्तज्जननस्वभावत्वात् अधिकृतवस्तुन ऋषभादिज्ञानजनन-स्वभावत्वात्, नान्यथा ततस्तथा तदुत्पाद इति भावनीयम्। यदि नामैवं तत' किमित्याह- **अपरस्यापि** वर्द्धमानादिज्ञानस्य, तद्भावापत्तेः ऋ-षभादिज्ञानापत्तेः । कथमित्याह- **हेत्वविशेषादिति** । ऋषभादिज्ञानज-ननस्वभावं ह्यधिकृत वस्तु तद्धेतुस्ततस्तस्याऽपि तद्वत्तद्भावापत्तेः, अतो न ततोऽनन्तानां तदविकलात्मग्राहकज्ञानभाव इति । उक्त च यतः- 'स्वभावतो जातम्' इत्यादि, असर्वज्ञता वा सर्वेषामन्योन्यमधिकृतवस्तुनो-ऽनुत्पत्तितस्तदनाधिगमादिति पराभिप्राय । एतदाशङ्कयाह- **नेत्यादि** । न नैतदेवम्, यदभ्यधायि परेण, कुत इत्याह- **हेत्वविशेषासिद्धेः** । कथ-मसिद्धिरित्याह- **ज्ञानिनोऽन्यत्वाद्** वर्द्धमानादे , द्वयमिह ज्ञानहेतु'- जीव , अधिकृतवस्तु च, न चैतदप्येकरूपमेवेत्याह- **अधिकृतवस्तुनश्च** अनेकस्वभावतया तथानियतस्य विचित्रत्वात्। तत किमित्याह- **तत्त-ज्ज्ञान्यपेक्षया** ऋषभवर्द्धमानादिज्ञान्यपेक्षया, तत्र तत्र सिद्धार्थवन-ऋजुपालिकातीरादौ क्षेत्रे, तदा तदा सुषमदु'षमादुःषमसुषमान्तादौ काले, अविकलात्मग्राहकज्ञानाभिव्यञ्जकात्मकत्वेन एवभूतेनात्मना,

पुरे भ्रान्तानि तान्यापुनैव राज्यधरं नरम् ।
मध्याह्नसमये जग्मुर्बाह्योद्यानादिवीथिषु ॥१७१॥
निदद्रौ देवपालोऽथ कस्यचित् शाखिनस्तले ।
यष्टिमुच्छीर्षके कृत्वा कम्बलाऽऽवृतविग्रहः ॥१७२॥
देवपालं समालोक्य नवाम्बुकणवर्षकः ।
करी जगर्ज गम्भीरं तडित्वानिव मूर्त्तिमान् ॥१७३॥
हेषां चकार वाल्हीकः कोकिलाध्वानसुन्दरम् ।
विस्तृतं पाण्डुरं छत्रमुत्फुल्लकमलोपमम् ॥१७४॥
जाह्नवीलहरीश्वेते चामरे चेलतुः स्वयम् ।
अभिषिच्य करीन्द्रेण न्यस्तः स्कन्धे विभुर्गवाम् ॥१७५॥
ततः सिंहरथेनाऽसौ महोत्सवपुरस्सरम् ।
तत्रैव वासरे पुत्र्याः कारितः पाणिपीडनम् ॥१७६॥
ततः सिंहरथो गत्वा नरेन्द्रो मुनिसन्निधौ ।
व्रतं जग्राह भावेन पूर्वोपात्ततमोऽपहम् ॥१७७॥
कृत्वा चतुर्विधाहारपरित्यागं महामुनिः ।
चतुर्थे देवलोकेऽसौ पूर्णायुष्कः सुरोऽभवत् ॥१७८॥
तदुपानत्कम्बलाद्यं गोपालैः श्रेष्ठिनो गृहे ।
अन्यैः समर्पितं गावः स्वयमीयुर्दिनात्यये ॥१७९॥
गोपाल इति कृत्वा तं सामन्ता नन्तुमीर्ष्यया ।
अहङ्काराद् न चाऽऽयान्ति जनाः पूजितपूजकाः ॥१८०॥
महाजनप्रधानोऽयमिति ध्यात्वा विशां पतिः ।
आजूहवज्जिनदत्तं नाऽऽययौ सोऽप्यवज्ञया ॥१८१॥
कम्बलादि निशाप्रान्ते सिंहद्वारे नरेशितुः ।
अवज्ञोपायनानीव जिनदत्तोऽप्यमोचयत् ॥१८२॥
तान्याऽऽलोक्य निदध्यौ स हहा! पूर्वविजृम्भितम् ।
तृणायाऽपि न मन्यन्ते धिग् मां राज्यर्द्धिभूषितम् ॥१८३॥

अश्व इत्यभिधेयम् ।

अहं खिद्ये कथंकारं येन दत्तमिदं पदम् ?।
स करिष्यति निःशेषं जनमाज्ञाविधायिनम् ॥१८४॥
ततोऽर्चयित्वा विधिवज्जिनेन्द्रमिति सोऽवदत् ।
कथं दत्तं त्वया राज्यं स्वामिन्! विप्लवकारणम्? ॥१८५॥
अथोचे व्यन्तरो भद्र! गजेन्द्रं मृत्तिकामयम् ।
विनिर्माय समागच्छेः समारुह्याऽत्र वन्दितुम् ॥१८६॥
द्विरदोऽस्मत्प्रभावेण त्वय्यारूढे चलिष्यति ।
आज्ञां करिष्यते सर्वस्ततस्तव निरन्तरम् ॥१८७॥
श्रुत्वेति भूपतिः प्राप प्रासादं मुदिताशयः ।
कुम्भकारा नृपादेशाच्चक्रुर्मृत्स्नामयं गजम् ॥१८८॥
इममारुह्य भूपालो वन्दितुं जिननायकम् ।
आगामीति ततो जज्ञे पुरे हास्यास्पदं महत् ॥ १८९ ॥
सामन्ता मन्त्रिणां पुत्राः पौरग्रामेयका अपि ।
तमवेक्षितुमाजग्मुः सर्वोऽप्यऽद्भुतकौतुकी ॥ १९० ॥
शुभेऽह्नि गजमारुह्याऽऽहूय तं श्रेष्ठिपुङ्गवम् ।
सभृङ्गारो महीपालः पश्चासने न्यवेशयत् ॥ १९१ ॥
व्यन्तरस्यानुभावेन करी मृत्स्नामयोऽचलत् ।
विसिष्मिये जनः सर्वः पश्यन् नवकुतूहलम् ॥ १९२ ॥
पुरात् स्वे निर्मिते गत्वा चैत्ये नत्वा जगद्गुरुम् ।
तमेव गजमारूढो नृपोऽगाद् निजमन्दिरम् ॥ १९३ ॥
आलानस्तम्भसम्बद्धं श्रेष्ठिन्नेनं गजं कुरु ।
इत्यादेशं महीभर्तुर्लब्ध्वा सो हर्षितोऽभवत् ॥ १९४ ॥
श्रेष्ठिना राजवत् तेन दत्ता कुम्भे शृणिक्षितिः ।
न चचाल पदं हस्ती वारित इव केनचित् ॥ १९५ ॥
वीक्षापन्नोऽभवच्छ्रेष्ठी तस्मादुत्तीर्य सत्वरम् ।
नृपपादाम्बुजं भक्त्याऽनमन्निदमुवाच च ॥१९६॥
गोपाल इति यत्कृत्वाऽपराद्धं भवतः प्रतिः ।

तत्क्षमस्व महीपाल ! पुण्यलक्ष्मीनिकेतन ! ॥ १९७ ॥
ततो देवानुभावेन निःशेषाः पृथ्वीभुजः ।
आज्ञां प्रपेदिरे तस्य शेषामिव नरेशितुः ॥१९८॥
शाश्वतार्हद्भवनानां सदृशं पृथिवीपतिः ।
तच्चैत्यं कारयामास स्वर्णस्तम्भमनोहरम् ॥१९९॥
श्वेतवस्त्रे परिधाय भक्तिमान् पृथिवीपतिः ।
पुष्पैरानर्च तीर्थेशं त्रिसन्ध्यं श्रेणिको यथा ॥२००॥
स्वचैत्ये कारयामासाऽष्टाह्निकादिषु पर्वसु ।
शासनोन्नतये राजा नाट्यं सूर्याभदेववत् ॥२०१॥
अन्यदा वन्दितुं देवमचलद् नगराद् नृपः ।
सार्द्धं मनोरमादेव्या शच्येव घनवाहनः ॥२०२॥
कौपीनवसनं क्षामं भारभुग्नशिरोधरम् ।
मनोरमा पुरोऽद्राक्षीद् व्रजन्तं काष्ठवाहकम् ॥२०३॥
तं विलोक्य मुमूर्च्छाऽऽशु देवी मोहपरायणा ।
अर्द्धविच्छिन्नशाखेव पपात पृथिवीतले ॥२०४॥
तथाविधापदि प्राप्तां दृष्ट्वा देवीं मनोरमाम् ।
वज्राहत इव क्ष्मापः कृच्छ्राद् वक्तुं प्रचक्रमे ॥२०५॥
यो यद् वेत्ति जनः सर्वः स तच्च कुरुतामिह ।
स्मर्तव्या व्यसनप्राप्ते विद्या मन्त्राधिदेवताः ॥२०६॥
वैद्याः प्राहुः पित्तमूर्छां दैवज्ञा ग्रहपीडनम् ।
मान्त्रिका देवतादोषमाप्ता मुद्गलविप्लवम् ॥२०७॥
प्रगुणं रचयामासुर्भिषजः शर्करादिकम् ।
दैवज्ञा विदधुः पूजां ग्रहाणां मन्त्रपूर्वकम् ॥२०८॥
देवतानां समारेभे पूजनं मान्त्रिकैरथ ।
मन्यन्ते नितरामाप्ता उपयाचितसंहतिम् ॥२०९॥
एकतश्च विरच्यन्ते शय्याः पङ्कजिनीदलैः ।
एकतश्चापि चूर्ण्यन्ते स्थूलमौक्तिकराशयः ॥२१०॥

मूर्त्तिमद्भिरिवाऽम्भोदैर्घनाम्भःकणवर्षिभिः ।
वीज्यते तालवृन्तैः सा मृदुवातमनोहरैः ॥२११॥
उपचारशतैः कृत्वा मूर्छाव्यपगमे सति ।
एवं पपाठ भूपालवल्लभा मधुरस्वरम् ॥ २१२ ॥
अडविहि पत्ती न इहि जलु तो वि न वूढा हत्थ ।
अव्वो ! तहवि कवाडियह ! अज्ज वि सा वि अवत्थ ॥२१३॥
देवि ! क एष वृत्तान्तो येन प्रोक्तं त्वयेदृशम् ? ।
साऽऽख्यद् देवेमकं काष्ठवाहकं द्रुतमानय ॥२१४॥
सोऽथाऽऽहूतः समायातः साऽऽख्यद्देवी मनोरमा ।
देवायं काहलो नाम मत्पतिः पूर्वजन्मनि ॥ २१५ ॥
पूर्वजन्मनि पत्न्यऽस्याऽभवं सिंहलिकाह्वया ।
दुःखदौर्भाग्यदौर्गत्यपराभवनिकेतनम् ॥ २१६ ॥
अन्यदाऽनेन संयुक्ता गताऽहं काष्ठहेतवे ।
वनमध्ये महाकायतालशालमनोहरे ॥ २१७ ॥
मिथ्यात्वाभ्रे गते दूरं सूर्यवज्जिननायकः ।
दृष्टो दिष्ट्या जगन्नाथः सनाथोऽतिशयश्रिया ॥ २१८ ॥
पूजयाव इमं देवमावां प्रिय ! जगन्नतम् ।
मयोचेऽयमथ प्राह त्वमेव कुरु सर्वदा ॥ २१९ ॥
[1]निर्द्धर्मं वल्लभं ज्ञात्वा गत्वा शैवलिनीतटम् ।
सिन्दुवारैरिमं देवं भावतः पर्यपूजयम् ॥ २२० ॥
अत्रान्तरे महीपाल ! त्वं दृष्टो गोपवेषभृत् ।
पूजयंस्त्रिजगन्नाथं जटाजूटेन मण्डितम् ॥ २२१ ॥
धन्योऽयं जगतां नाथं यः पूजयति भावतः ।
मत्पतिर्न पुनर्नूनं देवपूजापराङ्मुखः ॥ २२२ ॥
दधती भावनामेवं तस्मिन्नेव दिने नृप ! ।
कदन्नाशनयोगेन मृत्वा राज्ञः सुताऽभवम् ॥ २२३ ॥

---

१ निर्धर्मवासनामित्यपि ।

विदाङ्करोतु भूपालो देवार्चाफलमुत्तमम् ।
पारत्रिकं ममानन्तसौख्यलक्ष्मीविधायकम् ॥ २२४ ॥
इमं विलोक्य संपन्ना मम जातिस्मृतिः प्रिय ! ।
इदं ततः पपाठाऽहं मूर्च्छाव्यपगमे सति ॥ २२५ ॥
इदं श्रुत्वा नृपः प्राख्यज्जिनेशार्चाफलं महत् ।
पारत्रिकं तवैतस्या ऐहिकं मम वर्त्तते ॥ २२६ ॥
इतश्च भगवान् धर्मो मूर्त्तिमानिव निर्ममः ।
मुनिचन्द्राभिधः सूरिर्नाभेयं नन्तुमागतः ॥ २२७ ॥
प्रणिपत्य मुनेः पादौ श्रुतवान् देशनां नृपः ।
सपत्नीकस्तु सम्यक्त्वं भावतः प्रत्यपद्यत ॥ २२८ ॥
परमश्रावको राजा द्वादशव्रतपूर्वकम् ।
चकार जगतीं चैत्यैर्निःशेषामपि भूषिताम् ॥ २२९ ॥
देशे देशे महीपेन मारिव्यसनरक्षणम् ।
कारितं जीर्णचैत्यानामुद्धृतिश्च पुरे पुरे ॥ २३० ॥
निर्दोषमथ सम्यक्त्वं परिपाल्य मनोरमा ।
मृत्वा समाधिना प्राप पूर्णायुष्का सुरालयम् ॥ २३१

इतश्च—

अथाऽऽस्तिकमहीपार्षिसमेतः समतानिधिः ।
हस्तिनानगरं प्राप विहरन् जगतां पतिः ॥ २३२ ॥
स्वामिनं समवसृतं विज्ञाय जगतीपतिः ।
देवपालः समायातो वन्दितुं जगतां गुरुम् ॥ २३३ ॥
प्रदक्षिणिततीर्थेशः कृतस्तवनमङ्गलः ।
निषसाद यथास्थानं दत्तदृष्टिर्जिनेश्वरे ॥ २३४ ॥
उवाच जगतां नाथो मोहपङ्कमहाप्लवः ।
राजन् ! राजीवनेत्राया मरणाद् दुःखमाप्तवान् ॥ २३
अनित्यं सर्वमप्येतत् पयःपूर्णामकुम्भवत् ।

१ प्राहेति च ।

तस्मिन् ममत्वमुच्चैर्यत्तद् मोहस्य विजृम्भितम् ॥ २३६ ॥
जीवाः सर्वे सुतत्वेन भार्यात्वेनाऽपि जज्ञिरे ।
सबन्धः किं स कोऽप्यस्ति स्पृष्टः कर्म्मवशैर्न यः? ॥२३७॥
यस्यैव हर्षकार्याणि क्रियन्ते स्नेहगर्भितैः ।
तस्यैव प्रेतकर्म्माणि तन्यन्ते शोकसंकुलैः ॥२३८॥
अनित्यताकृतमतिः शुष्कमाल्यो न शोचति ।
नित्यताकृतबुद्धिस्तु भग्नभाण्डोऽपि रोदिति ॥२३९॥
इत्यादिस्वामिवाक्यानि श्रावं श्रावं महीपतिः ।
विरक्तो भवपाशेभ्यो राज्ये पुत्रं निवेश्य च ॥२४०॥
त्रिशतीप्रमितै राज्ञः पुत्रैर्वैराग्यरङ्गितैः ।
साकं श्रीमल्लिनाथान्ते श्रमणोऽजायतोच्चकैः ॥२४१॥
( युग्मम् )

इतश्च कश्चिदागत्य द्विजः प्रकृतिमानभृत् ।
स्तम्भ इव स्थिरोऽतिष्ठत् श्रीमल्लिस्वामिनः पुरः ॥२४२॥
उवाच जगतां नाथो मा मानं कुरु मानव! ।
अयं वन्द्योऽप्ययं निन्द्य इति चेतसि मा कृथाः ॥२४३॥
पुराऽपि मानमाहात्म्याद् यज्ञदत्ताभिधो द्विजः ।
निन्दनीयकुले जातो विजातः कर्म्मबन्धने ॥२४४॥
पुरे क्षितिप्रतिष्ठाख्ये महीमण्डलमण्डने ।
यज्ञदत्तो द्विजः क्रोधी प्रतिघो मूर्तिमानिव ॥२४५॥
सोऽनिन्दत् पण्डितंमन्यो जिननायकशासनम् ।
जृम्भते स्वल्पबुद्धीनामात्मनीना न हि क्रिया ॥२४६॥
तस्य निन्दामसहिष्णुः सहिष्णुरपि तत्क्षणात् ।
गुरुणा प्रनिषिद्धोऽपि चेल्लकः कोऽपि बुद्धिमान् ॥२४७॥
वादायाऽऽह्वाययामास यज्ञदत्तं द्विजं मुदा ।
यतः परबले दृष्टे नहि स्थातुमलं भटाः ॥२४८॥
( युग्मम् )

जेष्यते येन यस्तस्य सोऽन्तेवासी भविष्यति ।
तयोर्विवदतोरेषा प्रतिज्ञाऽभून्महीयसी ॥२४९॥
हेतुवादी विवादेन सोऽजयत् चेल्लको द्विजम् ।
उदयंस्तरणिः किन्तु तमसा परिभूयते ॥२५०॥
प्रतिज्ञातं व्रतं विप्रस्तस्य जग्राह सन्निधौ ।
प्रतिज्ञापालने सन्तस्त्वरन्ते दुष्करेऽपि हि ॥२५१॥
वृथाऽप्याऽऽस्वादितो हन्त ! सुधाऽऽहारो जराहरः ।
प्रतिज्ञावशतोऽप्याऽऽत्तं व्रतं सौख्याय जायते ॥२५२॥
एवं शासनदेव्याऽसौ बोधितोऽपि महामुनिः ।
अनिन्दद् वस्त्राङ्गमलम् दुस्त्यजा कुलवासना ॥२५३॥
ज्ञातयस्तस्य संसर्गाद् भेजुः शान्ति क्षणादपि ।
प्रावृषेण्याच्च सम्पर्काद् दवदग्धा द्रुमा इव ॥२५४॥
तस्य प्रणयिनी तत्रानुरागं बिभ्रती शठा ।
वश्याय पारणे तस्मै कदाचित् कार्म्मणं ददौ ॥२५५॥
स राजयक्ष्मणेवोच्चैः क्षयं तेनाऽनिशं व्रजन् ।
स्मरन् पञ्च नमस्कारं देवलोकमगान्मुनिः ॥२५६॥
तस्याऽऽवसानं सा श्रुत्वा वैराग्यात् सहचारिणी ।
व्रतं जग्राह मानुष्यजन्मभूमीरुहः फलम् ॥२५७॥
पतिहत्यात्मकं घोरमनालोच्यैव पातकम् ।
तपः कृत्वा दिवं साऽऽप तपः सर्वाऽर्थसाधकम् ॥२५८॥
यज्ञदत्तस्य जीवोऽथ च्युत्वा राजगृहे पुरे ।
धनसार्थपतेर्दास्याश्चिलात्या नन्दनोऽजनि ॥२५९॥
चिलातीपुत्र इत्येष चिलात्याः पुत्र इत्यभूत् ।
को नामकरणादीनि गोपानां हि प्रकल्पयेत् ? ॥२६०॥
यज्ञदत्तप्रियाजीवः पुत्रपञ्चकपृष्ठतः ।
भद्राया धनभार्यायाः सुंसुमाख्या सुताऽभवत् ॥२६१॥
बालधारककर्म्मत्वे सुंसुमाया धनो धनी ।

योजयामास दासेरं युक्तेयं स्थितिरीदृशाम् ॥२६२॥
भूयांस्याऽऽगांस्यऽसौ चक्रे बिभ्यत् श्रेष्ठीव राजतः ।
निरवासयदन्यायकृतं तं दन्दशूकवत् ॥ २६३ ॥
अन्यायपुंश्चलीक्रीडासङ्केतस्य निकेतनम् ।
पल्लीं सिंहगुहाभिख्यामगाद् दासीसुतस्ततः ॥२६४॥
अथो मलिम्लुचैः सार्कं प्रवीणैरनयाऽध्वनः ।
तस्याऽजायत सत्प्रीतिः सख्यं तुल्ये प्रवर्धते ॥२६५॥
मृते सिंहगुहेशेऽसौ तत्पदे तैर्निवेशितः ।
नरेन्द्रेणाऽपि दुर्जेयः सपक्ष इव पन्नगः ॥ २६६ ॥
इतश्च सुंसुमां कामो राजधानीमिवोत्तमाम् ।
कामिचित्तजनावासनिवेशाय विनिर्म्ममौ ॥२६७॥
अस्ति राजगृहे श्रेष्ठी पञ्चपुत्रो धनाभिधः ।
सुंसुमाख्या सुता तस्य निःसीमा रूपसम्पदा ॥२६८॥
युष्माकं द्रविणं तस्य सुंसुमा मे कुमारिका ।
व्यवस्थायेति तैः सार्द्धमगाद् धनगृहं निशि॥२६९॥(युग्मम्)
दत्त्वाऽवस्वापिनीं विद्यां श्रेष्ठिलोकस्य तत्क्षणम् ।
वेगेन लुण्टयामास निष्पुत्रस्येव तद् धनं ॥२७०॥
पद्मिनीमिव मातङ्गः पौलस्त्य इव जानकीम् ।
स सुंसुमामपाऽहार्षीत् प्रीतिवल्लीघनोदयाम् ॥ २७१ ॥
तद्वासरोढजम्बूवद् मोघा विद्याऽभवद् धने ।
सपुत्रोऽपससाराऽथ नीतिर्नीतिमतामसौ ॥२७२॥
लुण्टयित्वा धनं हृत्वा सुंसुमां च तथा स्वयम् ।
दुष्टबुद्धिः पलायिष्ट लुण्टाकैः सह दुर्जयैः ॥२७३॥
धनः श्रेष्ठी समाहूय रक्षकानित्यभाषत ।
समानयत भोः ! वित्तं निःशेषं सुंसमामपि ॥२७४॥
आरक्षकजनैः सार्कं नन्दनैरपि पञ्चभिः ।
अनुव्रजन् धनः श्रेष्ठी सुतामयममन्यत ॥२७५॥

दैवमेवापदां कर्तृ हर्तृ सुप्राप्तसम्पदाम् ।
विधातृ शुभबुद्धीनां दातृ निन्द्यधियामपि ॥२८९॥
इत्थं ध्यायन् धनः श्रेष्ठी प्राप राजगृहं पुरम् ।
सुंसमायाश्चकाराऽऽशु प्रेतकार्यं यथाविधि ॥२९०॥
अथ वैराग्यमापन्नः श्रीवीरस्वामिसन्निधौ ।
व्रतं प्राप तपस्तप्त्वा धनर्षिस्त्रिदिवं ययौ ॥२९१॥
चैलातेयः सुंसमाया वीक्षमाणो मुखं ययौ ।
दिशं याम्यामुपगतां प्रियामनुव्रजन्निव ॥२९२॥
कायोत्सर्गस्थितं ध्यानतत्परं कामविद्विषम् ।
सोऽप्रकम्पं मेरुमिव मुनिमेकमथैक्षत ॥२९३॥
स्वकीयकर्म्मणा कामं लज्जितस्तमुवाच सः ।
धर्मं ब्रूह्यन्यथा तेऽपि छेत्स्याम्यस्याः शिरो यथा॥२९४॥
स ज्ञानी ज्ञानतो ज्ञात्वा भव्योऽयमिति चाब्रवीत् ।
उपशमो विवेकश्च संवरः कार्य इत्यपि ॥२९५॥
ततश्च चारणमुनिर्नभोगमनविद्यया ।
उत्पपात महासत्त्वः सत्त्वराशिप्रबोधकृत् ॥२९६॥
अथ भावयतस्तस्य वारं वारं पदत्रयीम् ।
उल्लेख ईदृशो जज्ञे दुष्टस्याऽपि शुभोदयात् ॥२९७॥
क्रोधादीनां कषायाणां कुर्यादुपशमं सुधीः ।
तैरहं हहहा!! क्रान्तः कुष्ठीव कृमिजालकैः ॥२९८॥
श्रद्धामुकुष्टजं कुर्वन् पथ्यं सन्तोषचूर्णितम् ।
चिकित्साम्यद्य तान् सर्वान् शमभेषजयोगतः ॥२९९॥
धर्मरोहणमाणिक्यं लग्नकं शिवसम्पदः ।
कार्मणं कीर्त्तिकान्ताया आवालं ज्ञानशाखिनः॥३००॥
अधिष्ठानं माहात्म्यस्य क्रकचं मोहदारुणः ।
विवेकं कुरुतां धीमान् सावद्यत्यागलक्षणम् ॥३०१॥ (युग्मम्)

१ श्रद्धारूपा मौद्गीमेव पथ्यं कुर्वन्नित्यान्तरम् । २ मोहकाष्ठस्येति ज्ञानीयम् ।

सुंसमायाः शिरः पाणौ सत्यंकारमिवैनसः ।
दधानस्य मम काऽऽस्ते विवेकः कारणं श्रियः ? ॥३०२॥
तच्छीर्षं दुर्गतिद्वारकपिशीर्षं विवेकतः ।
मुञ्चति स्म चिलातीसूर्मूर्त्तीभूतशिवेतरम् ॥३०३॥
संवरो भणितोऽक्षाणां मनसश्च निवर्त्तनम् ।
स प्रपन्नो मया भाग्यात् कल्यकल्पः[1] शिवश्रियः॥३०४॥
पदानामर्थमेवं स भावयन् भावनाऽन्वितम् ।
समाधिमधिगम्योच्चैरभूत् हृन्मात्रचेतनः ॥३०५॥
अथ विस्राऽसृजा देहं व्याप्तं तस्य महात्मनः ।
क्षणात् पिपीलिकाश्चक्रुः सच्छिद्रं चालनीसमम्॥३०६॥
स तासामुपसर्गेऽपि चित्रन्यस्त इव स्थिरः ।
अहोरात्रद्वये सार्धे व्यतिक्रान्ते दिवं ययौ ॥३०७॥
श्रुत्वेति यज्ञदत्तस्य दृष्टान्तं मानसंभवम् ।
द्विजो मानं परित्यज्य स्वामिनं प्रणमंस्तदा ॥३०८॥
अथाऽवोचत भगवन्नहमस्मि द्विजाग्रणीः ।
अयं क्षत्रकुलोत्पन्नो मया वन्द्यः कथं जिनः ? ॥३०९॥
इत्यादिर्मामकः स्वामिन् ! विकल्पो भवकोटिकृत् ।
क्षणमात्रादयं नष्टः किं न स्याद् गुरुसङ्गमात् ? ॥३१०॥
ततस्त्रिभुवनाधीशपादान्नत्वा द्विजाग्रणीः ।
कृतमानपरित्यागश्चारित्रं प्रत्यपद्यत ॥३११॥
ततश्च विहरन्नाथः श्वेताम्बीं नगरीं ययौ ।
तत्रास्थुः तापसाः कोपमानसास्त्रिशतीमिताः ॥३१२॥
सर्वज्ञो भगवानेष श्रुत्वेति वचनं कटु ।
आगुः समवसरणं रणं दुष्कृतकर्मणाम् ॥३१३॥
तानुवाच जगन्नाथो भोः ! भोः ! मुनिमतङ्गजाः ! ।
सर्वज्ञवचनं श्रुत्वा किं कोपेन मलीमसाः ? ॥३१४॥

---

१ भूषणसदृश इति हृदयम् ।

मनोगतपरिज्ञातादुत्कर्णास्तेऽवदन्निति ।
प्रणत्य भगवत्पादौ कोपाख्यानं प्रकाशय ॥३१५॥
अथ प्रबोधमुद्दिश्य श्रीमन्मल्लिजिनेश्वरः ।
एवं गदितुमारेभे प्रत्यूहध्वान्तभास्करः ॥३१६॥
सिद्धान्तपारदृश्वाऽपि प्रकृत्या कोपनोऽधिकम् ।
चण्डरुद्राभिधः सूरिरभूद् भुवनविश्रुतः ॥ ३१७ ॥
अत्यल्पेऽपि क्रियालोपे प्रमाद्यन्तं कदाचन ।
आचुक्रोश मुनिग्रामं क्रोधावेशविसंस्थुलः ॥३१८॥
स्तोकमात्रं मुनीनां स स्खलितं सोढुमक्षमः ।
गच्छस्य दूरदेशेऽस्थाद् मुनिसंक्लेशभीलुकः ॥३१९॥
मासकल्पेन सातत्यं गच्छेन सह संयमी ।
विहरन् मालवे देशेऽवन्त्युद्यानमुपेयिवान् ॥ ३२० ॥
इतः कश्चिन्महेशस्य सूनुः कन्दर्पसुन्दरः ।
पर्यणयत वित्तेशकन्यकां रतिसन्निभाम् ॥ ३२१ ॥
मित्रैः समानशीलाङ्गैस्तत्पादाम्भोजपावितम् ।
स युवा क्रीडितुं रम्यं तदुद्यानं समागमत् ॥३२२॥
नानाविधाभिः क्रीडाभिः क्रीडन्तः प्रतिपादपम् ।
ददृशुः सुहृदस्तस्य धर्मध्यानरतान् मुनीन् ॥ ३२३ ॥
यथाचारं नमस्कृत्य गर्भश्रावकसन्निभाः ।
ववन्दिरे मुनीनेतान् क्षमाश्रमणपूर्वकम् ॥ ३२४ ॥
पूज्याः ! सखाऽयमस्माकं बाल्याद् वैराग्यनिर्भरः ।
व्रतं गृहीतुकामोऽस्ति कुरुताऽस्य समीहितम् ॥३२५॥
शठान् वण्ठानिव ज्ञात्वा जजल्पुर्मुनिपुङ्गवाः ।
दीक्षायामधिकारोऽस्ति गुरोरस्मादृशां नहि ॥३२६॥
क्वाऽऽस्ते गुरुस्तदापृष्टैः कृतवक्रौष्ठिकैश्च तैः ।
इत्यचिन्त्यत निर्ग्रन्थैर्घृष्यतां कलिना कलिः ॥३२७॥

१ मुदिताऽऽशया एवमपि । २ कृतहास्यैरित्यर्थः ।

दर्शितः सस्मितं पाणिसंज्ञया मुनिपुङ्गवः ।
नत्वा सूरिं ततस्तद्वत् सुहृद्वर्गोऽप्यवोचत ॥३२८॥
मया सह कथं मूर्खा एते हास्यं वितन्वते ।
तत्फलं दर्शयिष्यामि केशलुञ्चनकैतवात् ॥३२९॥
ध्यात्वेति कोपनः सूरिः कम्पमानकराधरः ।
तैर्भस्माऽऽनाययद् वेगात् तेषां क्षेप्तुमिवानने ॥३३०॥
वीक्षामहे करोत्येष किमिदानीं मुनीश्वरः ? ।
भस्मोपनिन्यिरे तेऽपि विचिन्त्येति कुतूहलात् ॥३३१॥
लुलुञ्च तत् शिरस्तूर्णं विधृत्योरुद्वयेन सः ।
गुरो![1] मा लुञ्च मुञ्चैनं तेषामारटतामिति ॥ ३३२ ॥
अचिन्तयद् नवोढोऽथ लुञ्चितोऽहं यथा तथा ।
इदानीं गर्हिताऽत्यन्तमीदृक्षस्य गृहस्थता ॥ ३३३ ॥
हास्येनाऽपि मया प्राप्तं श्रामण्यं भवतारकम् ।
इदानी भावतस्तावत् प्रपद्येऽहन्निर्वेदितम् ॥ ३३४ ॥
ऊर्ध्वस्थमित्रवर्गाणामश्रुभिर्निर्जरोपमैः ।
तस्य भस्माविले मूर्ध्नि पङ्कशङ्का व्यजृम्भत ॥ ३३५ ॥
अस्माभिर्यत् कृतं हास्यमपतद् मस्तकेऽस्य तत् ।
वराहात्तेक्षुदण्डेषु पिष्यते माहिषं मुखम् ॥ ३३६ ॥
अविचारितमेवैतत् कृतमस्माभिरुच्चकैः ।
केशलुञ्चनदम्भेन तदस्य फलमुत्थितम् ॥३३७॥
सुहृदोऽसुहृदो जाता वयमस्य दुराशयाः ।
अनाथस्येव यदियं दशा जज्ञे मनोऽतिगा ॥ ३३८ ॥
एतत्स्वजनलोकस्य विवाहक्षणशालिनः ।
कथं वार्त्ता महोद्वेगकारिणी कथयिष्यते ? ॥ ३३९ ॥
कुसङ्गाद् जायते नो चेद् मरणं गञ्जनं भवेत् ।
कृत आह्वानकोऽस्माभिर्यथार्थकुटिलाशयः ॥३४०॥

१ तिरस्करणमिति मतम् ।

एवं खेदप्रपन्नेषु मित्रेषु निखिलेष्वथ ।
उवाच स युवा नव्यदीक्षितः पूर्वसाधुवत् ॥ ३४१ ॥
विप्लवादपि संप्राप्तं श्रामण्यं जिनभाषितम् ।
गृहीतं काचखण्डस्य शङ्कया रत्नसन्निभम् ॥३४२॥
अकामस्याऽपि दीक्षा मे जज्ञे पुण्यप्रसाधिका ।
अनिच्छयाऽपि संभुक्ता मोदकाः किं न तृप्तये?॥३४३॥
यूयं मित्राणि मित्राणि भवार्णवनिमज्जनात् ।
यदहं तारितस्तूर्णं व्रतपोतप्रदापनात् ॥ ३४४ ॥
इति तस्य गिरः श्रुत्वा बाष्पपूर्णविलोचनाः ।
तदलङ्कारमादाय ययुस्ते स्वं निकेतनम् ॥ ३४५ ॥
शैक्षो[1]ऽवादीद् गुरुं नत्वा मुखवासपुरःसरम् ।
मुनीन्द्र! स्वजना नूनं कर्त्तारो मे व्रतक्षितिम्[2]॥ ३४६॥
करणीयं तथा स्वामिन्! यथा जैनेन्द्रदर्शने ।
न स्याद् हास्यास्पदं किंचित् पाखण्डिषु निरन्तरम् ३४७
ऊचे सूरिर्दिवा वत्स! वर्त्मनः प्रत्युपेक्षणम् ।
क्रियतां सत्वरं यस्मादावाभ्यां गम्यते निशि ॥३४८॥
तथेति प्रतिपद्याऽसौ कृत्वाऽध्वप्रत्युपेक्षणम् ।
आगच्छद् मुनिवेषेण बभौ गीतार्थवत् तदा ॥३४९॥
सूरिणा सह शैक्षोऽथावश्यकं कृतवानऽसौ ।
व्यतीते रजनीयामे निशि तेन सहाऽचलत् ॥३५०॥
स्पष्टमग्रस्थिते मार्गमव्यग्रं कथयत्यपि ।
तस्मिन् जराभरक्रान्तः पदे पदेऽस्खलद् मुहुः ॥३५१॥
कीदृशं प्रत्युपेक्षिष्ठा मार्गं रे! शैक्ष! दुर्जन! ।
इति वाक्यैर्वह्निकल्पैः स्वशरीरे ददाह सः ॥ ३५२ ॥
शिष्यशीर्षं गुरुः क्रोधादवधीद् दण्डकोटिना ।
कोपारघट्टखाट्कारविस्तारभ्रमसंनिभम् ॥३५३॥

---

१ शिष्य, इत्यपि । २ व्रतनाशमित्याशय ।

क्षमावतां धुरीणोऽसौ शैक्षोऽथ ध्यातवानिति ।
अहं हा! गुरुसन्तापनिदानं वर्त्ततेतराम् ॥ ३५४ ॥
विनीतशिष्यसङ्घाताद् मन्निदानेन साधुराट् ।
निष्क्रान्तो लभते कष्टं स्खलति स्म पदे पदे ॥३५५॥
आचार्यसवितुः सर्वतपस्तोमापहारिणः ।
उपप्लवाय संजज्ञे मल्लाभो बुद्धयोगवत् ॥ ३५६ ॥
घ्नतोऽप्याऽऽक्रोशतोऽप्यस्य न दोषः कोऽपि वर्त्तते ।
यतो ममाऽपराधोऽयं विहारः कारितो निशि ॥३५७॥
केचिद् निजगुरून् भक्त्या शक्रा इव जिनेश्वरम् ।
बहुलोद्भिन्नरोमाञ्चाः सेवन्ते प्रतिवासरम् ॥३५८॥
एवं भावयतस्तस्य क्षमासम्भृतचेतसः ।
उत्पन्नं पञ्चमं ज्ञानं सर्वपर्यायतत्त्ववित् ॥ ३५९ ॥
कराब्जमुक्तावल्लोकमखिलं पश्यतः सतः ।
सुखेन नयतः सूरिं विभाति स्म विभावरी ॥३६०॥
मूर्त्तिमत्क्रोधसप्तार्चेर्ज्वालां रुधिरधोरणीम् ।
क्षरन्तीं सूरिरैक्षिष्ट शिष्यमस्तकपर्वतात् ॥ ३६१ ॥
नवव्रतोप्यऽसौ धन्यो नैव पूर्वव्रतोऽप्यऽहम् ।
अक्षमाऽभूद् ममेदृक्षा क्षान्तिरस्येदृशी परम् ॥३६२॥
सच्चारित्रं मया प्रोक्तं कृताः सिद्धान्तवाचिकाः ।
परं क्षान्तिर्मया नैव चक्रे साधुजनोचिता ॥ ३६३ ॥
साधवस्तत्यजुर्मां ते क्रोधापस्मारदूषितम् ।
एकक्रोधावकाशेऽपि निष्प्रकाशमभूत् परम् ॥३६४॥
अन्तःक्षमावतां वासे वसन्नपि निरन्तरम् ।
अक्षम्यहं यतोऽम्बुस्थः कुलीरस्तरणे पङ्गुः ॥ ३६५ ॥
एवं सुतीव्रसंवेगवह्निना कर्मपादपम् ।
दहतः केवलज्योतिरुद्भिन्नं पापघातकम् ॥३६६॥
भूयोऽप्यसौ परीवारसम्पदा समयुज्यत ।

श्रीचण्डरुद्र आचार्यः शिष्यकेवलिना सह ॥३६७॥
विहृत्य सुचिरं धात्र्यां प्रतिबोधपरायणौ ।
शिवामचलस्वरूपां प्रापतुर्मोक्षसम्पदम् ॥३६८॥
तच्छ्रुत्वा तापसाः सर्वे प्रशान्तहृदयास्ततः ।
अगृह्णन् स्वामिनः पार्श्वे दीक्षां सर्वज्ञभाषिताम् ॥३६९॥
ततश्च भगवांस्तस्माद् विहरन् मदिरावतीम् ।
पुरीं शक्रपुरीं लक्ष्म्या ययौ त्रिभुवनार्यमा ॥३७०॥
तत्र राजा यशश्चन्द्रः प्रकृत्या स्त्रैणलम्पटः ।
तदैव स्ववधूरूपं द्रष्टुं प्रापाऽन्तिके प्रभोः ॥३७१॥
तस्य प्रबोधमुद्दिश्य कुलध्वजनरेशितुः ।
कथां गदितुमारेभे धीरवाचा जगद्गुरुः ॥३७२॥
तथाहि—
जम्बूद्वीपाऽभिधे द्वीपे वर्षे दक्षिणभारते ।
अस्त्यऽयोध्येति नगरी चूडारत्नमिव क्षितेः ॥३७३॥
तत्राऽभूद् भूपतिः शङ्खो धुरीणः सर्वभूभृताम् ।
सधर्मचारिणी तस्य धारिणी धर्मचारिणी ॥३७४॥
तयोः कुलध्वजः पुत्रो ध्वजवद् वंशभूषणम् ।
द्वासप्ततिकलागारं द्वारं निःशेषसम्पदाम् ॥३७५॥
अन्येद्युर्नगरोपान्ते बाह्यालीं गतवानसौ ।
अमात्यादिपरिवृतः समानगुणशालिभिः ॥३७६॥
अधः पद्मासनासीनं शतशाखस्य शाखिनः ।
सेवकैरिव राजानं मुनिवृन्दैः परिवृतम् ॥३७७॥
वाचा मधुमुचा तत्र कुर्वाणं धर्मदेशनाम् ।
मूर्त्तं धर्ममिवापश्यद् मानतुङ्गाऽभिधं गुरुम् ॥३७८॥
(युग्मम्)
विनीतवेषस्तत्पार्श्वे गत्वा नत्वा यथाविधि ।
उचितासनमासीनः श्रुतवान् धर्मदेशनाम् ॥३७९॥

दुष्टाष्टकर्मविस्तीर्णनेपथ्यान्तरितः सदा ।
नटवद् भवनाट्येऽस्मिन् जन्तुर्विपरिवर्त्तते ॥३८०॥
बध्यते जीवसारङ्गः स्वेच्छया संचरन्नपि ।
पुरन्ध्रीरूपपाशाद्यैः कामव्याधेन दुर्धिया ॥३८१॥
आदरः परदारेषु स्वदाराणां विवर्जनम् ।
भवेत् पिपतिषोः पुंसो नरके नर! केवलम् ॥३८२॥
गोत्राचारपरीहारः प्राणानां संशयागमः ।
साधुवादपरिभ्रंशः परस्त्रीगमनाद् ध्रुवम् ॥३८३॥
एतद्वाक्यश्रुते राजपुत्रो वैराग्यमागतः ।
विरक्तः परदारेषु निषेधं प्रत्यपद्यत ॥३८४॥
प्रणिपत्य पुनः सूरेः पादाम्भोजं नृपाङ्गजः ।
निवर्त्तमानश्चाऽद्राक्षीत्कलहं योषितां पथि ॥३८५॥
किं वृथा कलहायेथे रोषोत्कर्षाद् मुहुर्मुहुः? ।
इति पृष्टा कुमारेण चैका तन्मध्यतोऽवदत् ॥३८६॥
देवाहं लोहकारस्य पत्नी सौभाग्यकन्दली ।
पूर्णकुम्भद्वयाऽत्राऽऽगां भारभुग्नशिरोधरा ॥३८७॥
इयं रथकृतः पत्नी नाम्ना कनकमञ्जरी ।
रिक्तकुम्भद्वया देव! समागान् मम संमुखं ॥३८८॥
रिक्तकुम्भद्वयादेव मोच्यो मार्गोऽनया मम ।
एकं कारणमेवेदमपरं च निशम्यताम् ॥३८९॥
यावन्मात्रं हि पत्युर्मे विज्ञानं जगतीतले ।
तादृग् न कस्यचिद् नूनं विद्यते वाग्मिनां वर! ॥३९०॥
कौतुकाऽऽक्षिप्तचेतस्कः कुमारः प्राह किं तव ।
पत्युः समस्ति विज्ञानं सर्वलोकप्रमोदकृत्? ॥३९१॥
मत्पतिश्चन्द्रदेवाख्यो लोहकारशिरोमणिः ।
विज्ञानवल्लरीजालप्रावृट्कालसमः प्रभो! ॥३९२॥
स चेल्लोहमयं मीनं विधत्ते राजशासनात् ।

उत्प्लुत्य व्योमयानेन स याति मकराकरम् ॥३९३॥
गिलित्वा गलरन्ध्रेण तन्मध्यान् मौक्तिकावलीः ।
पुनरायाति संस्थानं स्वकीयं लोहजस्तिमिः ॥३९४॥
मुखमर्कटिकां दत्वा श्रुत्वेति तद्गिरः पुरः ।
आह स रथकृत्पत्नी तालिकावादनान्वितम् ॥३९५॥
विज्ञानेनाऽमुना लोके न हि किञ्चन लभ्यते ।
मन्ये तदेव विज्ञानं यत्पत्यौ मे विजृम्भते ॥३९६॥
अथोचे भूपतेः पुत्रः किं ते पत्युर्मनोहरम् ।
विज्ञानं विद्यते ब्रूहि त्वमशेषं सुलोचने !? ॥३९७॥
अत्रास्ति नगरे रम्ये मत्पतिः सूत्रभृद्वरः ।
कन्दर्पो नाम रूपेण कन्दर्प इव मूर्त्तिमान् ॥३९८॥
स चेत् काष्ठमयं चारु निर्मिमीते तुरङ्गमम् ।
षण्मासान् यावदाकाशे स भ्राम्यति सपौरुषम्॥३९९॥
श्रुत्वेति वचनं तस्या राजपुत्रः सकौतुकः ।
ताभ्यां सह सभां राज्ञो जगाम सपरिच्छदः ॥४००॥
वृत्तान्तः कथितस्तेन कुमारेण नृपाग्रतः ।
ततो राज्ञा समाहूतौ लोहकृत्सूत्रधारकौ ॥४०१॥
लोहं लोहकृते भूमानर्पयामास सस्मयम् ।
निर्माति स्म ततः सद्यः स मीनं लोहसूत्रितम्॥४०२॥
ततोऽपवरकं पृष्ठे तस्य मीनस्य स व्यधात् ।
शुभेऽह्नि लोहकृत् तत्र प्राविशद् भूभुजा समम्॥४०३॥
पृष्ठेऽथ कीलिका तस्य निहिता वायुधारिणी ।
उत्पपात नभोमार्गे मत्स्यः शकुनिराडिव ॥४०४॥
मीनस्थो जगतीपालो ग्रामाकुलपुराकुलाम् ।
विपुलां विपुलां वीक्षांचक्रे विद्याधरोपमः ॥४०५॥
वार्द्धिमध्यं गते मीने छन्नेऽपवरके सति ।
गर्भस्थाविव रेजाते लोहकृत्पृथिवीश्वरौ ॥४०६॥

मुक्ताः स गलरन्ध्रेण गिलित्वाऽऽमिषवद् भृशम् ।
निरवर्तत पाथोधेः कार्मुकाद् मुक्तकाण्डवत् ॥४०७॥
आयाते स्वपुरं तस्मिन्नाऽऽकृष्टा कीलिका क्षणात् ।
निपेतुर्मौक्तिकश्रेण्यस्तन्मध्यात् सेवधेरिव ॥४०८॥
ततः कौतुकितो राजा बभाषे लोहकारिणम्? ।
गतप्रत्यागतं चक्रे कथमेष सुलक्षणम् ? ॥४०९॥
सोपाख्यद् देव ! सिद्धाख्या राद्धा देवी मया ततः ।
अर्पिते कीलिके तया द्युयानार्थमिमे शुभे ॥४१०॥
कीलिकायोगतो राजन्! याम्यहं गगनाङ्गणे ।
अचिन्त्या देवताशक्तिः साधयति न किं नृणाम्?॥४११॥
सूत्रधारोऽथ भूपालादेशाद् दारुमयं हयम् ।
उच्चैरुच्चैःश्रवस्तुल्यं कृत्वाऽदर्शयदञ्जसा ॥४१२॥
देवाऽस्मिन् तुरगे यूयं कुमारो वा कुलध्वजः ।
आरोहत्वपरो नैव सोऽवादीदिति कोमलम् ॥४१३॥
अथोचे भूपजो देव ! युष्मदादेशतोऽधुना ।
कृत्रिमाश्वं समारुह्य वीक्ष्ये विश्वम्भरातलम् ॥४१४॥
आमेत्युक्ते नरेन्द्रेण सूत्रकृत् कीलिकाद्वयीम् ।
गमनाऽऽगमनायाऽऽशु कुमारस्य समर्पयत् ॥४१५॥
तस्य पृष्ठेऽथ विन्यस्य कीलिकां नृपनन्दनः ।
अलञ्चकार दार्वश्वं नमस्कृत्य नरेश्वरम् ॥४१६॥
पश्यतां सर्वलोकानां स्मयविस्मेरचक्षुषाम् ।
उत्पपात नभोमार्गं वाजी दारुविनिर्मितः ॥४१७॥
स्वर्गे किमगमत् किं वा सिद्धाऽदृश्याञ्जनोऽभवत्? ।
अदृश्यः सोऽपि दार्वश्वो लोकैरेवं वितर्कितः ॥४१८॥
पुर्याः कस्याश्चिदुद्याने भ्रान्त्वा वाजी समास्थितः ।
कृष्टायां कीलिकायां च राजपुत्रेण तत्क्षणम् ॥४१९॥
कुलध्वजकुमारोऽथ पृथक् पृथक् विधाय सः ।

काष्ठव्रातं तुरङ्गस्य भाररूपं चकार सः ॥४२०॥
विधायोच्छीर्षके काष्ठचक्रवालं कुलध्वजः ।
सुष्वाप श्रमखिन्नाङ्गः सहकारतरोरधः ॥४२१॥
इतश्च नभसो मध्यं भेजे दिवसनायकः ।
कीलितेव स्थिरा वृक्षच्छाया तस्याऽभवत्तराम् ॥४२२॥
इतश्चारामिकस्तस्मिन्नागात् पुष्पजिघृक्षया ।
स्थिरच्छायस्तरुर्दृष्टो मध्याह्नेऽपि मनोहरः ॥४२३॥
अल्पसुप्तनरस्याऽयं प्रभावश्चिन्तयन्निति ।
अस्प्राक्षीत् तत्पदाङ्गुष्ठं जजागाराऽथ भूपजः ॥४२४॥
यूय भवथ सत्पुण्या मन्दिरेऽतिथयोऽद्य मे ।
एवं विज्ञपयामास मालिको भक्तिमालिकः ॥४२५॥
आमेत्युक्तं कुमारेण प्रार्थनाभङ्गभीरुणा ।
गेहे सो भोजितो नीत्वा तेन हर्षपुरस्सरम् ॥४२६॥
कोणे गृहस्य विन्यस्य तौरङ्गं काष्ठसञ्चयम् ।
अथाऽचालीत् पुरो मध्यं वीक्षितुं दिवसाऽत्यये॥४२७॥
स्वर्णपञ्चालिकाकीर्णं रूप्यतोरणभासुरम् ।
सङ्केतमन्दिरं श्रीणां नेत्रपान्थप्रपोपमम् ॥४२८॥
प्रमोदनृपतेः पर्षद् मोक्षाध्वप्रान्तरद्रुमम् ।
निधानमिव धर्म्मस्य दृष्टवान् जिनमन्दिरम् ॥४२९॥
( युग्मम् )

श्रीमन्तं सुव्रतं देवं दृष्ट्वा तत्र कुलध्वजः ।
प्रणनाम नमन्मौलिकिणावलिपचेलिमः ॥४३०॥
इतश्च वेत्रभृत् कश्चित् समागत्य भृशं जनान् ।
कोणस्थानपि प्रत्येकं वेगतो निरवासयत् ॥४३१॥
किमेतदिति संभ्रान्तः कुमारस्तस्य कोणके ।
लीयते स्म यथा जीवः परमात्मनि योगिनः ॥४३२॥
अद्वितीयवपुः काचिदेत्य कन्या जिनार्चनात् ।

लास्यं प्रचक्रमे कर्तुं सखीभिः परिवारिता ॥४३३॥
नमस्कृत्याऽथ देवेन्द्रं स्त्रीराज्यमिव तन्वती ।
सखीभिः सह संप्राप कन्याऽन्तःपुरमुत्तमम् ॥४३४॥
कोणान्निर्गत्य रात्रौ स तद्रूपेण विमोहितः ।
पप्रच्छ पुरुषं कञ्चित् केयं बाला सुलोचना? ॥४३५॥
आख्यत् स श्रूयतां देव! श्रोत्रापेयः कथारसः ।
अस्य श्रवणमात्रेण संपद्यन्ते मुदोऽङ्गिनाम् ॥४३६॥
इदं रत्नपुरं नाम्ना वरप्राकारमण्डितम् ।
अस्ति श्रीसुव्रतस्वामिश्रावको विजयी नृपः ॥४३७॥
विस्तीर्णचारुसौवर्णतुङ्गतोरणसुन्दरम् ।
तेनेदं भूभुजाऽकारि चैत्यं कुलगृहं श्रियः ॥४३८॥
तस्येयं कन्यका देव! जयमालासमुद्भवा ।
सर्वलक्षणसम्पूर्णा नाम्ना भुवनमञ्जरी ॥४३९॥
विलोक्य यौवनोद्याने कुमारीं करिणीमिव ।
विजयी तद्विवाहार्थमैक्षिष्ट नृपकुञ्जरम् ॥४४०॥
कुमारान्वेषणं श्रुत्वा कुमारी निजचेतसि ।
अथेत्थं चिन्तयामास विवाहो मे समागतः ॥४४१॥
महीचरोऽपि यः कश्चित् स्वशक्त्या खचरो भवेत् ।
स भविष्यति मे भर्त्ताऽन्यथा वह्निर्वरो मम ॥४४२॥
गूढाभिप्रायमात्मीयं प्रियसख्यै न्यवेदयत् ।
सा सम्यक् कथयामास विजने पृथिवीशितुः ॥४४३॥
विज्ञाय निश्चयं तस्याः खपुष्पमिव दुर्लभम् ।
तूष्णींशालो महीपालोऽभवद् चिन्ताभिरुच्चकैः ॥४४४॥
इति व्याहृत्य स पुमान् ययौ राजनिकेतनम् ।
कुलध्वजोऽपि संप्राप प्रातिहारिकमन्दिरम् ॥४४५॥
तस्याऽथ कोणके कृत्वा सज्जं दारुमयं हयम् ।
कीलिकायाः प्रयोगेणाऽऽगच्छत् तद्वासमन्दिरम् ॥४४६॥

तत्तल्पस्य चतुर्भागे ताम्बूलं त्वर्धचर्वितम् ।
क्षिप्त्वा तेनैव मार्गेण पुनः स्वगृहमागमत् ॥४४७॥
प्रबुद्धा वीक्ष्य ताम्बूलं तत्र सर्वत्र विस्तृतम् ।
सा दध्याविति कोऽत्राऽऽगात् खेचरस्त्रिदशोऽथवा? ॥४४८॥
अनया चिन्तया सा तद् दिनं वर्षमिवाऽऽनयत् ।
अलीकनिद्रया रात्रौ सुष्वाप नृपकन्यका ॥४४९॥
द्वितीयेऽह्नि निशीथेऽथ दार्वश्वमधिरुह्य च ।
तेनैव विधिना तत्र समायातः कुलध्वजः ॥४५०॥
क्षिप्त्वा सर्वत्र ताम्बूलमचालीद् यावदुच्चकैः ।
तावद् चेलाञ्चले बाढं हस्ताभ्यां विधृतस्तया ॥४५१॥
कुतस्त्योऽसि धियां धाम! चलितोऽसि क्व सम्प्रति? ।
कुमार्येति कुमारोऽसौ पृष्ट एवमवोचत ॥४५२॥
भूमीचरोऽपि जज्ञेऽहं खेचरः काष्ठवाजिना ।
इत्युक्ते तेन साऽवादीत् पूर्णो मम मनोरथः ॥४५३॥
प्रदीपं साक्षिणं कृत्वा पुरोहितमिवाऽसकौ ।
उपायंस्त विवाहेन गान्धर्वेण कुमारिकाम् ॥४५४॥
ततो भवनमञ्जर्या बुभुजे विषयानसौ ।
अदृश्यो वायुवत् कन्यान्तःपुररक्षकैर्नरः ॥४५५॥
दधुर्लावण्यपुण्यानि तदङ्गानि श्रियं पराम् ।
मुक्ताफलमनोज्ञानि तटानीव पयोनिधेः ॥४५६॥
अङ्गानां वृद्धिमालोक्य मेने दक्षः सखीजनः ।
अकालफलसंवित्तिभूरुहामिव भीतिदाम् ॥४५७॥
तद् देव्या जयमालायाः स्थिताया विजने सखी ।
कथयामास निःशेषं नीचीकृतमुखाम्बुजा ॥ ४५८ ॥
दुःखाधीतगलद्वाक्यविद्यामिव नभश्चरीम् ।
अपश्यत् पृथिवीनाथो जयमालां रहःस्थिताम् ॥ ४५९ ॥
अनात्मज्ञेन केनेह तवाज्ञाखण्डनं कृतम् ? ।

अकाण्डे निजकान्ताया देवि! वैधव्यमिच्छता ॥ ४६० ॥
त्वत्प्रसादान्न केनापि मदाज्ञाखण्डनं कृतम् ।
परं तु खण्डनं जातं कुमार्या वचनान्निगम् ॥ ४६१ ॥
प्राणनाथ! समागत्य रजन्यां कन्यकां तव ।
अदत्तामप्यलं भुङ्क्ते वीरः कोऽपि भयोज्झितः ॥४६२॥
येनेदं मद्गृहे देवि! चेष्टितं दुष्टचेतसा ।
तमाशु दक्षिणेशस्य[1] करिष्ये प्राभृतोपमम् ॥ ४६३ ॥
कोपाटोपोत्कटस्वेदबिन्दुभृकुटीभीषणः ।
उपविष्टः सभां राजा तदन्वेषणलालसः ॥ ४६४ ॥
विवेद पार्थिवाकूतं वारस्त्री भववागुरा ।
वेश्यानां हि स्वभावोऽयं परचित्तोपलक्षणम् ॥ ४६५ ॥
तया निर्बन्धतः पृष्टो भूपतिश्चिन्तयाऽऽकुलः ।
पुत्र्या वृत्तान्तमाचख्यावषडक्षीण[2]मञ्जसा ॥ ४६६ ॥
तमन्यायकृतं बध्वा त्वत्पादान्तमुपानये ।
अगादिति प्रतिज्ञाय स्वगृहं भववागुरा ॥ ४६७ ॥
संध्यायां गणिका बुद्ध्या नानोपायविशारदा ।
सतैलनवसिन्दूरैः कन्यागारमलेपयत् ॥ ४६८ ॥
तुरङ्गमाऽधिरूढोऽसौ त्रियामायां कुलध्वजः ।
अगाद् वातायनं तस्याः सान्द्रसिन्दूरपङ्किलम् ॥४६७॥
तया साकं चतुर्यामीमतिवाह्य घटीमिव ।
गतवान् मालिकागारमुदियायाऽथ भास्करः ॥ ४७० ॥
आययौ गणिका प्रातः कन्याया भवनाङ्गणम् ।
पादयोः प्रतिबिम्बानि पद्मानीव व्यलोकयत् ॥ ४७१ ॥
प्रतिबिम्बानुमानेन तयाऽज्ञायि महीधरः ।
काव्येनेव कवेर्भाव आचारेण कुलं यथा ॥ ४७२ ॥

---

१ यमस्येत्यर्थः ।

२ अविद्यमानानि षडक्षीणि यस्मिन्, तं गुप्तमिति यावत् ।

तलाध्यक्षनरैः सार्द्धं भ्रमन्ती भववागुरा ।
द्यूतस्थानस्थितं भूपनन्दनं वीक्षते स्म सा ॥ ४७३ ॥
सिन्दूरारुणपादाभ्यां तयाऽसावुपलक्षितः ।
तदादेशात्तलाध्यक्षपुरुषैः स धृतो हठात् ॥ ४७४ ॥
तत्प्राप्तिश्रवणेनाऽऽशु मरुतेव मुहुर्मुहुः ।
दिदीपे भूपतेः कोपो हव्यवाडिव तत्क्षणम् ॥ ४७५ ॥
षण्ढवद् दर्शनं माऽस्य भूयात् तत्कर्मकारिणः ।
इत्युक्त्वा दीयतां वायोरित्यादेशं नृपो ददौ ॥ ४७६ ॥
अथादेशं समासाद्य वध्यभूम्युपरि द्रुतम् ।
तलाधिपनरैः क्रूरैर्गृहीतो नृपनन्दनः ॥ ४७७ ॥
जनास्तद्रूपमालोक्य विवदन्ते परस्परम् ।
यत्कृतोऽयं वरः पुत्र्या व्यलीकं तदिदं नु किम् ? ॥४७८॥
पीयूषगुणसारस्य वियोगेऽस्य कलाभृतः ।
क्षयं राकानिशेवाऽऽशु राजपुत्री प्रपत्स्यते ॥ ४७९ ॥
पुत्र्याश्चेदीदृशं चक्रे भूभुजा किं प्रकाशितम् ? ।
गृहे दुश्चरितं यस्माद् दक्षा रक्षन्ति सर्वथा ॥ ४८० ॥
इत्यादिलोकसंलापान् शृण्वानो नृपनन्दनः ।
मालिकागारसामीप्यमगाद् राजभटावृतः ॥ ४८१ ॥
ममान्वये समायातां मालिकागारवासिनीम् ।
कुलदेवीं नमश्चक्रे युष्मत्पादप्रसादतः ॥ ४८२ ॥
आमेत्युक्ते भटौघेन प्रविश्य मालिकालयम् ।
शरीरं रसवेदीव पुनः सज्जं हयं व्यधात् ॥ ४८३ ॥
पश्यतां राजलोकानां कामं विस्मेरचक्षुषाम् ।
उत्पपात पतत्रीव हयः काष्ठविनिर्मितः ॥ ४८४ ॥
गत्वा वातायनं वेगात् कुमार्याः कृत्रिमो हयः ।
उत्ततार चिरं भ्रान्तिश्रान्ताङ्ग इव तत्क्षणम् ॥४८५॥
तत्राऽधिरोह्यतां पत्नीं नवोढामिव हर्षितः ।

वारां निधेर्महादुर्गमन्तरीपमवाप सः ॥ ४८६ ॥
यस्यान्ते रेजिरे नीलास्तमालवनराशयः ।
अवतीर्णा इवाम्भांसि पातुमम्भोदराजयः ॥ ४८७ ॥
विभान्ति यत्र शीतांशुशुभ्रा डिण्डीरराशयः ।
हास्योद्गारा इवाम्भोधेः स्रवन्तीनां समागमे ॥ ४८८ ॥
अथोत्तीर्य महीपालपुत्रः सुष्वाप निर्भयः ।
मृदुपल्लवपल्यङ्के मनसीव मनोभवः ॥ ४८९ ॥
क्षुधाक्षामं प्रियं वीक्ष्य मोदकाऽऽनयनाशया ।
अध्यासामास दार्वश्वं मूर्त्तेवाऽऽकाशदेवता ॥ ४९० ॥
गत्वा वातायने मुक्तो तयाऽसौ नृपकन्यया ।
प्राविशत् सा निजागारं सम्पूर्णं मोदकादिभिः ॥ ४९१ ॥
इतश्च वात्यया कामं पातितस्तुरगः क्षितौ ।
अभाङ्क्षीत् तटिनीनाथमध्यस्खलितपोतवत् ॥ ४९२ ॥
यावदागाद् महीपालकन्यका मोदकान्विता ।
तावदैक्षत दार्वश्वस्तया भग्नो भुवस्तले ॥ ४९३ ॥
प्रतिकूलमहो ! दैवं सर्वतो विपदावहम् ।
हहा ! पुरातनाऽऽचीर्णं कर्म्मोदग्रं ममाधुना ॥ ४९४ ॥
अनुकूलो विधिः पाति पितेव व्यसनेऽप्यलम् ।
प्रतिकूलः पुनर्न्यायमार्गनिष्ठं जुगुप्सते ॥ ४९५ ॥
वारिधौ गमनं पत्युर्भङ्गो मे दारुवाजिनः ।
सर्वं कष्टावहं जातं मम भाग्यविपर्ययात् ॥ ४९६ ॥
दृष्टे प्रिये ममावश्यं भोक्तव्यं नान्यथा खलु ।
एवं नियममाधत्त प्रेमस्वादपदोहदम् ॥ ४९७ ॥
इतश्च भूपतेः सूनुर्निद्रया मुमुचे तदा ।
न चाऽद्राक्षीत् प्रियां प्रेमस्वर्णस्वर्णाद्रिचूलिकाम् ॥ ४९८ ॥
किं श्रीभ्रान्त्या समाहूता पयसां निधिना प्रिया ।
उत श्रीपतिना जह्रे चिन्तयामासिवानिति ? ॥ ४९९ ॥

इतश्च व्योमयानेन काचिद् विद्याधरप्रिया ।
अगादप्सरसां वृन्दं जयन्ती रूपवैभवात् ॥ ५०० ॥
काऽसि भामिनि ! कुत्रत्या कस्मादत्र समागता ? ।
तत्सर्वं श्रवणद्वन्द्वप्रमोदाय निवेद्यताम् ॥ ५०१ ॥
महाभाग ! शृणु श्रोत्रसुधारसनिषेचनम् ।
कथारसं महाप्रीतिमेघपौरस्त्यमारुतम् ॥ ५०२ ॥
वैताढ्येऽभूद् मणिनाम्ना विद्याधरशिरोमणिः ।
तस्याऽहं पट्टदेव्यस्मि नाम्ना कनकलोचना ॥ ५०३ ॥
सोऽद्य मे वल्लभो हन्त ! वैरिणा विधृतो हठात् ।
त्वद्रूपान्तरमापन्नः स त्वं दृष्टोऽसि धीनिधे ! ॥ ५०४ ॥
कामबाणेन देहस्य भिद्यमानस्य मेऽधुना ।
तव सङ्गमसन्नाहं विना न शरणं परम् ॥ ५०५ ॥
ऊचे कुलध्वजो मातः ! परस्त्रीनियमो मम ।
भङ्गं नैतस्य कुर्वेऽहं सुसिक्तस्येव शाखिनः ॥ ५०६ ॥
श्रुत्वेति वचनं तस्य विद्याभृत्प्राणवल्लभा ।
तं प्रति प्राहिणोत् पुष्पमभिमन्त्र्याऽथ विद्यया ॥ ५०७ ॥
तत्प्रभावान्मुमूर्छोच्चैर्विषादिव नृपाङ्गजः ।
अज्ञायत निर्मनस्कोऽसंज्ञिपञ्चेन्द्रियोपमः ॥ ५०८ ॥
काष्ठवत्तं समुद्धृत्य चिक्षिपे[1] वारिधौ तया ।
निर्दयत्वमहो ! स्त्रीणां धिग् धिग् प्रेमातिचञ्चलम् ॥५०९॥
जलदेव्या पतन् दृष्टस्तेजःपुञ्ज इवाम्बरात् ।
गृहीतः पाणिपद्माभ्यां स्वामिदत्तप्रसादवत् ॥ ५१० ॥
तत्प्रभावाद् ननाशाऽस्त्रपुष्पविद्या नृपात्मजात् ।
स्वस्थीभूतः क्षणादेष समुन्मीलितलोचनः ॥ ५११ ॥
तया पृष्टः कुमारोऽसौ तद्वृत्तान्तमचीकथत् ।
परकीयाङ्गनाभोगनियमेन पुरस्सरम् ॥ ५१२ ॥

---

१ स इति कर्माऽध्याहार ।

वरं वृणु महाभाग ! तुष्टाऽहं नियमश्रुतेः ।
अमोघं दर्शनं दैवं द्युविद्युदिव वृष्टिकृत् ॥ ५१३ ॥
सोऽप्याऽऽख्यत् प्रियया सार्कं यथा भोगो भवेद् मम ।
तथा कुरु पयोदेवि ! परोपकृतिलालसे ! ॥ ५१४ ॥
समुत्पाट्य करेणाऽथ तत्पत्नीभवनाङ्गणे ।
देव्याऽसौ मुमुचे वेगाद् लाजाञ्जलिरिवाऽपरः ॥ ५१५ ॥
भग्नो दृष्टः कुमारेण वाजी दारुविनिर्मितः ।
प्रिया च रुदती शोकशङ्कुमूढविचेतना ॥ ५१६ ॥
देव्यूचे वत्स ! तेऽभीष्टं साम्प्रतं करवाणि किम् ? ।
सोऽप्याऽऽख्यद् वाजिनं सज्जं कुरु पूज्ये ! यशस्विनि ! ५१७
तत्क्षणं प्रगुणीचक्रे देवशक्त्या तया हयः ।
अचिन्त्यं किल देवीनां शक्तिविस्फूर्तिवैभवम् ॥ ५१८ ॥
देव्यगाद् मन्दिरं स्वीयं कुमारोऽपि तुरङ्गमम् ।
अध्यासामास वेगेन प्रियया सह तत्क्षणम् ॥ ५१९ ॥
इतश्च शङ्खभूपेन सूत्रभृद् विधृतो हठात् ।
पूर्णेषु षट्सु मासेषु नागते नन्दने सति ॥ ५२० ॥
नृपः प्रगुणयाश्चक्रे सूत्रधारकृते चिताम् ।
भूभुजो यमवद् रुष्टास्तुष्टा धनदवद् यतः ॥ ५२१ ॥
रसद्भिरसवादित्रमानीतः सचिवान्तिकम् ।
दृश्यमानो जनैः पौरैः पूर्णबाष्पविलोचनः ॥ ५२२ ॥
यावत् क्षिपन्ति तत्राऽग्नौ हव्यवत् सूत्रभृद्वरम् ।
तावद् दृष्टो महीपालनन्दनो व्योम्नि सप्रियः ॥ ५२३ ॥
समुत्तीर्णस्ततो व्योम्नस्तुरगाद् नृपनन्दनः ।
पौरैरानन्दितो राजा पुत्रागमनशंसिभिः ॥ ५२४ ॥
प्रवेशितो महीपेन सूनुः सूत्रभृता सह ।
रसत्सुस्वरवादित्रं महोत्सवपुरस्सरम् ॥ ५२५ ॥
देशानथ ददौ राजा लोहसूत्रकृतोर्द्वयोः ।

प्रसादिता महीपाला न भवन्ति निरर्थकाः ॥ ५२६ ॥
कालक्रमेण पञ्चत्वमापन्ने शङ्खभूभृति ।
पितुः पदमलञ्चक्रे नीतिविज्ञः कुलध्वजः ॥ ५२७ ॥
पट्टदेवीपदे चक्रे राजा भवनमञ्जरीम् ।
अभुङ्क्त विषयान् वाञ्छाऽनुरूपांश्च तया सह ॥ ५२८ ॥
अन्यदा तत्पुराऽऽयातकेवलज्ञानिसन्निधौ ।
श्रुत्वा दुष्पारसंसारतारिणीं धर्मदेशनाम् ॥ ५२९ ॥
प्रबुद्धः कान्तया सार्कं राज्ये न्यस्य तनूद्भवम् ।
कुलध्वजमहीपालः प्रव्रज्यां विधिनाऽऽददे ॥ ५३० ॥
( युग्मम् )
ततःप्रभृति संसारं कारागारमिवात्मनः ।
भावयन् भावनां सम्यक् भावयामास संयमी ॥५३१॥
यतः—
लोला लक्ष्मीः सुखं स्वल्पं परिणामि शरीरकम् ।
निरुद्यमः किमत्राहमद्य श्वो वा प्रयाणकम् ? ॥ ५३२ ॥
पुनर्जन्म पुनर्मृत्युः पुनः क्लेशपरम्परा ।
अरघट्टघटीन्यायो न कदाचिदनीदृशः ॥ ५३३ ॥
मनस्तुरगवद् भ्राम्यत् विश्रृङ्खलमहर्निशम् ।
स वशं स्थापयामास विशिष्टज्ञानवल्गया ॥ ५३४ ॥
आनिनाय मुनिः शान्तिं ज्वरं मनसिजोद्भवम् ।
सिद्धान्तार्थस्य चूर्णेन न कुर्वन् गुरुलङ्घनम् ॥ ५३५ ॥
कुवासनाघनश्लेष्मा पातितस्तेन लीलया ।
निरन्तरं शुभध्याननस्य[1]ग्रहणयोगतः ॥ ५३६ ॥
मायावातं तमःपित्तं मोहश्लेष्माणमुच्चकैः ।
ज्ञानदर्शनचारित्रौषधैरजयन्मुनिः ॥ ५३७ ॥
जगाम मोहनीयाख्या भ्रमिस्तस्य महात्मनः ।

१ नासिकाया हित नस्यम्, शुभध्यानमेव नस्यमिति समन्विति ।

शर्कराकल्पया नित्यं भास्वद्भावनयाऽनया ॥ ५३८ ॥
वशीचकार नित्यं स दुर्द्धराणीन्द्रियाण्यपि ।
अनल्पेतरसङ्कल्पविकल्पपरिहारतः ॥५३९॥
कषायाः शमितास्तेन दुर्जया अपि वैरिवत् ।
क्षमाप्रभृतिनिःशेषप्रतिपक्षपरिग्रहात् ॥५४०॥
एवं विशुद्धभावस्य कुलध्वजमहामुनेः ।
उत्पेदे केवलज्ञानं क्रमाद् निर्वाणमाप च ॥५४१॥
इत्युक्त्वाऽऽह जगन्नाथो यशश्चन्द्रमहीपते ! ।
पाल्यः कुलध्वजेनेव नियमोऽन्यवधूजने ॥५४२॥
यतः—
दुर्ग्राह्या हि मनोवृत्तिः स्त्रीणामुत्कलिकोत्तरा ।
किं केनाऽपि मिता क्वापि समुद्रजलपद्धतिः ? ॥ ५४३ ॥
मधुरा कोमलाङ्गी वा परस्त्री दुःखदायिनी ।
किं हिताय भवेत् स्पृष्टा कालकूटस्य कन्दली ? ॥ ५४४ ॥
श्रुत्वेति स्वामिनः प्रोक्तं यशश्चन्द्रः क्षमापतिः ।
पञ्चभी राजपुत्राणां सहस्रैर्व्रतमग्रहीत् ॥ ५४५ ॥
एवं श्रीमल्लिनाथस्य पृथ्वीं विहरतः सतः ।
गणभृतोऽष्टाविंशतिरभूवन् भिषगादयः ॥ ५४६ ॥
चत्वारिंशत्सहस्राणि क्षमिणां तत्त्वधारिणाम् ।
साध्वीनां पञ्चपञ्चाशत्सहस्राणि तपोजुषाम् ॥ ५४७ ॥
अधिकानि तु षट्षष्टेः षट्शतानि महात्मनाम् ।
विज्ञातसर्वतत्त्वानां द्विघ्नसप्तकपूर्विणाम्[1] ॥ ५४८ ॥
द्वाविंशतिशतान्यऽस्याऽत्रधिज्ञानविराजिनाम् ।
केवलज्ञानिनां सङ्ख्या पूर्वोदिता यथास्थिता ॥ ५४९ ॥
एकोनत्रिंशच्छतानि वैक्रियलब्धिकारिणाम् ।
सप्तदशशतान्यस्य सार्द्धानि शमभृन्ति च ॥ ५५० ॥

---

१ द्विगुणितसप्तकपूर्विणामित्याशय ।

मनःपर्यायविज्ञानां धीज्ञातजगतामपि ।
चतुर्दशशतान्यासन् वादिनां कीर्त्तिशालिनाम् ॥ ५५१ ॥
श्रावकाणां लक्षमेकं सत्र्यऽशीतिसहस्रयुक् ।
युता सहस्रसप्तत्या श्राविकाणां त्रिलक्ष्यभूत् ॥ ५५२ ॥
ज्ञात्वा निर्वाणकल्याणमासन्नं त्रिजगत्पतिः ।
संक्रमं सिद्धिसौधस्य समेतगिरिमभ्यगात् ॥ ५५३ ॥
संवत्सरशताद् न्यूनं पञ्चपञ्चाशतं प्रभोः ।
समाः सहस्रान् विहर्तुः परिवारो ह्यसावभूत् ॥ ५५४ ॥
तत्रारुह्य पञ्चशतमहामुनिपरिच्छदः ।
मासमेकं च स न्यासं कृतवान् परमेश्वरः ॥ ५५५ ॥
फाल्गुनश्वेतद्वादश्यामश्वयुजि निशाकरे ।
त्रैलोक्यवन्द्यपादाब्जो भव्यलोकप्रबोधकृत् ॥ ५५६ ॥
वाग्योगं बादरं सम्यक् मनोयोगं च बादरम् ।
रुरोध द्वितयं स्वामी सारथिर्धुर्ययुग्मवत् ॥ ५५७ ॥
बादरं काययोगं च सूक्ष्मकायनिरोधनात् ।
अरौत्सीद् योगिवन्नाथः श्वासप्रश्वासवारणात् ॥ ५५८ ॥
अथ सूक्ष्माङ्गयोगस्थः सूक्ष्मवाक्चित्तरोधयोः ।
रोधं स्वामी वितन्वानः सूक्ष्मध्यानरतोऽभवत् ॥ ५५९ ॥
अथोच्छिन्नक्रियं नाम तुर्यं ध्यानमशिश्रियत् ।
पञ्चह्रस्वाक्षरोच्चारप्रमाणं परमेश्वरः ॥ ५६० ॥
क्षीणार्थो विगतकर्मा सिद्धानन्तचतुष्टयः ।
सर्वक्लेशविनिर्मुक्तः केवलज्ञानदर्शनः ॥ ५६१ ॥
ऊर्ध्वगामी जगन्नाथो लेपाभावादलाबुवत् ।
स्वभावादृजुमार्गेण लोकाग्रमुपजग्मिवान् ॥ ५६२ ॥
( युग्मम् )
विनष्टशर्म्मणां शर्म्म नारकाणामपि क्षणम् ।
प्रभोर्निर्वाणकालेऽस्मिन् न पूर्वं समजायत ॥ ५६३ ॥

मुनयोऽपि महासत्त्वा विहितानशनक्रियाः ।
सर्वकर्म्मविनिर्मुक्ता लेभिरे पदमव्ययम् ॥ ५६४ ॥
क्षीराम्भोधिजलैर्गात्रमिन्द्रोऽस्नपयदर्हतः ।
अङ्गरागेण दिव्येन विलिलेप सुगन्धिना ॥५६५॥
परिधाय सिते वस्त्रे शिबिकायां विमानवत् ।
स्वयं न्यधाद् प्रभोर्देहं वासवः साश्रुलोचनः ॥५६६॥
मूर्ध्नि मालामिवाऽधासीद् धुरि शक्रस्ततोऽथ ताम् ।
धूपमुद्ग्राहयामासुः पुरस्तस्या दिवौकसः ॥५६७॥
श्रावकश्राविकौघेषु शोकः कोकेष्विवाऽधिकम् ।
श्रीमल्लिभास्करे प्राप्ते नयनानामगोचरे ॥५६८॥
भणन्त्यो रासकान् देव्यः प्रस्खलन्ति पदे पदे ।
स्मरन्त्यः स्वामिनः सौम्यान् गुणग्रामाननेकधा ॥५६९॥
स्वामिनोऽङ्गं चितामध्ये विदधेऽथ पुरन्दरः ।
अग्नीनग्निकुमाराश्च विचक्रुस्तत्र वेगतः ॥५७०॥
वायुं वायुकुमाराश्च तद्दीपनकृते व्यधुः ।
गोशीर्षचन्दनैधोभिर्ज्वालयामासुराशु ताम् ॥५७१॥
गन्धधूपान् बहून् प्राज्यघृतकुम्भांश्च नाकिनः ।
ज्वलन्त्यामथ चित्यायां चिक्षिपुर्बहुमानतः ॥५७२॥
मांसादिकेषु दग्धेषु जलैः क्षीरार्णवाहृतैः ।
स्तनितत्रिदशा विध्यापयामासुश्चितां ततः ॥५७३॥
अन्येषामपि साधूनां शरीराणि सुरेश्वराः ।
प्रतीचीनचितामध्ये निदधुः प्रथमेन्द्रवत् ॥५७४॥
दक्षिणाऽदक्षिणे ऊर्ध्वदंष्ट्रे त्रिजगतां पतेः ।
अगृह्णीतांतरां भक्त्या सौधर्मेशानवासवौ ॥५७५॥
शक्रौ चमरबलाख्यावधोदंष्ट्रे जिनेशितुः ।
इन्द्रास्त्वन्ये सुराश्चान्ये दन्तानस्थीनि च स्वयम् ॥५७६॥
प्रभोश्चित्योद्भवं भस्म पुमांसो जगृहुस्ततः ।

पवित्रं वन्द्यमर्च्यं च सर्वमेवाऽर्हतां शुचि ॥५७७॥
चितास्थाने प्रभोः स्तूपमकुर्वत दिवौकसः ।
नानारत्नमयं रत्नाचलशृङ्गमहोदयम् ॥ ५७८ ॥
निर्वाणमहिमामेवं कृत्वा मल्लिजिनेशितुः ।
ययुर्नन्दीश्वरद्वीपे कर्तुमष्टाह्निकोत्सवम् ॥५७९॥
गत्वा स्वमथ स्थानं तन्माणवस्तम्भमूर्धसु ।
स्वामिदंष्ट्रां न्यधुः शक्रा भक्तिं मूर्त्तामिव प्रभोः५८०॥
कौमारव्रतपर्याय आयुर्मल्लिजिनेशितुः ।
वर्षाणां पञ्चपञ्चाशत् सहस्राण्यभवन् प्रभोः ॥५८१॥
अरनाथस्य निर्वाणाच्छ्रीमल्लिजिननिर्वृतिः ।
कोटीसहस्रे वर्षाणां समतिक्रान्तवत्यभूत् ॥५८२॥
चरित्रं श्रीमल्लेः श्रवणयुगपीयूषसरसी
रसीभूतात्मानो विनयविनता ये भवभृतः ।
विगाहन्ते सर्वं सकलकमलोद्भूतिजनकं
भवेत् तेषां सत्यं निजनिजमनश्चिन्तितमिदम् ॥५८३॥

इत्याचार्यश्रीविनयचन्द्रविरचिते श्रीमल्लिस्वामिचरिते महा-
काव्ये विनयाङ्के आस्तिकनृप चित्रकुम्भ-नरदेवपाल-गो-
पाल-यज्ञदत्त-चिलातीपुत्र-चण्डरुद्राचार्यशिष्य-कुलध्व-
जमहर्षिकथानकगर्भितो निर्वाणव्यावर्णनो
नामाष्टमः सर्गः ।



# अथ प्रशस्तिः ।



तमोपहारी सद्वृत्तो गच्छश्चन्द्रोऽभवद् भुवि ।
चित्रं न जलधी रागं यत्र चक्रे कदाचन ॥ १ ॥

तस्मिन्नभूत् शीलगणाभिधानः
सूरिः समापूरितभव्यवाञ्छः ।
यत्पञ्चशाखः किल कल्पवृक्ष-
श्छायां नवीनां तनुते जनानाम् ॥ २ ॥

यत्पार्श्वं किल देवता त्रिभुवनस्वामिन्युपेता स्वयं
पूर्वप्रीतितरङ्गितेव वचसा बद्धेव कृष्टेव च ।
सौभाग्याद्भुतवैभवो भवमहाम्भोराशिकुम्भोद्भवः
श्रीमानत्र स मानतुङ्गगणभृन्नन्द्यादविद्यापहः ॥ ३ ॥

यस्योच्चैः परिपाकपेशलतरां तृप्तिं प्रदत्तेऽङ्गिनां
व्याख्यापर्वणि भारती रसवती लावण्यपुण्या भृशम् ।
एतद् नूनमजीर्णमप्यविकलं यस्याः सुखं निस्तुषं
श्रीमानेष रविप्रभः स विजयी स्तात् सूपकारः परः ॥४॥

विविधग्रन्थनिर्माणविरञ्चिरुचिरो गुरुः ।
योऽभूद् रजोगुणो नैव नालीकस्थितिमान् क्वचित् ॥५॥

श्रीमद्रैवततुङ्गशैलशिखरे सुध्यानलीनायुषा
स्वायुःकर्मतरुप्रपातवशतो लेभे गतिस्ताविषी ।
भव्यव्रातमनःकुरङ्गशमकृत् तत्पट्टभूषाकरो
रामः श्रीनरसिंहसूरिरभवत् विद्यात्रयीपावनः ॥ ६ ॥

नित्यं यः समितौ रतः कलयते सद्गुप्तिशक्तित्रय-
सातत्यं व्रतपञ्चवल्लभलसद्बन्धवर्गवोद्धुरः ।

---

१ दैवी ।

श्रीमत्पूज्यरविप्रभप्रविकसत्पट्टक्षमालङ्कृतिः
साक्षादेष नरेन्द्र एव जयति श्रीमन्नरेन्द्रप्रभः ॥ ७ ॥
दुर्वारप्रतिवादिविन्ध्यशमकृच्चान्द्रे कुले विश्रुतो
देवानन्द इति प्रसिद्धमहिमोद्दामा मुनिग्रामणीः ।
अष्टव्याकरणाम्बुधीन् निरवधीन् शब्दोर्मिमालाऽऽकुलान्
यः स्वव्याकरणप्रशस्तिचुलुकैश्चित्रं चकारोच्चकैः ॥ ८ ॥
तच्छिष्योऽजनि जागरूकमहिमा रत्नप्रभाख्यप्रभुः
पट्टे श्रीकनकप्रभः प्रतिमया वाचस्पतिर्मूर्तिमान् ।
तत्पादाम्बुजचञ्चरीकचरितः प्रद्युम्नसूरिर्नव-
प्रीतिः श्रीविनयेन्दुना तदखिलं चाशोधयद् बोधये ॥९॥
पूज्यश्रीरत्न (¹?) सिंहसूरिसुगुरोः श्रीमन्नरेन्द्रप्रभो-
रादेशाद् विनयाङ्कपार्श्वचरितस्रष्टाशया (?) ।
गच्छोत्तंसरविप्रभाभिधगुरोः शिष्योऽल्पमेधा अपि
सूरिः श्रीविनयेन्दुरेष विदधे मल्लेश्वरित्रं नवम् ॥१०॥
क्षेत्रे भारतनामके जिनपतेर्यावत् परं शासनं
(?) शस्यमिदं नृपव्रजपरीपोपक्षमं वर्धते ।
एतद् नीरदवृन्दसुन्दरतनोः श्रीमल्लितीर्थेशितुः
प्रोद्दामं रसपूरचारुचरितं तावच्चिरं नन्दतात् ॥ ११ ॥

॥ इति प्रशस्तिः ॥



१ (?) एतच्चिह्नाङ्कित यादृशमादर्शपुस्तके समुपलब्धं तादृशमेवाऽत्र न्यस्तम् , आसीच्चेय प्रशस्तिरेकस्मिन्नेव पुस्तके ।

# शुद्धिपत्रम् ।

| पृष्ठे, | पङ्क्तौ, | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ३ | ४ | मुनेरूप | मुने रूपं |
| १३ | ११ | -जनाद् | -जनाज् |
| १५ | १३ | पय पूणाञ्जलि | पय पूर्णाञ्जलि |
| १५ | १४ | तत् क्षण | तत्क्षण |
| २० | ५ | क्रोधात् मूर्ता | क्रोधाद् मूर्ता |
| २० | १८ | पुरस्थित | पुर स्थित |
| २२ | ८ | ससाध्य | स साध्य |
| २४ | ५ | -द्वयात् ज्ञा- | -द्वयाद् ज्ञा- |
| २७ | २ | कार्षर्ने- | कार्ष्णिर्न- |
| ३० | ३ | ऽदात् नृप- | ऽदाद् नृप- |
| ३१ | १० | पृथवी- | पृथिवी- |
| ३२ | २१ | वित्त | वित्त |
| ४२ | १७ | ऽऽसीनैर- | ऽऽसीनै र- |
| ४२ | २४ | पुनार- | पुना र- |
| ४४ | १४ | -ञ्चन् ती- | -ञ्चस्ती- |
| ४७ | १८ | पिदधन् | पिदधद् |
| ४८ | १३ | काश्चिद् | काश्चित् |
| ५७ | १८ | -भागास्मि | -भागास्ति |
| ५९ | १४ | सौमा- | सौरा- |
| ५९ | २६ | न्यस्यत् गु- | न्यस्यन् गु- |
| ६२ | २३ | सुशीलापा- | सुशीला पा- |
| ६२ | २५ | कालम्भो- | कालाम्भो- |
| ६६ | २५ | दु खता | दु खिता |
| ६९ | १४ | कोपान्धा | कोपान्धा |
| ७२ | ७ | -लङ्कारा रु- | -लङ्काराऽरु- |
| ७२ | ११ | -श्रावकव्रती | -श्रावकव्रता |
| ८७ | १७ | सम्यग् स- | सम्यक् स- |
| ९३ | २३ | जयकर्माणि | जय कर्माणि |
| ९४ | २२ | सुश्रुवे | शुश्रुवे |

| पृष्ठे, | पङ्क्तौ | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ९९ | २४ | -वर्नक्षय- | -वर्ताक्षय- |
| १०० | २६ | ननपङ्कज | -ननपङ्कजम् |
| ११३ | १२ | सन् ऊवाच | सन्नुवाच |
| ११७ | ८ | शरणामा- | शरणमा- |
| ११७ | ९ | मुळ्वासे- | मुच्छवासे- |
| ११९ | ६ | -र्वाऽसुक- | -र्वासुकि- |
| ११९ | ११ | -कम्रीणा | -कम्रृणा |
| ११० | ३ | काश्मीरै | काश्मीरै |
| १२१ | ७ | पेठुस्तव- | पेठु स्तव- |
| १२२ | १२ | -विडम्बिका | -विडम्बका |
| १२२ | २४ | मभूद् ज- | मभूज्ज- |
| १२३ | ९ | -तुंका- | -तुंका- |
| १२४ | १९ | -कात् च- | -काच्च- |
| १२७ | २५ | पञ्च रूपो- | पञ्चरूपो- |
| १२८ | ९ | चमेरन्द्रो | चमरेन्द्रो |
| १३२ | १७ | उच्चावचपदै- | उच्चावचपदै- |
| १३२ | १७ | -र्वग्लङ्घि- | र्वलगङ्घि- |
| १३४ | २ | भवेद् जिन- | भवेज्जिन- |
| १३६ | १ | वीरीतु- | वरीतु- |
| १३६ | ६ | अभूत् च- | अभूच्च |
| १३६ | ८ | चतु पर्व्या | चतुष्पर्व्या |
| १३६ | ९ | पृष्टार्थो | पृष्टार्थ |
| १४० | २१ | सौविदल्ला- | सौविदल्ल- |
| १४१ | २६ | पूर्या | पुर्या |
| १४२ | १३ | सचित्र | स चित्र |
| १५४ | ६ | -घान् ला- | -घाल्ला- |
| १५८ | ११ | रम्भोरुरू- | रम्भोरूरू- |
| १६२ | १ | दम्पतीत्वेन | दम्पतित्वेन |
| १६५ | ३ | मण्डपे | मण्डपम् |
| १६५ | ४ | मञ्चास्त- | मञ्चास्त- |
| १६७ | २३ | नन्वा | नत्वा |
| १७८ | १६ | निजधर्मवि- | निजधर्मवि- |

| पृष्ठे, | पङ्क्तौ, | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १९१ | ८ | समय | समय |
| १९१ | २५ | वदन्त | वदन्त |
| १९६ | २४ | दोषणे | दोषेण |
| २०० | ५ | नल | नल |
| २०० | १० | सर्वानाऽ- | सर्वाना- |
| २०० | १७ | देवर्द्धिर्वृ- | देवर्द्धिर्वृ- |
| २०५ | १७ | -नमुञ्चत् | -नमुचत् |
| २२७ | ९ | नृपाड्गरक्षा | नृपाङ्गरक्षा |
| २०७ | २७ | ˜˜निष्ठा | प्रतिष्ठा |
| २०८ | २५ | स्नाऽम- | स्नान्नाऽम- |
| २१० | ७ | य | स्यये |
| २१६ | ११ | रत्नौघै भृ- | रत्नौघैर्भृ- |
| २१८ | १७ | चम्पानाम | चम्पा नाम |
| २२१ | १९ | स्मरन्मत्र | स्मरन्मन्त्र |
| २२२ | ८ | -मेतस्या | -मेतस्या |
| २२४ | १८ | -प्रान्तिक- | शान्तिक- |
| २२६ | २७ | -ऽभयादेवी | -ऽभया देवी |
| २२७ | १६ | -बन्धुरा | बन्धुरा |
| २३० | १० | तत्प्रभावा- | त्वत्प्रभावा |
| २३१ | १ | कृपाणै नि- | कृपाणैर्नि- |
| २४३ | २ | चिन्ता | चिन्ता |
| २४३ | ९ | क्रीडावापिषु | क्रीडावापीषु |
| २४४ | ९ | हठादन्त पुरे | हठादन्त पुरे |
| २४६ | ११ | दत्वा | दत्त्वा' |
| २४६ | १४ | तन्वतो | तन्व्यतो |
| २४६ | २१ | अद्दष्टव्ये | मद्रष्टव्ये- |
| २४६ | २३ | त्वन्भुवन | त्वद्भवन |
| २५० | २३ | श्रेयोनि- | श्रेयो नि |
| २५६ | ९ | तेषामायुर्द्रमो | तेषामायुर्द्रुमो |
| २५८ | ११ | दत्वा | दत्त्वा |
| २५९ | २२ | वेश्यागृह | वेश्या गृह |
| २५९ | २७ | नवा | न वा |

| पृष्ठे, | पङ्क्तौ, | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| २६३ | १९ | प्राणा | प्राणा |
| २६४ | १७ | तत् | तद |
| २६४ | २० | अबन्वयद् | अबन्वयत |
| २६८ | ४ | विषीदता | विषीदता॰म् |
| २७१ | १ | -गोर्णाकै वृ- | -गोर्णाकैर्वृ- |
| २७२ | १० | विवेकिना | विवेकिभि |
| २७३ | १६ | पुन मृ- | पुनर्मृ- |
| २७३ | २६ | -द्राग् पा- | द्राक पा- |
| २७५ | ३ | किञ्चिद् | किञ्चिन् |
| २७५ | २० | सन्यस्नश- | सन्यस्तश- |
| २७७ | ३ | ंसिहाङ्क | ंसिहाङ्क |
| २७७ | ४ | कौशम्बी | कौशाम्बी |
| २७७ | १३ | दुर्गाह्य- | दुर्ग्राह्य |
| २७७ | २१ | पयभ्राम्यत् | पयभ्राम्यद् |
| २७८ | ४ | -मभूत् | मभूद |
| २७९ | १ | तस्या | तस्या |
| २८० | १५ | केचित् | केचिद् |
| २८० | २० | र्मुखिता | र्मुपिता |
| २८२ | ७ | स्याद् | स्यान |
| २८३ | २२ | -योनि. नि- | -योनिनि- |
| २८५ | २ | कास्ति | क्वास्ति |
| २८७ | २६ | आगच्छत् | आगच्छद् |
| २८९ | १३ | वकाद् | वक्रात् |
| २८९ | १४ | क्रमाद् | क्रमात् |
| २९० | ८ | -पुरस्सरं | -पुरस्सरम् |
| २९१ | १२ | सुदर्शन | सुदर्शन |
| २९२ | १७ | क्वचिद् | क्वचित् |
| २९२ | २३ | चेद् | चेत् |
| २९३ | २ | तस्मात् ज- | तस्माज्ज |
| २९३ | १५ | तत् जीवस्य | तज्जीवस्य |
| २९३ | १५ | वीक्ष्यमाणै. मु- | वीक्ष्यमाणैर्मु- |
| २९३ | २५ | न. | -न ? |

| पृष्ठे, | पङ्क्तौ, | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| २९५ | २२ | दत्वा | दत्त्वा |
| २९८ | २२ | वीक्ष्यन्ते | वीक्षन्ते |
| ३०० | १७ | गोपाल चि- | गोपालश्चि- |
| ३०३ | ८ | देवपाल | देवपालो |
| ३०३ | १२ | प्रमोदभाक् | प्रमोदभाग् |
| ३०४ | १२ | सर्वेषां- | सर्वेषा |
| ३०४ | १७ | चिन्ता | चिन्ता |
| ३०६ | २७ | प्रति | प्रति |
| ३०७ | २ | पृथ्वीभुज, | पृथिवीभुज |
| ३०७ | २१ | प्राप्ता मु | प्राप्ता पु- |
| ३०८ | १६ | दिष्टया | दिष्ट्या |
| ३१० | ३ | सबन्ध | सबन्ध |
| ३११ | १० | वस्त्राङ्गमलम् | वस्त्राङ्गमलं |
| ३१२ | १७ | धन | धनम् |
| ३१४ | २४ | आवालं | आबाल |
| ३१५ | ८ | रभूत् | -रभूद् |
| ३२५ | ६ | श्रोत्रापेय | श्रोत्राऽऽपेयः |
| ३२५ | २३ | तूष्णीशालो | तूष्णीशीलो |
| ३२५ | २३ | -ऽभवद् | -ऽभवत् |
| ३२६ | १० | तावद् चे- | तावच्चे- |
| ३२६ | १८ | -पुररक्षकैर्नर | -पुररक्षकैर्नरै |
| ३२७ | ८ | -बिन्दुभृकुटी- | -बिन्दुभृकुटि- |
| ३२८ | २७ | तत्राधिरोह्यतां | तत्राधिरोह्य तां |
| ३३० | ७ | मणिनाम्ना | मणिर्नाम्ना |
| ३३० | २० | धिग् | धिक् |
| ३३२ | १८ | भ्राम्यत् | भ्राम्यद् |
| ३३३ | ११ | दुर्ग्राह्या | दुग्राह्या |
| ३३४ | १३ | सम्यक् | सम्यङ् |
| ३३४ | २५ | युग्गम् | युग्मम् |
| ३३५ | ६ | न्यधाद् | न्यधात् |



शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिगुरुभ्यो नमः।

अर्हम्।

श्रीयशोविजयजैनग्रन्थमाला [३८]



श्रीकीर्तिराजोपाध्यायविरचितं

# नेमिनाथमहाकाव्यम्।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादाम्भोज-
चञ्चरीकायमाणाभ्यां
न्यायतीर्थ-व्याकरणतीर्थाभ्यां श्रावकपं-
हरगोविन्ददास-बेचरदासाभ्या संशोधितम्।

तच्च।
भावनगरे
श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण विद्याविजययन्त्रालये
मुद्रयित्वा प्राकाश्यं नीतम्।

वीर संवत् २४४०

मूल्यं पादोनरूप्यकम्।

YASHOVIJAYA JAINA GRANTHAMALA [38]

# THE NEMINATHA MAHAKAVYA

OF

SHRI KIRTIRAJA UPADHYAYA.

EDITED

Under the benign influence and patronage of
Shastravisharad Jainacharya

**SHREE VIJAYA DHARMA SURI**

BY

His holiness' most devoted servants,

Nyayatirtha and Vyakarantirtha Shravk Pandit
HARGOVINDDAS

and

Nyayatirtha and Vyakarantirtha Shravak Pandit
BECHARDAS.

Published by
HARSHCHANDRA BHURABHAI.

Printed by
PURUSHOTTAMDAS GIGABHAI PANCHBHAYA.
*Proprietor of The 'Vidya Vijaya' printing Press–BHAVNAGAR*

**Veer Era, 2440**

Price 12 Annas.



# प्रस्तावना.

अस्य पापपङ्कप्रक्षालनाम्भस श्रीनेमिनाथचरितस्य निर्मातारोऽनवद्याविरलपद्यपरंपराप्रबन्धपटुप्रतिभामाधारयन्तः कविचक्रचक्रवर्त्तिन श्रीकीर्त्तिराजोपाध्याया' कदा कतमा भूमण्डलीं सौवपादकमलैरलङ्कारवतीं व्यदधन्निति कथकथिकान् कथकथिकताया समाधि प्रपित्सून् पूर्वाचार्यशैलीमनुरुन्धाना नावीविदन् निज सत्तासमय कुत्रापि।

केवलमादर्शप्रान्ते तदपि पार्श्वभागे **"संवत् १४९५ वर्षे श्रीयोगिनीपुरे ( Delhi ) लिखितमिदम्"** इत्येतान्यक्षराणि समुपलभ्यन्ते। न च तावन्मात्रेणैव ग्रन्थविरचनसमयबलेन ग्रन्थकर्तुः सम्यक् समयो निर्णेतु पार्यते, प्रत्यन्तरात् प्रतिलेखनस्यापि कालस्य सभवेन ग्रन्थरचनदिष्टे सशयेन तत्रापि सशीतेरव्याहतप्रसरत्वात्।

अस्य पद्यात्मकस्य काव्यस्य कृतेरन्वबीभवन् कविमतल्लिका निज नामस्फटाटोपकरालव्यालकारककरम्बितस्य, निष्पापप्रत्ययप्रवालजालजटिलस्य, पुच्छच्छटाच्छोटोच्छालितान्तःशीकरविभक्तिनक्रचक्रसमासस्य, नैकबोधाविक्रेयप्रवहणस्फोटाद्रितद्धितस्य, विष्णोरिव धातोरासनस्य रत्नाकरस्येव व्याकरणशास्त्रस्य पारदृश्वत्वम्। साहित्यशास्त्रचणशेखरत्व तु काव्यमेवेद प्रवक्तीति न तत्र वचनचञ्चूनां वचनावकाश.। नैकगुणोपेतां काव्यमाला गुम्फितॄणां कविमूर्धमणीनामेषा **"काव्याभ्यासनिमित्तम्"** इत्यन्तिमश्लोकपूर्वार्धेन वाचोयुक्तावनेकासम्बन्धादिदोषदूषितं कतिपयाक्षरसंनिबद्धमात्रं काव्य

रचयितृणा दुरवबोधग्रहग्रहिलानामसुहृद्गोष्ठीषु शेखरतामादधानाना स्वयमेव स्व कवित्वेन प्रख्यापयतां कविचौरप्रयोग सत्यापयता 'लघुतायामेवात्मनः प्रभुत्वम्' इत्युपदेशमन्तरेण नान्यत् किञ्चिन्निमित्त सभाव्यत इति नेत स्तोत्रादन्तिमश्लोकपूर्वार्धदर्शनेन नासासंकोचनमालिन्यपूर्वकमनादेयत्वं सामान्यत्व चावबुध्यावगणय्य च वञ्चयितव्यमध्येतृवर्गैः ।

सुरसमुपवर्णितमत्रामन्दमरन्दनिःस्यन्दिसुमनस इव सुमनसो मनस आमोददायकस्य, सप्तसप्तेरिव पङ्कशोषकस्यापि खरभावाराकरम्बितस्य, मदोन्मत्तवारणवारविदारणे पञ्चाननत्वमाकलयतोऽक्षोभलोभपारावाररसादाने ज्वलदुल्बणज्वालाजालजटिलसवर्त्तकतामादधानस्य, निरस्तसमस्तजनताभिमानस्य कदर्पदर्पाहिमनिकरस्य निगारणे हेलयतः, संसारावारपारपारीणस्य बालब्रह्मचारिणो भगवतः श्रीनेमिनाथस्य आजन्म यावन् मोक्ष चरितम् ।

उपन्यभान्तुः प्रसङ्गोपनिपाति नगरारामवनमहीधर–दिक्कुमारिका–सुरासुराहेति–नेमिभ्रातृजायोक्ति–षड्तु – विवाहगेहनिवर्तनसंभवकुमारिकाराजिमतिविलपन–भगवद्दीक्षा–मोहदूतसंयममन्त्रिसवाद–सयममोहसंगर–कमलापति स्तवनादिकवर्णनम् । ग्रन्थकर्त्रा विहायेद कस्को ग्रन्थोऽग्रन्थीति न निर्णयः ।

ग्रन्थस्यास्यादर्शपुस्तकमेकमेवासद्गुरुवर्यशास्त्रविशारदजैनाचार्यश्रीमद्विजयधर्मसूरीणामवापि, इति भृशमन्वग्राहिषातां तैः ।

एकस्यैवास्यानतिशुद्धस्य पुस्तकस्य साहाय्येन संपादितेऽत्र ग्रन्थे **"सुदुर्निवारा मनुष्यसहकृताः भ्रान्तयः"** इत्यभ्रान्तिनियममवधारयन्तोऽवतारयन्तश्च कृपां सुहृदयाः सहृदया उपेक्षिष्यन्ते ता इति ।

अभ्यर्थयमानौ

**हरगोविन्द–बेचरदासौ ।**

एकत्र ऋषभादिज्ञाने,कात्स्न्योपयोगित्वात् सामस्त्येनोपयोगित्वादिति। **न चेत्यादि**। न चैवमुक्तेन प्रकारेण, अपरस्याऽपि वर्धमानादिज्ञानस्य,तद्भावापत्ति ऋषभादिज्ञानत्वापत्ति । कुत इत्याह—**अधिकृतवस्तुनः** अनेकस्वभावतया तथानियतस्य उक्तवद् विचित्रस्य, तथात्वविरोधात् तत्तज्ज्ञान्यपेक्षया इत्यादित्वविरोधात्। तथाहि—ऋजुपालिकातीरादौ दुष्षम-सुषमान्ते च वर्धमानादिज्ञान्यपेक्षया, अविकलात्मग्राहकज्ञानाभिव्यञ्जकात्मकत्वेन एव एकत्र ऋषभादिज्ञाने, अस्य कात्स्न्योपयोग इति वर्धमानादिज्ञानाऽभावे तथात्वविरोध. । एवमन्यापेक्षयाऽप्यतिसूक्ष्मधिया भावनीयमेतद् अतिगहनत्वादिति । **एकान्तेत्यादि**। एकान्तैकस्वभाववस्तुवादिनस्तु बौद्धादे , एष दोष —अनन्तानां तद्विकलात्मग्राहकज्ञाना ऽभावलक्षण अनिवारितप्रसर एव । कथमित्याह— **तद्भेदनिबन्धना** अनन्तज्ञानभेदनिबन्धना, अधिकृतवस्तुवैचित्र्यानुपपत्ते , उक्तवद् अधिकृतवस्तुवैचित्र्यमेवाऽत्रकारणमिति । दूषणान्तरमाह—**किञ्चेत्यादिना**। किञ्च निर्विकल्पकेनाऽपि प्रत्यक्षेण भवदभिमतेन, एकस्वभावे एकान्तैक स्वभावे, वस्तुनि भवदभिमते परिच्छिन्ने सति कथ नाऽनेकप्रमाणवादहानिरिति चिन्त्यम्। प्रमेयान्तराभावेन प्रमाणान्तराभावाद् हानिरेवेत्यर्थ । पराभिप्रायमाह—**प्रत्यक्षस्य** निर्विकल्पकस्य, अनिश्चयरूपत्वात् कारणाद् चिन्तितमेवैतद् ॥

यदुक्त भवता न च एतद् अपूर्वमिति उपदर्शयन्नाह—

**आह च न्यायवादी— न प्रत्यक्षं कस्यचिद् निश्चायकम्, तद् यमपि गृह्णाति तं न निश्चयेन, किं तर्हि?, तत्प्रतिभासेन। तच्च यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति तत्रैव प्रामाण्यमात्मसात्कुरुते, यत्र तु भ्रान्तिकारणसद्भावाद् अशक्तं तत्र प्रमाणान्तरं व्याप्रियते, समारोपव्यवच्छेदार्थमितिभ्रान्तिव्युदासाय प्रमाणान्तरप्रवृत्तिरिति ॥**

आह च न्यायवादी धर्मकार्त्तिवार्त्तिके, किमाह ?, इत्याह— न

१ ज्ञानवादी, इत्यपि पाठ ।

प्रत्यक्ष कस्यचित् पदार्थस्य निश्चायकम्, तद् यमपि पदार्थं गृह्णाति न न निश्चयेन 'एवमतद्' इत्येव रूपेण, कि तर्हि ?, तत्प्रतिभासेन आदर्शवत् गृह्यमाणाऽऽकारेण, तच्च एवभूत प्रत्यक्षम, यत्रांशे वस्तुगते, पाश्चात्य निश्चय जनयितु शक्तानि नीलादौ, तत्रैवाऽशे प्रामाण्यमात्मसात्कुरुते नीलादौ। यत्र तु अशेऽनित्यादौ, भ्रान्तिकारणसद्भावात् कारणात्, अशक्त पाश्चात्य निश्चय जनयितुम्, तत्रांशे प्रमाणान्तर व्याप्रियतेऽनुमानम्। किमर्थमित्याह- समारोपव्यवच्छेदार्थं परिकल्पितसमारोपव्यवच्छेदार्थम्, इत्येवभ्रान्तिव्युदासाय समारोपव्युदासाय, प्रमाणान्तरप्रवृत्ति अनुमानप्रवृत्ति ॥

इत्येव पूर्वपक्षमाशङ्क्याह-

**अत्रोच्यते- यदुक्तम्-"न प्रत्यक्षं कस्यचिद् निश्चायकम्" इति, अत्र कोऽयं निश्चयो नाम ?, स्वालम्बनाऽध्यवसाय एवेति चेत्, नाऽयं तदाकारोत्पत्तिव्यतिरेकेण। अस्त्वेवं ततः को दोषः?; इति चेत्, नासौ न प्रत्यक्षेऽपि, कथमनिश्चायकं तत् ?; वस्तुमात्रप्रतिभासनाद् इति चेत्, अवस्तुप्रतिभासी तर्हि निश्चयः। न, तत्रैव दृढः प्रत्यय इति चेत्, कथं तदाकारशून्यस्तत्रेति। किञ्च किं पुनरस्य दार्ढ्यम्, किं निर्विकल्पकसमनन्तरत्वम् ?, किं वा वासनाजन्म ?, उताऽध्यवसिततद्भावता ?, आहोस्वित् ध्वनियोगः ?। न तावद् निर्विकल्पकसमनन्तरत्वम्, तदपरनिर्विकल्पकेन व्यभिचारात् निर्विकल्पकसमनन्तराद् निर्विकल्पकोत्पत्तेः। नाऽपि वासनाजन्म, निर्विकल्पकस्याऽपि तत उत्पत्तेः, तत्-तत्समनन्तराऽव्यतिरेकात्। नाऽपि अध्यवसिततद्भावता, अतदाभेन तत्परिच्छेदाऽयोगात् तत्त्वतस्तदनुपपत्तेः। नाऽपि ध्वनियोगः, तत्तादात्म्योभयागतस्तदसिद्धेः, तद्युक्तस्यापि तदाकारोत्पत्तिप्रधानत्वादिति। न च सैव केवला अनिश्चयः, स्वालम्बनपरिच्छेदात्, न च न सोऽपि,**

१ प्रत्यक्षमिति।

**तत्त्वतः तत्स्वभावतया ततस्तद्बोधोपपत्तेः। न च मूककल्पत्वाद् नेति, बोधस्याऽनिश्चयस्वविरोधात्। न चाऽस्पष्टतया नेति, तस्याः स्पष्टताऽभ्युपगमादिति ॥**

**अत्रोच्यते— यदुक्तमित्यादि** । यदुक्तमादौ-'न प्रत्यक्षं कस्यचिद् निश्चायकम्' इति। अत्र व्यतिकरे कोऽयं निश्चयो नाम ?, स्वाऽऽलम्बनाध्यवसाय स्वविषयपरिच्छेद एवेति चेत्। एतदाशङ्क्याह— **नायं** यथोदिताध्यवसाय, तदाकारोत्पत्तिव्यतिरेकेण स्वालम्बनाऽऽकारोत्पत्तिव्यतिरेकेण, अस्त्वेव भवतु स्वालम्बनाकारोत्पत्तिरेव निश्चय', तत को दोष इति चेत् ?। एतदाशङ्क्याह— **नासौ** स्वालम्बनाकारोत्पत्ति, न प्रत्यक्षेऽपि, किं तर्हि अस्त्येव। अत कथमनिश्चायकं तत् प्रत्यक्षम् ?, भवदभिप्रेतनिश्चयलक्षणोपपत्तेर्निश्चायकमेव इत्यर्थ । वस्तुमात्रप्रतिभासनाद् अनिश्चायक तद् इति चेत्। एतदाशङ्क्याऽऽह— **अवस्तुप्रतिभासी तर्हि निश्चयः** ततोऽनिश्चय इति गर्भ । नाऽवस्तुप्रतिभासी, किंतु तत्रैव वस्तुनि, दृढ प्रत्ययो निश्चय इति चेत्। एतदाशङ्क्याह— **कथं तदाकारशून्यो** वस्त्वाकारशून्यस्तन्मात्रप्रतिभासनेन, तत्रेति वस्तुनीति। अभ्युच्चयमाह— **किञ्चेत्यादिना**। किं पुनरस्य प्रत्ययस्य दार्ढ्यम् ?, किं निर्विकल्पकसमनन्तरत्वम्— निर्विकल्पक समनन्तरो यस्येति विग्रहस्तद्भावो निर्विकल्पकसमनन्तरत्व तत् ?। किंवा वासनाजन्म वासनातो जन्म तत् ?। उताऽध्यसिततद्भावता— अध्यवसित परिच्छिन्न तद्भावो वस्तुभावो येनेति विग्रहस्तद्भावोऽध्यवसितद्भावता ?। आहोस्वित् शब्दसम्बन्ध प्रत्ययदार्ढ्यमिति ?। एव विकल्पचतुष्टयमुपन्यस्याऽऽह— **न तावद् निर्विकल्पकसमनन्तरत्वं** प्रत्ययदार्ढ्यम्। कुत इत्याह- **तदपरनिर्विकल्पकेन व्यभिचारात्**- तस्माद् अधिकृतप्रत्ययाद्, अपर च तन्निर्विकल्पक च तेनाऽनैकान्तिकत्वात्। एतत्प्रकटनायैवाऽऽह— **निर्विकल्पकसमनन्तरात्** सकाशात्, प्रबन्धेन निर्विकल्पकोत्पत्ते । नाऽपि वासनाजन्म प्रत्ययदार्ढ्यम् । कुत इत्याह— **निर्विकल्पकस्याऽपि ततो** वासनात, उत्पत्ते कारणात्, उत्पत्तिश्च तत्-तत्स-

मनन्तराऽव्यतिरेकात्- तस्या वासनाया तत्समनन्तराऽव्यतिरेकात् निर्विकल्पकसमनन्तराव्यतिरेकात्, समनन्तराच्च अविकल्पकजन्मेति भावना । नाऽप्यध्यवसिततद्भावता प्रत्ययदार्ढ्यम् । कुत इत्याह- **अतदाभेन** अवस्त्वाकारेण ज्ञानेन, तत्परिच्छेदाऽयोगाद् वस्तुपरिच्छेदाऽयोगात्, अयोगश्च- तत्त्वत परमार्थत, तदनुपपत्तरध्यवसिततद्भावतानुपपत्ते, नाऽतदाभं तत्परिच्छेदकम्, नचाऽतो न, अध्यवसिततद्भावतेतिभावनीयम्। नाऽपि ध्वनियोग' प्रत्ययदार्ढ्यम् । कुत इत्याह- **तत्तादात्म्याद्यऽयोगतः** तस्य प्रत्ययस्य, तेन ध्वनिना, तादात्म्याद्यऽयोगत – तादात्म्यमेकत्त्वम् आदिशब्दात् तदुत्पत्तिग्रह, तदसिद्धेर्ध्वनियोगासिद्धे, तथा तद्युक्तस्याऽपि ध्वनियुक्तस्याऽपि प्रत्ययस्येति-प्रक्रम, तदाकारोत्पत्तिप्रधानत्वाद् विषयाकारोत्पत्तिप्रधानत्वादिति । **न चेत्यादि** । न च सा एव तदाकारोत्पत्ति, केवला ध्वनियोगरहिता, अनिश्चयोऽपरिच्छेद । कुत इत्याह- **स्वालम्बनपरिच्छेदात्** स्वविषयपरिच्छेदात्, केवलयाऽपि न च न सोऽपि स्वालम्बनपरिच्छेद, तत्वत. परमार्थेन । कुत इत्याह- **तत्स्वभावतया** स्वालम्बनपरिच्छेदस्वभावतया, तत स्वालम्बनात्, तद्बोधोपपत्तेर्विवक्षितालम्बनबोधोपपत्ते, अन्यथा तदुत्तरक्षणवत् ततो भावेऽपि अबोधरूपतैवेति हृदयम् । **न चेत्यादि** । न च मूककल्पत्वात् केवलायास्तदाकारोत्पत्तेरिति प्रक्रम, नेति न निश्चयरूपता । कुत इत्याह- **बोधस्याऽनिश्चयत्वविरोधात्** बोधो निश्चयोऽवगम इति तुल्याऽर्था. । **न चेत्यादि** । न चाऽस्पष्टतया कारणेन, नेति न निश्चयरूपता, केवलायास्तदाकारोत्पत्तेरिति प्रक्रम. । कुत इत्याह- **तस्याः** तदाकारोत्पत्ते, स्पष्टताभ्युऽपगमादिति ॥

**यच्चोक्तम्-"तच्च यत्रांऽशे पाश्चात्यं निश्चयं जनयितुं शक्नोति तत्रैव प्रामाण्यमात्मसात्कुरुते"। एतदप्ययुक्तम्, तस्य निरंशत्वाभ्युपगमात्, अन्यथा परसिद्धान्तापत्तिः । व्यावृत्तयोंऽशा इति चेत् । न, तासां परमार्थतस्तदव्यतिरिक्तत्वेन तन्मात्ररूपत्वात्,**

तस्यैव त्रैलोक्यव्यावृत्त्येकस्वभावत्वादिति। कथं च निश्चयस्य विकल्पात्मकत्वात् तत्त्वतो निर्विषयत्वात् तद्विषयता युक्ता?, येनोच्यते "यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति" इति। स ततो भवतीति तन्निश्चय इति चेत्। न, अतिप्रसङ्गात् नीलादि पश्यतः क्वचिद् भिन्नजातीयविकल्पाभ्युपगमात् तस्य च ततो भावात्, अन्यथा अहेतुकत्वापत्तेः। संवादको निश्चय इति चेत्। न, अप्राप्यदेशगतजलादिनिश्चयेन व्यभिचारात्। न च संवादनशक्तिरेव संवादनमित्यदुष्टम्, शक्तेरप्रत्यक्षत्वात् कार्यमन्तरेण तद्भावानवगतेः, न च ततोऽनन्या शक्तिरिति तदवगतावेव तदवगतिः, तदाभासतोऽप्रवृत्तिप्रसङ्गात् तच्छक्त्यवगमापत्तेः, न च तदाभासत्वतो न तच्छक्त्यवगमः, तेनाऽपि आत्मवेदनात् तस्याश्च तदनन्यत्वात्, न च सम्यग् निश्चयशक्तेरेवाऽवगतिरिति युक्तम्, तत्त्वतो वचनमात्रत्वात् तथाप्रतीत्यभावाद् इति। एवं च तत्रैव प्रामाण्यमात्मसात्कुरुत इति वचनमात्रम्॥

यच्चोक्त पूर्वपक्ष ग्रन्थे एव– 'तच्च यत्राशे पाश्चात्य निश्चयं जनयितु शक्नोति तत्रैव प्रामाण्यमात्मसात्कुरुते'। एतदऽप्ययुक्तम्। कुत इत्याह– तस्य प्रक्रमात् प्रमेयवस्तुन, निरशत्वाऽभ्युपगमात्, अन्यथा एवमनभ्युपगमे, परसिद्धान्तापत्तिस्तत्साशतापत्त्या इत्यर्थ। व्यावृत्तयोऽशा इति चेत्, तथाहि– त्रैलोक्यव्यावृत्त तदिति। एतदाशङ्क्याह– न, तासां व्यावृत्तीनाम्, परमार्थतस्तदव्यतिरिक्तत्वेन वस्त्वव्यतिरिक्तत्वेन हेतुना, तन्मात्ररूपत्वाद् वस्तुमात्ररूपत्वात्। एतदेव स्पष्टयन्नाह– तस्यैव वस्तुन, त्रैलोक्यव्यावृत्तिरेव एक स्वभावो यस्य तत् तथेति विग्रहस्तद्भावस्तस्मादिति। दोषान्तरमाह– कथञ्चेत्यादिना। कथ च निश्चयस्य विकल्पात्मकत्वात् कारणात्, तत्त्वत परमार्थेन निर्विषयत्वात्, तद्विषयता वस्तुविषयता युक्ता, येनोच्यते 'यत्राशे पाश्चात्यं निश्चय जनयितु शक्नोति' इति, नहि एतद् अतद्विषयत्वे चारु। स तत इत्यादि। स निश्चय, ततो वस्तुन, भवतीति कृत्वा

तन्निश्चयो वस्तुनिश्चय इति चेन। एतदाशङ्क्याह- **न, अतिप्रसङ्गात्।** एनमेवाह- **नीलादि पश्यतः** प्रबन्धेन क्वचिद् अर्थान्तरावगम, भिन्नजातीयविकल्पाऽभ्युपगमात् स्मार्त्तपीतादिविकल्पाभ्युपगमात्, तस्य च विकल्पस्य, ततो नीलादिदर्शनाद् भावात्। अन्यथा एवमनभ्युपगमे, अहेतुकत्वापत्तेस्तस्याऽतिप्रसङ्ग इति। निश्चयमेवाऽविकृत्य प्रकारान्तरमाह- **संवादको निश्चय इति चेत्।** एतदाशङ्क्याह- **न, अप्राप्यदेशगतजलादिनिश्चयेन व्यभिचारात्** स हि निश्चयोऽसंवादकश्च। न च संवादनशक्तिरेव संवादनमित्यदुष्टम्, किं तु दुष्टमेव। कुत इत्याह- **शक्तेरप्रत्यक्षत्वात्।** यदि नामैव तत किमित्याह- **कार्यमन्तरेण** संवादनादिरूपम्[1], तद्भावानगते शक्तिभावाऽनवगते.। **न चे-त्यादि।** न च ततो निश्चयात्, अनन्या शक्तिरिति कृत्वा तदवगतावेव निश्चयावगतावेव, तदवगति शक्त्यवगति। कुत इत्याह- **तदाभासतो** निश्चयाभासत। किमित्याह- **अप्रवृत्तिप्रसङ्गात्।** प्रसङ्गश्च- तच्छक्त्यवगमापत्ते तदाभासशक्त्यवगमापत्ते। **न चेत्यादि।** न च तदाभासत्वत कारणात्, न तच्छक्त्यवगमो न तदाभासशक्त्यवगम, किन्तु अवगम एव। कुत इत्याह- **तेनाऽपि** तदाभासेन, आत्मवेदनात् कारणात्। यदि नामैव तत किमित्याह- **तस्याश्च** तदाभासशक्ते, तदनन्यत्वात् तदाभासाऽनन्यत्वात्। **न चेत्यादि।** न च सम्यग् निश्चयशक्तेरेवाऽवगतिरिति युक्तम्। कुत इत्याह- **तत्वतो वचनमात्रत्वात्** वचनमात्रत्वं च तथा सम्यग् निश्चयशक्त्यवगमरूपेण प्रतीत्यभावादिति। एव च यथोक्तनीत्या, तत्रैव प्रामाण्यमात्मसात्कुरुते इति वचनमात्रं निरर्थकमित्यर्थ ॥

**इतश्च वचनमात्रम्- "यत्र तु भ्रान्तिकारणसद्भावाद् अशक्तं तत्र प्रमाणान्तरं व्याप्रियते" इत्याद्युपन्यासात्। तथाहि- यदि तत्क्वचिद् अशक्तं पाश्चात्यं निश्चयं जनयितुमेवं तर्हि अशक्तमेव, सर्वथैकत्वात् एकस्य चैकस्वभावत्वेन शक्तत्वाऽशक्तत्वविरोधात्, कथञ्चिद् अविरोधेऽप्यभ्युपगमविरोधात्,**

१ अन्तरेणेति शेष.।

"एकं दश शतमस्मात् सहस्रमयुत तत पर लक्षम् ।
प्रयुत कोटिमथाऽर्बुदमब्ज खर्व निखर्व च ॥ १ ॥
तस्माद् महासरोज शङ्कु सरिता पति ततस्त्वन्त्यम् ।
मध्य परार्ध्यमाहुर्यथोत्तर दशगुण तज्ज्ञा " ॥१॥ इति ॥ १८ ॥५३८॥

असङ्ख्यं द्वीपवार्ध्यादि

न विद्येत सङ्ख्या सङ्ख्यानमस्य असङ्ख्यम् ॥ १ ॥ द्वीपा जम्बूद्वीपादय, वार्धयो लवणोदादय, आदिग्रहणात् चन्द्राऽर्कादय, यदाहु –"असङ्ख्याता द्वीप-समुद्रा " इति ।

पुद्गलाऽऽत्माद्यऽनन्तकम् ।

पुद्गल आत्मा च आदिर्यस्य तत् तथा, आदिग्रहणाद् आकाशप्रदेशादि, नास्त्यन्तोऽस्य अनन्तकम् ॥ १ ॥

सांयात्रिकः पोतवणिक्

समुदिताना यात्रा सयात्रा, सा प्रयोजनमस्य सायात्रिक ॥ १ ॥ पोतस्य वणिक् पोतवणिक् ॥ २ ॥

यानपात्रं वहित्रकम् ॥ ५३९ ॥

वोहित्थ वहन पोत.

जलमार्गे यानाय पात्रं यानपात्रम् ॥ १ ॥ उह्यतेऽनेन वहति जले वा वहित्रम्, "बन्धिवहि–" ॥ (उणा–४५९) इति इत्र ॥ ५३९ ॥, "पथयूथ–" ॥ (उणा-२३१) ॥ इति निपातनाद् वोहित्थम्, बहिस्तिष्ठतीति वा पृषोदरादित्वात् ॥२॥३॥ उह्यतेऽनेन वहनम्, प्रवहणमपि ॥ ४ ॥ पूयते इति पोत ' "दम्यमि–" ॥ ( उणा–२०० ) इति त. ॥ ५ ॥

पोतवाहो नियामक. ।

निर्यामः

पोत वाहयति पोतवाह ॥ १ ॥ नियन्तु शक्नोति नियामक ॥ २ ॥ निर्यामयति निर्याम ॥ ३ ॥

कर्णधारस्तु नाविकः

कर्णमरित्र धारयति कर्णधार, यद् दुर्ग –"कर्ण श्रोत्रमरित्र च" इति ॥१॥ नावा तरति नाविक, " नौद्विस्वरादिक " ॥ ६।४।१० ॥ २ ॥

नौस्तु मङ्गिनी ॥ ५४० ॥

तरीतरण्यौ बेडा

नुद्यते कर्णधारैर्नौ स्त्रीलिङ्ग , " ग्लानुदिभ्या डौ " ॥ (उणा-८६८) ॥१॥ मङ्गो नौशीर्षमस्त्यस्या मङ्गिनी ॥ २ ॥ ५४० ॥ तरत्यनया तरि , " स्वरेभ्य " ॥ (उणा-६०६) ॥ ङ्या तरी, यद्वा " तृस्तृतन्द्रि " ॥ (उणा-७११) इति ईप्रत्यये तरीरीदन्त ॥ ३ ॥ " ऋहृम्र ' ॥ ( उगा-६३८ ) ॥ इत्यणौ, तरणि , ङ्या तरणी ॥ ४ ॥ विध्यते आक्रुश्यतेऽस्या बेडा ॥ ५ ॥

अथ द्रोणी काष्ठाम्बुवाहिनी ।

द्रवत्यम्भोऽस्या द्रोणी, " द्रोर्वा " ॥ ( उगा-१८४ ) इति ण , काष्ठमम्बु च वहति काष्ठाऽम्बुवाहिनी, क्षीरस्वामी तु-काष्ठमुपलक्षणं काष्ठाऽश्मादिमयी जलधारिणी द्रोणी इति व्याचख्यौ ॥ १ ॥

नौकादण्ड क्षेपणी स्यात्

येन नौर्वाह्यतेऽसो नौकादण्ड , क्षिप्यतेऽनया क्षेपणी ॥ १ ॥

गुणवृक्षस्तु कूपक ॥ ५४१ ॥

गुणयुक्तो वृक्ष इव गुणवृक्ष , यत्र नौ रज्ज्वा बध्यते, पोते ध्वजपटाद्याधार इत्येके ॥ १ ॥ कूपे आधारगर्ते कायति कूपक , गौडस्तु- जलान्तस्तरून् कूपकानाह ॥ २ ॥ ५४१ ॥

पोलिन्दास्त्वन्तरादण्डाः

पोलन्ति महत्त्व यान्ति पोलिन्दा , " कल्यलिपुलि- " ॥ ( उणा-२४६ ) इति इन्दक् , बाहुलकाद् गुण , नौकाया मध्ये दण्डा अन्तरादण्डा ॥ १ ॥

स्याद् मङ्गो मङ्गिनीशिरः ।

मङ्गत्यनेन मङ्ग पुलिङ्गोऽयम् , वैजयन्ती तु- "नौशिरो मङ्गमस्त्रियाम्" इति क्लीबेऽप्याह, मङ्गिनी नौस्तस्या शिर उपरिभाग ॥ १ ॥

अभ्रिस्तु काष्ठकुद्दालः

अभ्रति अभ्रि स्त्रीलिङ्ग , " पदिपठि- " ( उणा-६०७ ) इति इ , काष्ठे कुद्दालः, काष्ठमयो वा, येन निखन्य भग्न भग्नं पोतादि कुथेन पूर्यते ॥ १ ॥

सेकपात्रं तु सेचनम् ॥ ५४२ ॥

सिच्यते उदच्यतेऽनेन सेचनम्, येन नावो जलमुद्ध्रियते क्वचित् ॥१॥५४२॥

केनिपातः कोटिपात्रमरित्रे

के जले निपात्यन्ते नीयन्ते नावोऽनेन केनिपातः, "अद्व्यञ्जनात्-" ॥३।२।

१८ ॥ इति सप्तम्या अलुप् ॥ १ ॥ कोटिभि पाति कोटिपात्रम्, "त्रट्" ॥ ( उणा–४४६ ) ॥ इति त्रट् ॥ २ ॥ इयर्त्यनेन नौररित्रम्– "लूधूसूखनि-" ॥ ५ । २ । ८७ ॥ इतीत्रस्तत्र ॥ ३ ॥

अथोडुप. प्लवः ।

कोलो भेलस्तरण्डश्च

'उड सघाते सौत्र' उड्यते उडुप पुक्लीबलिङ्ग, "उडेरुपक्" ॥ ( उणा–३११ ) ॥ १ ॥ प्लवतेऽम्भसि प्लव ॥ २ ॥ कोलति सस्त्यायति कोल ॥ ३ ॥ 'भिलि सोत्र' भिल्यते भेल, भेरस्य लत्वे वा ॥ ४ ॥ तीर्यतेऽनेन तरण्ड पुक्लीबलिङ्ग, "जॄकॄतॄ-" ॥ ( उणा–१७३ ) इत्यण्ड ॥ ५ ॥

स्यात्तरपण्यमातर ॥ ५४३ ॥

पणे साधु पण्य मूल्यं तरस्य पण्य तरपण्यम् ॥ १ ॥ आतरन्त्यनेन आतर ॥ २ ॥ ५४३ ॥

वृद्ध्याजीवो द्वैगुणिको वार्धुषिकः कुसीदिकः ।

वार्धुषिश्च

वृद्धिमाजीवति वृद्ध्याजीव ॥ १ ॥ द्विगुणं गृह्णाति द्वैगुणिक ॥ २ ॥ वृधुषी वृद्धिस्ता गृह्णाति वार्धुषिक "अवृद्धेर्गृह्णाति गर्ह्ये" ॥ ६ । ४ । ३४ ॥ इतीकणि साधू ॥ ३ ॥ कुसीदवृद्धि गृह्णाति कुसीदिक "कुसीदादिकट्" ॥६।४।३५॥ ॥ ४ ॥ वृधुष्या भवो वार्धुषस्तस्यापत्य वार्धुषि ॥ ५ ॥

कुसीदार्थप्रयोगौ वृद्धिजीवने ॥ ५४४ ॥

'कुसच् श्लेषे दन्त्यान्त' कुस्यति कुसीदम्, "कुसेरिदेदौ" ॥ (उणा–२४१) ॥ इति इद, कुत्सित सीदत्यत्रेति वा पृषोदरादित्वात् ॥ १ ॥ अर्थस्य प्रयोग कलान्तरेण दानमर्थप्रयोग, वृद्ध्या जीविका वृद्धिजीवनं तत्र ॥२॥५४४॥

वृद्धि कलान्तरं

मूलद्रव्यस्य वर्धनं वृद्धि ॥ १ ॥ मूलद्रव्यस्याऽपरा कला कलान्तरम् ॥२॥

ऋणं तूद्धारः पर्युदञ्चनम् ।

अर्यते स्म ऋणम्, "ऋह्रीघ्रा-" ॥४।२।७६॥ इति क्तस्य नत्व ॥१॥ उद्ध्रियतेऽसौ उद्धार्यते वा उद्धार ॥ २ ॥ परित उदञ्चनमुत्तमर्णाद् उद्धारत्वेन ग्रहणं पर्युदञ्चनम् ॥ ३ ॥

याञ्चयाप्तं याचितकम्

याचितेन निर्वृत्त याचितकम्, "याचिताऽपमित्यात् कण्" ॥६।४।२२॥१॥

परिवृत्त्यापमित्यकम् ॥ ५४५ ॥

परिवृत्त्या आप्त अपमित्य प्रतिदानेन निर्वृत्तमापमित्यकम्, "याचिता-" ॥ ६।४।२३ ॥ इति कण् ॥ १ ॥ ५४५ ॥

अधमर्णो ग्राहक स्यात्

ऋणेऽवमोऽवमर्ण, राजदन्तादित्वात् पूर्वनिपात ॥१॥ गृह्णाति ग्राहक ॥२॥

उत्तमर्णस्तु दायक. ।

ऋणे उत्तम उत्तमर्ण ॥ १ ॥ ददाति इति दायक ॥ २ ॥

प्रतिभूर्लग्नकः

प्रतिनिधि प्रतीतो वा भवति प्रतिभू ॥१॥ लगति सम्ब यते लग्न, "क्षुब्धविरिब्व-" ॥ ४।४।१७ ॥ इति साधु, के लग्नक ॥ २ ॥

साक्षी स्थेय.

साक्षात् द्रष्टा साक्षी "साक्षाद द्रष्टा-" ॥७ । ९ । ११७॥ इतीन्, "प्रायोऽव्ययस्य" ॥ ७।४।६५ ॥ इत्यन्त्यस्वरादिलोप ॥ १ ॥ तिष्ठन्त्यस्मिन् इति स्थेय विवादपदे निर्णेता प्रमाणभूत पुरुष ॥२॥

शषश्चात्रे–अथ साक्षिणि स्याद्

मध्यस्थ प्राश्निकोऽप्यथ ।

कूटसाक्षी मृषासाक्ष्ये सूची स्याद् दुष्टसाक्षिणि ॥

आधिस्तु बन्धक· ॥ ५४६ ॥

आधीयतेऽसौ आधि ॥ १ ॥ बध्यते सबध्यते बन्धक, "दृकृतृ-" । (उणा-२७) इत्यकः ॥ २ ॥ ५४६ ॥

अथ मानविशेषानाह–

तुलाद्यैः पौतवं मानं

तुला पदवती प्रतिमानवती च तदाद्यैर्यद् मीयते तन्मानम्, पुनातीति पोतुर्मानभाण्डशोधक पौतवाध्यक्ष, "क्सिक्रमि-" ॥ (उणा-७७३) इति तुन्, पोतोरिद पौतवम् ॥ १ ॥

द्रुवयं कुडवादिभि ।

द्रोर्विकारो द्रुवय मानम्, "द्रोर्वय" ॥ ६ २ । ४३ ॥ १ ॥

पाय्य हस्तादिभिः

मीयतेऽनेन पाय्य मानम्, "धाय्यापाय्य-" ॥ ५ । १ । २४ ॥ इति घ्यणि निपात्यते ॥ १ ॥

तत्र स्याद् गुञ्जाः पञ्च माषकः ॥ ५४७ ॥

तत्रेति पौतवे गुञ्जा रक्तिका ॥ १ ॥ पञ्च सख्या मीयतेऽनेन माष "वृकृतृ-" ॥ ( उणा–५४० ) इति ष , के माषक पुक्लीबलिङ्ग ॥१॥५४७॥

ते तु षोडश कर्षोऽक्ष·

ते माषा षोडशकसख्या , कर्षति कर्ष पुक्लीबलिङ्ग ॥१॥ अक्ष्णोत्यक्ष ॥२॥

पल कर्षचतुष्टयम् ।

पलति पल पुक्लीबलिङ्ग ॥ १ ॥

विस्त सुवर्णो हेम्नोऽक्षे

हेम्न सुवर्णस्य अक्षे कर्षे 'विसच् प्रेरणे' विस्यते विस्त·, "शीरीभू-"॥ (उणा–२०१ ) ॥ इति कित् त ॥ १ ॥ सुवर्णमस्त्यस्य सुवर्ण अभ्रादित्वाद् अ , यदाह–"माषो दशार्धगुञ्ज षोडशमाषो निगद्यते कर्ष ।

ससुवर्णस्य सुवर्णस्तैरेव पल चतुर्भिश्च" इति ॥ २ ॥

कुरुविस्तस्तु तत्पले ॥ ५४८ ॥

तस्य सुवर्णस्य पले कुरुदेशे प्रसिद्धो विस्तो हेमपल कुरुविस्त , यन्माला–"पलेन हि सुवर्णस्य कुरुविस्त " ॥ १ ॥ ५४८ ॥

अथ पौतवमाह—

तुला पलशतं

तोल्यते तुला भिदादित्वाद् अङि साधु ॥ १ ॥ पलाना शतं पलशत ॥ २ ॥

तासा विंशत्या भार आचितः ।

शाकट· शाकटीनश्च शलाटः

तासा तुलाना विंशत्या पलसहस्रद्वयेनेत्यर्थ , भ्रियते भार ॥१॥ पुसा हि द्वे पलसहस्रे वोढु शक्यते आचीयते स्म आचित ॥ २ ॥ शकटेन बोढु शक्य शाकट "क्वचिद्" ॥ ६।२।१४५ ॥ इत्यण् ॥ ३ ॥ शकट्या नीयते "क्वचिद्" ॥ ५।१।११ ॥ इति डे स्वार्थेऽणि च शाकटीन ॥४॥ शृणाति शराट , "अनिशॄ-" ॥ ( उणा–१४५ ) ॥ इत्याट , लत्वे शलाट ॥ ५ ॥

ते दशाचित· ॥ ५४९ ॥

ते भारा दशसख्या आचीयते स्म आचित , क्लीबेऽयमित्यन्ये ॥१॥५४९॥

अथ द्रुवयमाह–

चतुर्भिः कुडवै· प्रस्थः

कुड्यते लक्ष्यते कुडव प्रसृतद्वयम् , तैश्चतुर्भि· प्रतिष्ठते प्रस्थः पुंक्लीबलिङ्ग ॥१॥

प्रस्थैश्चतुर्भिराढकः ।

आढौक्यते आढकस्त्रिलिङ्ग , " कीचकपेचक- " ॥ ( उणा–३३ ) इत्यके निपात्यते ॥ १ ॥

चतुर्भिराढकैर्द्रोणः

द्रवति द्रोण पुंक्लीबलिङ्ग , "द्रोर्वा" ॥ (उणा–८४) ॥ इति ण ॥ १ ॥

खारी षोडशभिश्च तै ॥ ५५० ॥

तैर्द्रोणै षोडशभि खन्यते खारी, " द्वारश्रृङ्गार- " ॥ ( उणा–४११ ) इत्यारे निपात्यते ॥ १ ॥ ५५० ॥

अथ पाय्यमाह—

चतुर्विंशत्यङ्गुलानां हस्तः

हस्यतेऽनेन हस्त ॥ १ ॥

दण्डश्चतुष्कर ।

दाम्यति दण्डश्चतुर्हस्त ॥ १ ॥

तत् सहस्रौ तु गव्यूतं क्रोश·

तेषा दण्डाना द्वौ सहस्रौ गवा यूतिरत्र गव्यूतं पृषोदरादित्वात् ॥ १ ॥ क्रुश्यते उच्यतेऽध्वपरिमाणमस्मात् क्रोश· ॥ २ ॥

तौ द्वौ तु गोरुतम् ॥ ५५१ ॥

गव्या गव्यूतगव्यूती

तौ क्रोशौ द्वौ गवा रुतमत्र गोरुतम् ॥ १ ॥ ५५१ ॥ गोभ्यो हिता गव्या ॥ २ ॥ गवा यूतिरत्र गव्यूतम् ॥ ३ ॥ गवा यूतिर्गव्यूति· पुंस्त्रीलिङ्ग पृषोदरादित्वात् ॥ ४ ॥

चतुष्क्रोश तु योजनम् ।

चत्वार क्रोशा समाहृता अत्र चतुष्क्रोशम्, युज्यतेऽनेन योजनम्,

यदाह–हस्तोऽङ्गुलविंशत्या चतुरन्वितया चतुष्करो दण्ड ।

तद्धि सहस्र क्रोशो योजनमेक चतुष्क्रोशै " इति ॥ १ ॥

वाणिज्यमुक्तम् पाशुपाल्यमाह–

पाशुपाल्य जीववृत्ति·

पशुपालस्य भाव कर्म वा पाशुपाल्यम्, राजादित्वाद् ट्यण् ॥१॥ जीवपालनाद् वर्त्तन जीववृत्ति ॥ २ ॥

गोमान् गोमी गवीश्वरे ॥ ५५२ ॥

गाव सन्त्यस्य गोमान्, मतु ॥ १ ॥ " गो " ॥ ७ । २ । ५० ॥ इति मिनि गोमी ॥ २ ॥ गवामीश्वरो गवीश्वरस्तत्र, गवेश्वरोऽपि ॥ ३ ॥ ५५२ ॥

गोपाले गोधुगाभीरगोपगोसङ्ख्यवल्लवा ।

गा पालयति गोपालस्तत्र ॥ १ ॥ गा दोग्धि गाधुक् ॥ २ ॥ आ अभित-ईरयत्याभीर, आप्नोतीति वा "जम्बोराभीर-" ॥ ( उणा–४२२ ) ॥ इतीरे निपात्यते ॥ ३ ॥ गा पाति गोप ॥ ३ ॥ गा सङ्ख्याति सचष्टे वा गोसङ्ख्य, "समख्य -" ॥५।१।७७॥ इति ड ॥५॥ वल्लते वल्लव, "वडिवटि-" ॥(उणा–५१५) ॥ इत्यव ॥ ६ ॥

गोविन्दोऽधिकृतो गोषु

गा विन्दति गोविन्द "निगवादेर्नाम्नि" ॥ ५।१।६१ ॥ इति श ॥ १ ॥

जावालस्त्वजजीविक ॥ ५५३ ॥

अजा पालयतीति जावाल पृषोदरादित्वात्, जवमलति जवालश्छागस्तस्या-ऽयमिति वा ॥१॥ अजेभ्यो जीविकाऽस्य अजजीविक अनृत कृषिरिति कर्षणमुक्तम् ॥ २ ॥ ५५३ ॥ अथ कृषिवृतीन् कृषिवलानाह–

कुटुम्बी कर्षकः क्षेत्री हली कृषिककार्षकौ ।
कृषीवलोऽपि

कुटुम्बमस्त्यस्य कुटुम्बी ॥ १ ॥ कर्षति भुवं कर्षक ॥ २ ॥ क्षेत्रमस्त्यस्य क्षेत्री, क्षेत्राजीवोऽपि ॥ ३ ॥ हलमस्त्यस्य हली ॥४॥ कर्षति कृषिक " पापुलि- " ॥ ( उणा–४१ ) ॥ इति किदिक कृषकोऽपि ॥५॥ " कृषेर्गुणवृद्धी च" ॥(उणा–३१)॥ इत्यके वृद्धौ च कार्षक ॥६॥ कृषिरस्त्यस्य कृषीवल "कृष्यादिभ्यो वलच्" ॥ ७ । २ । २७ ॥, " वलच्यऽपित्रादे " ॥ ३।२।८२ ॥ इति दीर्घ ॥ ७ ॥

जित्या तु हलि·

जीयते निर्गुणेनेति जित्या, " जिविपून्यो हलिमुञ्जकल्के " ॥ ५।१।४३ ॥ इति क्यप् ॥१॥ हलन्त्यनया हलि महद् हलम्, "पदिपठि-" ॥ (उणा–६०७)॥ इति इ पुंस्त्रीलिङ्गावेतौ ॥ २ ॥

सीरस्तु लाङ्गलम् ॥ ५५४ ॥
गोदारण हलं

सीयते बध्यते सीर पुंक्लीबलिङ्ग•, "चिजि-" ॥ ( उणा–३९२ ) ॥ इति रो दीर्घत्व च ॥१॥ लङ्गति गच्छति लाङ्गलम्, " नहिलङ्गेर्दीर्घश्च "॥ ( उणा–४६६ )

इन्यल ॥ २ ॥ ५५४ ॥ गौर्दार्यतेऽनेन गोदारणम् ॥ ३ ॥ हलति हल पुक्लीबलिङ्ग ॥ ४ ॥

ईषसीते तद्दण्डपद्धती ।

ईषति ईषा लाङ्गलदण्ड ॥ १ ॥ सिनोति भुवं सीता, लाङ्गलस्य पद्धतिर्लेखेत्यर्थ ॥ २ ॥

निरीषे कुटक

निष्क्रान्ता ईषाऽस्माद् निरीष तत्र ॥ १ ॥ कुटति कुटक यस्याऽग्रे फालो बध्यते ॥ २ ॥

फाले कृषक कुशिक फलम् ॥ ५५५ ॥

फलति विशीर्यते भूमिरनेन फालस्तत्र ॥ १ ॥ कर्षन्त्यनेन कृषक, "कृषेर्गुणवृद्धी च" ॥ (उणा-३१) ॥ इति किदक ॥ २ ॥ कुष्णाति भुव कुशिक "कुशिकहृदिक-" ॥ (उणा-४५) ॥ इतीके निपात्यते ॥ ३ ॥ फलति विदारयति फलम् ॥ ४ ॥ ५५५ ॥

दात्र लवित्रं

दान्त्यनेन दात्रम्, "नीदाम्ब्-" ॥ ५ । २ । ८८ ॥ इति त्रट् ॥१॥ लुनन्त्यनेन लवित्रम्, "लूधूसू-" ॥ ५।२।८७ ॥ इति इत्र ॥ २ ॥

तन्मुष्टौ वण्ट

तस्य दात्रस्य मुष्टिग्रहणस्थान तन्मुष्टिस्तत्र, वण्टयते विभज्यते वण्ट ॥ १ ॥

मत्य समीकृतौ ।

मतशब्द साम्यपर्याय, मतस्य करण मत्यम्, "मतमदस्य करणे" ॥ ७ । १।१४ ॥ इति य, असमस्य समीकरण तत्र ॥ १ ॥

गोदारण तु कुद्दालः

गौर्दार्यतेऽनेन गोदारणम् ॥ १ ॥ कुंर्दल्यतेऽनेन कुद्दाल पृषोदरादित्वात् पुस्त्वयम्, वैजयन्ती तु-"गोदारण कुद्दालम्" इति क्लीबमाह ॥ १ ॥

खनित्रं त्ववदारणम् ॥ ५५६ ॥

खन्यतेऽनेन खनित्र कुद्दालादि, "लूधूसू-" ॥ ५ । २ । ८७ ॥ इतीत्र ॥ १ ॥ अवदार्यतेऽनेनाऽवदारणम् ॥ २ ॥ ५५६ ॥

प्रतोदस्तु प्रवयणं प्राजनं तोत्रतोदने ।

---

१ कु पृथिवी, इति हैममतम् ।

प्रतुद्यन्ते वोढारोऽनेन प्रतोद ॥ १ ॥ प्राजन्ति प्रेरयन्त्यनेन प्रवयणम्, "अऽने वा" ॥ ४।४।३ ॥ इति विकल्पेन वीरादेश , पक्षे प्राजनम् ॥२॥३॥ तुद्यतेऽनेन तोत्त्रम्, "नीदाम्ब्" ॥ ५।२।८८ ॥ इति त्रट् ॥४॥ अनदि तोदनम् ॥५॥

## योत्रं तु योक्त्रमाबन्धः

यूयते युज्यते वाऽनेन योत्रम्, योक्त्रम्, "नीदाम्ब्" ॥ ५।२।८८ ॥ इति त्रट् ॥ १ ॥ २ ॥ आबध्यतेऽनेन आबन्धश्चर्मरज्जु ॥ ३ ॥

## कोटिशो लोष्ठभेदन. ॥ ५५७ ॥

कोटिभि. कोणै श्यति कोटिश ॥ १ ॥ लोष्ठान् भिनत्ति लोष्ठभेदन , कोटीशोऽपि ॥ २ ॥ ५५७ ॥

## मेधिर्मेथि. खलेवाली खले गोबन्धदारु यत् ।

मेधन्ति संगच्छन्ते गावोऽस्या मेधि , "नाम्युपान्त्य-" ॥ ( उणा-६०९) ॥ इति कित् इ ॥ १ ॥ 'मिथृग् मेधाहिंसयो ' मेथते हिनस्ति मेथि ,"किलिपिलि-" ॥ (उणा-६०८) ॥ इति इ , पुम्स्त्रीलिङ्गावेतौ ॥ २ ॥ खले वलन्ति भ्रमन्ति गावोऽनया खलेवाली, खले गोबन्धनार्थं दारु ॥ ३ ॥

## शूद्रोऽन्त्यवर्णो वृषलः पद्यः पज्जो जघन्यजः ॥ ५५८ ॥

शीयते इति शूद्र , "शदेरूच्च-" ॥ (उणा-३९४) इति र ॥१॥ अन्त्यश्चासौ वर्णश्चान्त्यवर्ण ॥२॥ वर्षति वृषल , "तृपिवपि-" ॥ (उणा-४६८) इति किदल , वृष लाति लुनातीति वा, नारदस्तु- "वृषो हि भगवान् धर्मस्तस्य य कुरुते त्वलं वृषल त विजानीयात्" इत्याह ॥ ३ ॥ ब्रह्मण पादयोर्भव पद्य देहांशत्वाद् य , "हिमहति-" ॥३।२।९६॥ इति पदादेश ॥४॥ पद्भ्या जात पज्ज , यत् श्रुति – "पद्भ्या शूद्रोऽजायत" इति ॥५॥ जघन्ये जातो जघन्यज ॥६॥५५८॥

## ते तु मूर्धावसिक्ताद् आरथकृद् मिश्रजातयः ।

ते शूद्रा मूर्धावसिक्तादारभ्य रथकारं यावत् मिश्रा सङ्कीर्णाजातिरेषा मिश्रजातयः ।

## क्षत्रियायां द्विजाद् मूर्धावसिक्तः

'सूतस्तु क्षत्रियाद् जात ' इत्यतो वक्ष्यमाणाज्जात इति सम्बध्यते, ब्राह्मणात्-क्षत्रियाया जात मूर्धनि अवसिच्यते स्म मूर्धावसिक्त ॥ १ ॥

## विट्स्त्रियां पुन· ॥ ५५९ ॥

## अम्बष्ठ.

द्विजादिति सम्बध्यते, ब्राह्मणाद् वैश्याया जात , अम्बाया तिष्ठति अम्बष्ठ , "गोऽम्बाऽऽम्ब-"॥२।३।३०॥ इति षत्वम् , "ड्यापोबहुल नाम्नि ॥२।४।९९॥ इति ह्रस्व ॥ १ ॥ ५५९ ॥

अथ पारशवनिषादौ शूद्रयोषिति ।

ब्राह्मणात् शूद्राया जात , परपुरुषाद् भिन्नवर्णा स्त्री परस्त्री तस्या अपत्यं पारशव , "परस्त्रिया परशुश्चाऽसावर्ण्ये" ॥६।१।४०॥ इति अञि साधु॰ ॥ १ ॥ निषीदति निषाद , ज्वलादित्वात् ण ॥ २ ॥

क्षत्राद् माहिष्यो वैश्याया

क्षत्रियाद् वैश्यायां जात , महिष्या साधुर्महिष्य प्रज्ञाद्याणि माहिष्य , स हि अन्त पुररक्षिता इति स्मार्त्तम् ॥ १ ॥

उग्रस्तु वृषलस्त्रियाम् ॥ ५६० ॥

क्षत्रियात् शूद्राया जात , उच्यत्युग्र , "ख़ुरक्षुर-" ॥ ( उणा-३९६ )॥ इति निपात्यते ॥ १ ॥ ५६० ॥

वैश्यात् तु करणः

वैश्यात् शूद्राया जात , करोति करण , नन्द्यादित्वाद् अन ॥ १ ॥

शूद्रात् तु आयोगवो विशः स्त्रियाम् ।

शूद्राद् वैश्याया जात , अयोवद् गौरस्य अयोगुस्तस्याऽयमायोगव ॥ १ ॥

क्षत्रियाया पुनः क्षत्ता

शूद्रात् क्षत्रियाया जात , क्षदति द्वा स्थत्वात् क्षत्ता ॥ १ ॥

चण्डालो ब्राह्मणस्त्रिया ॥ ५६१ ॥

शूद्राद् ब्राह्मणस्त्रिया जात , चण्डमुग्रं कर्म अलति पर्याप्नोति चण्डाल ॥१॥ ॥ ५६१ ॥

वैश्यात् तु मागधः क्षत्र्यां

वैश्यात् क्षत्रियाया जात , मगध्यति स्तौति मगध , प्रज्ञाद्याणि मागध ॥१॥

वैदेहको द्विजस्त्रियां ।

वैश्याद् ब्राह्मण्या जात , वैदेह इव वैदेहको वणिक्कर्मा ॥ १ ॥

सूतस्तु क्षत्रियाद् जातः

क्षत्रियाद् ब्राह्मण्या जात , सुवति प्रेरयत्यश्वान् सूत ॥ १ ॥

उपसंहारमाह—

इति द्वादश तद्भिद· ॥ ५६२ ॥

तेषा शूद्राणा भिदो जातिविशेषा ॥ ५६२ ॥

माहिष्येण तु जात स्यात् करण्यां रथकारकः ।

माहिष्याद् वैश्यात् क्षत्रियजातात् करण्या शूद्रावैश्यजाताया सुत , रथ करोति रथकारस्तक्षा ॥ १ ॥

कारुस्तु कारी प्रकृति· शिल्पी

करोति कृणोति वा कारु , "कृवापा-" ॥ ( उणा–१ ) ॥ इत्युण् ॥ १ ॥ ग्रहादिणिनि कारी ॥ २ ॥ प्रक्रियतेऽनया प्रकृति ॥ ३ ॥ शिल्पं कलाकौशल-मस्त्यस्य शिल्पी ॥ ४ ॥

श्रेणिस्तु तद्गण· ॥ ५६३ ॥

तेषा कारूणा गण , श्रीयते श्रेणि पुस्त्रीलिङ्ग , "कावावी-"॥ (उणा–६३८)॥ इति णि ॥ १ ॥ ५६३ ॥

शिल्प कला विज्ञान च

शील्यते शिल्पम्, "पम्पाशिल्पादय " ॥ (उणा–३००) ॥ इति पे निपात्यते ॥ १ ॥ 'कलण् सङ्ख्यानगत्योरदन्त ' कल्यते कला "भीषिभूषि-" ॥ ५।३।१०९ ॥ इति बहुवचनाद् अङ् ॥ २ ॥ विविध ज्ञायते विज्ञानम् ॥ ३ ॥

मालाकारस्तु मालिकः ।

पुष्पाजीवः

माला स्रज करोति ग्रथ्नाति मालाकार ॥ १ ॥ मालागुम्फन शिल्पमस्य मालिक ,"शिल्पम्" ॥६।४।५७॥ इतीकण् , मालाऽस्य अस्तीति वा व्रीह्यादित्वादिक ॥ २ ॥ पुष्पैराजीवति पुष्पाजीव ॥ ३ ॥

पुष्पलावी पुष्पाणामवचायिनी ॥ ५६४ ॥

पुष्पाणि लुनाति पुष्पलावी, "कर्मणोऽण्" ॥ ५।३।१४ ॥ "अणञ-" ॥ १।४।२० ॥ इति ङी, पुष्पाणामवचेत्री ॥ १ ॥ ५६४ ॥

कल्यपालः सुराजीवी शौण्डिको मण्डहारकः ।

वारिवासः पानवणिक् ध्वजो ध्वज्याऽऽसुतीबलः ॥ ५६५ ॥

कल्य मद्यं पालयति रक्षति कल्यपाल ॥१॥ सुरया जीवति सुराजीवी ॥२॥

शुण्डा पानमदस्थानं सुरा वा पण्यमस्य शौण्डिक, "तदस्य पण्यम्" ॥ ६।४।५४ ॥ इतीकण् ॥ ३ ॥ मण्डमच्छसुरा हरति मण्डहारक ॥ ४ ॥ वारि वासयति वारिवास ॥ ५ ॥ पानस्य वणिग् पानवणिक् ॥ ६ ॥ ध्वजति ध्वज ॥ ७ ॥ ध्वज सुराभाण्डपताकाऽस्त्यस्य ध्वजी ॥८॥ आसुतिर्मद्यसंधानमस्त्यस्य आसुतीबल ॥९॥ ॥ ५६५ ॥

मद्यं मदिष्ठा मदिरा परिस्रुता
कश्यं परिस्रुन्मधु कापिशायनम् ।
गन्धोत्तमा कल्यमिरा परिप्लुता
कादम्बरी स्वादुरसा हलिप्रिया ॥ ५६६ ॥
शुण्डा हाला हारहूरं प्रसन्ना वारुणी सुरा ।
माध्वीकं मदना देवसृष्टा कापिशमब्धिजा ॥ ५६७ ॥

मदस्य करण मद्यम्, "मतमदस्य करणे" ॥७।१।१४॥ इति य, माद्यन्त्यनेन इति वा "बहुलम्" ॥५।१।२॥ इति करणेऽपि "यमिमदि" ॥५।१।३०॥ इति य ॥१॥ अतिशयेन मदवती मदिष्ठा, "गुणाङ्गाद्-" ॥ ७।३।९ ॥ इतीष्ठे "विन्मतो -" ॥७।४।३२॥ इति मतुलोपे "त्र्यन्तस्वरादे" ॥ ७।४।४३ ॥ इति अन्त्यस्वरादिलोप ॥२॥ माद्यत्यनया मदिरा "मदिमन्दि-" ॥(उणा-४१२)॥ इतीर ॥३॥ परिस्रवति स्म परिस्रुता ॥४॥ कशादेशे साधु कश्यं ॥५॥ परिस्रवति परिस्रुत् स्त्रीलिङ्ग ॥६॥ मन्यते मधु पुक्लीबलिङ्ग ॥ ७ ॥ कापिश्या नगर्या भव कापिशायनम्, "वल्ह्यूर्दिपर्दिकापिश्याष्टायनण् ॥ ६।३।१४ ॥ ८ ॥ गन्धेन उत्तमा गन्धोत्तमा ॥९॥ कल्यते कल्य स्त्रीक्लीबलिङ्ग ॥ १० ॥ एति भ्राम्यत्यनया इरा, "इण्धाग्भ्याम्-" ॥ ( उणा-३८९ ) ॥ इति कित् र ॥ ११ ॥ परिप्लवते स्म परिप्लुता ॥ १२ ॥ कुत्सिताम्बरस्य नीलवासस इय कादम्बरी स्त्रीक्लीबलिङ्ग, कुत्सितमम्बु यत्र क्षारत्वात् कदम्बु समुद्र ,तमियर्तीति वा, कादम्बे गिरौ अर्यते वा तत्र हि यादवैस्त्यक्ता, पृषोदरादित्वात् ॥ १३ ॥ स्वादू रसोऽस्या स्वादुरसा ॥ १४ ॥ हलिनो बलस्य प्रिया हलिप्रिया ॥ १५ ॥ ५६६ ॥ शुनति वैकल्यमनया शुण्डा पुस्त्रीलिङ्ग, "कुगुहु-" ॥ (उणा-१७०)॥ इति कित् ड ॥१६॥ हलति विलिखत्यङ्ग हाला, ज्वलादित्वात् ण ॥१७॥ हरति इन्द्रियाणि हारहूरम्, "सिन्दूरकच्चूर-" ॥ ( उणा-४३० ) ॥ इत्यूरे निपात्यते, हारहूरा द्राक्षा तद्विकारो वा ॥१८॥ प्रसीदत्यच्छत्वात् प्रसन्ना ॥१९॥ वरुणस्येय वारुणी समुद्रोत्थत्वात् ॥ २० ॥ सुरति उद्दीप्यते सुरा, सूयते परिवास्यते वा "ऋज्यजि-" ॥ (उणा-३८८) ॥ इति कित् रः ॥२१॥ माद्यत्यनया माध्वीकम्, "सृणीकास्तीक-" ॥ ( उणा-५० ) ॥ इतीके निपात्यते, मृद्वीकाया विकारो माध्वी-

कमित्यन्ये ॥ २२ ॥ मदयति मदना ॥ २३ ॥ देवै सृज्यते स्म देवसृष्टा ॥ २४ ॥ कपिशमेव कापिश प्रज्ञादित्वादण् ॥ २५ ॥ अब्धेर्जाता अब्धिजा ॥२६॥५६७॥

मध्वासवे माधवक

मधु माक्षिक तन्मिश्रे आसूयते मध्वासवस्तत्र, मधुनो विकारो माधव, के माधवक ॥ १ ॥

मैरेये शीधुरासवः ।

मीराया देशे भवो गौड्या सुराया विशेषो मैरेय, नद्यादित्वादेयण्, मीरे समुद्रे भव इति वा तत्र ॥१॥ शेरतेऽनेन शीधु ,"शीङो धुक्" ॥ (उणा-७८४) ॥ पुंक्लीबलिङ्गावेतौ ॥ २ ॥ आसूयते आसव ॥ ३ ॥

जगलो मेदको मद्यपङ्क.

भृश गलति जगल , पृषोदरादित्वात् ॥ १ ॥ मेद्यति स्निह्यत्यनेन मेदक , "नाम्नि पुसि च" ॥५।३।१२१॥ इति णक ॥ २ ॥ मद्यस्य पङ्को मद्यपङ्क ॥ ३ ॥

किण्व तु नग्नहू ॥ ५६८ ॥

नग्नहुर्मद्यबीज च

'किण सौत्र , किण्यते किण्वम्, "निघृषि-" ॥ ( उणा-५११ ) ॥ इति किद् व ॥ १ ॥ नग्नेन ह्वयते स्पर्धते सुराच्छादनाभावात् नग्नहू ॥ २ ॥ ५६८ ॥ "केवयु " ॥ (उणा-७४६) ॥ इति निपातनाद् नग्नहु , पुलिङ्गावेतौ ॥३॥ मद्यस्य बीज मद्यबीज माषादलन्यादि ॥ ४ ॥

मद्यसन्धानमासुति ।

आसवोऽभिषव.

मद्यस्य सन्धानं मद्यसन्धानम् ॥ १ ॥ आसूयते आसुति· ॥ २ ॥ आसवनमासवः ॥ ३ ॥ एवमभिषव ॥ ४ ॥

मद्यमण्डकारोत्तमौ समौ ॥ ५६९ ॥

मद्यस्य मण्डो मद्यमण्ड ॥ १ ॥ कारेण क्रियावशाद् उत्तमो मुख्य कारोत्तम सुरार्धे स्वच्छो भाग ॥ २ ॥ ५६९ ॥

गल्वर्कस्तु चषक स्यात् सरकश्चानुतर्षणम् ।

गलन्त्यनेन गल्वर्क , "निष्कतुरुष्क-" ॥ ( उणा- २६ ) ॥ इति के निपात्यते ॥ १ ॥ चषन्ति पिबन्त्यनेन चषक ॥ २ ॥ सरन्त्यनेन सरक , "दृकॄनॄ-" ॥ ( उणा-२७ ) ॥ इत्यक पुंक्लीबलिङ्गावेतौ ॥ ३ ॥ अनुतृष्यन्त्यनेनाऽनुतर्षण पानपात्रम्, अनुतर्षोऽपि । अमरस्तु सरकानुतर्षशब्दौ सुरापरिवेषणपर्यायावाह ॥ ४ ॥

शुण्डा पानमदस्थान

शुन्यते शुण्डा पानमदयोरास्पद कल्यपालगृहैकदेश ॥ १ ॥

मधुवार मधुक्रमा ॥ ५७० ॥

मधुनो वारा अवसरा मधुवारा ॥१॥ मधुन क्रमा मधुक्रमा ॥२॥ ५७० ॥

सपीति सहपान स्यात्

सह पान सपीति ॥ १ ॥ सह पीयते सहपानम् ॥ २ ॥

आपान पानगोष्ठिका ।

आपिबन्त्यस्मिन् आपानम् ॥ १ ॥ पानस्य गोष्ठी आमनबन्ध ॥ २ ॥

उपदंशस्त्ववदशश्चक्षण मद्यपाशनम् ॥ ५७१ ॥

उपदश्यते पानरुचिजननार्थमुपदश ॥ १ ॥ अवदश्यतेऽवदश ॥ २ ॥ चक्ष्यते चक्षणम् ॥ ३ ॥ मद्यपस्य अशन मद्यपाशनम्, खरविशदमभ्यवहार्यम् ॥ ४ ॥ ५७१ ॥

नाडिधम· स्वर्णकार कलादो मुष्टिकश्चस ।

नाडी धमति नाडिधम, "नाडीघटी-" ॥ ५।१।१२० ॥ इति खशि साधु ॥ १ ॥ स्वर्ण करोति अलङ्कारादिरूपतया स्वर्णकार ॥ २ ॥ कला आदत्ते कलाद, कल सुवर्णकालिकाम्–आद्यति आखण्डयति वा, अत एव कल धौत यत्रेति कलधौतम् ॥ २ ॥ मुष्टि कायति मुष्टिक ॥ ४ ॥

तैजसावर्त्तनी मूषा

तैजस हेमादि तदावर्त्यतेऽनया तैजसावर्त्तनी ॥१॥ मूयते मूषा "सुपूसू-" ॥ ( उणा-५४२ ) इति कित् ष ॥ २ ॥

भस्त्रा चर्मप्रसेविका ॥ ५७२ ॥

भस जुहोत्यादौ स्मरन्ति, बभरत्यनया वह्निर्भस्त्रालोहधमनी, "हुयामा-" ॥ ( उणा-४५१ ) इति त्र ॥ १ ॥ चर्मणा प्रसीव्यते चर्मप्रसेविका पुस्त्रीलिङ्ग ॥ २ ॥ ५७२ ॥

आस्फोटनी वेधनिका ।

आस्फोट्यतेऽनया आस्फोटनी ॥ १ ॥ वेध्यतेऽनया मौक्तिकादि वेधनी, के वेधनिका ॥ २ ॥

शाणस्तु निकषः कषः ।

श्यति तनूकरोति शाण पुस्त्रीलिङ्ग, "इणुर्विश-" ॥ (उणा–१८२ ) ॥ इति ण ॥ १ ॥ निकष्यतेऽनेन निकष, "गोचरसचर-" ॥५।३।१३१॥ इति घ ॥ २ ॥ एवं कष ॥ ३ ॥

सदशः स्यात् कङ्कमुखः

संदश्यतेऽनेन तप्तहेमादि सदश ॥१॥ कङ्कस्येव मुखमस्य कङ्कमुख ॥२॥

भ्रमः कुन्द च यन्त्रकम् ॥ ५७३ ॥

भ्रमति भ्रम्यते वा भ्रम ॥ १ ॥ कवते शब्दायते कुन्द पुक्लीबलिङ्ग, "वृतृ-कुसुभ्यो नोऽन्तश्च" ॥ ( उणा–२४० ) ॥ इति द ॥ २ ॥ यन्त्र्यतेऽनेन यन्त्रम्, के यन्त्रकम् ॥ ३ ॥ ५७३ ॥

वैकटिको मणिकार·

विकटा मणय पण्यमस्य वैकटिक ॥ १ ॥ उत्तेजनाद् मणि करोति मणिकार ॥ २ ॥

शौल्विकस्ताम्रकुट्टक· ।

शुल्वघटन शिल्पमस्य शौल्विक ॥ १ ॥ ताम्र कुट्टयति ताम्रकुट्टक ॥ २ ॥

शाङ्खिकः स्यात् काम्बविकः

शङ्खघटनं शिल्पमस्य शाङ्खिक ॥ १ ॥ कम्बुघटन शिल्पमस्य काम्बविक, "शिल्पम्" ॥ ६।४।५३ ॥ इतीकण् "ऋवर्णोवर्णात्-" ॥ ७।३।३७॥ इति लक्ष्यानुरोधाद् इकणइकारस्य लोपो न भवति ॥ २ ॥

तुन्नवायस्तु सौचिकः ॥ ५७४ ॥

तुन्नं विद्ध वयति तुन्नवाय, "आतो डो-" ॥ ५।१।७६ ॥ इत्यत्र वावर्जनात् "कर्मणोऽण्" ॥ ५।१।७२ ॥ इत्यणेव ॥ १ ॥ सूचीवान शिल्पमस्य सौचिक ॥ २ ॥ ५७४ ॥

कृपाणी कर्त्तरी कल्पन्यपि

कल्पते कृपाणी, "कृपिविषि-" ॥ ( उणा–१९१ ) ॥ इत्याणक् ॥ १ ॥ कृत्यतेऽनया कर्त्तरि, "नादिवल्यार्त्ति-" ॥ (उणा–६९८) ॥ इत्यरि·, ङ्या कर्त्तरी ॥ २ ॥ कल्पतेऽनया कल्पनी ॥ ३ ॥

सूची तु सेवनी ।

सूचयति सूचि, "स्वरेभ्य इ·" ॥ (उणा–६०६) ॥ ङया सूची ॥ १ ॥ सीव्यतेऽनया सेवनी ॥ २ ॥

सूचिसूत्र पिप्पलकम्

सूचे सूत्र सूचिसूत्रम् ॥ १ ॥ पिप्पलमेव पिप्पलकम् ॥ २ ॥

तर्कु· कर्त्तनसाधनम् ॥ ५७५ ॥

'कृतैप् वेष्टने' कृत्यते वेष्ट्यते सूत्रमस्मिन् तर्कु पुलिङ्ग, "कृतेस्तर्क् च" ॥ ( उणा–७२३ ) ॥ इत्यु तर्कादेशश्च ॥ १ ॥ कृत्यते कर्त्तन तस्य साधन ॥ २ ॥ ५७५ ॥

पिञ्जन विहननं च तुलस्फोटनकार्मुकम् ।

पिञ्ज्यते हन्यतेऽनेन पिञ्जनम् ॥ १ ॥ विहन्यतेऽनेन विहननम् ॥ २ ॥ तुलस्फोटनाय कार्मुकम् ॥ ३ ॥

सेवन सीवनं स्यूति·

सेव्यते सेवनम् ॥ १ ॥ "ष्ठिवसिवोऽनटि वा" ॥४।२।११२॥ इति दीर्घत्वे सीवनम् ॥ २ ॥ स्त्रिया क्तौ "अनुनासिके च" ॥ ४।१।१०८ ॥ इत्यूटि च स्यूति ॥ ३ ॥

तुल्यौ स्यूतप्रसेवकौ ॥ ५७६ ॥

सीव्यते स्म स्यूत ॥ १ ॥ प्रसीव्यते प्रसेव, के प्रसेवक वस्त्राद्यावपनम् ॥ २ ॥ ५७६ ॥

तन्त्रवाय: कुविन्द: स्यात्

तन्त्रं तन्त्वातनं वयति तन्त्रवाय, तन्तुवायोऽपि ॥१॥ कुं विन्दति कुविन्द· "निगवादेर्नाम्नि-" ॥ ५।१।६१ ॥ इति श ॥ २ ॥

त्रसर: सूत्रवेष्टनम् ।

त्रस्यति वलति त्रसर, "जठर-" ॥ (उणा–४०३) ॥ इति बहुवचनाद् र ॥ १ ॥ सूत्रं वेष्ट्यते वानार्थमत्र सूत्रवेष्टनम् ॥ २ ॥

वाणिर्व्यूति·

वानं वाणि स्त्रीलिङ्ग, "कमिवमि-" ॥ ( उणा–६१८) ॥ इति णि ॥ १ ॥ 'ऊयैङ् तन्तुसन्ताने' विशेषेण ऊयनं व्यूति "स्त्रिया क्ति" ॥ ५।३।९१ ॥ य्वो· "य्वय्-" ॥ ४।४।१२१ ॥ इति यलोप· ॥ १ ॥

वानदण्डो वेमा

वानाय दण्डो वानदण्ड ॥ १ ॥ वयन्त्यनेन वेमा पुंक्लीबलिङ्ग·, "सात्मन्नात्मन्-" ॥ ( उणा–९१६ ) ॥ इति मनि निपात्यते ॥ २ ॥

सूत्राणि तन्तव ॥ ५७७ ॥

सूयते पट एभि सूत्राणि पुंक्लीबलिङ्ग, "सूमूखनि-" ॥ (उणा-४४९) ॥ इति कित् त्र, सूत्र्यते एभिरिति वा ॥ १ ॥ तन्यन्ते इति तन्तव पुंलिङ्ग, "कृसिकमि-" ॥ (उणा-७७३) ॥ इति तुन् ॥ २ ॥ ५७७ ॥

निर्णेजकस्तु रजक

निर्णेनेक्ति क्षालयति निर्णेजक, धावकोऽपि ॥ १ ॥ रजति रजक, "नृत्-खनूरञ्ज-" ॥ ५।१।६५ ॥ इत्यकट्, "अकट्घिनोश्च-" ॥ ४।२।५० ॥ इति नलोप ॥ २ ॥

पादुकाकृत् तु चर्मकृत् ।

पादुका पादत्राणानि करोतीति पादुकाकृत् ॥ १ ॥ चर्म करोति परिशीलयति चर्मकृत् ॥ २ ॥

उपानत् पादुका पादू पन्नद्धा पादरक्षणम् ॥ ५७८ ॥

प्राणहिता

उपनह्यति पादमुपानत् स्त्रीलिङ्ग, क्विपि "गतिकारकस्य नहिवृति-" ॥३।२।८५॥ इति दीर्घ ॥ १ ॥ पादूरेव पादुका "ङयादीदूत के" ॥२।४।१०४॥ इति ह्रस्व ॥ २ ॥ पद्यतेऽनया पादू स्त्रीलिङ्ग, "कसिपदि-" ॥ (उणा-८३५) ॥ इति णिदू ॥ ३ ॥ पदोर्नद्धा पन्नद्धा ॥४॥ पादौ रक्ष्येते अनेन पादरक्षणम्, पादत्राणमपि ॥ ५ ॥ ५७८ ॥ प्राणेभ्यो हिता प्राणहिता ॥ ६ ॥

शेषश्चात्र—पादुकाया पादरथी पादजङ्घ पदत्वरा ।
पादवीथी चपेशीच पादपीठी पदायता ॥

अनुपदीना त्वाबद्धाऽनुपदं हि या ।

अनुपद पदायामेन बद्धा अनुपदीना, "अनुपद बद्धा" ॥ ७ । १ । ९६ ॥ इतीन ॥ १ ॥

नद्ध्री वद्ध्री वरत्रा स्यात्

नह्यतेऽनया नद्ध्री, "नीदाम्व्-" ॥ ५ । २ । ८८ ॥ इति त्रट् ॥ १ ॥ वर्धते दीर्घीभवति चर्मरज्जुत्वात् वद्ध्री पुंस्त्रीलिङ्ग, "भीवृधि-" ॥ (उणा-३८७) ॥ इति र ॥२॥ व्रियतेऽनया वरत्रा, "वृग्नक्षि" ॥ (उणा-४५६) ॥ इति अत्र ॥३॥

आरा चर्मप्रभेदिका ॥ ५७९ ॥

इयर्ति तन्तुरनया आरा, भिदादित्वादङि साधु ॥ १ ॥ चर्म प्रभिनत्ति

चर्मप्रभेदिका चर्मसीवनी ॥ २ ॥ ॥ ५७९ ॥

कुलाल स्यात् कुम्भकारो दण्डभृत् चक्रजीवक ।

कोलति सस्त्यायति कुलाल ,"कुलिपिलि-" ॥ (उणा–४७६) ॥ इति किदाल , कुलानि गृहाणि अलति वा, कु मृद लालयते मृदनाति वा ॥१॥ कुम्भ करोति कुम्भकार ॥ २ ॥ दण्ड बिभर्त्ति दण्डभृत् ॥ ३ ॥ चक्रेण जावति चक्रजीवक ॥ ४ ॥

शाणाजीव शस्त्रमार्जो भ्रमासक्तोऽसिधावक ॥ ५८० ॥

शाणया जीवति शाणाजीव ॥ १ ॥ शस्त्राणि मार्ष्टि शस्त्रमार्ज ॥ २ ॥ भ्रमयन्त्रे आसक्तो भ्रमासक्त. ॥३॥ असीन् धावति शोधयत्यसिधावक ॥४॥५८०॥

धूसरश्चाक्रिकस्तैली स्यात्

धुवति धूसर , "कृधूतनि-" ॥ (उणा–४४०) ॥ इति कित् सर ॥१॥ चक्र पण्यमस्य चाक्रिक ॥ २ ॥ तैलमस्त्यस्य तैली, तिलन्तुदोऽपि ॥ ३ ॥

पिण्याकखलौ समौ ।

पिष्यते पिण्याक स्नुततैल कल्कविशेष , "पिषे पिन्पिण्यौ च" ॥ (उणा–३६) ॥ इत्याक ॥ १ ॥ खन्यते खल , "मृजिखनि-" ॥ ( उणा–४७२) ॥ इति डिदल पुंक्लीबलिङ्गावेतौ ॥ २ ॥

रथकृत् स्थपतिस्त्वष्टा काष्ठतट् तक्षवर्द्धकी ॥ ५८१ ॥

रथ करोति रथकृत् , रथकारोऽपि ॥ १ ॥ स्थापयति स्थपति ॥ २ ॥ त्वक्षति तनूकरोति दारूणि त्वष्टा ॥ ३ ॥ काष्ठ तक्ष्णोति काष्ठतट् ॥ ४ ॥ तक्ष्णोति तक्षा, "उक्षितक्षि-" ॥ (उणा–९००) ॥ इत्वन् ॥ ५ ॥ वर्द्धयति छिनत्ति वर्धकि , "वर्धेरकि " ॥ (उणा–६२४) ॥ ६ ॥ ५८१ ॥

ग्रामायत्तो ग्रामतक्ष

ग्रामस्याऽऽयत्त साधारणस्तक्षा ग्रामतक्ष , "ग्रामकौटात् तक्ष्ण " ॥७।३।१०९॥ इत्यट् समासान्त ॥ १ ॥

कौटतक्षोऽनधीनकः ।

कुट्या शालाया भव कौट स्वतन्त्र स चासौ तक्षा च कौटतक्ष , "ग्रामकौटात् तक्ष्ण " ॥ ७।३।१०९ ॥ इत्यट् समासान्त , नास्ति अधि उपरि इन. स्वामी अस्य अनधीन ॥ १ ॥

वृक्षभित् तक्षणी वासी

वृक्षान् भिनत्ति वृक्षभित् ॥ १ ॥ तक्ष्यतेऽनया तक्षणी ॥ २ ॥ वसति हस्ते वासि, "कृशृकुटि" ॥ (उणा-६१९) ॥ इति णिदि. ङया वासी ॥ ३ ॥

क्रकच करपत्रकम् ॥ ५८२ ॥

क्रामति क्रकच पुक्लीबलिङ्ग, "क्रकचादय" ॥ (उणा-११५) ॥ इत्यचे निपात्यते ॥ १ ॥ करसचार्य शस्त्रपत्र करपत्रम्, करशब्दोच्चारणेन पततीति वा त्रट् ॥ २ ॥ ५८२ ॥

स उद्धनो यत्र काष्ठे काष्ठ निक्षिप्य तक्ष्यते ।

उद्धन्यते काष्ठमस्मिन् उद्धन, "निघोद्घ-" ॥ ५।३।३६ ॥ इत्यलि निपात्यते, काष्ठमुपलक्षण लोहादिरपि । यल्लक्ष्यम्- "लोहोद्धनघनस्कन्धा" इति ॥ १ ॥

वृक्षादनो वृक्षभेदी

वृक्षोऽद्यते छिद्यतेऽनेन शस्त्रकेण वृक्षादन ॥१॥ वृक्षान् भिनत्ति वृक्षभेदी ॥२॥

टङ्क. पाषाणदारक ॥ ५८३ ॥

टङ्क्यते टङ्क पुक्लीबलिङ्ग, हन्यमानष्ट शब्द कायति वा ॥ १ ॥ पाषाण दारयति पाषाणदारक ॥ २ ॥ ५८३ ॥

व्योकार. कर्मारो लोहकार.

विशेषेण ओक समवायमियर्त्ति व्योकार, व्यो[1] इत्यय पर्याय इति भोज ॥१॥ करोति कर्म्मार "कृगो मादिश्च" ॥ ( उणा-४०७ ) ॥ इत्यार, कर्म इयर्त्ति वा ॥ २ ॥ लोह करोति लोहकार ॥ ३ ॥

कूट त्वयोघन ।

कुट्यते हन्यतेऽनेन कूट पुक्लीबलिङ्ग ॥ १ ॥ अयो हन्यतेऽनेन अयोघन ॥ २ ॥

व्रश्चन पत्रपरशु

वृश्चति छिनत्ति व्रश्चन, रम्यादित्वादनट् ॥ १ ॥ पत्राकार पत्राणा वा छेदक परशु पत्रपरशु ॥ २ ॥

ईषीका तूलिकेषिका ॥ ५८४ ॥

ईषति ईषीका, "रुचिऋजि-" ॥ (उणा-४८) ॥ इति ईक ॥ १ ॥ तूल्यते तूलि, "नाम्युपान्त्य-" ॥ (उणा-६०९) ॥ इति कि के तूलिका ॥ २ ॥ ईषति ईषिका काष्ठलोहादिमयी शलाका ॥ ३ ॥ ॥ ५८४ ॥

---

१ अव्ययमेतत् ।

भक्ष्यकार कान्दविक

भक्ष्य खरविशदमभ्यवहार्यं करोति भक्ष्यकार ॥ १ ॥ कन्दु पण्यमस्या कान्दविक, "तदस्य पण्यम्" ॥६।४।५८॥ इतीकण् "ऋवर्णोवर्ण" ॥७।४।७१॥ इत्यादिना लक्ष्यानुरोधादिकणइलोपाभाव, कन्दुना कृत कान्दव तत् पण्यमस्येति वा ॥ २ ॥

कन्दुस्वेदनिके समे ।

कन्दन्त्येना कन्दु पुस्त्रीलिङ्ग, "भृमृतृ-" ॥ (उणा-७१६)॥ इत्यु ॥ १ ॥ स्वेद्यतेऽनया स्वेदनी, के स्वेदनिका ॥ २ ॥

रङ्गाजीवस्तौलिकिकश्चित्रकृच्च

रज्यन्त्येषु रङ्गा वर्णका, तेभ्य आजीवति रङ्गाजीव ॥ १ ॥ तूलिकालिखन शिल्पस्य तौलिकिक ॥ २ ॥ चित्र करोति चित्रकृत, चित्रकरोऽप ॥ ३ ॥

अथ तूलिका ॥ ५८५ ॥

कूचिका

तूलति तूलिका ॥ १ ॥ ५८५ ॥ कूचति कूचिका ॥ २ ॥

चित्रमालेख्य

चीयते चित्रम्, "चिमिदि-" ॥ ( उणा-४५४ ) ॥ इति कित् त्र ॥ १ ॥ आलिख्यते आलेख्यम् ॥ २ ॥

पलगण्डस्तु लेप्यकृत् ।

पलेन मासेनेव मृदादिना गण्डति महन्ति पलगण्ड ॥१॥ लेप्यं करोति लेप्य-कृत्, लेपकोऽपि ॥ २ ॥

पुस्त लेप्यादि कर्म स्यात्

पुंस्यते अभिमर्द्यते मृदत्र पुस्त पुक्लीबलिङ्ग, "शीरी-" ॥ (उणा-२०१) ॥ इति कित् त, 'पुस्तण् आदरे' इत्यस्य वाऽल्, लेप्यमादिरस्य लेप्यादि कर्म ॥१॥

नापितश्चण्डिल. क्षुरी ॥ ५८६ ॥

क्षुरमर्दी दिवाकीर्तिर्मुण्डकोऽन्तावसाय्यपि ।

न आप्यते नापित, "नञ आपे -" ॥ (उणा-२११) ॥ इति इतः ॥ १ ॥ चण्डते चण्डिल, "कल्यनि" ॥ ( उणा-४८१ ) ॥ इतील. ॥ २ ॥ क्षुरोऽस्त्यस्य क्षुरी ॥ ३ ॥ ५८६ ॥ क्षुरेण मर्दयति क्षुरमर्दी ॥ ४ ॥ दिवा कीर्त्यते दिवाकीर्ति,

रात्रौ क्षुरकर्मनिषेधात् ॥ ५ ॥ मुण्डयति मुण्डक ॥ ६ ॥ अन्तमवस्यति अन्तावसायी ॥ ७ ॥

शेषश्चाऽत्र—

नापिते ग्रामणीभण्डिवाहक्षौरिकभाण्डिका ॥ ७ ॥

मुण्डन भद्राकरण वपन परिवापणम् ॥ ५८७ ॥
क्षौर

मुण्ड्यते मुण्डनम् ॥ १ ॥ भद्राक्रियते भद्राकरणम् "मद्रभद्राद् वपने" ॥७।२।१४४॥ इति डाच् ॥ २ ॥ उप्यते वपनम् ॥ ३ ॥ परिवाप्यते परिवापणम् ॥ ४ ॥ ५८७॥ क्षुरस्येद कर्म क्षौरम् ॥ ५ ॥

नाराची त्वेषिण्यां

नरमञ्चति नराद् तस्येय नाराची ॥१॥ इष्यते अन्विष्यते व्रणोऽनया एषणी, "इषोऽनिच्छायाम्" ॥ ५ । ३ । ११२ ॥ इत्यन गौरादित्वात् डी , तत्र ॥ २ ॥

देवाजीवस्तु देवल ।

देवानाजीवति देवाजीव ॥ १ ॥ देवान् लाति देवल , दिव्यतीति वा "मृदिकन्दि-" ॥ ( उणा-४६५ ) ॥ इत्यल ॥ २ ॥

मार्दङ्गिको मौरजिकः

मृदङ्गो वादन शिल्पमस्य मार्दङ्गिक ॥ १ ॥ एव मौरजिक ॥ २ ॥

वीणावादस्तु वैणिक ॥ ५८८ ॥

वीणा वादयति वीणावाद ॥१॥ वीणावादन शिल्पमस्य वैणिक ॥२॥५८८॥

वेणुध्म. स्याद् वैणविक.

वेणु धमति वेणुध्मो वाशिक ॥ १ ॥ वेणुवादन शिल्पमस्य वैणविक , लक्ष्यानुरोधात् "ऋवर्णोवर्ण-" ॥ ७ । ४ । ७१ ॥ इतीकणूइलोपाभाव ॥ २ ॥

पाणिघः पाणिवादकः ।

पाणी हन्तीति पाणिघ , "पाणिघताडघौ शिल्पिनि ॥ ५ । १ । ८९ ॥ इति साधु ॥ १ ॥ पाणी वादयति पाणिवादक ॥ २ ॥

स्यात् प्रातिहारिको मायाकार

प्रतिहरणं व्याजः प्रयोजनमस्य प्रातिहारिकः ॥ १ ॥ मायां करोति मायाकारः ॥ २ ॥

माया तु शाम्बरी ॥ ५८९ ॥

मात्यस्यां विश्वं माया, "स्याच्छा" ॥ (उणा-३५७) ॥ इति यः ॥ १ ॥ शम्बराख्यस्याऽसुरस्य इयं शाम्बरी, शं शृणोति शबरो व्याजस्तस्येयमिति वा ॥ २ ॥ ॥ ५८९ ॥

इन्द्रजालं तु कुहुकं जालं कुसृतिरित्यपि ।

इन्द्रस्य जालमिन्द्रजालम् ॥१॥ कुहयते विस्मापयते कुहुकम्, "मिवमि-" ॥ (उणा-५१) ॥ इत्युकः, कुहकमपि ॥ २ ॥ जालमिव जालम् ॥ ३ ॥ कुत्सिता सृतिः कुसृतिः ॥ ४ ॥

कौतूहलं तु कुतुकं कौतुकं च कुतूहलम् ॥ ५९० ॥

कुतूहलमेव कौतूहलम्, प्रज्ञादित्वादण् ॥ १ ॥ कुभिर्भूमिस्तुद्यतेऽनेन, कुत्सितं तन्यते वा कुतुकम्, "निष्कतुरुष्क-" ॥ ( उणा-२६ ) ॥ इति निपात्यते ॥ २ ॥ कुतुकमेव कौतुकं ॥ ३ ॥ कुत्सितं तोहति कुतूहलम्, "मुरलारल-" ॥ (उणा-४७४ ) ॥ इत्यले निपात्यते, विनोदोऽपि ॥ ४ ॥

व्याधो मृगवधाजीवी लुब्धको मृगयुश्च सः ।

विध्यतीति व्याधः, "तन्व्याधः" ॥ ५ । १ । ६४ ॥ इति णः ॥१॥ मृगवधेनाऽऽजीवति मृगवधाजीवी ॥ २ ॥ लुभ्यति स्म लुब्धः, के लुब्धकः ॥ ३ ॥ मृगान् याति मृगयुः, 'पीमृगमित्र-" ॥ (उणा-७४१) ॥ इति किदुः ॥ ४ ॥

पापर्धिर्मृगयाऽऽखेटो मृगव्याच्छोदने अपि ॥ ५९१ ॥

पापानि ऋध्नुवन्त्यस्यां पापर्द्धिः ॥ १ ॥ मृग्यन्ते प्राणिनोऽस्यां मृगया "मृगयेच्छा-" ॥ ॥ इति साधुः ॥ २ ॥ आखेट्यन्ते उत्त्रास्यन्ते प्राणिनोऽस्मिन् आखेटः ॥ ३ ॥ मृगान् व्ययत्याच्छादयति मृगव्यम् ॥ ४ ॥ आचोद्यन्ते प्राणिनोऽस्मिन् आच्छोदनं पृषोदरादित्वाचस्य छत्वम्, क्लीबलिङ्गावेतौ ॥५॥५९१॥

जालिकस्तु वागुरिकः

जालेन जीवति जालिकः, वेतनादित्वादिकण् ॥ १ ॥ वागुरया चरति वागुरिकः, "चरति" ॥ ६ । ४ । ११ ॥ इतीकण् ॥ २ ॥

वागुरा मृगजालिका ।

वान्ति पतन्ति मृगा अस्या वागुरा मृगबन्धनरज्जु, "श्वशुर-" ॥ (उणा-४२६) ॥ इत्युरे निपात्यते ॥ १ ॥ मृगाणा ग्रहणाय जाल मृगजालिका ॥ २ ॥

शुम्बं वटारको रज्जु शुल्व तन्त्री वटी गुण ॥ ५९२ ॥

शुनति शुम्ब स्त्रीक्लीबलिङ्ग, "तुम्बस्तम्बादय" ॥ (उणा-३२०) ॥ निपात्यते ॥१॥ वव्यते वेष्ट्यते वटार, "द्वारश्रृङ्गार-" ॥ (उणा-४११) ॥ इत्यारे निपात्यते के वटारक ॥ २ ॥ सृज्यते रज्जु स्त्रीलिङ्ग "स्यन्दिसृजिभ्याम्-" ॥ (उणा-७१७) ॥ इत्युप्रत्ययो रज्ज्वादेशश्च ॥ ३ ॥ शलति शुल्वम्, "शल्यलेरुचात" ॥ (उणा-३१९) ॥ इति व ॥४॥ तन्त्रयति धारयति तन्त्रि, "पदिपठि-" ॥ (उणा-६०७) ॥ इति इ ङया तन्त्री, तन्यते इति वा त्रडतात् डी ॥ ५ ॥ वटति वटी स्त्रीलिङ्ग ॥ ६ ॥ गुण्यते अभ्यस्यते गुण ॥ ७ ॥ ॥ ५९२ ॥

धीवरो दाशकैवर्त्तौ

ध्यायति मत्स्यघातं धीवरस्तत्र, "तीवरधीवर-" ॥ (उणा-४४४) ॥ इति वरटि निपात्यते ॥ १ ॥ द्यति मत्स्यान् दाश, "पादावमि" ॥ (उणा-५२७) ॥ इति श ॥ २ ॥ के वर्त्तते केवर्तो मत्स्यादिस्तस्याऽय कैवर्त ॥ ३ ॥

वडिश मत्स्यवेधनम् ।

'वड आग्रहणे सौत्र' वड्यतेऽनेन वडिश स्त्रीक्लीबलिङ्ग, "कुलिकनि-" ॥ (उणा-५३४) ॥ इतीश ॥ १ ॥ मत्स्या वेध्यन्तेऽनेन मत्स्यवेधनम् ॥ २ ॥

आनायस्तु मत्स्यजालं

आनयन्त्यनेन आनाय, "आनायो जालम्" ॥ ५ । ३ । १३६ ॥ इति घञ् ॥ १ ॥ २ ॥

कुवेणी मत्स्यबन्धनी ॥ ५९३ ॥

कुत्सित वेणन्तेऽस्या मत्स्या कुवेणी ॥ १ ॥ मत्स्या बध्यन्तेऽस्या मत्स्यबन्धनी ॥ २ ॥ ५९३ ॥

जीवान्तक शाकुनिकः

जीवान् कपोतादीन् अन्तयति जीवान्तक ॥ १ ॥ शकुनान् हन्ति शाकुनिक, "पक्षिमत्स्यमृगार्थाद् घ्नति" ॥ इति इकण् ॥ २ ॥

वैतंसिकस्तु सौनिक ।

मांसिक. कौटिकश्च

वीतसेन चरति वैतसिक ॥ १ ॥ सूना प्रयोजनमस्य सौनिक ॥ २ ॥ मांसं

पण्यमस्य मासिक ॥ ३ ॥ कूट कूटयन्त्र तेन चरति कौटिक , खट्टिकोऽपि ॥ ४ ॥

अथ सूना स्थानं वधस्य यत् ॥ ५९४ ॥

सुन्वन्त्यस्या सूना, 'सोरू च-" ॥ (उणा–२६३) ॥ इति न , पशूना घात-स्थानम् ॥ १ ॥ ५९४ ॥

स्याद् बन्धनोपकरणं वीतंसो मृगपक्षिणाम् ।

मृगादिबन्धननिमित्तं जालवागुरादिसाधन वितन्यते बन्धाय वीतस पुल्लिङ्ग , "व्यवाभ्या तनेरीच्च वे " ॥ ( उणा–५६५ ) ॥ इति स , वितस्यते वध्यतेऽनेन वा "घञ्युपसर्गस्य-" ॥ ३।२।८६ ॥ इति दीर्घ ॥ १ ॥

पाशस्तु बन्धनग्रन्थि.

पश्यते बध्यतेऽनेन पाश , पान्त्यऽनेन वा, "पादावमि-" ॥ (उणा–५२७) ॥ इति श ॥ १ ॥ मृगादीना बन्धनाय ग्रन्थिर्बन्धनग्रन्थि ॥ २ ॥

अवपातावटौ समौ ॥ ५९५ ॥

अवपतन्ति मृगा अत्रेति अवपात ॥ १ ॥ अव्यन्तेऽनेन अवट , "दिव्य-वि-" ॥ ( उणा–१४२ ) ॥ इत्यट ॥ २ ॥ ५९५ ॥

उन्माथ कूटयन्त्र स्यात्

ऊर्ध्वपातान्मथ्यतेऽनेन उन्माथ ॥ १ ॥ कूटेन छलेन यन्त्र्यते अनेन कूट-यन्त्रम् , पाशयन्त्रमित्येके ॥ २ ॥

विवर्णस्तु पृथग्जन. ।

इतर. प्राकृतो नीच. पामरो बर्बरश्च स ॥ ५९६ ॥

विरुद्धो वर्णोऽस्य विवर्ण वर्णान्तरालत्वात् ॥ १ ॥ पृथग् जनेभ्य पृथग्-जन ॥ २ ॥ एतीति इतर "इणपूभ्या कित्-" ॥ ( उणा–४३८ ) ॥ इति ,तर ॥ ३ ॥ प्रकृतौ भव प्राकृत गुणाऽसंस्कृत ॥ ४ ॥ निम्नमञ्चति नीच ॥ ५ ॥ पायते पामर "जठर-" ॥ ( उणा–४०३ ) ॥ इत्यरे निपात्यते ॥ ६ ॥ वृणोति बर्बर. "कृगॄशृ-" ॥ ( उणा–४४१ ) ॥ इति वरट् ॥ ७ ॥ ५९६ ॥

चण्डालेऽन्तावसाय्यन्तेवासिश्वपचबुक्कसाः ।

निषादप्लवमातङ्गदिवाकीर्तिजनङ्गमाः ॥ ५९७ ॥

चण्डते चण्डाल , "ऋकृमृ-" ॥ ( उणा–४७५ ) ॥ इत्याल चण्डमाल मृषाऽस्येति वा, यद्याडि.–"चण्डमाल मृषा यस्येत्यर्थ शब्दवता मत " इति, तत्र। प्रज्ञाद्याणि चाण्डालोऽपि ॥१॥ अन्तमवस्यत्यन्तावसायी ॥२॥ अन्ते दूरे वसत्यन्तेवासी ॥३॥

अद्धट्ठमलक्खाइं वासाणमणंतईकुमारत्ते ।
तावइअं परिआओ रज्जम्मि अ होंति पन्नरस ॥ ६८ ॥
धम्मस्स कुमारत्त वासाणड्ढाइआइ लक्खाइ ।
तावइअ परिआओ रज्जे पुण हुति पचेव ॥ ६९ ॥
सन्तिस्स कुमारत्त मडलि-चक्किपरिआओ चउसु पि ।
पत्तेअ पत्तेअ वाससहस्साइ पणवीसं ॥ ७० ॥
एमेव य कुन्थुस्स वि चउसु वि ठाणेसु हुन्ति पत्तेअ ।
तेवीस सहस्साइ वरिसाणद्धट्ठमसया य ॥ ७१ ॥
एमेव अरजिणिदस्स चउसु वि ठाणेसु हुन्ति पत्तेअं ।
इगवीस सहस्साइं वासाणं हुन्ति नायव्वा ॥ ७२ ॥
मल्लिस्स वि वाससय गिहवासे सेसय तु परिआओ ।
चउपन्न सहस्साइ नव चेव सयाइं पुन्नाइ ॥ ७३ ॥
अद्धट्ठमा सहस्सा कुमारवासो उ सुव्वयजिणस्स ।
तावइअ परिआओ पन्नरस सहस्स रज्जम्मि ॥ ७४ ॥

---

अर्धाऽष्टमलक्षाणि वर्षाणामनन्तजित्कुमारत्वे ।
तावत्क पर्यायो राज्ये च भवन्ति पञ्चदश ॥ ६८ ॥
धर्मस्य कुमारत्व वर्षाणामर्धतृतीयानि लक्षाणि ।
तावत्क पर्यायो राज्ये पुनर्भवन्ति पञ्चैव ॥ ६९ ॥
शान्ते कुमारत्व मण्डलित्व-चक्रित्वपर्यायश्चतुर्ष्वपि ।
प्रत्येक प्रत्येक वर्षसहस्राणि पञ्चविशति ॥ ७० ॥
एवमेव च कुन्थोरपि चतुर्ष्वपि स्थानेषु भवन्ति प्रत्येकम् ।
त्रयोविंशति सहस्राणि वर्षाणामर्धाष्टमशतानि च ॥ ७१ ॥
एवमेवाऽरजिनेन्द्रस्य चतुर्ष्वपि स्थानेषु भवन्ति प्रत्येकम् ।
एकविशति सहस्राणि वर्षाणा भवन्ति ज्ञातव्यानि ॥ ७२ ॥
मल्लेरपि वर्षशत गृहवासे शेषक तु पर्याय ।
चतुष्पञ्चाशत् सहस्राणि नव चैव शतानि पूर्णानि ॥ ७३ ॥
अर्धाष्टमानि सहस्राणि कुमारवासस्तु सुव्रतजिनस्य ।
तावत्क पर्याय पञ्चदश सहस्राणि राज्ये ॥ ७४ ॥

नमिणो कुमारवासो वाससहस्साइ दुण्णि अद्धं च ।
तावइअ परिआओ पच सहस्साइ रज्जम्मि ॥ ७५ ॥
तिण्णेव य वाससया कुमारवासो अरिट्ठनेमिस्स ।
सत्त य वाससयाइं सामण्णे होइ परिआओ ॥ ७६ ॥
पासस्स कुमारत्त तीस परिआओ सत्तरी होइ ।
तीसा य वद्धमाणे बायालीसा उ परिआओ ॥ ७७ ॥
उसभस्स पुव्वलक्खं पुव्वगूणमजिअस्स त चेव ।
चउरंगूण लक्ख पुणो पुणो जाव सुविहि त्ति ॥ ७८ ॥
सेसाण परिआओ कुमारवासेण सहिअओ भणिओ ।
पत्तेअ पि अ पुव्व सीसाणमणुग्गहट्ठाए ॥ ७९ ॥
छउमत्थकालमित्तो सोहेउं सेसओ उ जिणकालो ।
सव्वाउअ पि इत्तो उसभाईण निसामेह ॥ ८० ॥
चउरासी बिसत्तरि सट्ठी पन्नासमेव लक्खाइं ।
चत्ता तीसा वीसा दस दो एग च पुव्वाण ॥ ८१ ॥

---

नमे कुमारवासो वर्षसहस्राणि द्वे अर्ध च ।
तावत्क पर्याय पञ्च सहस्राणि राज्ये ॥ ७५ ॥
त्रीण्येव वर्षशतानि कुमारवासोऽरिष्टनेमे ।
सप्त च वर्षशतानि श्रामण्ये भवति पर्याय ॥ ७६ ॥
पार्श्वस्य कुमारत्वं त्रिंशत् पर्याय सप्ततिर्भवति ।
त्रिशच्च वर्धमाने द्वाचत्वारिंशत् तु पर्याय ॥ ७७ ॥
ऋषभस्य पूर्वलक्ष पूर्वाङ्गोनमजितस्य तदेव ।
चतुरङ्गोन लक्षं पुन. पुन यावत् सुविधिरिति ॥ ७८ ॥
शेषाणा पर्याय कुमारवासेन सहितो भणित ।
प्रत्येकमपि च पूर्व शिष्याणामनुग्रहार्थम् ॥ ७९ ॥
छद्मस्थकालमात्र शोधयित्वा शेषस्तु जिनकाल ।
सर्वायुरपि इत ऋषभादीना निशमयत ॥ ८० ॥
चतुरशीतिर्द्वासप्तति षष्टि· पञ्चाशदेव लक्षाणि ।
चत्वारिंशत् त्रिंशद् विंशतिर्दश द्वे एक च पूर्वाणाम् ॥ ८१ ॥

---

१ इय तु गाथा पूर्वमागता पञ्चाशत्संख्यावती ।

चउरासीई बावत्तरी अ सट्ठी अ होइ वासाणं ।
तीसा य दस य एगं च एवमेए सयसहस्सा ॥ ८२ ॥
पचाणउई सहस्सा चउरासीई अ पञ्चवन्ना य ।
तीसा य दसग एग सय च बावत्तरी चेव ॥ ८३ ॥
निव्वाणमन्तकिरिआ सा चउदसमेण पढमनाहस्स ।
सेसाण मासिएणं वीरजिणिन्दस्स छट्ठेण ॥ ८४ ॥
अट्ठावय-चपु-ज्जयन्त-पावा-सम्मेअसेलसिहरेसु ।
उसभ वसुपुज्ज नेमी वीरो सेसा य सिद्धिगया ॥ ८५ ॥
एगो य भयव वीरो तित्तीसाइ सह निव्वुओ पासो ।
छत्तीसेहि पंचहि सएहिं नेमी उ सिद्धिगओ ॥ ८६ ॥
पञ्चहि समणसएहि मल्ली सन्ती उ नवसएहि तु ।
अट्ठसएण धम्मो सयेहि छहि वासुपुज्जजिणो ॥ ८७ ॥
सत्तसहस्साणतइ जिणस्स विमलस्स छ सहस्साइ ।
पच सयाइ सुपासे पउमाभे तिण्णि अट्ठ सया ॥ ८८ ॥

---

चतुरशीतिर्द्वासप्ततिश्च षष्टिश्च भवति वर्षाणाम् ।
त्रिशच्च दश चैक चैवमेते शतसहस्रा ॥ ८२ ॥
पञ्चनवति सहस्राणि चतुरशीतिश्च पञ्चाशत् च ।
त्रिशच्च दशकमेक शत च द्वासप्ततिश्चैव ॥ ८३ ॥
निर्वाणमन्तक्रिया सा चतुर्दशकेन प्रथमनाथस्य ।
शेषाणा मासिकेन वीरजिनेन्द्रस्य षष्ठेन ॥ ८४ ॥
अष्टापद-चम्पो ज्जयन्त-पापा सम्मेतशैलशिखरेषु ।
ऋषभो वासुपूज्यो नेमी वीर शेषाश्च सिद्धिगता ॥ ८५ ॥
एकश्च भगवान् वीरस्त्रयस्त्रिशता सह निर्वृत पार्श्व ।
षट्त्रिशै पञ्चभि शतैर्नेमिस्तु सिद्धिगत ॥ ८६ ॥
पञ्चभि श्रमणशतैर्मल्लि शान्तिस्तु नवशतैस्तु ।
अष्टशतैर्धर्म शतै षड्भिर्वासुपूज्यजिन. ॥ ८७ ॥
सप्त सहस्राण्यनन्तजित् जिनस्य विमलस्य षट् सहस्राणि ।
पञ्च शतानि सुपार्श्वे पद्माभे त्रीण्यष्ट शतानि ॥ ८८ ॥

---

१ षड्भिरुपवासैरित्यर्थ ।

दसहि सहस्सेहि उसभो सेसा उ सहस्सपरिवुडा सिद्धा ।
कालाइ जं न भणिअ पढमणुओगाओ त नेअ ॥ ८९ ॥
इच्चेवमाइ सव्व जिणाण पढमाणुओगओ नेअ ।
ठाणासुन्नत्थ पुण भणिअं पगय अओ वुच्छ ॥ ९० ॥
उसभजिणसमुट्ठाणं उट्ठाण ज तओ मरीइस्स ।
सामाइअस्स एसो ज पुव्व निग्गमो हिगओ ॥ ९१ ॥
चित्तबहुलट्ठमीए चउहि सहस्सेहि सो उ अवरण्हे ।
सीआ सुदसणाए सिद्धत्थवणम्मि छट्ठेण ॥ ९२ ॥
चउरो साहस्सीओ लोअं काऊण अप्पणा चेव ।
जं एस जहा काही तं तह अम्हे वि काहामो ॥ ९३ ॥
उसभो वरवसभगई घित्तूणमभिग्गहं परमघोरं ।
वोसट्ठचत्तदेहो विहरइ गामाणुगामं तु ॥ ९४ ॥
न वि ताव जणो जाणइ का भिक्खा केरिसा व भिक्खयरा[१] ।
ते भिक्खमलभमाणा वणमज्झे तावसा जाया ॥ ९५ ॥

---

दशभि सहस्रैर्वृषभः शेषास्तु सहस्रपरिवृता सिद्धा ।
कालादि यद् न भणितं प्रथमानुयोगाद् तद् ज्ञेयम् ॥ ८९ ॥
इत्येवमादि सर्वं जिनाना प्रथमानुयोगतो ज्ञेयम् ।
स्थानाऽशुन्यार्थं पुनर्भणितं प्रकृतमतो वक्ष्यामि ॥ ९० ॥
ऋषभजिनसमुत्थानमुत्थान यत् ततो मरीचे ।
सामायिकस्यैषो यत् पूर्वं निर्गमोऽधिकृत ॥ ९१ ॥
चैत्रबहुलाऽष्टम्या चतुर्भि सहस्रै स त्वपराह्णे ।
शिबिकाया सुदर्शनाया सिद्धार्थवने षष्ठेन ॥ ९२ ॥
चत्वारि सहस्राणि लोच कृत्वाऽऽत्मनैव ।
यदेषो यथा करिष्यति तत् तथा वयमपि करिष्याम ॥ ९३ ॥
वृषभो वरवृषभगतिर्गृहीत्वाऽभिग्रह परमघोरम् ।
व्युत्सृष्टत्यक्तदेहो विहरति ग्रामानुग्रामं तु ॥ ९४ ॥
नाऽपि तावद् जनो जानाति का भिक्षा कीदृशा वा भिक्षाचरा[१] ।
ते भिक्षामलभमाना वनमध्ये तापसा जाताः ॥ ९५ ॥

---

१ ख, वसभसम-

नमि-विनमीणं जायण नागिन्दो विज्जदाण वेअड्ढे ।
उत्तरदाहिणसेढी सट्ठी पन्नास नगराइं ॥ ९६ ॥
भयवं अदीणमणसो संवच्छरमणसिओ विहरमाणो ।
कन्नाहिं निमन्तिज्जइ वच्छाभरणासणेहि च ॥ ९७ ॥
संवच्छरेण भिक्खा लद्धा उसभेण लोगनाहेण ।
सेसेहि बीअदिवसे लद्धाउ पढमभिक्खाउ ॥ ९८ ॥
उसभस्स उ पारणए इक्खुरसो आसि लोगनाहस्स ।
सेसाणं परमन्नं अमयरसरसोवमं आसि ॥ ९९ ॥
घुट्ठं च अहोदाणं दिव्वाणि अ आहयाणि तूराणि ।
देवा य संनिवइआ वसुहारा चेव वुट्ठा य ॥ १०० ॥
गयउर सिज्जसिक्खुरसदाण वसुहार पेढ गुरुपूआ ।
तक्खसिलायलगमण बाहुबलिनिवेअण चेव ॥ १०१ ॥
हत्थिणपुरं अउज्झा सावत्थी तह य चेव साकेअ ।
विजयपुर बभथलयं पाडलिसडं पउमसंडं ॥ १०२ ॥

---

नमि-विनम्योर्याचना नागेन्द्रो विद्यादानं वैताढ्ये ।
उत्तरदक्षिणश्रेण्यो षष्टि पञ्चाशद् नगराणि ॥ ९६ ॥
भगवानदीनमना संवत्सरमनशितो विहरमाण ।
कन्याभिर्निमन्त्र्यते वस्त्राभरणाऽऽसनैश्च ॥ ९७ ॥
सवत्सरेण भिक्षा लब्धा वृषभेण लोकनाथेन ।
शेषैर्द्वितीयदिवसे लब्धा प्रथमभिक्षा ॥ ९८ ॥
ऋषभस्य तु पारणे इक्षुरस आसीद् लोकनाथस्य ।
शेषाणा परमान्नममृतरसरसोपममासीत् ॥ ९९ ॥
घुष्ट चाऽहोदान दिव्यानि चाऽऽहतानि तूर्याणि ।
देवाश्च सनिपतिता वसुधारा चैव वृष्टा च ॥ १०० ॥
गजपुरं श्रेयांसेक्षुरसदान वसुधारा पीठ गुरुपूजा ।
तक्षशिलातलगमनं बाहुबलिनिवेदन चैव ॥ १०१ ॥
हस्तिनापुरमयोध्या श्रावस्ती तथा च चैव साकेतम् ।
विजयपुर ब्रह्मस्थलकं पाटलिखण्डं पद्मखण्डम् ॥ १०२ ॥

सेअपुरं रिट्ठपुरं सिद्धत्थपुर महापुरं चेव ।
धन्नकर वद्धमाणं सोमणसं मदिरं चेव ॥ १०३ ॥
चक्कपुरं रायपुरं मिहिला रायगिहमेव बोधव्व ।
वीरपुर बारवई कोअगड कुल्लयग्गामो ॥ १०४ ॥
एएसु पढमभिक्खा लद्धाओ जिणवरेहि सव्वेहि ।
दिन्नाउ जेहि पढम तेसि नामाणि वुच्छामि ॥ १०५ ॥
सिज्जस बभदत्ते सुरिन्ददत्ते अ इददत्ते अ ।
पउमे अ सोमदेवे महिद तह सोमदत्ते अ ॥ १०६ ॥
पुस्से पुणव्वसू पुण नन्द सुनन्दे जए अ विजए अ ।
तत्तो अ धम्मसीहे सुमित्त तह वग्घसीहे य ॥ १०७ ॥
अपराजिअ विससेणे वीसइमे होइ बभदत्ते अ ।
दिन्ने वरदिन्ने पुण धन्ने बहुले अ बोधव्वे ॥ १०८ ॥
एए कयजलिउडा भत्तिबहुमाणसुक्कलेसागा ।
तक्कालपहट्ठमणा पडिलाभेसुं जिणवरिन्दे ॥ १०९ ॥

---

श्रेय पुर रिष्टपुर सिद्धार्थपुर महापुर चैव ।
धान्यकर वर्धमान सौमनस मन्दिर चैव ॥ १०३ ॥
चक्रपुर राजपुरं मिथिला राजगृहमेव बोद्धव्यम् ।
वीरपुर द्वारवती कोपकर कोल्लकग्राम ॥ १०४ ॥
एतेषु प्रथमभिक्षा लब्धा जिनवरै सर्वै ।
दत्ता यै प्रथम तेषा नामानि वक्ष्यामि ॥ १०५ ॥
श्रेयासो ब्रह्मदत्त सुरेन्द्रदत्तश्चेन्द्रदत्तश्च ।
पद्मश्च सोमदेवो महेन्द्रस्तथा सोमदत्तश्च ॥ १०६ ॥
पुष्य पुनर्वसु पुनर्नन्द सुनन्दो जयश्च विजयश्च ।
ततश्च धर्मसिह सुमित्रस्तथा व्याघ्रसिहश्च ॥ १०७ ॥
अपराजितो विश्वक्सेनो विंशतितमो भवति ब्रह्मदत्तश्च ।
दत्तो वरदत्त पुनर्धन्यो बहुलश्च बोद्धव्य ॥ १०८ ॥
एते कृताञ्जलिपुटा भक्तिबहुमानशुक्लेश्याका ।
तत्कालप्रहृष्टमनस प्रतिलाभयाचक्रिरे जिनवरेन्द्रान् ॥ १०९ ॥

सव्वेहि पि जिणेहि जहिअं लद्धाउ पढमभिक्खाओ ।
तहिअं वसुहाराओ वुट्ठाओ पुप्फवुट्ठीओ ॥ ११० ॥
अद्धतेरसकोडी उक्कोसा तत्थ होइ वसुहारा ।
अद्धतेरसलक्खा जहन्निआ होइ वसुहारा ॥ १११ ॥
सव्वेसि पि जिणाणं जेहि दिन्नाओ पढमभिक्खाओ ।
ते पयणुपिम्मदोसा दिव्ववरपरक्कमा जाया ॥ ११२ ॥
केई तेणेव भवेण निव्वुआ सव्वकम्मउम्मुक्का ।
अन्ने तइअभवेणं सिज्झिस्संति जिणाणं सगासे ॥ ११३ ॥
कल्लं सव्विड्ढीए पूएमह दट्ठु धम्मचक्कं तु ।
विहरइ सहस्समेगं छउमत्थो भारहे वासे ॥ ११४ ॥
बहली अंडबइल्ला जोणगविसओ सुवन्नभूमी अ ।
आहिडिआ भगवया उसभेणं तवं चरंतेण ॥ ११५ ॥
बहली य जोणगा पल्हगा य जे भगवया समणुसिट्ठा ।
अन्ने अ मिच्छजाई ते तइआ भद्दगा जाया ॥ ११६ ॥

---

सर्वैरपि जिनैर्यत्र लब्धा प्रथमभिक्षा ।
तत्र वसुधारा वृष्टा पुष्पवृष्टय ॥ ११० ॥
अर्धत्रयोदशकोटिरुत्कृष्टा तत्र भवति वसुधारा ।
अर्धत्रयोदशलक्षा जघन्या भवति वसुधारा ॥ १११ ॥
सर्वेषामपि जिनाना यैर्दत्ता प्रथमभिक्षा ।
ते प्रतनुप्रेमदोषा दिव्यवरपराक्रमा जाता ११२ ॥
केचिन् तेनैव भवेन निर्वृता सर्वकर्मउन्मुक्ता ।
अन्ये तृतीयभवेन सेत्स्यन्ति जिनाना सकाशे ॥ ११३ ॥
कल्य सर्वर्ध्या पूजयाम्यह दृष्ट्वा धर्मचक्रं तु ।
विहरति सहस्रमेक छद्मस्थो भारते वर्षे ॥ ११४ ॥
बहली अण्डबइल्ला योनकविषय सुवर्णभूमिश्च ।
आहिण्डिता भगवता वृषभेण तपश्चरता ॥ ११५ ॥
बलही च योनका पल्हकाश्च ये भगवता समनुशिष्टा ।
अन्ये च मिथ्यादृष्टयस्ते तदा भद्रका जाता ॥ १२६ ॥

---

१ क, जिणसगासे ।

तित्थयराणं पढमो उसभसिरी विहरिओ निरुवसग्गं ।
अट्ठावओ नगवरो अग्गभूमी जिणवरस्स ॥ ११७ ॥
छउमत्थपरिआओ वाससहस्सं तओ पुरिमताले ।
नग्गोहस्स य हिट्ठा उप्पन्नं केवलं नाणं ॥ ११८ ॥
फग्गुणबहुले इक्कारसीइ अह अट्ठमेण भत्तेण ।
उप्पन्नम्मि अणंते महव्वया पंच पन्नवए ॥ ११९ ॥
उप्पन्नम्मि अणंते नाणे जरमरणविप्पमुक्कस्स ।
तो देवदाणविन्दा करिन्ति महिमं जिणिन्दस्स ॥ १२०
उज्जाणपुरिमताले पुरीविणीआइ तत्थ नाणवरं ।
चक्कुप्पया य भरहे निवेअणं चेव दुण्हं पि ॥ १२१ ॥
आउहवरसालाए उप्पन्नं चक्करयण भरहस्स ।
जक्खसहस्सपरिवुडं सव्वरयणामयं चक्कं ॥ १२२ ॥
तायम्मि पूइए चक्कं पूइअं पूअणारिहो ताओ ।
इहलोइअं तु चक्कं परलोअसुहावहो ताओ ॥ १२३ ॥

तीर्थकराणा प्रथम श्रीऋषभो विहृत्य निरुपसर्गम् ।
अष्टापदो नगवरोऽग्रभूमिर्जिनवरस्य ॥ ११७ ॥
छद्मस्थपर्यायो वर्षसहस्र तत पुरिमताले ।
न्यग्रोधस्य चाऽधस्ताद् उत्पन्न केवल ज्ञानम् ॥ ११८ ॥
फाल्गुनबहुले एकादश्यामथाऽष्टमेन भक्तेन ।
उत्पन्नेऽनन्ते महाव्रतानि पञ्च प्रज्ञापयति ॥ ११९ ॥
उत्पन्नेऽनन्ते ज्ञाने जरामरणविप्रमुक्तस्य ।
ततो देवदानवेन्द्रा कुर्वन्ति महिमान जिनेन्द्रस्य ॥ १२० ॥
उद्यानपुरिमताले पुरीविनीताया तत्र ज्ञानवरम् ।
चक्रोत्पादश्च भरते निवेदनं चैव द्वयोरपि ॥ १२१ ॥
आयुधवरशालायामुत्पन्न चक्ररत्न भरतस्य ।
यक्षसहस्रपरिवृत सर्वरत्नमय चक्रम् ॥ १२२ ॥
ताते पूजिते चक्र पूजितं पूजनार्हस्तात ।
इहलौकिकं तु चक्रं परलोकसुखावहस्तात ॥ १२३ ॥

१ क,- भरह- ।

सह मरुदेवीइ निग्गओ कहणं पवज्ज उसभसेणस्स ।
बंभीमरीइदिक्खा सुन्दरिओरोह सुअदिक्खा ॥ १२४ ॥
पच य पुत्तसयाइं भरहस्स य सत्त नत्तुअसयाइं ।
सयेराह पव्वइआ तम्मि कुमारा समोसरणे ॥ १२५ ॥
भवणवई वाणमन्तर जोइसवासी विमाणवासी अ ।
सव्विड्ढीइ सपरिसा कासी नाणुप्पयामहिमं ॥ १२६ ॥
दठ्ठूण कीरमाणिं महिमं देवेहिं खत्तिओ मरीई ।
सम्मत्तलद्धबुद्धी धम्मं सोऊण पव्वइओ ॥ १२७ ॥
मागह-वरदाम-पभास-सिंधु-खंडप्पवाय-तमिसगुहा ।
सर्ट्ठि वाससहस्से उअविउं आगओ भरहो ॥१२८ ॥
मागहमाईविजयो सुन्दरिपव्वज्ज बारसभिसेओ ।
आणवण भाउआणं समुसरणे पुच्छ दिट्ठन्तो ॥ १२९ ॥
बाहुबलिकोवकरणं निवेअण चक्किदेवयाकहण ।

---

सह मरुदेव्या विर्गतः कथनं प्रव्रज्या ऋषभसेनस्य ।
ब्राह्मीमरीचिदीक्षा सुन्दर्यवरोध सुतदीक्षा ॥ १२४ ॥
पञ्च च पुत्रशतानि भरतस्य च सप्त नप्तृकशतानि ।
शीघ्रं प्रव्रजितास्तस्मिन् कुमारा समवसरणे ॥ १२५ ॥
भवनपतयो वानव्यन्तरा ज्योतिर्वासिनो विमानवासिनश्च ।
सर्वर्ध्या सपरिषदोऽकार्षुर्ज्ञानोत्पादमहिमानम् ॥ १२६ ॥
दृष्ट्वा क्रियमाणं महिमान देवै क्षत्रियो मरिचि ।
सम्यक्त्वलब्धबुद्धिर्धर्मं श्रुत्वा प्रव्रजित ॥ १२७ ॥
मागध-वरदाम-प्रभास-सिन्धु-खण्डप्रपात-तमिस्रगुहा ।
षष्टिं वर्षसहस्रानुदपेत्याऽऽगतो भरत ॥ १२८ ॥
मागधादिविजय सुन्दरीप्रव्रज्या द्वादशाऽभिषेक ।
आज्ञापनं भ्रातॄणा समवसरणे प्रश्नो दृष्टान्त ॥ १२९ ॥
बाहुबलिकोपकरण निवेदनं चक्रि-देवताकथनम् ।

---

१ देश्योऽय ध्वनि॰ शीघ्रवाची, तथाहि– देशीनाममालायामष्टमवर्गे एकादश-श्लोके,"सपत्थिअ-सयराहुया सिग्घे" इति श्रीप्रभुहेमचन्द्रभट्टारकाः ।

मरिई वि सामिपासे विहरइ तवसंजमसमग्गो ॥ १३७ ॥
सामाइअमाइअ इक्कारसमाउ जाव अगाओ ।
उज्जुत्तो भत्तिगओ अहिज्जिओ सो गुरुसगासे ॥ १३८ ॥
अह अन्नया कयाइ गिम्हे उण्हेण परिगयसरीरो ।
अन्हाणएण चइओ इम कुलिंग विचिन्तेइ ॥ १३९ ॥
मेरुगिरीसमभारे न हु वि समत्थो मुहुत्तमवि वोढुं ।
सामन्नए गुणे गुणरहिओ ससारमणुकखी ॥ १४० ॥
एवमणुचितयतस्स तस्स निअगा मई समुप्पन्ना ।
लद्धो मए उवाओ जाया मे सासया बुद्धी ॥ १४१ ॥
समणा तिदंडविरया भगवन्तो निहुअसकुइअअंगा ।
अजिइदिअदडस्स उ होउ तिदड मह चिध ॥ १४२ ॥
लोइदिअमुंडा संजया ओ अहयं खुरेण ससिहो अ ।
थूलगपाणिवहाओ वेरमण मे सया होउ ॥ १४३ ॥
निक्किचणा य समणा अकिचणा मज्झ किचण होउ ।

---

मरिचिरपि स्वामिपार्श्वे विहरति तप सयमसमग्र ॥ १३७ ॥
सामायिकादिकमेकादशाद् यावद् अङ्गात् ।
उद्युक्तो भक्तिगतोऽधीतवान् स गुरुसकाशे ॥ १३८ ॥
अथाऽन्यदा कदाचित् ग्रीष्मे उष्णेन परिगतशरीर ।
अस्नानेन त्याजित इद कुलिङ्ग विचिन्तयति ॥ १३९ ॥
मेरुगिरिसमभारान् न खल्वपि समर्थो मुहूर्तमपि वोढुम् ।
श्रामण्यकान् गुणान् गुणरहित ससारस्याऽनुकाङ्क्षी ॥ १४० ॥
एवमनुचिन्तयतस्तस्य निजका मति समुत्पन्ना ।
लब्धो मयोपायो जाता मम शाश्वता बुद्धि ॥ १४१ ॥
श्रमणास्त्रिदण्डविरता भगवन्तो निभृतसकुचिताङ्गा ।
अजितेन्द्रियदण्डस्य तु भवतु त्रिदण्ड मम चिह्नम् ॥ १४२ ॥
लोचेन्द्रियमुण्डा सयतास्तु अह क्षुरेण सशिखश्च ।
स्थूलकप्राणवधात् विरमण मम सदा भवतु ॥ १४३ ॥
निष्किञ्चनाश्च श्रमणा अकिञ्चना मम किञ्चनं भवतु ।

---

१ ख, गत्ता, इत्यपि ।

सीलसुगंधा समणा अहयं सीलेण दुग्गन्धो ॥ १४४ ॥
ववगयमोहा समणा मोहच्छन्नस्स छत्तय होउ ।
अणुवाणहा य समणा मज्झ तु उवाणहे हुन्तु ॥ १४५ ॥
सुक्कबरा य समणा निरम्बरा मुज्झ धाउरत्ताइ ।
हुन्तु इमे वत्थाइं अरिहामि कसायकलुसमई ॥ १४६ ॥
वज्जतऽवज्जभीरू बहुजीवसमाउल जलारंभ ।
होउ मम परिमिएण जलेण ण्हाणं च पिअण च ॥ १४७ ॥
एवं सो रुइअमई निअगमइविगप्पिअं इम लिंग ।
तद्धिअहेउसुजुत्त पारिवज्जं तओ कासी ॥ १४८ ॥
अह तं पागडरूवं दट्ठु पुच्छेइ बहुजणो धम्मं ।
कहइ जईणं तो सो विआलणे तस्स परिकहणा ॥ १४९ ॥
धम्मकहाअक्खित्ते उवट्ठिए देइ भगवओ सीसे ।
गामनगरागराई विहरइ सो सामिणा सद्धि ॥ १५० ॥
समुसरण भत्त उग्गह अंगुलि झय सक्क सावया अहिआ ।

---

शीलसुगन्धा श्रमणा अहं शीलेन दुर्गन्ध ॥ १४४ ॥
व्यपगतमोहा श्रमणा मोहच्छन्नस्य छत्रक भवतु ।
अनुपानहश्च श्रमणा मम तूपानहौ भवताम् ॥ १४५ ॥
शुक्लाम्बराश्च श्रमणा निरम्बरा मम धातुरक्तानि ।
भवन्त्विमानि वस्त्राण्यर्हामि कषायकलुषमति ॥ १४६ ॥
वर्जयन्त्यवद्यभीरवो बहुजीवसमाकुलं जलारम्भम् ।
भवतु मम परिमितेन जलेन स्नान च पानं च ॥ १४७ ॥
एव स रुचितमतिर्निजकमतिविकल्पितमिदं लिङ्गम् ।
तद्धितहेतुसुयुक्तं प्रारिव्रज्य ततोऽकार्षीत् ॥ १४८ ॥
अथ तं प्रकटरूपं दृष्ट्वा पृच्छति बहुजनो धर्मम् ।
कथयति यतीना तत स विचारणे तस्य परिकथना ॥ १४९ ॥
धर्मकथाऽऽक्षिप्तान् उपस्थितान् ददाति भगवत. शिष्यान् ।
ग्रामनगराऽऽकरादीन् विहरति स स्वामिना सार्धम् ॥ ॥१५० ॥
समवसरण भक्तोऽवग्रहोऽङ्गुलिर्ध्वज. शक्र. श्रावका आधिका ।

---

१ ख, पवत्तेइ, इत्येवमपि ।

जेआ वड्ढइ कागिणिलंछण अणु सज्जणा अट्ठ ॥ १५१ ॥
राया आइच्चजसे महाजसे अइबले अ बलभद्दे ।
बलविरिअ कत्तविरिअे जलविरिअे दडविरिअे अ ॥ १५२ ॥
एएहिं अद्धभरह सयलं भुत्तं सिरेण धरिओ अ ।
पवरो जिणिन्दमउडो सेसेहिं न चाइओ वोढुं ॥ १५३ ॥
अस्सावगपडिसेहो छट्ठे छट्ठे अ मासि अणुओगो ।
कालेण य मिच्छत्त जिणन्तरे साहुवुच्छेओ ॥ १५४ ॥
दाणं च माहणाणं वेए कासी अ पुच्छ निव्वाण ।
कुडा थूभ जिणघरे कविलो भरहस्स दिक्खा य ॥ १५५ ॥
पुणरवि अ समोसरणे पुच्छीअ जिण तु चक्किणो भरहे ।
अप्पुट्ठो अ दसारे तित्थयरो को इह भरहे ? ॥ १५६ ॥
जिण-चक्कि-दसाराण वण्ण-पमाणाइ नामगुत्ताइं ।
आउ पुर माइ-पिअरो परिआय गइं च साहीअ ॥ १५७ ॥
जारिसया लोअगुरू भरहे वासम्मि केवली तुम्हे ।

---

जेता वर्धते काकणीलाञ्छनमनु सज्जनानष्टौ ॥ १५१ ॥
राजाऽऽदित्ययशा महायशा अतिबलश्च बलभद्र ।
बलवीर्यं कार्तवीर्यो जलवीर्यो दण्डवीर्यश्च ॥ १५२ ॥
एतैरर्धभरत सकलं भुक्त शिरसा धृतश्च ।
प्रवरो जिनेन्द्रमुकुट शेषैर्न शकितो वोढुम् ॥ १५३ ॥
अश्रावकप्रतिषेध षष्ठे षष्ठे च मासेऽनुयोग ।
कालेन च मिथ्यात्व जिनान्तरे साधुव्यवच्छेद ॥ १५४ ॥
दान च ब्राह्मणाना वेदानकार्षीच्च प्रश्नो निर्वाणम् ।
कुण्डानि स्तूपा जिनगृह कपिलो भरतस्य दीक्षा च ॥ १५५ ॥
पुनरपि च समवसरणेऽप्राक्षिद् जिनं तु चक्रवर्तिनो भरते ।
आपृष्टश्च दशार्हान् तीर्थंकर क इह भरते ? ॥ १५६ ॥
जिन चक्रि दशार्हाणा वर्ण-प्रमाणानि नामगोत्राणि ।
आयु पुरं माता-पितरौ पर्यायं गतिं चाचीकथम् ॥ १५७ ॥
यादृशा लोकगुरवो भरते वर्षे केवलिनो यूयम् ।

---

१ ख, जिणसन्तिओ य, एतदपि ।

एरिसया कइ अन्ने ताया ! होहिन्ति तित्थयरा ? ॥ १५८ ।
अह भणइ जिणवरिन्दो भरहे वासम्मि जारिसो उ अहं ।
एरिसया तेवीस अन्ने होहिन्ति तित्थयरा ॥ १५९ ॥
होहिइ अजिओ सभव अभिणन्दण सुमइ सुप्पह सुपासो ।
ससि पुप्फदन्त सीअल सिज्जसो वासुपूज्जो अ ॥१६०॥
विमलमणतइ धम्मो सन्ती कुन्थू अरो अ मल्ली अ ।
मुणिसुव्वय नमि नेमी पासो तह वद्धमाणो अ ॥१६१॥
अह भणइ नरवरिन्दो भरहे वासम्मि जारिसो उ अहं ।
तारिसया कइ अन्ने ताया ! होहिन्ति रायाणो ? ॥ १६२ ॥
अह भणइ जिणवरिन्दो जारिसओ त नरिंदसद्दूलो ।
एरिसया एक्कारस अन्ने होहिति रायाणो ॥ १६३ ॥
होही सगरो मघवं सणकुमारो य रायसद्दूलो ।
सती कुथू य अरो हवइ सुभूमो य कोरव्वो ॥१६४ ॥
नवमो य महापउमो हरिसेणो चेव रायसद्दूलो ।

---

एतादृशा कति अन्ये ताता ! भविष्यन्ति तीर्थंकरा ? ॥ १५८ ॥
अथ भणति जिनवरेन्द्रो भरते वर्षे यादृशस्त्वहम् ।
एतादृशास्त्रयोविंशतिरन्ये भविष्यन्ति तीर्थंकरा ॥ १५९ ॥
भविष्यत्यजित सभवोऽभिनन्दन सुमति सुप्रभ सुपार्श्वं ।
शशी पुष्पदन्त शीतल श्रेयासो वासुपूज्यश्च ॥ १६० ॥
विमलोऽनन्तजिद् धर्म शान्ति कुन्थुररश्च मल्लिश्च ।
मुनिसुव्रतो नमिर्नेमि पार्श्वस्तथा वर्धमानश्च ॥ १६१ ॥
अथ भणति नरवरेन्द्रो भरते वर्षे यादृशस्त्वहम् ।
तादृशा कत्यन्ये ताता ! भविष्यन्ति राजान ? ॥ १६२ ॥
अथ भणति जिनवरेन्द्रो यादृशस्त्वं नरेन्द्रशार्दूल ।
एतादृशा एकादशाऽन्ये भविष्यन्ति राजान ॥ १६३ ॥
भविष्यति सगरो मघवा सनत्कुमारश्च राजशार्दूल ।
शान्ति कुन्थुश्चाऽरो भवति सुभूमश्च कौरव्य ॥ १६४ ॥
नवमश्च महापद्म हरिषेणश्चैव राजशार्दूल. ।

जयनामो अ नरवई बारसमो बंभदत्तो अ ॥१६५॥
होहिंति वासुदेवा नव अन्ने नील-पीअकोसिज्जा ।
हल-मुसल-चक्कजोही सताल-गरुडज्झया दो दो ॥१६६॥
तिविट्ठो य दुविट्ठो य सयंभु पुरिसुत्तमे पुरिससीहे ।
तह पुरिसपुंडरीए दत्ते नारायणे कण्हे ॥१६७॥
अयले विजये भद्दे सुप्पभे य सुदंसणे ।
आणंदे नंदणे पउमे रामे यावि अपच्छिमे ॥१६८॥
आसग्गीवे तारय मेरए महुकेढवे निसुंभे य ।
बलि पल्हाए तह रावणे य नवमे जरासिन्धू ॥१६९॥
एए खलु पडिसत्तू कित्तीपुरिसाण वासुदेवाण ।
सव्वे वि चक्कजोही सव्वे वि हया सचक्केहिं ॥१७०॥
पउमाभ वासपुज्जो रत्ता ससि पुप्फदंत ससिगोरा ।
सुव्वय नेमी काला पासो मल्ली पियंगाभा ॥१७१॥
वरकणगतवियगोरा सोलस तित्थकरा मुणेयव्वा ।

---

जयनामा च नरपतिर्द्वादशो ब्रह्मदत्तश्च ॥ १६५ ॥
भविष्यन्ति वासुदेवा नवाऽन्ये नील पीतकौशेया[1] ।
हल मुसल-चक्रयोधिनः सहताल-गरुडध्वजा द्वौ द्वौ ॥ १६६ ॥
त्रिपृष्ठश्च द्विपृष्ठश्च स्वयंभूः पुरुषोत्तमः पुरुषसिंहः ।
तथा पुरुषपुण्डरीको दत्तो नारायणः कृष्णः ॥ १६७ ॥
अचलो विजयो भद्रः सुप्रभश्च सुदर्शनः ।
आनन्दो नन्दनः पद्मो रामश्चाऽप्यपश्चिमः ॥ १६८ ॥
अश्वग्रीवस्तारको मेरको मधुकैटभो निशुम्भश्च ।
बलिः प्रह्लादस्तथा रावणश्च नवमो जरासिन्धुः ॥ १६९ ॥
एते खलु प्रतिशत्रवः कीर्तिपुरुषाणां वासुदेवानाम् ।
सर्वेऽपि चक्रयोधिनः सर्वेऽपि हताः स्वचक्रैः ॥ १७० ॥
पद्माभो वासुपूज्यो रक्तौ शशी पुष्पदन्तः शशिगौरौ ।
सुव्रतो नेमी कालौ पार्श्वो मल्लिश्च प्रियङ्गवाभौ ॥ १७१ ॥
वरकनकतप्तगौरा षोडश तीर्थंकरा ज्ञातव्याः ।

---

१ नीलाम्बरा, पीतवसनाश्चेति तत्त्वम् ।

एसो वण्णविभागो चउवीसाए जिणवराणं ॥१७२॥
उसभो पंचधणुसए पासो नव सत्त रयणिओ वीरो।
सेसद्ध पच अद्धय पन्ना दस पचपरिहीणा ॥ १७३ ॥
पचेव अद्धपंचम चत्तारद्धुट्ट तह तिग चेव।
अड्ढाइज्जा दुन्नि य दिवड्ढमेगं धणुसय च ॥१७४॥
नउई असीइ सत्तरि सट्ठी पन्नास होइ नायव्वा।
पणयाल चत्त पणतीस तीस पणवीस वीसा य ॥१७५॥
पन्नरस दस धणूणि य नव पासो सत्त रयणीओ वीरो।
नामा पुवुत्ता खलु तित्थयराणं मुणेयव्वा ॥ १७६ ॥
मुणिसुव्वओ य अरिहा अरिट्ठनेमी य गोयमसगुत्ता।
सेसा तित्थयरा खलु कासवगुत्ता मुणेयव्वा ॥१७७॥
इक्खागभूमि उज्झा सावत्थी विणीअ कोसलपुर च।
कोसबी वाणारसि चंदाणण तह य कायदी ॥१७८॥

---

एषो वर्णविभागश्चतुर्विंशतेर्जिनवराणाम् ॥ १७२ ॥
ऋषभ पञ्चधनु शतं पार्श्वो नव सप्त रत्नयो वीर।
शेषा अर्धपञ्चममर्धकं पञ्च दश[2] पञ्चपरिहीणा ॥ ॥ १७३ ॥
पञ्चैवाऽर्धपञ्चमानि चत्वारि अर्धतृतीयानि तथा त्रिक च।
अर्धद्वितीयं द्वे चार्धद्वितीयमेक धनु शत च ॥ १७४ ॥
नवतिरशीति सप्तति षष्टि पञ्चाशद् भवति ज्ञातव्या।
पञ्चचत्वारिंशत् चत्वारिंशत् पञ्चत्रिंशत् त्रिंशत् पञ्चविंशति विंशतिश्च ॥१७५॥
पञ्चदश दश धनूषि च नव पार्श्व सप्तरत्न्यो वीर।
नामानि पूर्वोक्तानि खलु तीर्थकराणा ज्ञातव्यानि ॥ १७६ ॥
मुनिसुव्रतश्चार्हन् अरिष्टनेमिश्च गौतमसगोत्रौ।
शेषास्तीर्थकरा खलु काश्यपगोत्रा ज्ञातव्या ॥ १७७ ॥
इक्ष्वाकुभूमिरयोध्या श्रावस्ती विनीता कोशलपुर च।
कौशाम्बी वाणारसी चन्द्राननस्तथा च काकन्दी ॥ १७८ ॥

---

१ अय तु ध्वानो बद्धमुष्टिहस्ताभिधायी, तथाहि– "बद्धमुष्टिरसौ रत्नि." इति सौवे कोशे श्रीहेमसूरिगुरव। २ दशभिर्हीना इति तत्त्वम्।

भद्दिलपुर सीहपुर चपा कपिल्ल उज्झ रयणपुरं ।
तिन्नेव गयपुरम्मि मिहिला तह चेव रायगिह ॥ १७९ ॥
मिहिला सोरियनयर वाणारसि तह य होइ कुडपुरं ।
उसभाईण जिणाण जम्मणभूमी जहासख ॥ १८० ॥
मरुदेवि विजया सेणा सिद्धत्था मगला सुसीमा य ।
पुहवी लक्खण रामा नंदा विण्हू जया सामा ॥ १८१ ॥
सुजसा सुवय अइरा सिरि देवी य पभावई ।
पउमावई य वप्पा सिव वम्मा तिसलया इअ ॥ १८२ ॥
नाभी जिअसत्तू अजिआरी संवरे इअ ।
मेहे धरे पइट्ठे अ महासेणे अ खत्तिए ॥ १८३ ॥
सुग्गीवे दढरहे विण्हू वसुपुज्जे अ खत्तिए ।
कयवम्मा सीहसेणे अ भाणू विस्ससेणे इअ ॥ १८४ ॥
सूरे सुदसणे कुभे सुमित्त विजए समुद्दविजए अ ।
राया अस्ससेणे सिद्धत्थे वि अ खत्तिए ॥ १८५ ॥

---

भद्दिलपुर सिहपुरं चम्पा कम्पिलाऽयोध्या रत्नपुरम् ।
त्रय एव गजपुरे मिथिला तथा चैव राजगृहम् ॥ १७९ ॥
मिथिला शौर्यनगरं वाराणसी चैव तथा च भवति कुण्डपुरम् ।
ऋषभादीना जिनाना जन्मभूमिर्यथासख्यम् ॥ १८० ॥
मरुदेवी विजया सेना सिद्धार्था मङ्गला सुसीमा च ।
पृथ्वी लक्ष्मणा रामा नन्दा विष्णुर्जया श्यामा ॥ १८१ ॥
सुयशा सुव्रताऽचिरा श्रीर्देवी च प्रभावती ।
पद्मावती च वप्रा शिवा वामा त्रिशलेति ॥ १८२ ॥
नाभिर्जितशत्रुरजितारि सवर इति ।
मेघो घर प्रतिष्ठश्च महासेनश्च क्षत्रिय ॥ १८३ ॥
सुग्रीवो दृढरथो विष्णुर्वासुपूज्यश्च क्षत्रिय ।
कृतवर्मा सिहसेनश्च भानुर्विश्वसेन इति ॥ १८४ ॥
सूर सुदर्शन कुम्भ सुमित्रो विजय समुद्रविजयश्च ।
राजा अश्वसेन सिद्धार्थश्चाऽपि क्षत्रिय ॥ १८५ ॥

सव्वे वि गया मुक्ख जाइ-जरा-मरणबधणविमुक्का ।
तित्थयरा भगवन्तो सासयसुक्ख निराबाहं ॥ १८६ ॥
सव्वे वि एगवन्ना निम्मलकणगप्पभा मुणेअव्वा ।
छक्खडभरहसामी तेसि पमाणं अओ वुच्छ ॥ १८७ ॥
पञ्चसय अद्धपचम बायालीसा य अद्धधणुअ च ।
इगुआलधणुस्सद्ध च चउत्थे पचमे चत्ता ॥ १८८ ॥
पणतीसा तीसा पुण अट्ठावीसा य वीसइ धणूणि ।
पन्नरस बारसेव य अपच्छिमो सत्त य धणूणि ॥ १८९ ॥
कासवगुत्ता सव्वे चउदसरयणाहिवा समक्खाया ।
देविदवदिएहि जिणेहि जिअरागदोसेहि ॥ १९० ॥
चउरासीई बावत्तरी अ पुव्वाण सयसहस्साइ ।
पच य तिन्नि अ एग च सयसहस्सा उ वासाणं ॥ १९१ ॥
पंचाणउइ सहस्सा चउरासीई अ अट्ठमे सट्ठी ।
तीसा य दस य तिन्नि अ अपच्छिमे सत्तवाससया ॥१९२॥

---

सर्वेऽपि गता मोक्ष जाति-जरा मरणबन्धनविमुक्ता ।
तीर्थकरा भगवन्त शाश्वतसौख्य निराबाधम् ॥ १८६ ॥
सर्वेऽप्येकवर्णा निर्मलकनकप्रभा ज्ञातव्या ।
षट्खण्डभरतस्वामिनस्तेषा प्रमाणमतो वक्ष्ये ॥ १८७ ॥
पञ्च शतान्यर्धपञ्चमानि द्वाचत्वारिंशच्च अर्धधनुश्च ।
एकचत्वारिंशद् धनुषोऽर्ध च चतुर्थे पञ्चमे चत्वारिंशद् ॥ १८८ ॥
पञ्चात्रिंशद् त्रिंशत् पुनरष्टाविंशतिश्च विंशतिर्धनूंषि ।
पञ्चदश द्वादशैव चाऽपश्चिम सप्त च धनूंषि ॥ १८९ ॥
काश्यपगोत्रा सर्वे चतुर्दशरत्नाधिपा समाख्याता ।
देवेन्द्रवन्दितैर्जिनैर्जितरागदोषै ॥ १९० ॥
चतुरशीतिर्द्वासप्ततिश्च पूर्वाणा शतसहस्राणि ।
पञ्च च त्रीणि चैक च शतसहस्राणि तु वर्षाणाम् ॥ १९१ ॥
पञ्चनवति सहस्राणि चतुरशीतिश्चाष्टमे षष्टि ।
त्रिंशच्च दश च त्रीणि चाऽपश्चिमे सप्त वर्षशतानि ॥ १९२ ॥

जम्मण विणीअ उज्झा सावत्थी पंच हत्थिणपुरम्मि ।
वाणारसि कंपिल्ले रायगिहे चेव कंपिल्ले ॥ १९३ ॥
सुमगला जसवई भद्दा सहदेवि अइर सिरि देवी ।
तारा जाला मेरा य वप्पगा तह य चुलणी अ ॥ १९४ ॥
उसभे सुमित्तविजए समुद्दविजए अ अस्ससेणे य ।
तह वीससेण सूरे सुदसणे कत्तविरिए अ ॥ १९५ ॥
पउमुत्तरे महाहरी विजए राया तहेव बंभे य ।
ओसप्पिणीइ मीसे पिउनामा चक्कवट्टीण ॥ १९६ ॥
अट्ठेव गया मुक्ख सुहुमो बंभो अ सत्तमि पुढवि ।
मघब-सणंकुमारा सणकुमार गया कप्पं ॥ १९७ ॥
वण्णेण वासुदेवा सव्वे नीला बला य सुक्किलया ।
एएसि देहमाण वुच्छामि अहाणुपुव्वीए ॥ १९८ ॥
पढमो धणूणसीई सत्तरि सट्ठी य पन्न पणयाला ।
अउणत्तीसं च धणू छव्वीसा सोलस दसेव ॥ १९९ ॥

---

जनन विनीताऽयोध्या श्रावस्ती पञ्च हस्तिनापुरे ।
वाराणसी कम्पिल्ये राजगृहे चैव कम्पिल्ये ॥ १९३ ॥
सुमङ्गला यशस्वती भद्रा सहदेवी अचिरा श्रीर्देवी ।
तारा ज्वाला मेरा च वप्रका तथा च चुलनी च ॥ १९४ ॥
ऋषभ सुमित्रविजय समुद्रविजयश्चाऽश्वसेनश्च ।
तथा विश्वसेन सूर सुदर्शन कार्तवीर्यश्च ॥ १९५ ॥
पद्मोत्तरो महाहरिर्विजयो राजा तथैव ब्रह्मश्च ।
अवसर्पिण्या मिश्रे पितृनामानि चक्रवर्तिनाम् ॥ १९६ ॥
अष्टैव गता मोक्ष सुभूमो ब्रह्मश्च सप्तमी पृथिवीम्[1] ।
मघव-सनत्कुमारौ सनत्कुमारं गतौ कल्पम् ॥ १९७ ॥
वर्णेन वासुदेवा सर्वे नीला बलाश्च[2] शुक्ला ।
एतेषा देहमान वक्ष्यामि यथाऽनुपूर्व्या ॥ १९८ ॥
प्रथमो धनुषामशीति सप्तति षष्टिश्च पञ्चाशत् पञ्चचत्वारिंशत् ।
एकान्नत्रिंशच्च धनूषि षड्विंशति षोडश दशैव ॥ १९९ ॥

---

१ सप्तम नरकमित्यर्थं । २ बलदेवा इति तत्त्वम् ।

बलदेव-वासुदेवा अट्ठेव हवंति गोअमसगुत्ता ।
नारायण-पउमा पुण कासवगुत्ता मुणेअव्वा ॥ २०० ॥
चउरासीइ बिसत्तरि सट्ठी तीसा य दसयलक्खाइ ।
पन्नट्ठिसहस्साई छप्पन्ना बारसेग च ॥ २०१ ॥
पच्चासीई पन्नत्तरी अ पन्नट्ठि पचवन्ना य ।
सत्तरस सयसहस्सा पंचमए आउअ होइ ॥ २०२ ॥
पच्चासीइ सहस्सा पन्नट्ठी चेव तह य पन्नरस ।
बारससयाइ आउं बलदेवाणं जहासख ॥ २०३ ॥
पोअण बारवइ तिगं अस्सपुरं तह य होइ चक्कपुर ।
बाणारसि रायगिह अपच्छिमो जाउ महुराए ॥ २०४ ॥
मिगावई उमा चेव पुहवी सीआ य अम्मया ।
लच्छिमई सेसमई केगई देवई इअ ॥ २०५ ॥
भद्द सुभद्दा सुप्पभ सुदसणा विजय वेजयती अ ।
तह य जयती अपराजिआ य तह रोहिणी चेव ॥ २०६ ।

---

बलदेव-वासुदेवा अष्टावेव भवन्ति गौतमसगोत्रा ।
नारायण-पद्मौ पुन काश्यपगोत्रौ ज्ञातव्यौ ॥ २०० ॥
चतुरशीतिर्द्वासप्तति षष्टि त्रिंशच्च दशकलक्षाणि ।
पञ्चषष्टिसहस्राणि षट्पञ्चाशद् द्वादशैक च ॥ २०१ ॥
पञ्चाऽशीति पञ्चसप्ततिश्च पञ्चषष्टि पञ्चपञ्चाशच्च ।
सप्तदश शतसहस्रा पञ्चमके आयुर्भवति ॥ २०२ ॥
पञ्चाशीति सहस्रा पञ्चषष्टिश्चैव तथा च पञ्चदश ।
द्वादशशतानि आयुर्बलदेवाना यथासख्यम् ॥ २०३ ॥
पोतन द्वारवती त्रिकमश्वपुर तथा च भवति चक्रपुरम् ।
वाराणसी राजगृहमपश्चिमो जातो मथुरायाम् ॥ २०४ ॥
मृगावती उमा चैव पृथिवी सीता चामृता ।
लक्ष्मीवती शेषवती कैकयी देवकीति ॥ २०५ ॥
भद्रा सुभद्रा सुप्रभा सुदर्शना विजया वैजयन्ती च ।
तथा च जयन्ती अपराजिता च तथा रोहिणी चैव ॥ २०६ ॥

हवइ पयावइ बभो रुद्दो सोमो सिवो महसिवो अ ।
अग्गिसीहे अ दसरहे नवमे भणिए अ वसुदेवे ॥ २०७ ॥
परिआओ पव्वज्जाऽभावाओ नत्थि वासुदेवाण ।
होइ बलाण सो पुण पढमणुओगाउ नायव्वो ॥२०८॥
वीसभूई पव्वइए धणदत्त समुद्ददत्ते सेवाले ।
पिअमित्त ललिअमित्ते पुणव्वसू गगदत्त अ ॥२०९॥
एआइ नामाइ पुव्वभवे आसि वासुदेवाण ।
इत्तो बलदेवाण जहक्कम कित्तइस्सामि ॥२१०॥
विसनदी सुबुद्धी अ सागरदत्ते असोगललिए अ ।
वराह धणस्सेणे अवराइअ रायललिए अ ॥ २११ ॥
सभूअ सुभद्द सुदंसणे अ सिज्जस कण्ह गंगे अ ।
सागर समुद्दनामे दमसेणे अ पच्छिमे ॥ २१२ ॥
एए धम्मायरिआ कित्तीपुरिसाण वासुदेवाण ।
पुव्वभवे आसी अ जत्थ निआणाइ कासी अ ॥ २१३ ॥

---

भवति प्रजापतिर्ब्रह्मो रुद्र सोम शिवो महाशिवश्च ।
अग्निसिंहश्च दशरथो नवमो भणितश्च वसुदेव ॥ २०७ ॥
पर्याय प्रव्रज्याऽभावाद् नास्ति वासुदेवानाम् ।
भवति बलाना स पुन प्रथमानुयोगाद् ज्ञातव्य ॥ २०८ ॥
विश्वभूति प्रव्रजितो धनवत्त समुद्रदत्त सेवाल ।
प्रियमित्रो ललितमित्र पुनर्वसुर्गङ्गदत्तश्च ॥ २०९ ॥
एतानि नामानि पूर्वभवे आसन् वासुदेवानाम् ।
इतो बलदेवाना यथाक्रम कीर्तयिष्यामि ॥ २१० ॥
विश्वनन्दि सुबुद्धिश्च सागरदत्तोऽशोकललितश्च ।
वाराहो धनसेनोऽपराजितो राजललितश्च ॥ २११ ॥
सभूत सुभद्र सुदर्शनश्च श्रेयास कृष्ण गङ्गश्च ।
सागर समुद्रनामा दमसेनश्च पश्चिम ॥ २१२ ॥
एते धर्माचार्या कीर्तिपुरुषाणा वासुदेवानाम् ।
पूर्वभवे आसश्च यत्र निदानान्यकार्षुश्च ॥ २१३ ॥

महुरा य कणगवत्थू सावत्थी पोअण च रायगिहं ।
कायंदी मिहिला वि अ वाणारसि हत्थिणपुर च ॥ २१४ ॥
गावी जूए य संगामे इत्थी पाराइए अ रंगम्मि ।
भज्जाणुरागवुड्ढी परइड्ढी माउगाइआ ॥ २१५ ॥
महसुक्का पाणय लंतगाउ सहसारओ अ ।
माहिन्दा बंभा सोहम्म सणकुमार नवमो महासुक्का ॥२१६॥
तिण्णेव णुत्तरेहिं तिण्णेग भवे तहा महासुक्का ।
अवसेसा बलदेवा अणंतरं बंभलोगचुआ ॥ २१७ ॥
एगो अ सत्तमाए पंच य छट्ठीइ पंचमी एगो ।
एगो अ चउत्थीए कण्हो पुण तच्चपुढवीए ॥ २१८ ॥
अट्ठंतकडा रामा एगो पुण बंभलोगकप्पम्मि ।
उववन्नो तत्थ भोए भुत्तु अयरोवमा दसए ॥ २१९ ॥
तत्तो अ चइत्ताणं इहेव उसप्पिणीइ भरहम्मि ।
भवसिद्धिओ अ भयवं सिज्झिस्सइ कण्हतित्थम्मि ॥ २२० ॥

---

मथुरा च कनकवस्तु श्रावस्ती पोतन च राजगृहम् ।
काकन्दी मिथिलाऽपि च वाराणसी हस्तिनापुर च ॥ २१४ ॥
गौर्द्यूत च सग्राम स्त्री प्राकारादिकश्च रङ्गे ।
भार्यानुरागवृद्धि परर्द्धिर्मातृकादिका ॥ २१५ ॥
महाशुक्रात् प्राणतात् लान्तकात् सहस्रारतश्च ।
माहेन्द्रात् ब्रह्मात् सौधर्मात् सनत्कुमाराद् नवमो महाशुक्रात् ॥२१६॥
त्रय एवानुत्तरैस्त्रय एव भवेयुस्तथा महाशुक्रात् ।
अवशेषा बलदेवा अनन्तर ब्रह्मलोकच्युता ॥ २१७ ॥
एकश्च सप्तम्या पञ्च च षष्ठ्या पञ्चमीमेक ।
एकश्च चतुर्थ्या कृष्ण पुनस्तृतीयपृथिव्याम् ॥ २१८ ॥
अष्टाऽन्तकृतो रामा एक पुनर्ब्रह्मलोककल्पे ।
उपपन्नस्तत्र भोगान् भुक्त्वा सागरोपमान् दशकान् ॥ २१९ ॥
ततश्च च्युत्वेहैव उत्सर्पिण्या भरते ।
भवसिद्धिकश्च भगवान् सेत्स्यति कृष्णतीर्थे ॥ २२० ॥

---

१ अष्टाना ज्ञानावरणीयादीना कर्मणाम्, अन्त नाशम्, कृत कृतवन्त इति
२ बलदेवा इत्यर्थ ।

अनियाणकडा रामा सव्वे वि य केसवा नियाणकडा ।
उड्ढ गामी रामा केसव सव्वे अहोगामी ॥ २२१ ॥
उसभो वरवसभगई तइयसमापच्छिमम्मि कालम्मि ।
उप्पन्नो पढमजिणो भरहपिआ भारहे वासे ॥ २२२ ॥
पन्नासालक्खेहि कोडीण सागराण उसभाओ ।
उप्पन्नो अजिअजिणो तइओ तीसाइलक्खेहि ॥ २२३ ॥
जिणवसभसंभवाओ दसहि उ लक्खेहि अयरकोडीणं ।
अभिनदणो उ भयव एवइकालेण उप्पन्नो ॥ २२४ ॥
अभिनन्दणाउ सुमई नवहि उ लक्खेहि अयरकोडीणं ।
उप्पन्नो सुहपुन्नो सुप्पहनामस्स वुच्छामि ॥ २२५ ॥
नउईइ सहस्सेहि कोडीण सागराण पुन्नाण ।
सुमइजिणाउ पउमो एवइकालेण उप्पन्नो ॥ २२६ ॥
पउमप्पहनामाओ नवहि सहस्सेहि अयरकोडीणं ।
कालेणेवइएण सुपासनामा समुप्पन्नो ॥ २२७ ॥

---

अनिदानकृतो रामा सर्वेऽपि च केशवा निदानकृत ।
ऊर्ध्व गामिनो रामा केशवा सर्वेऽधोगामिन ॥ २२१ ॥
ऋषभो वरवृषभगतिस्तृतीयसमापश्चिमे काले ।
उत्पन्न प्रथमजिनो भरतपिता भारते वर्षे ॥ २२२ ॥
पञ्चाशल्लक्षै कोटीना सागराणा वृषभात् ।
उत्पन्नोऽजितजिनस्तृतीयस्त्रिशल्लक्षै ॥ २२३ ॥
जिनवृषभसभवात् दशभिस्तु लक्षै सागरकोटीनाम् ।
अभिनन्दनस्तु भगवानेतावत्कालेन उत्पन्न ॥ २२४ ॥
अभिनन्दनात् सुमतिर्नवभिस्तु लक्षै सागरकोटीयाम् ।
उत्पन्न सुखपूर्ण सुप्रभनाम्नो वक्ष्यामि ॥ २२५ ॥
नवत्या सहस्रै कोटीना सागराणा पूर्णानाम् ।
सुमतिजिनात् पद्म एतावत्कालेन उत्पन्न ॥ २२६ ॥
पद्मप्रभनाम्नो नवभि सहस्रै सागरकोटीनाम् ।
कालेनैतावता सुपार्श्वनामा समुत्पन्न ॥ २२७ ॥

कोडीसएहिं नवहि उ सुपासनामा जिणो समुप्पन्नो ।
चंदप्पहो पभाए पभासयंतो अ तेलुक्कं ॥ २२८ ॥
णउईए कोडीए ससीउ सुविही जिणो समुप्पन्नो ।
सुविहिजिणाओ नवहिं कोडीहिं सीअलो जाओ ॥ २२९
सीअलजिणाउ भयवं सिज्जंसो सागराण कोडीए ।
सागरसयऊणाए वरिसेहिं तहा इमेहिं तु ॥ २३० ॥
छव्वीसाए सहस्सेहिं चेव च्छावट्ठिसयसहस्सेहिं ।
एएहिं उणिया खलु कोडीमग्गिलिया होइ ॥ २३१ ॥
चउप्पन्ना अयराण सिज्जंसाओ जिणो उ वसुपुज्जो ।
वसुपुज्जाओ विमलो तीसहिं अयरेहिं उप्पन्नो ॥ २३२ ॥
विमलजिणा उप्पन्नो नवहिं उ अयरेहिं णतजिणो वि ।
चउ सागर नामेहिं अणतई जिणो धम्मो ॥ २३३ ॥
धम्मजिणाओ संती तिहिं उ तिचउब्भागपलियऊणेहिं ।
अयरेहिं समुप्पन्नो पलियद्धेण च कुंथुजिणो ॥२३४॥

कोटिशतैर्नवभिस्तु सुपार्श्वनाम्नो जिनः समुत्पन्नः ।
चन्द्रप्रभः प्रभया प्रभासयंश्च त्रैलोक्यम् ॥ २२८ ॥
नवत्या कोट्या शशितः सुविधिर्जिनः समुत्पन्नः ।
सुविधिजिनाद् नवभिः कोटिभिः शीतलो जातः ॥ २२९ ॥
शीतलजिनाद् भगवान् श्रेयांसः सागराणां कोट्या ।
सागरशतोनया वर्षैस्तथा एभिस्तु ॥ २३० ॥
षड्विंशत्या सहस्रैश्चैव षट्षष्टिशतसहस्रैः ।
एतैरूना खलु कोटिरेकचत्वारिंशद् भवति ॥ २३१ ॥
चतुष्पञ्चाशत् सागराणां श्रेयांसाद् जिनस्तु वासुपूज्यः ।
वासुपूज्याद् विमलस्त्रिंशता सागरैरुत्पन्नः ॥ २३२ ॥
विमलजिनाद् उत्पन्नो नवभिस्तु सागरैरनन्तजिनोऽपि ।
चतुर्भिः सागरैर्नामैभिरनन्तजितो[1] जिनो धर्मः ॥ २३३ ॥
धर्मजिनात् शान्तिस्त्रिभिस्तु त्रिचतुर्भागपल्योनैः ।
सागरैः समुत्पन्नः पल्यार्धेन तु कुन्थुजिनः ॥ २३४ ॥

१ पञ्चम्यन्तमेतत् ।

पलियचउभाएण कोडिसहस्सूणएण वासाणं ।
कुथूओ अरनामो कोडिसहस्सेण मल्लिजिणो ॥२३५॥
मल्लिजिणाउ मुणिसुव्वयो अ चउप्पन्नवासलक्खेहि ।
सुव्वयनामाउ नमी लक्खेहि छहि उ उप्पन्नो ॥ २३६ ॥
पचहि लक्खेहि तउ अरिट्ठनेमी जिणो समुप्पन्नो ।
तेसीइसहस्सेहि सएहि अद्धट्ठमेहि च ॥ २३७ ॥
नेमीओ पासजिणो पासजिणाओ अहो वीरजिणो ।
अड्ढाइज्जसएहि गएहि चरिमो समुप्पन्नो ॥ २३८ ॥
बत्तीस घरयाइ काउं तिरिआययाहि रेहाहि ।
उड्ढाययाहि काउं पञ्च घराइ तओ पढमे ॥ २३९ ॥
पन्नरसजिणनिरन्तर सुन्नदुग तिजिण सुन्नतिअग च ।
दो जिण सुन्न जिणिदो सुन्न जिणो सुन्न दुन्नि जिणो ॥२४०॥
दो चक्कि सुन्न तेरस पण चक्की सुन्न चक्कि दो सुन्ना ।
चक्की सुन्न दु चक्की सुन्न चक्की दुसुन्न च ॥ २४१ ॥

---

पल्यचतुर्भागेन कोटिसहस्रोनकेन वर्षाणाम् ।
कुन्थुत अरनामा कोटिसहस्रेण मल्लिजिन ॥ २३५ ॥
मल्लिजिनाद् मुनिसुव्रतश्च चतुष्पञ्चाशद्वर्षलक्षै ।
सुव्रतनाम्नो नमिर्लक्षै षड्भिस्तु उत्पन्नो ॥ २३६ ॥
पञ्चभिर्लक्षैस्ततोऽरिष्टनेमी जिन समुत्पन्न ।
त्र्यशीतिसहस्रै शतैरर्धाष्टमैश्च ॥ २३७ ॥
नमे पार्श्वजिन पार्श्वजिनाद् अथो वीरजिन ।
अर्धद्वितीयशतैर्गतैश्चरम समुत्पन्न ॥ २३८ ॥
द्वात्रिंशद् गृहाणि कृत्वा तिर्यगायताभी रेखाभि ।
ऊर्ध्वाऽऽयताभि कृत्वा पञ्च गृहाणि तत प्रथमे ॥ २३९ ॥
पञ्चदशजिननिरन्तर शून्यद्विकं त्रयो जिना शून्यत्रिक च ।
द्वौ जिनौ शून्य जिनेन्द्र शून्य जिन शून्य द्वौ जिनौ ॥ २४० ॥
द्वौ चक्रिणौ शून्यानि त्रयोदश पञ्च चक्रिण शून्य चक्री द्वे शून्ये ।
चक्री शून्यं द्वौ चक्रिणौ शून्य चक्री द्वे शून्ये च ॥ २४१ ॥

दस सुन्न पंच केसव पण सुन्नं केसि सुन्न केसी अ। दो सुन्न केसवो चिअ सुन्नदुग केसव तिसुन्न ॥२४२॥

दश शून्यानि पञ्च केशवा पञ्च शून्यानि केशी शून्य केशी च। द्वे शून्ये केशवश्चैव शून्यद्विक केशवस्त्रिशून्यम् ॥२४२॥

यदेतेन गाथाचतुष्टयेनोपदर्शितं तदेव स्थापनया स्थाप्यते-

१

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ऋ | अ | स | अ | सु | प | सु | च | सु | शी | श्रे | वा | वि | अ | ध | ० | ० | शा | कु | अ | ० | ० | ० | म | सु | ० | न | ० | ने | ० | पा | वी |
| म | स | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | म | स | शा | कु | अ | ० | सु | ० | ० | प | ० | ह | ज | ० | ब्र | ० | ० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | त्रि | द्वि | स्व | पु | पु | ० | ० | ० | ० | ० | पु | ० | द | ० | ० | ना | ० | ० | कृ | ० | ० | ० |
| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |

अत्र कोष्टके क्रमेण सर्वेषां जिन-चक्रि-वासुदेवानां नाम्नामाद्याऽक्षराणि एव, प्रतिवासुदेव-बलदेवानां च वासुदेवाविनाभावित्वम्, अत एवाऽत्र वासुदेवानां नामस्थापना समुपन्यस्ता, नेतरेषामिति।

उसभे भरहो अजिए सगरो मघव सणकुमारो अ ।
धम्मस्स य संतिस्स य जिणतरे चक्कवट्टिदुग ॥ २४३ ॥
सती कुथू अ अरो अरिहता चेव चक्कवट्टी अ ।
अर-मल्लि अतरे पुण हवइ सुभूमो अ कोरव्वो ॥ २४४ ॥
मुणिसुव्वए नमिम्मि य हुति दुवे पउमनाम-हरिसेणा ।
नमि-नेमिसु जयनामा अरिट्ठ-पासतरे बभो ॥ २४५ ॥
पचरहते वदंति केसवा पच आणुपुव्वीए ।
सिज्जस-तिविट्ठाई धम्म-पुरिससीहपेरता ॥ २४६ ॥
अर-मल्लि अतरे दुन्नि केसवा पुरिस-पुडरिअदत्ता ।
मुणिसुव्वय-नमिअतरे नारायण-कह्न नेमिम्मि ॥ २४७ ॥
चक्किदुग हरिपणग पणगं चक्कीण केसवो चक्की ।
केसव चक्की केसव दु चक्कि केसी अ चक्की अ ॥ २४८ ॥
अह भणइ नरवरिंदो ताय ! इमीसित्तिआइ परिसाए ।
अन्नो वि को वि होही भरहे वासम्मि तित्थयरो[१] ॥ २४९ ॥

ऋषभे भरतोऽजिते सगरो मघवा सनत्कुमारश्च ।
धर्मस्य च शान्तेश्च जिनान्तरे चक्रवर्तिद्विकम् ॥ २४३ ॥
शान्ति कुन्थुश्चारोऽर्हन्तश्चैव चक्रवर्तिनश्च ।
अर-मल्ल्योरन्तरे पुनर्भवति सुभूमश्च कौरव्य ॥ २४४ ॥
मुनिसुव्रते नमौ च भवतो द्वौ पद्मनाम-हरिषेणौ ।
नमि-नेमिनोर्जयनामा अरिष्ट पार्श्वान्तरे ब्रह्म ॥ २४५ ॥
पञ्चाऽर्हतो वन्दन्ते केशवा पञ्चाऽऽनुपूर्व्या ।
श्रेयांस-त्रिपृष्ठादय धर्म-पुरुषसिहपर्यन्ता ॥ २४६ ॥
अर-मल्ल्योरन्तरे द्वौ केशवौ पुरुष-पुण्डरिकदत्तौ ।
मुनिसुव्रत-नम्यन्तरे नारायण कृष्णो नेमौ ॥ २४७ ॥
चक्रिद्विक हरिपञ्चक पञ्चक चक्रिणा केशवश्चक्री ।
केशवश्चक्री केशवो द्वौ चक्रिणौ केशी च चक्री च ॥ २४८ ॥
अथ भणति नरवरेन्द्रस्तात ! अस्यामेतावत्या परिषदि ।
अन्योऽपि कोऽपि भविष्यति भरते वर्षे तीर्थंकर [१] ॥ २४९ ॥

१ आदिशब्दस्य उभयत्राऽन्वय ।

तत्थ मरीइनामा आइपरिव्वायगो उसभनत्ता ।
सज्झायज्झाणजुओ एगंते झायइ महप्पा ॥ २५० ॥
तं दाएइ जिणिंदो एवं नरिंदेण पुच्छिओ संतो ।
धम्मवरचक्कवट्टी अपच्छिमो वीरनामुत्ति ॥ २५१ ॥
आइगरो दसाराणं तिविट्ठो नामेण पोअणाहिवई ।
पियमित्तचक्कवट्टी मूआइ विदेहवासम्मि ॥ २५२ ॥
तं वयणं सोऊण राया अंचिअतणूरुहसरीरो ।
अभिवंदिऊण पिअरं मिरीइमभिवंदिउं जाइ ॥ २५३ ॥
सो विणएण उवगओ काऊण पयाहिणं च तिक्खुत्तो ।
वंदइ अभित्थुणंतो इमाहि महुराहि वग्गूहि ॥ २५४ ॥
लाभा हु ते सुलद्धा जं सि तुमं धम्मचक्कवट्टीण ।
होहिसि दसचउद्दसमो अपच्छिमो वीरनामुत्ति ॥ २५५ ॥
[1]आइगरो दसाराणं ॥ २५६ ॥
नावि अ ते पारिव्वज्जं वंदामि अहं इमं च ते जम्मं ।

तत्र मरीचिनामा आदिपरिव्राजक ऋषभनप्ता ।
स्वाध्याय ध्यानयुत एकान्ते ध्यायति महात्मा ॥ २५० ॥
तं दर्शयति जिनेन्द्र एवं नरेन्द्रेण पृष्ट सन् ।
धर्मवरचक्रवर्त्ती अपश्चिमो वीरनामेति ॥ २५१ ॥
आदिकर दशार्हाणां त्रिपृष्ठो नाम्ना पोतानाधिपति ।
प्रियमित्रचक्रवर्ती मूकाया विदेहेवर्षे [2] ॥ २५२ ॥
तद् वचनं श्रुत्वा राजा अञ्चिततनूरुहशरीर ।
अभिवन्द्य पितरं मरीचिमभिवन्दितुं याति ॥ २५३ ॥
सो विनयेनोपगत कृत्वा प्रदक्षिणां च त्रिकृत्व ।
वन्दतेऽभिष्टुवान आभिर्मधुराभिर्वाग्भि ॥ २५४ ॥
लाभा खलु त्वया सुलब्धा यदसि त्वं धर्मचक्रवर्तिनाम् ।
भविष्यसि दशचतुर्दशो[3]ऽपश्चिमो वीरनामेति ॥ २५५ ॥
नाऽपि च तव पारिव्राज्यं वन्देऽहमिदं च तव जन्म ।

१ इयं च गाथा गाथात्रयात् पूर्वमेवाऽऽगता, अतस्तन्मूलं छाया च न पुनरुल्लिख्यते ।
२ महाविदेहक्षेत्रे इत्यर्थ । ३ चतुर्विंश इति तत्त्वम् ।

जं होहिसि तित्थयरो अपच्छिमो तेण वंदामि ॥ २५७ ॥
एव ण्हं[1] थोऊणं काऊण पयाहिणं च तिक्खुत्तो।
आपुच्छिऊण पियरं विणीअनयरिं अह पविट्ठो ॥ २५८ ॥
तव्वयणं सोऊणं तिवइं अप्फोडिऊण तिक्खुत्तो।
अब्भहिअजायहरिसो तत्थ मिरीई इमं भणइ ॥ २५९ ॥
जइ वासुदेवपढमो मूआइ विदेहचक्कवट्टित्तं।
चरिमो तित्थयराणं होउ अलं[2] इत्तिअ मज्झ ॥ २६० ॥
अहयं च दसाराणं पिया मे चक्कवट्टिवंसस्स।
अज्जो तित्थयराणं अहो कुलं उत्तमं मज्झ ॥ २६१ ॥
अह भगवं भवमहणो पुव्वाणमणूणयं सयसहस्सं।
अणुपुव्विं[3] विहरिऊणं पत्तो अट्ठावयं सेलं ॥ २६२ ॥
अट्ठावयम्मि सेले चउदसभत्तेण सो महरिसीणं।
दसहिं सहस्सेहिं समं निव्वाणमणुत्तरं पत्तो ॥ २६३ ॥

---

यद् भविष्यसि तीर्थकरोऽपश्चिमस्तेन वन्दे ॥ २५७ ॥
एवं स्तुत्वा कृत्वा प्रदक्षिणां च त्रिकृत्वः।
आपृच्छ्य पितरं विनीतानगरीमथ प्रविष्टः ॥ २५८ ॥
तद्वचनं श्रुत्वा त्रिपदीमास्फोट्य त्रिकृत्वः।
अभ्यधिकजातहर्षस्तत्र मरीचिरिदं भणति ॥ २५९ ॥
यदि वासुदेवप्रथमो मूकाया विदेहचक्रवर्तित्वम्।
चरमस्तीर्थकराणां भवतु अलमेतावद् मम ॥ २६० ॥
अहं च दशार्हाणां पिता मम चक्रवर्तिवंशस्य।
आर्यस्तीर्थकराणामहो! कुलमुत्तमं मम ॥ २६१ ॥
अथ भगवान् भवमथनः पूर्वाणामनूनकं शतसहस्रम्।
अनुपूर्व्या विहृत्य प्राप्तोऽष्टापदं शैलम् ॥ २६२ ॥
अष्टापदे शैले चतुर्दशभक्तेन स महर्षीणाम्।
दशभिः सहस्रैः समं निर्वाणमनुत्तरं प्राप्तः ॥ २६३ ॥

---

१ पादपूरको निपातः।

२ क, अहो! मए इत्तिअं लद्धं. इत्यपि। ३ ख, सामन्न एवमपि।

निव्वाण चिइगागिई जिणस्स इक्खाग-सेसगाण च ।
सकहा थूभ जिणघरे जायग तेणाऽहिअग्गित्ति ॥ २६४ ॥
थूभसय भाऊआण चउवीसं चेव जिणघरे कासी ।
सव्वजिणाण पडिमा वण्णपमाणेहि निअएहि ॥ २६५ ॥
आयंसघरपवेसो भरहे पडणं च अङ्गुलीअस्स ।
सेसाण उम्मुअण संवेगो नाण दिक्खा य ॥ २६६ ॥
पुच्छताण कहेइ उवट्ठिए देइ साहुणो सीसे ।
गेलन्नेऽपडिकरणं कविला ! इत्थं पि इहय पि ॥ २६७ ॥
दुब्भासिएण इक्केण मरीई दुक्खसागरं पत्तो ।
भमिओ कोडाकोडि सागरसरिनामधिज्जाण ॥ २६८ ॥
तं मूल संसारो नीआगुत्त च कासि तिवइम्मि ।
अप्पडिकंतो बभे कविलो अंतद्धिओ कहए ॥ २६९ ॥
इक्खागेसु मरीई चउरासीई अ बभलोअकप्पम्मि ।
कोसिअ कुल्लागम्मि असीईमाउ च संसारो ॥ २७० ॥

---

निर्वाण चितिकाकृतिर्जिनस्य इक्ष्वाकु शेषकाणा च ।
सक्थ्था स्तूपा जिनगृहाणि याचकास्तेनाऽऽहिताऽग्नय इति ॥ २६४ ॥
स्तूपशत भ्रातॄणा चतुर्विंशतिरेव जिनगृहाण्यकार्षीत् ।
सर्वजिनाना प्रतिमा वर्ण प्रमाणाभ्या निजकाभ्याम् ॥ २६५ ॥
आदर्शगृहप्रवेशो भरतस्य पतन च अङ्गुलीयस्य ।
शेषाणामुन्मोचन सवेग ज्ञान दीक्षा च ॥ २६६ ॥
पृच्छता कथयति उपस्थितान् ददाति साधुभ्य शिष्यान् ।
ग्लानत्वेऽप्रतिकरण कपिल ! अत्राऽपि इहाऽपि ॥ २६७ ॥
दुर्भाषितेन एकेन मरीचिर्दु खसागरं प्राप्त ।
भ्रान्त कोटाकोटिं सागरसदृशनामधेयानाम् ॥ २६८ ॥
तन्मूल संसारो नीचगोत्र चाऽकार्षीद् त्रिपद्याम् ।
अप्रतिक्रान्तो ब्रह्मे कपिलोऽन्तर्हित कथयति ॥ २६९ ॥
इक्ष्वाकेषु मरीचिश्चतुरशीतिश्च ब्रह्मलोककल्पे ।
कौशिक कोल्लाके अशीतिरायुश्च ससारे ॥ २७० ॥

थूणाइ पूसमित्तो आउ बावत्तरि च सोहम्मे ।
चेइअ अग्गिज्जोओ चोवट्ठी चेव ईसाणे ॥ २७१ ॥
मदिरेसु अग्गिभूई छप्पन्नाउ सणंकुमारम्मि ।
सेअबिअ भारद्दाओ चोआलीस च माहिंदे ॥ २७२ ॥
ससरिय थावरो रायगिहे चउतीस बम्भलोगम्मि ।
छस्सु वि पारिवज्जं भमिओ तत्तो अ संसारे ॥ २७३ ॥
रायगिह विस्सनदी विसाहभूई अ तस्स जुवराया ।
जुवरण्णो विस्सभूई विसाहनंदी अ इअरस्स ॥ २७४ ॥
रायगिह विस्सभूई विसाहभूइसुअ खत्तिए ।
कोडीवाससहस्स दिक्खा सभूअजइस्स पासम्मि ॥ २७५ ॥
गुत्तासिओ महुराए सनिआणो मासिएण भत्तेण ।
महसुक्के उववन्नो तओ चुओ पोअणपुरम्मि ॥ २७६ ॥
पुत्तो पयावइस्सा मिगावईदेविकुच्छिसभवो भयव ।
नामेण तिविट्ठु त्ति आई आसी दसाराणं ॥ २७७ ॥

स्थूणाया पुष्यमित्र आयु द्वासप्ततिश्च सौधर्मे ।
चैत्ये अग्निद्योतश्चतुष्षष्टिश्चैव ईशाने ॥ २७१ ॥
मन्दिरेषु अग्निभूति षट्पञ्चाशदायु सनत्कुमारे ।
श्वेताम्ब्या भारद्वाजश्चतुश्चत्वारिंशच्च माहेन्द्रे ॥ २७२ ॥
ससृत्य स्थावरो राजगृहे चतुस्त्रिंशद् ब्रह्मलोके ।
षट्सु अपि पारिव्राज्य भ्रान्तस्ततश्च ससारे ॥ २७३ ॥
राजगृहे विश्वनन्दी विशाखाभूतिश्च तस्य युवराज ।
युवराजस्य विश्वभूतिर्विशाखानन्दी च इतरस्य ॥ २७४ ॥
राजगृहे विश्वभूतिर्विशाखाभूतिसुत क्षत्रिय ।
कोटिवर्षसहस्र दिक्षा सभूतयते पार्श्वे ॥ २७५ ॥
गोत्रासितो मथुराया सनिदान मासिकेन भक्तेन ।
महाशुक्रे उपपन्नस्ततश्च्युत पोतनपुरे ॥ २७६ ॥
पुत्र प्रजापतेर्मृगावतीदेवीकुक्षिसभवो भगवान् ।
नाम्ना त्रिपृष्ठ इति आदिरासीद् दशार्हाणाम् ॥ २७७ ॥

१ क, चउसट्ठीसाणकप्पम्मि, एतदपि ।

चुलसीइमप्पइट्ठे[1] सीहो नरएसु तिरिअ-मणुएसु ।
पियमित्तचक्कवट्टी मूआ विदेहाइ चुलसीई ॥ २७८ ॥
पुत्तो धणजयस्सा पुट्टिल[2] परियाउ कोडि सव्वट्ठे ।
नंदण छत्तगाए पणवीसाउ सयसहस्सा ॥ २७९ ॥
पव्वज्ज पुट्टिले सयसहस्स सव्वत्थ मासभत्तेण ।
पुप्फुत्तरे उववन्नो तओ चुओ माहणकुलम्मि ॥ २८० ॥
अरिहंतसिद्धपवयण[3] ॥ २८१ ॥
दसण ॥ २८२ ॥
अपुव्वना ॥ २८३ ॥
पुरिमेण ॥ २८४ ॥
त च कहं ॥ २८५ ॥
नियमा मणुअ ॥ २८६ ॥
माहणकुडग्गामे कोडालसगुत्तमाहणो अत्थि ।
तस्स घरे उववन्नो देवाणंदाइ कुच्छिसि ॥ २८७ ॥

---

चतुरशीतिमप्रतिष्ठाने सिंहो नरकेषु तिर्यग् मनुजेषु ।
प्रियमित्रचक्रवर्ती मूकाया विदेहे चतुरशीति ॥ २७८ ॥
पुत्रो धनञ्जयस्य पोट्टिलस्य पर्याय कोटि सर्वार्थे ।
नन्दनश्छत्रकाया पञ्चविंशतिरायु शतसहस्राणि ॥ २७९ ॥
प्रव्रज्या पोट्टिले शतसहस्र सर्वत्र मासभक्तेन ।
पुष्पोत्तरे उपपन्नस्ततश्च्युतो ब्राह्मणकुले ॥ २८० ॥
ब्राह्मणकुण्डग्रामे कोडालसगोत्रब्राह्मणोऽस्ति ।
तस्य गृहे उपपन्नो देवानन्दाया कुक्षौ ॥ २८७ ॥

---

१ तन्नाम्नि नरके इति । २ तन्नामा कश्चिद् जैनाचार्य ।

३ इद च सच्छाय गाथाषट्कमस्मिन्नेव ग्रन्थे अष्टाविंशे पृष्ठे समागतम् ।

सुमिणमवहार भिग्गह जम्मणमभिसेअ वुड्ढी सरणं च ।
भेसण विवाह वच्चे दाणे सबोह निक्खमणे ॥ २८८ ॥
गय वसह सीह अभिसेअ दाम ससि दिणयरं झय कुंभ ।
पउमसर सागर विमाणभवण रयणुच्चय सिहि च ॥ २८९ ॥
एए चउदस सुमिणे पासइ सा माहणी सुहपसुत्ता ।
ज रयणि उववन्नो कुच्छिसि महायसो वीरो ॥ २९० ॥
अह दिवसे बासीई वसइ तहि माहणीइ कुच्छिसि ।
चित्तइ सोहम्मवई साहरिउ जे[1] जिण कालो ॥ २९१ ॥
अरिहंत चक्कवट्टी बलदेवा चेव वासुदेवा य ।
एए उत्तमपुरिसा न हु तुच्छकुलेसु जायंति ॥ २९२ ॥
उग्गकुल-भोग-खत्तियकुलेसु इक्खाग-नाय-कोरव्वे ।
हरिवंसे अ विसाले आयंति तहि पुरिससीहा ॥ २९३ ॥

---

स्वप्नोऽपहारोऽभिग्रहो जननमभिषेको वृद्धि स्मरण च ।
भीषण विवाहोऽपत्य दान सबोधो निष्क्रमणम् ॥ २८८ ॥
गज वृषभ सिंहमभिषेक दाम्नी शशिन दिनकर ध्वज कुम्भम् ।
पद्मसर सागर विमानभवनं रत्नोच्चय शिखिन च ॥ २८९ ॥
एनाश्चतुर्दशस्वप्नान् पश्यति सा ब्राह्मणी सुखप्रसुप्ता ।
यस्या रजन्यामुपपन्न कुक्षौ महायशा वीर ॥ २९० ॥
अथ दिवसान् द्व्यशीति वसति तत्र ब्राह्मण्या कुक्षौ ।
चिन्तयति सौधर्मपति सहर्तु[2] जिन काल ॥ २९१ ॥
अर्हन्तश्चक्रवर्तिनो बलदेवाश्चैव वासुदेवाश्च ।
एते उत्तमपुरुषा न खलु तुच्छकुलेषु जायन्ते ॥ २९२ ॥
उग्रकुल-भोग क्षत्रियकुलेषु इक्ष्वाकु-ज्ञात कौरव्ये ।
हरिवंशे च विशाले आयान्ति तत्र पुरुषसिंहा ॥ २९३ ॥

---

१ 'इ-जे रा पादपूरणे'' ॥ ८।२।२१७ ॥ इति श्रीहैमसूत्रोक्त पादपूरकम्म् ।
२ सहरतिरत्र परावर्तनार्थ ।

अह भणइ णेगमेसिं देविंदो एस इत्थ तित्थयरो ।
लोगुत्तमो महप्पा उववन्नो माहणकुलम्मि ॥ २९४ ॥
खत्तियकुंडग्गामे सिद्धत्थो नाम खत्तिओ अत्थि ।
सिद्धत्थभारिआए साहर तिसलाइ कुच्छिसि ॥ २९५ ॥
बाढ ति भणिऊण वासरत्तस्स पंचमे पक्खे ।
साहरइ पुव्वरत्ते हत्थुत्तर तेरसीदिवसे ॥ २९६ ॥
गैयवस० ॥ २९७ ॥
एए चउदस सुमिणे पासइ सा माहणी पडिनिअत्ते ।
ज रयणि अवहरिओ कुच्छीओ महायसो वीरो ॥ २९८ ॥
गैयवस० ॥ २९९ ॥
एए चउदस सुमिणे पासइ सा तिसलया सुहपसुत्ता ।
जं रयणि साहरिओ कुच्छिसि महायसो वीरो ॥ ३०० ॥
तिहि नाणेहि समग्गो देवीतिसलाइ सो अ कुच्छिसि ।
अह वसइ सन्निगब्भो छम्मासे अद्धमास च ॥ ३०१ ॥

---

अथ भणति नैगमेषिं देवेन्द्र एषोऽत्र तीर्थंकर ।
लोकोत्तमो महात्मा उपपन्नो ब्राह्मणकुले ॥ २९४ ॥
क्षत्रियकुण्डग्रामे सिद्धार्थो नाम क्षत्रियोऽस्ति ।
सिद्धार्थभार्याया संहर त्रिशलाया कुक्षौ ॥ २९५ ॥
बाढमिति भणित्वा वर्षारात्रस्य पञ्चमे पक्षे ।
संहरति पूर्वरात्रे हस्तोत्तरासु त्रयोदशीदिवसे ॥ २९६ ॥
एतान् चतुर्दश स्वप्नान् पश्यति सा ब्राह्मणी प्रतिनिवृत्तान् ।
यस्या रजन्यामपहृत कुक्षौ महायशा वीर ॥ २९८ ॥
एतान् चतुर्दश स्वप्नान् पश्यति सा त्रिशला सुखप्रसुप्ता ।
यस्या रजन्या संहृत कुक्षौ महायशा वीर ॥ ३०० ॥
त्रिभिर्ज्ञानै समग्रो देवीत्रिशलाया स च कुक्षौ ।
अथ वसति सञ्ज्ञिगर्भ षण्मासान् अर्धमास च ॥ ३०१ ॥

---

१ पूर्वगाथावत् ।

अह सत्तमम्मि मासे गब्भत्थो चेव अभिगहं गिण्हइ ।
नाहं समणो होह अम्मापिअरम्मि जीवते ॥ ३०२ ॥
दुण्ह वरमहिलाण गब्भे वसिऊण गब्भसुकुमालो ।
नवमासे पडिपुन्ने सत्त य दिवसे समइरेगे ॥ ३०३ ॥
अह चित्तसुद्धपक्खस्स तेरसीपुव्वरत्तकालम्मि ।
हत्थुत्तराहिं जाओ कुडग्गामे महावीरो ॥ ३०४ ॥
आहरण-रयणवास वुट्ठं तित्थकरम्मि जायम्मि ।
सक्को अ देवराया उवागओ आगया निहिं[1]णो ॥ ३०५ ॥
तुट्ठाउ देवीओ देवा आणदिआ सपरिसागा ।
भयवम्मि वद्धमाणे तेलुक्कसुहावहे जाए ॥ ३०६ ॥
भवणवइ वाणमतर जोइसवासी विमाणवासी अ ।
सव्वड्ढीइ सपरिसा चउव्विहा आगया देवा ॥ ३०७ ॥
देवेहि संपरिवुडो देविंदो गिण्हिऊण तित्थयरं ।
नेऊण मदरगिरिं अभिसेअं तत्थ कासी अ ॥ ३०८ ॥

---

अथ सप्तमे मासे गर्भस्थ एवाऽभिग्रहं गृह्णाति ।
नाऽहं श्रमणो भविष्यामि मातरपितरयोर्जीवतो ॥ ३०२ ॥
द्वयोर्वरमहिलयोर्गर्भे उषित्वा गर्भसुकुमाल. ।
नव मासान् प्रतिपूर्णान् सप्त च दिवसान् समतिरेकान् ॥ ३०३ ॥
अथ चैत्रशुद्धपक्षस्य त्रयोदशीपूर्वरात्रकाले ।
हस्तोत्तरासु जात कुण्डग्रामे महावीर ॥ ३०४ ॥
आभरण-रत्नवर्ष वृष्ट तीर्थकरे जाते ।
शक्रश्च देवराज उपागत आगता निधय ॥ ३०५ ॥
तुष्टा देव्यो देवा आनन्दिता सपरिषत्का ।
भगवति वर्धमाने त्रैलोक्यसुखावहे जाते ॥ ३०६ ॥
भवनपतयो वानव्यन्तरा ज्योतिर्वासिनो विमानवासिनश्च ।
सर्वर्ध्या सपरिषदश्चतुर्विधा आगता देवा ॥ ३०७ ॥
देवै सपरिवृतो देवेन्द्रो गृहीत्वा तीर्थकरम् ।
नीत्वा मन्दरगिरिमभिषेकं तत्राऽकार्षीच्च ॥ ३०८ ॥

---

१ क, निहओ ।

काऊण य अभिसेअ देविन्दो देवदाणवेहि समं ।
जणणीइ समप्पित्ता जम्मणमहिम च कासी अ ॥ ३०९ ।
खोम कुंडलजुअलं सिरिदाम चेव देइ सक्को से ।
मणिकणगरयणवास उवच्छुहे जभगा देवा ॥ ३१० ॥
वेसमणवयणसचोइया उ ते तिरियजभगा देवा ।
कोडिग्गसो हिरन्न रयणाणि य तत्थ उवणिति ॥ ३११ ॥
अह वड्ढइ सो भयव दियलोयचुओ अणोवमसिरीओ ।
दासीदासपरिवुडो परिकिन्नो पीढमद्देहि ॥ ३१२ ॥
[1]असिअसिरओ सुनयणो ॥ ३१३ ॥
जाईसरो य भयव० ॥ ३१४ ॥
अह उण अट्ठवासस्स भगवओ सुरवराण मज्झम्मि ।
सत्तगुणकित्तणय करेइ सक्को सुहम्माए ॥ ३१५ ॥
बालो अबालभावो अबालपरक्कमो महावीरो ।
न हु सक्को भेसेउं देवेहि सइदएहि पि ॥ ३१६ ॥

कृत्वा चाऽभिषेक देवेन्द्रो देव-दानवै समम् ।
जनन्या॰ समर्प्य जननमहिमान चाऽकार्षीच्च ॥ ३०९ ॥
क्षोम कुण्डलयुगलं श्रीदाम चैव ददाति शक्रस्तस्य ।
मणिकनकरत्नवर्षमुपचिक्षिपुर्जृम्भका देवा ॥ ३०१ ॥
वै[2]श्रमणवचनसंचोदितास्तु ते तिर्यग्जृम्भका देवा ।
कोट्यग्रशो हिरण्य रत्नानि च तत्र उपनयन्ति ॥ ३११
अथ वर्धते स भगवान् दिवलोकच्युतोऽनोपमश्रीक ।
दासी दासपरिवृत परिकीर्ण पीठमर्दै ॥ ३१२ ॥
अथ पुनरष्टवर्षस्य भगवत सुरवराणा मध्ये ।
सत्त्वगुणकीर्तन करोति शक्र सुधर्मा[3]याम् ॥ ३१५ ॥
बालोऽबालभावोऽबालपराक्रमो महावीर ।
न खलु शक्यो भीषयितु देवै सेन्द्रैरपि ॥ ३१६ ॥

१ एतद् गाथाद्वय त्रिंशे पृष्ठेऽत्रैव ।
२ वैश्रमण कुबेर । ३ तदभिधानाया शक्रसभायाम् ।

तं वयणं सोऊण अह एगो अ सुरो असद्दहंतो अ ।
एइ जिणसन्निगासं तुरिअं सो भेसणट्ठाए ॥ ३१७ ॥
सप्पं च तरुवरम्मि काउं तिंदूसएण डिम्भं च ।
पट्ठी मुट्ठीइ हओ वंदिअ वीरं पडिनिअत्तो ॥ ३१८ ॥
अह तं अम्मापियरो जाणित्ता अहिअट्ठवासं उ ।
कयकोउअलंकारं लेहायरिअस्स उवणिंति ॥ ३१९ ॥
सक्को अ तस्समक्खं भगवन्तं आसणे निवेसित्ता ।
सद्दस्स लक्खणं पुच्छे वागरणं अवयवा इन्दं ॥ ३२० ॥
उम्मुक्कबालभावो कमेण अह जुव्वणं समणुपत्तो ।
भोगसमत्थं नाउं अम्मापियरो अ वीरस्स ॥ ३२१ ॥
तिहि-रिक्खम्मि पसत्थे महंतसामंतकुलपसूयाए ।
कारिंति पाणिगहणं जसोअवररायकन्नाए ॥ ३२२ ॥
पंचविहे माणुस्से भोए भुंजित्तु सह जसोआए ।
तेयसिरिं व सुरूवं जणेइ पियदंसणं धूअं ॥ ३२३ ॥

---

तद् वचनं श्रुत्वा अथ एकश्च सुरोऽश्रद्दधानश्च ।
एति जिनसन्निकाशं त्वरितं स भीषणार्थम् ॥ ३१७ ॥
सर्पं च तरुवरे कृत्वा तिंदूसकेन डिम्भं च ।
पृष्ठ्या मुष्ट्या हतो वन्दित्वा वीरं प्रतिनिवृत्तः ॥ ३१८ ॥
अथ तं मातापितरौ ज्ञात्वा अधिकाष्टवर्षं तु ।
कृतकौतुकाऽलंकारं लेखाचार्यमुपनयतः ॥ ३१९ ॥
शक्रश्च तत्समक्षं भगवन्तमासने निवेश्य ।
शब्दस्य लक्षणं पृच्छति व्याकरणमवयवा ऐन्द्रम् ॥ ३२० ॥
उन्मुक्तबालभावः क्रमेण अथ यौवनं समनुप्राप्तः ।
भोगसमर्थं ज्ञात्वा पितरौ च वीरस्य ॥ ३२१ ॥
तिथि ऋक्षे प्रशस्ते महासामन्तकुलप्रसूतया ।
कारयन्ति पाणिग्रहणं यशोदावरराजकन्यया ॥ ३२२ ॥
पञ्चविधान् मानुषान् भोगान् भुक्त्वा सह यशोदया ।
तेजःश्रियमिव सुरूपां जनयति प्रियदर्शनां दुहितरम् ॥ ३२३ ॥

---

१ क्रीडाविशेषनाम ।

हत्थुत्तरजोएणं कुडग्गामम्मि खत्तिओ जच्चो ।
वज्जरिसहसंघयणो भवियजणविबोहओ वीरो ॥ ३२४ ॥
सो देवपरिग्गहिओ तीस वासाइ वसइ गिहवासे ।
अम्मापिईहिं भगवं देवत्तगएहिं पव्वइओ ॥ ३२५ ॥
[1]सवच्छरेण होही० ॥ ३२६ ॥
एगा हिरण्णकोडी० ॥ ३२७ ॥
सिंघाडग-तिग० ॥ ३२८ ॥
वरवरिआ० ॥ ३२९ ॥
तिण्णेव य को० ॥ ३३० ॥
सारस्सयमाइच्चा० ॥ ३३१ ॥
एए देवनिकाया० ॥ ३३२ ॥
एव अभित्थुवंतो बुद्धो बुद्धारविंदसरिसमुहो ।
लोगंतियदेवेहि कुडग्गामे महावीरो ॥ ३३३ ॥
मणपरिणामो य कओ अभिनिक्खमणम्मि जिणवरिन्देणं ।
देवेहि य देवीहि अ समन्तओ उच्छयं गयण ॥ ३३४ ॥
भवणवइ-वाणमतर-जोइसवासी-विमाणवासी य ।

---

हस्तोत्तरयोगेन कुण्डग्रामे क्षत्रियो जात्य ।
वज्रऋषभसंहननो भव्यजनविबोधको वीर ॥ ३२४ ॥
सो देवपरिगृहीतो त्रिंशद् वर्षाणि वसति गृहवासे ।
मातापितृभ्या भगवान् देवत्वगताभ्या प्रव्रजित ॥ ३२५ ॥
एवमभिष्टूयमानो बुद्धो बुद्धाऽरविन्दसदृशमुख ।
लोकान्तिकदेवै. कुण्डग्रामे महावीर ॥ ३३३ ॥
मन परिणामश्च कृतोऽभिनिष्क्रमणे जिनवरेन्द्रेण ।
देवैश्च देवीभिश्च समन्ततोऽवस्तृत गगनम् ॥ ३३४ ॥
भवनपति-वानव्यन्तर-ज्योतिर्वासि-विमानवासिभिश्च ।

---

१ एतद् गाथासप्तक त्रयस्त्रिंशे पत्रेऽत्रैव ।
२ दीक्षाग्रहणे इत्यर्थ ।

धरणियले गयणयले विज्जुज्जोओ कओ खिप्पं ॥ ३३५ ॥
जाव य कुंडग्गामो जाव य देवाण भवणआवासा ।
देवेहि य देवीहि य अविरहियं संचरंतेहि ॥ ३३६ ॥
चंदप्पभा य सीआ उवणीआ जम्ममरणमुक्कस्स ।
आसत्तमल्लदामा जलथलय[1]दिव्वकुसुमेहि ॥ ३३७ ॥
पंचासइआयामा धणूणि विच्छिन्न पन्नवीस तु ।
छत्तीसइमुव्विद्धा सीया चदप्पहा भणिआ ॥ ३३८ ॥
सीयाइ मज्झआरे दिव्व मणिकणगरयणचिचइअ ।
सीहासणं महरिह सपायपीढ जिणवरस्स ॥ ३३९ ॥
आलइयमालमउडो भासुरबुदी पलबवणमालो ।
सेयगवत्थनियत्थो जस्स य मुल्लं सयसहस्स ॥ ३४० ॥
छट्ठेण भत्तेणं अज्झवसाणेण सोहणेण जिणो ।
लेसाहि विसुज्झतो आरुहइ उत्तमं सीअ ॥ ३४१ ॥
सीहासणे निसन्नो सक्कीसाणा य दोहि पासेहि ।

---

धरणितले गगनतले विद्युदुद्योत कृत क्षिप्रम् ॥ ३३५ ॥
यावच्च कुण्डग्रामो यावच्च देवाना भवनाऽऽवासा ।
देवैश्च देवीभिश्च अविरहितं सचरद्भि ॥ ३३६ ॥
चन्द्रप्रभा च शिबिका उपनीता जन्म-मरणमुक्तस्य ।
आसक्तमाल्यदामा जलस्थलजदिव्यकुसुमै ॥ ३३७ ॥
पञ्चाशदायामा धनूषि विस्तीर्णा पञ्चविशतिस्तु ।
षट्त्रिंशद् उर्व्यूर्ध्वा शिबिका चन्द्रप्रभा भणिता ॥ ३३८ ॥
शिबिकाया मध्यकारे दिव्यमणिकनकरत्नमण्डितम् ।
सिहासन महार्हं सपादपीठ जिनवरस्य ॥ ३३९ ॥
आविद्धमालामुकुटो भास्वरतनु॰ प्रलम्बवनमाल ।
श्वेतकवस्त्रनिवसित यस्य च मूल्य शतसहस्रम् ॥ ३४० ॥
षष्ठेन भक्तेन अध्यवसानेन शोभनेन जिन ।
लेश्याभिर्विशुध्यन् आरोहति उत्तमा शिबिकाम् ॥ ३४१ ॥
सिहासने निषण्ण शक्रेशानौ च द्वाभ्या पार्श्वाभ्याम् ।

---

[1] वक्रादित्वात् पादपूरकोऽनुस्वार ।

वीअंति चामरेहिं मणिरयणविचित्तदंडेहिं ॥ ३४२ ॥
पुव्विं उक्खित्ता माणुस्सेहिं सा हट्ठरोमकूवेहिं ।
पच्छा वहंति सीयं असुरिंद-नरिंद-नागिंदा ॥ ३४३ ॥
चलचवलभूसणधरा सच्छंदविउव्वियाभरणधारी ।
देविंददाणविंदा वहंति सीयं जिणवरस्स ॥ ३४४ ॥
कुसुमाणि पंचवन्नाणि मुअंता दुंदुभीउ ताडंता ।
देवगणा य पहट्ठा समंतओ उच्छयं गयणं ॥ ३४५ ॥
वणसंडो व कुसुमिओ पउमसरो वा जहा सरयकाले ।
सोहइ कुसुमभरेणं इअ गयणयलं सुरगणेहिं ॥ ३४६ ॥
सिद्धत्थवणं व जहा असणवणं सणवणं असोगवणं ।
चूयवणं व कुसुमियं इय गयणयलं सुरगणेहिं ॥ ३४७ ॥
अयसिवणं व कुसुमियं कणियारवणं व चम्पगवणं वा ।
तिलयवणं व कुसुमियं इय गयणयलं सुरगणेहिं ॥ ३४८ ॥
वरपडह-भेरि-झल्लरि-दुन्दुभि संखसहिएहिं तूरेहिं ।

---

वीजयन्ति चामराभ्यां मणिरत्नविचित्रदण्डाभ्याम् ॥ ३४२ ॥
पूर्वमुत्क्षिप्ता मनुष्यैः सा हृष्टरोमकूपैः ।
पश्चाद् वहन्ति शिबिकामसुरेन्द्र-नरेन्द्र-नागिन्द्राः ॥ ३४३ ॥
चलचपलभूषणधराः स्वच्छन्दविकुर्विताऽऽभरणधारिणः ।
देवेन्द्रदानवेन्द्रा वहन्ति शिबिकां जिनवरस्य ॥ ३४४ ॥
कुसुमानि पञ्चवर्णानि मुञ्चन्तो दुन्दुभीन् ताडयन्तः ।
देवगणाश्च प्रहृष्टाः समन्ततोऽवस्तृतं गगनम् ॥ ३४५ ॥
वनखण्डो वा कुसुमितः पद्मसरो वा यथा शरत्काले ।
शोभते कुसुमभरेण इति गगनतलं सुरगणैः ॥ ३४६ ॥
सिद्धार्थवनं वा यथाऽसनवनं शणवनमशोकवनम् ।
चूतवनमिव कुसुमितमिति गगनतलं सुरगणैः ॥ ३४७ ॥
अतसीवनमिव कुसुमितं कर्णिकारवनं वा चम्पकवनं वा ।
तिलकवनमिव कुसुमितमिति गगनतलं सुरगणैः ॥ ३४८ ॥
वरपटह भेरी झल्लरी दुन्दुभि शङ्खसहितैस्तूर्यैः ।

अर्हम्

॥ श्रीविजयधर्मसूरिगुरुभ्यो नमः ॥

श्रीगुणचन्द्राचार्यविरचित-तत्त्वप्रकाशिकाख्यया टीकया समेतः

# श्रीहैमविभ्रमः ।

कस्य धातोस्तिवादीनामेकस्मिन् प्रत्यये स्फुटम् ।
परस्परविरुद्धानि रूपाणि स्युस्त्रयोदश ? ॥ १ ॥

निखिलजगदेकशरणं भव्याऽम्भोरुहविकासनपटिष्ठम् ।
मोहान्धकारभिदुरं श्रीवीरार्कं परं नौमि ॥ १ ॥
ऋषभाऽऽद्यास्तीर्थिनन्यान्[1] विघ्नसंघातघातकान् ।
सुराऽसुरनराऽऽराध्यान् मुक्तिमार्गप्रकाशकान् ॥ २ ॥
यस्याः स्मरणमात्रेण प्रगल्भन्ते विपश्चितः ।
परोपकारकर्त्रीं तां वन्दे वाणीं वरप्रदाम् ॥ ३ ॥
सकलभुवनैकतिलकः कुमतध्वान्तकर्षणैकदक्षतमः ।
नित्योदितः स्थिरतरो जयति श्रीदेवसूरिरविः ॥ ४ ॥
सुखप्रबोधिका वृत्ती रूपसिद्धिसमन्विता ।
सिद्धहेमाऽनुसारेण क्रियते तन्त्रविभ्रमे ॥ ५ ॥

**कस्य धातोस्तिवादीनां** सबन्धिन्येकस्मिन् प्रत्यये परस्परसंपृक्तानि त्रयोदश रूपाणि स्युरिति प्रश्ने, तानि निगीर्यन्ते–गिरतेः अवपूर्वात् "अवात्" ॥३।३।६७॥ इत्यात्मनेपदम्, अद्यतन्यामात्मनेपदमध्यमपुरुषवचनं ध्वम्, "सिजद्यतन्याम्"॥३।४।५३॥ इति सिचि, इट् सिजाऽऽशिषोरात्मने॥४।४।३६॥ इडागमे, "सो धि वा"॥४।३।७२॥ इति सिचो लोपे, "अड् धातोः-"॥४।४।२९॥ इत्यादिनाऽडागमे उपसर्गाऽका-

---

१ तीर्थमस्ति येषां तान् तीर्थकरानित्यर्थः ।

रस्य परेण समानेन दीर्घत्वे, "नामिनो गुणोऽक्ङिति" ॥४।३।१॥ इति गुणे, "वृतो नवा-" ॥४।४।३५॥ इत्यादिना पक्षे दीर्घत्वे अवागरिध्वम्, अवागरीध्वम्, "नवा स्वरे" ॥२।३।१०२॥ इति लत्वे अवागलिध्वम्, अवागलीध्वम्, तथा "हान्तस्थाद् ञीड्भ्यां वा" ॥२।१।८१॥ इति पक्षे ढत्वे अवागरिढ्वम्, अवागरीढ्वम्, अवागलिढ्वम्, अवागलीढ्वम्; तथा "स्वरग्रह-" ॥ ३।४।६९ ॥ इत्यादिना ञिटि, "नामिनोऽकलिहले." ॥ ४।३।५१ ॥ इति वृद्धौ अवाऽगारिढ्वम्, अवाऽगालिढ्वम्, अवागारिध्वम्, अवागालिध्वम्, ञिडऽभावपक्षे च "ऋतां क्ङितीर्" ॥ ४।४।११६ ॥ इति इरादेशे, "भ्वादेर्नामिनो-" ॥ २।१।६३ ॥ इत्यादिना उपान्त्येकारदीर्घत्वे, "नाम्यन्तात्-" ॥२।१।८०॥ इत्यादिना ढत्वे अवागीर्ढ्वम्। तिवादिसंबन्धप्रस्तावाद् अन्यद् अपि किञ्चिदुच्यते, तथाहि

**जगाम** नगरे रूपम्। जगिश्छान्दस, जगिमाचष्टे "णिज् बहुल-" ॥ ३।४।४२ ॥ इत्यादिना णिचि, "नामिनोऽकलिहले" ॥ ४।३।५१ ॥ इति वृद्धौ, "त्र्यन्त्यस्वरादे." ॥ ७।४।४३ ॥ इत्यन्त्यस्वरादिलोपे जगयतीति "क्विप्" ॥ ५।१।१४८॥ इति क्विपि, "अप्रयोगीत्" ॥ १। १।३७ ॥ इति तस्य[1] लोपे, "णेरनिटि" ॥ ४।३।८३ ॥ इति णिलोपे च 'जग्' इति सिद्धम्, पुन जगिवाऽऽचरति "कर्तु. क्विप्-" ॥३।४।२५॥ इत्यादिना क्विपि तस्य लोपे, "क्रियार्थो धातु" ॥३।३।३॥ इति धातुत्वे पञ्चम्या आमवि, "कर्तर्यनद्भ्य' शव्" ॥३।४।७१॥ इति शवि, "समानाना तेन दीर्घ" ॥ १।२।१ ॥ इति दीर्घत्वे जगाम इति रूप प्रासिद्धयत्। **मा रिरेकाम** इति। 'रेकृङ् शकुङ् शङ्कायाम्' माङ्पूर्वकरेकमानं प्रयुङ्क्ते प्रयोक्तृव्यापारे णिगि अद्यतनी-मप्रत्यये "णिश्रि-" ॥३।४।५८॥ इत्यादिना ङे, "आद्योऽश एकस्वर." ॥४।१।२॥ इति द्वित्वे, "ह्रस्व." ॥ ४।१।३९ ॥ इति पूर्वस्य ह्रस्वत्वे, "णेरनिटि" ॥ ४।३।८३ ॥ इति णिग्लोपे, "मव्यस्या." ॥ ४।२।११३ ॥ इत्यकारस्याऽऽकारे "मा रिरेकाम इति सिद्धिमध्यास्ते। एव **मा मिमाम** इति। 'अम

१ शब्द, इति योग। २ क्विप्.।

द्रम हम्म मिमृ गम्लृ गतौ' इत्यस्य, शेषं पूर्ववत् । 'मील श्मील स्मील क्ष्मील निमेषणे' इत्यस्य णिगि अद्यतन्या इप्रत्यये "भ्राजभास-" ॥४।२।३६॥इत्यादिना उपान्त्यस्य विकल्पेन ह्रस्वत्वे मा मीमिले,मा मिमीले, इति रूपद्वन्द्व सिषेध । असीदाम इति । 'षद्लृ विशरणगत्यवसादनेषु' इत्यस्य ह्यस्तन्या मे "श्रौति-" ॥ ४।२।१०८ ॥ इत्यादिना सीदाऽऽदेशे,"मव्यस्या "॥४।२।११३॥ इत्याऽऽकारे,"अड् धातोः-"॥४।४।२९ ॥ इत्यादिनाऽडागमे च असीदामेति सिद्ध्यति स्म ॥ चिक्यात्, निन्यात्, इति । 'चिगृट् चयने' इत्यस्य 'णीग् प्रापणे' इत्यस्य च चेतु नेतु वा इच्छतीति वाक्ये"तुमर्हाद्-"॥३।४।२१॥इत्यादिना सनि,"स्वरहन्-" ॥ ४।१।१०४ ॥ इत्यादिना दीर्घत्वे, "सन्यडश्च" ॥ ४।१।३ ॥ इति द्विर्वचने, ह्रस्वत्वे,"चे किर्वा" ॥४।१।३६॥ इति किरादेशे चिकीषति, निनीषति इति वा "क्विप्" ॥ ५।१।१४८ ॥ इति क्विपि, "अप्रयोगीत्" ॥ १।१।३७ ॥ इति तस्य लोपे, "अत" ॥ ४।३।८२ ॥ इत्यकारलोपे च तत चिकीष निनीषम्–आचष्टे "णिज् बहुल-" ॥३।४।४२॥ इत्यादिना णिचि, "त्र्यन्त्यस्वरादे." ॥ ७।४।४३ ॥ इत्यन्त्यस्वरादिलोपे, आशी क्यात्प्रत्यये णिज्लोपे चिक्यात्, निन्यात् इति च सिद्धि प्राव्राजीत्, एव चिच्यात् । 'यद्वा डुकृग् करणे' इत्यस्य 'चिक्यात्' इति रूपम्, शेषं पूर्ववत् । अचकलाकत् इति । कलापूर्वस्य 'डुकृग् करणे' इत्यस्य कलां करोतीति "क्विप्" ॥ ५।१।१४८ ॥ इति क्विपि तस्य लोपे, "ह्रस्वस्य त पित्कृति" ॥ ४।४।११३ ॥ इति तागमे, कलाकृतमाचष्टे णिजि, "त्र्यन्त्यस्वरादे" ॥ ७।४।४३ ॥ इत्यन्त्यस्वरादिलोपे, अद्यतनी-दी "णिश्रि-"॥३।४।५८॥ इत्यादिना ङे, "णेरनिटि" ॥४।३।८३॥ इति णिज्लोपे, "अन्यस्य" ॥४।१।८॥ इति द्विर्वचने, "कङश्चञ्" ॥४।१।४६॥ इति कस्य चे अडागमे च अचकलाकत् इति रूपं प्रासाक्षीत् । हरिता इति । 'हृग् हरणे' इत्यस्य हेतुत्वे टे, आचारक्विपि, श्वस्तनी-ता, "स्ताद्यशितोऽत्रोणादेरिट्" ॥४।४।३२॥

१ बहुलाधिकारात् केवलादपि ट ।

इतीटि, "अत" ॥ ४।३।८२ ॥ इत्यकारलोपे च हरितेति रूप प्रत्यष्ठात्। वकीमः। 'इण्क् गतौ' इत्यस्य विपूर्वको वर्तमाना-मसि कुत्सितत्वविवक्षायाम् "अव्ययस्य को द् च"॥७।२।३०॥इति अन्त्यस्वराद् अकि, समानदीर्घत्वे, सस्य रुत्वे, रेफस्य विसर्गादेशे च वकीम इति रूप प्रादुरास। नकिरचाकङ्क्षिष्ठाः इति। 'ककुङ् श्वकुङ् इत्यादिदण्डकधातुर्निर्पूर्वक', "उदित स्वरान्नोऽन्त" ॥ ४।४।९८ ॥ इति नागमे, कुटिल कङ्कते "गत्यर्थात् कुटिले" ॥ ३।४।११ ॥ इति यङि, "सन्यङश्च" ॥ ४।१।३ ॥ इति द्विर्वचनेऽनादिव्यञ्जनलोपे, "कङश्चञ्" ॥ ४।१।४६ ॥ इति चत्वे, "आगुणावन्यादे" ॥४।१।४८॥ इत्याऽऽकारे, अद्यतनी-थास्प्रत्यये सिचि इटि, "अत" ॥ ४।३।८२ ॥ इत्यकारलोपे, "योऽशिति" ॥ ४।३।८० ॥ इति यलोपे, "नाम्यन्तस्था-" ॥२।३।१५॥ इत्यादिना सस्य षत्वे, "तवर्गस्य-" ॥ १।३।६० ॥ इत्यादिना थस्य ठत्वे पूर्ववद् अकि प्रत्यये नकिरचाकङ्क्षिष्ठा इति सिद्धिमधात्। नकिरटाटङ्किष्ठाः, टकुङ्, एव टक इत्यस्य प्रायेण 'अनित्याणिजश्चुरादयः' इति 'घुषृण् विशब्दे' तत इत्यस्य ज्ञापयामास इति, शेष पूर्ववत्। 'हन्क् हिंसागत्यो' इत्यस्य आङ्पूर्वस्य "आङो यमहन-" ॥ ३।३।८६ ॥ इत्यात्मनेपदत्वे ततोऽद्यन्याम्–इप्रत्यये सिचि, "हन सिच्" ॥४।३।३८॥ इति किद्वद्भावे, "यमिरमि-" ॥४।२।५५॥ इत्यादिना नलोपेऽडागमे समानदीर्घत्वे च आहसि इति रूपं सिद्धिमगात्। 'ओलजैङ् ओलस्जैसि व्रीडे' इत्यत्र आद्यस्य स्थाने केचिद् ओनजैङ् इत्युशन्ति, तन्मतमाश्रित्य प्रयोगः साध्यते– नजते इति, "अच्" ॥ ५।१।४९ ॥ इत्यचि, नज इवाऽऽचरति "कर्तु. क्विप्-" ॥३।४।२५॥ इत्यादिना क्विपि तस्य लोपे, वर्तमानातिवि शवि, "लुगस्यादेत्यपदे" ॥२।१।११३॥ इत्यलोपे नजति इति प्रयोग सिद्धि नेय.। टण्टमिच्छति इति "अमाव्ययात् क्यन् च" ॥ ३।४।२३ ॥ इति "क्यनि" ॥ ४।३।११२ ॥ इत्यकारस्येकारे टण्टीयति इति क्विपि

---

१ 'घुषृण् विशब्दे' अत्र ऋदित्करण पूर्वोपन्यस्तस्य न्यायस्य ज्ञापकमिति तत्त्वम्। २ इच्छन्ति। ३ क्यनि, इति शेष।

अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [२४]

श्रीसोमचारित्रगणिविरचितं

# गुरुगुणरत्नाकरकाव्यम् ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिचरणान्ते-
वासिना मुनि--श्रीइन्द्रविजयेन संशोधितम् ।

तच्च

घोघाग्रामवास्तव्य-श्रेष्ठि-विठ्ठलभाई-धर्मचन्द्रसाहाय्येन

वाराणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रित प्रकाशितं च ।

वीरसंवत् २४३७ ।

मूल्यमर्धरूप्यकम्

YASHOVIJAYA JAINA GRANTHAMALA, 24.



*THE*

# GURUGUNARATNAKARA

OF

**SHRI SOMACHARITRA GANI**



EDITED BY

**MUNI INDRAVIJAYA,**

DISCIPLE

OF

SHASTRAVISHARADA JAINACHARYA

**SHRI VIJAYADHARMASURI**

WITH

THE PECUNIARY HELP OF

SHETH VITHALBHAI DHARMCHAND

OF GOGHA.



PRINTED AND PUBLISHED

BY

HARSHCHAND BHURABHAI

PROPRIETOR OF DHARMABHYUDAYA PRESS,

BENARES



Veer–Era, 2437.



Price, Rs 0-8-0

# उपोद्घातः ।

अस्मिन् लघीयस्यपि वरीयसि निम्नाभिधेयनिरूपणप्रवणे चारुतर-चरितचर्चेऽन्वर्थामभिधां दधति गुरुगुणरत्नाकराख्ये कविकर्मणि श्रीरत्न-शेखरसूरिपट्टधराणा श्रीलक्ष्मीसागरसूरीणा कतिपयगुणगणवर्णन श्री-सोमचारित्रगणिना व्यधायि, इति समुत्पद्यते जिज्ञासाऽवसर --क इम ए-तेषा चरित्रनिरूपयितार ?, कदा कतमस्मिन् जनपदे च किमर्थमिदमार-ब्धम् ?, इति ।

तत्र स्वयमेते प्रतिसर्गान्ते समुट्टङ्कयन्ति चैवम्—

" श्रीमन्मालवमेदिनीन्दुवदनालङ्कारहारप्रभो-
रुग्रामाऽऽगरवासिकर्मतनयश्रीरत्नसङ्घप्रभो ।
आक्षेपाद् विधुवेदवर्ष्मवसुधा १५४१ वर्षे सुभिक्षोद्भवे
लक्ष्मीसागरसूरिराजविलसद्भाग्यप्रकर्षस्तवे ॥ १ ॥
श्रीजम्बूसमसोमसुन्दरगुरो श्रीसोमदेवाह्वय
शिष्य सूरिवरश्च शिष्य-वृषभश्चारित्रहसोऽस्य य ।
तस्य श्रीविबुधस्य शिष्यशिशुना काव्ये मुदा निर्मिते" इत्यादि ।

एतच्छ्लोकद्वयादुत्तानमेव जिज्ञासासार्थ प्रशाम्यति ।

तथा—

"पूज्याऽऽराध्यध्येयतमश्रीगच्छाधिराजभट्टारकपुरन्दरश्रीसोमसुन्दरसूरिशि-ष्यशिरोऽवतसकसकलसकर्णपुरुषश्रेणीप्रणीतपदपद्मसेवभट्टारकप्रभुश्रीसोमदेवसू-रिशिष्यशिरोमणिपूज्याऽऽराध्य प० चारित्रहंसगणिपादविनेयपरमाणुना सोमचा-रित्रगणिना विरचितो ग्रन्थ सम्पूर्ण " ।

इति प्रान्तलेखाच्च सर्व स्फीतमेव प्रतिभाति ।

एतस्मिन् ग्रन्थपरिशोधनकर्मणि पुस्तकत्रयसाहाय्यमासादितम्, तत्र–

१–२ पुस्तकद्वयं पूनाराजकीयविद्याऽऽलय (डक्कनकॉलेज) सकाशादधिगतम् ।

३ तृतीयं चाहमदावादनिवासिना प्रेमचन्द्रात्मजकेशवलालेन प्रहितमिति ।

एतत्परिशोधने यथाशक्ति प्रयतमानोऽपि दृष्टिदोषशीशकाक्षरयोजकयोजनाऽऽदिना संभवति स्खलने भवद्भिस्तत् प्रमार्जनीयम्—

इत्याशास्ते–

आचार्योपासक–

इन्द्रविजय ।



## अशुद्धिशोधनम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम्. | शुद्धम् |
|---|---|---|---|
| ८ | २३ | त्वोजसा | त्वोजसा । |
| ४७ | ७ | स्वाढ्य- | स्फाढ्य- |
| ७४ | २१ | -तनयः श्री- | -तनयश्री- |

आह– यदि एवम्, कथ तर्हि अनुमानविकल्पो न अनन्तर दर्शनस्य इति प्रक्रम ?। एतदाशङ्कयाह– सन्न्यायतः तत्त्वनीत्या, अक्षज्ञानेन अविकल्पेन, तद्विषयाऽनधिगते अनुमान-विकल्पविषयाऽनधिगते, कथ कस्यचिद् अधिगति, कस्यचिद् न इत्येतदपि युक्तिमदिति ?। एतदाशङ्कयाह– वस्तुनोऽनेकधर्मत्वात् एतदपि युगप देव प्रायश । इत्याह– क्षयोपशमवैचित्र्याद् इत्येतद् उक्तप्रायम्। प्रायेण उक्तम्, अतो न निर्विकल्पकमेव प्रत्यक्षमिति निगमनम् ॥

**लक्षणायोगाच्च, "प्रत्यक्षं कल्पनापोढमभ्रान्तम्" इति लक्षणम्, न चैतद् न्याय्यं परनीत्याऽनेकदोषापत्तेः, कल्पनापोढत्वस्य अव्यापकत्वात्, कल्पनायामपि स्वसंविदः प्रत्यक्षत्वाभ्युपगमात्, तस्याश्च तदव्यतिरिक्तत्वात्, व्यतिरिक्तत्वेऽधिकृतविशेषणायोगात् तत्त्वतो व्यवच्छेद्यानुपपत्तेः अवस्तुत्वात् कल्पनायाः। स्वसंविदा तत्त्वेतरविकल्पाभ्या दोषापादनमयुक्तमिति चेत्। न, तदवस्तुतत्त्वेन विकल्पधियोऽभावप्रसङ्गात् स्वसंविन्मात्रस्यैव भावात् असत्योपरागायोगात् क्लिष्टताऽसिद्धेरिति ॥**

तथा लक्षणाऽयोगाच्च न निर्विकल्पकमेव प्रत्यक्षमिति। लक्षणाऽयोगमाह– "**प्रत्यक्षं कल्पनापोढमभ्रान्तम्**" **इति लक्षणं** परकीयम्, **न च एतद् न्याय्यम्** । कुत इत्याह– **परनीत्या अनेकदोषापत्तेः** अस्य लक्षणस्य, आपत्तिश्च कल्पनापोढत्वस्य लक्षणत्वेन उपन्यस्तस्य अव्यापकत्वात्, अव्यापकत्व च कल्पनायामपि स्वसविद परेण प्रत्यक्षत्वाऽभ्युपगमात्, कल्पनाऽपि स्वसवित्ताऽधिष्ठानार्थे विकल्पनाद् इति । तस्याश्च कल्पनाया, तदव्यतिरिक्तत्वात् स्वसविदऽव्यतिरिक्तत्वात्। इत्थ चैतद् अङ्गीकर्तव्यमित्याह– **व्यतिरिक्तत्वे** कल्पनाया, स्वसविदोऽभ्युपगम्यमाने। किमित्याह– **अधिकृतविशेषणाऽयोगात्** अयोगश्च तत्त्वत परमार्थेन, व्यवच्छेद्याऽनुपपत्ते सर्वस्या एव स्वसविद कल्पनापोढत्वात्। अत्राह– **अवस्तुत्वात् कल्पनायाः स्वसंविदा** सह **तत्त्वेतरविकल्पाभ्या** तत्त्वाऽन्यत्वविकल्पाभ्यामित्यर्थः,

दोषापादनमनन्तरोदितमयुक्तमिति चेत् । एतदाशङ्कयाह- **न, नैतद्** एवम्, तदवस्तुत्वेन तस्या कल्पनाया अवस्तुत्वेन हेतुना। किमित्याह- **विकल्पधियः** कल्पनाबुद्धेः अभावप्रसङ्गात्, प्रसङ्गश्च स्वसंविन्मात्रस्य एव भावात्, सर्वत्र "इयमेव कल्पना उपरक्ता विकल्पधी" इत्यपि असद् । इति आवेदयन्नाह- **असत्याः** कल्पनाया अवस्तुत्वेन । किमित्याह-**उपरागाऽयोगात्** स्वसंविदेव क्लिष्टा विकल्पधी, इत्यपि अयुक्तिमद् । इत्याह- **क्लिष्टताऽसिद्धेरिति** स्वसंविन्मात्रत्वेन, अतः स्थितमेतद् न च एतद् न्याय्यमिति ॥

**किञ्च, एकान्तवादिनः सर्वथा कल्पनाऽपोढत्वे कल्पनाऽपोढकल्पनातोऽपि अपोढत्वात् कल्पनाऽपोढत्वलक्षणायोगः । प्रत्यक्षसामान्यं लक्षणविषय इति चेत् । न, तस्य ततो व्यतिरिक्तेतरविकल्पायोगात्, व्यतिरिक्तत्वे न तदध्यक्षलक्षणम्, अव्यतिरिक्तत्वे तु उक्तवल्लक्षणायोगः । निरूपणाऽनुस्मरणविकल्पाभ्यामविकल्पकं स्वभावविकल्पेन तु सविकल्पकमिति चेत् । न, विरोधात्, अन्यथा अनेकान्तापत्तेः स्वाभ्युपगमपरित्यागादिति ॥**

दूषणान्तरमाह-**किञ्चेत्यादिना** । किञ्च, एकान्तवादिनो वादिनः एकान्तेन कल्पनापोढमेतत्, ततश्च सर्वथा कल्पनापोढत्वे सति । किमित्याह- **कल्पनापोढकल्पनातोऽपि** अपोढत्वात् कारणात्, कल्पनापोढत्वलक्षणाऽयोग, तत्र तद्योग्यताऽभावादिति । प्रत्यक्षसामान्यम्-अप्रत्यक्षव्यावृत्तिरूपम्, लक्षणविषय इति चेत् तत्र तद्योगता इति भावः । एतदाशङ्कयाह- **न, तस्य** प्रत्यक्षसामान्यस्य, तत प्रत्यक्षात् । किमित्याह- **व्यतिरिक्तेतरविकल्पाभ्यामयोगात्** । आह च- **व्यतिरिक्तत्वे** प्रत्यक्षात् तत्सामान्यस्य, न तदध्यक्षलक्षण तद्व्यतिरिक्ततत्सामान्यलक्षणत्वात्, अव्यतिरिक्तत्वे तु प्रत्यक्षात् तत्सामान्यस्य, उक्तवद् यथोक्त तथा । किमित्याह- **लक्षणाऽयोगः** तत्र तद्योग्यताऽभावाद् इति । अत्राह-**निरूपणाऽनुस्मरणविकल्पाभ्याम्**-

एवंभूतमेतद् इति, तदात्वे आयत्यां चैतद्गोचराभ्यामविकल्पकमेतत् , स्वभावविकल्पेन तु कल्पनापोढस्वभावत्वलक्षणेन सविकल्पकमेव इति चेत् । एतदाशङ्क्याह- न, विरोधात् 'अविकल्पकं सविकल्पकं च' इति विरोध , अन्यथा निमित्तभेदतो विरोधमन्तरेण । किमित्याह- अनेकान्तवादापत्तेः । तत किमित्याह- स्वाभ्युपगमपरित्यागाद् नेति योग ॥

एवमभ्रान्तत्वविशेषणमपि असङ्गतमेव, परनीतितो व्यवच्छेद्याऽयोगात् । इन्दुद्वयादिज्ञानं व्यवच्छेद्यमिति चेत् । न, तस्याऽभ्रान्तत्वात्, एतच्च लक्षणोपपत्तेः तस्याऽपि तत्प्रकाशकस्वभावहेतुजत्वतश्च भ्रान्तताऽसिद्धेः, अन्यथा तदयोगात्, तस्य चाऽनुभवसिद्धत्वात्, न च बहिस्तद्विषयाऽनुपलब्ध्या तत्सिद्धिः, तद्ग्रहणस्वभावधिया तद्विषयाऽनुपलब्ध्यसिद्धेः, अन्यथाऽनुपलब्धौ तद्भावाऽसिद्धेरतिप्रसङ्गात् । न चाऽतैमिरिकस्याऽपि तत्प्रत्ययप्रसङ्गः, तस्य तिमिरतदन्यहेतुजन्यस्वभावत्वात्, अतैमिरिकाणां च तदभावात् तथा लोकप्रसिद्धेः । न च बाधातो अस्य भ्रान्तता, बाधाऽसिद्धेः भिन्नकालविषयप्रत्ययेन तदभ्युपगमेऽतिप्रसङ्गात्, क्वचिद् अभ्रान्तस्याऽपि असर्पादौ तदन्यतो बाधोपलब्धेश्च । न चाऽनर्थक्रियाकरणतः, अप्राप्यदेशगतजलादिज्ञानेन व्यभिचारात्, संविन्मात्रार्थक्रियाविधाने चास्य इतरत्रापि तद्भावात् तथाप्रतीतेः, न च लोकप्रतीतितः, अभ्युपगमविचारात् तेन च तदप्राप्तेः तस्य च इहाधिकृतत्वादिति अलमनया लोकागमानुभवविरुद्धया अतिसूक्ष्मेक्षिकया उक्तवत् सर्वत्र असमञ्जसतापत्तेः । यस्तु लोकादिसापेक्षः तस्यैव तद्भेदस्य विद्वदङ्गनादिलोकप्रतिष्ठितत्वात् अविगानतस्तथाऽप्रतीतेः तद्व्यवस्थाकारिसदागमभावात् उक्तदोषाभाव इति ॥

एव यथा कल्पनापोढत्वविशेषणम् , तथा अभ्रान्तत्वविशेषणमपि असगतमेव । कुत इत्याह- परनीतितो व्यवच्छेद्याऽयोगात् ।

**इन्दुद्वयादिज्ञानम्**- आदिशब्दाद् वियत्केशज्ञानादिग्रह, व्यवच्छेद्यमिति चेत्। एतदाशङ्कयाह- **न, तस्य** इन्दुद्वयादिज्ञानस्य अभ्रान्तत्वात्, एतच्चाऽभ्रान्तत्व तल्लक्षणोपपत्ते अभ्रान्तलक्षणोपपत्ते, उपपत्तिश्च तस्याऽपि इन्दुद्वयादिज्ञानस्य, तत्प्रकाशकस्वभावत्वेन इन्दुद्वयादिप्रकाशकस्वभावत्वेन, तादृक्फलजननस्वभावहेतुजत्वतश्च इन्दुद्वयादिज्ञानजननस्वभावहेतूत्पन्नत्वेन च अस्य भ्रान्तताऽसिद्धे, अन्यथा एवमनभ्युपगमे, तदयोगात् इन्दुद्वयादिज्ञानाऽयोगात्, तस्य च इन्दुद्वयादिज्ञानस्य अनुभवसिद्धत्वात्, न च बहिर्वियदादौ, तद्विषयाऽनुपलब्ध्या इन्दुद्वयादिज्ञानविषयाऽनुपलब्ध्या कारणेन, तत्सिद्धि. भ्रान्ततासिद्धि । कुत इत्याह- **तद्ग्रहणस्वभावधिया** बहिस्तद्विषयग्रहणस्वभावधिया इन्दुद्वयादिग्रहणस्वभावबुद्ध्या इत्यर्थ, तद्विषयानुपलब्ध्यऽसिद्धे इन्दुद्वयादिज्ञानविषयानुपलब्ध्यसिद्धे, तद्ग्रहणस्वभावा हि तद् गृह्णात्येव, अन्यथा तत्स्वभावताऽयोग । **अन्येत्यादि** । अन्यथा अतद्ग्रहणस्वभावया धिया इति प्रक्रम, अनुपलब्धि बहिस्तद्विषयस्य इति प्रक्रम एव इत्यन्यथानुपलब्धिस्तस्याम् । किमित्याह- **तदभावाऽसिद्धेः** बहिस्तद्विषयाऽभावाऽसिद्धे. इन्दुद्वयाद्यभावासिद्धेरित्यर्थ. । कुत इत्याह- **अतिप्रसङ्गात्**- पटादिग्रहणस्वभावया धिया घटो न गृह्यत इति तस्य अपि अभावप्रसङ्गाद् इत्यर्थ । **न चेत्यादि** । न च अतैमिरिकस्याऽपि प्रक्रमात् प्रमातुः तत्प्रत्ययप्रसङ्ग इन्दुद्वयादिप्रत्ययप्रसङ्ग, तदस्ति इति कृत्वा। कुत इत्याह- **तस्येत्यादि** । तस्य इन्दुद्वयादिप्रत्ययस्य, तिमिरसहायतदन्यहेतुजन्यस्वभावत्वात् तिमिरसहायचक्षुरादिजन्यस्वभावो हि इन्दुद्वयादिप्रत्यय । यदि नामैव तत. किमित्याह- **अतैमिरिकाणां** च प्रमातॄणाम्, तदभावात् तिमिराऽभावात्, ततश्च कारणवैकल्यात् कार्याऽभाव इति स्थितम्। इत्थ च एतदङ्गीकर्तव्यमित्याह- **तथा लोकप्रसिद्धेः** अतैमिरिकाणा तिमिराऽभावेन न इन्दुद्वयादिप्रत्यय इति लोकप्रसिद्धेः। **न चेत्यादि** । न च बाधात कारणात्, अस्य

इन्दुद्वयादिज्ञानस्य इति प्रक्रम भ्रान्तता । कुत इत्याह्– **बाधासिद्धेः** तस्यैव तिमिराऽपगमे एकेन्द्वादिज्ञानभावतो बाधा । इत्यारेकानिरासाय आह्– **भिन्नेत्यादि** । भिन्नौ काल विषयौ यस्य स भिन्नकालविषय, एवंभूतश्चासौ प्रत्ययश्च इति विग्रहस्तेन, तदभ्युपगमे बाधाऽभ्युपगमे । किमित्याह्– **अतिप्रसङ्गात्**– सर्व एवभूत तदन्यस्य बाधक इति अतिप्रसङ्ग । दोषान्तरमाह्– **क्वचिदित्यादिना** । क्वचिद् मन्दमन्दप्रकाशादौ, अभ्रान्तस्याऽपि प्रक्रमाद् ज्ञानस्य, असर्पादौ असर्पादिविषयस्य, तदन्यतो भ्रान्ताद् ज्ञानाद् इति प्रक्रम एव । किमित्याह्– **बाधोपलब्धेश्च** तथा रज्जुचलनादे सर्पज्ञाने न तदसर्पज्ञानस्य, इति चाऽलौकिकमेतद् अतो भावनीयमिति । दोषान्तरमभिधातुमाह्– **न चेत्यादि** । न च अनर्थक्रियाकरणतोऽस्य भ्रान्तता इति वर्तते । कुत इत्याह्– **अप्राप्यदेशगतजलादिज्ञानेन व्यभिचाराद्** इति भावितार्थमेतत् । सविद्मात्राऽर्थक्रियाविधाने च अस्य अनन्तरोदितज्ञानस्य । किमित्याह्– **इतरत्राऽपि** प्रक्रमाद् इन्दुद्वयादिज्ञानेऽपि, तद्भावात् सविद्मात्राऽर्थक्रियाविधानभावाद्, भावश्च तथाप्रतीते । **न चेत्यादि** । न च लोकप्रतीतितोऽस्य भ्रान्तता इति प्रक्रम । कुत इत्याह्– **अभ्युपगमविचारात्** । यदि नामैव तत किमित्याह्– **तेन च** अभ्युपगमेन, तदप्राप्ते उक्तवद् भ्रान्तताऽप्राप्ते, तस्य च अभ्युपगमस्य, इह प्रक्रमे अधिकृतत्वात्, ततश्च ततो यत् सिद्ध्यति तत् तत्त्वम्, अतोऽन्यद् अतत्त्वमित्यलमनया एवभूतया, लोका-ऽऽगमाऽ-नुभवविरुद्धया अतिसूक्ष्मेक्षिकया । किमित्यत आह्– **उक्तवद्** यथोक्त तथा, सर्वत्र असमञ्जसतापत्ते, अतो जातिरियमिति प्रतिपत्तव्या सर्वत्र तत्त्वेन । यस्तु लोकादिसापेक्षो लोका-ऽऽगमा-ऽनुभवसापेक्षो वादी इति गम्यते, तस्य उक्तदोषाऽभाव इति सबन्ध । कथमित्याह्– **एतद्भेदस्य** प्रक्रमाद् भ्रान्तेतरज्ञानभेदस्य, आविद्धदङ्गनादिलोकप्रतिष्ठितत्वात् कारणात्, एतत् प्रतिष्ठितत्व च अविगानतस्तथा भ्रान्तेतरत्वेन प्रतीते, तथा तद्व्यवस्थाकारिसदागमभावाद्

द्रोणस्य आढकस्य च वापो द्रौणिक , आढकिक , "तस्य वापे" ॥६।४।१५९॥ इतीकण् , आदिशब्दात् खार्या वाप खारीक इत्यादय , उप्यतेऽस्मिन् इति वाप क्षेत्रम् , द्रोणाढकयोर्वापो द्रोणाढकवाप , आदिशब्दाद् द्रोण पचति सभवति अवहरति द्रौणिक. कटाह इत्याद्यर्थ ॥ १ ॥ १ ॥

खलधान पुन खलम् ॥ ३५ ॥

खलन्ति सञ्चीयमानानि धान्यानि अत्र खलधानम् , पृषोदरादित्वात् ॥ १ ॥ खल्यन्ते सञ्चीयन्ते धान्यानि अत्र खल त्रिलिङ्ग , "गोचरसचर-" ॥ ५।३।१३१ ॥ इति निपातनाद् घ ॥ २ ॥ ३५ ॥

चूर्णे क्षोदः

चूर्यते स्म चूर्ण पुक्लीबलिङ्ग , तत्र ॥ १ ॥ क्षुद्यते क्षोद धूलिप्रायोऽयम् , यत् शाश्वत – "चूर्णानि वासयोगा स्युश्चूर्णो धूलि सशर्कर" इति ॥ २ ॥

अथ रजसि स्युः धूलीपांशुरेणव. ।

रज्यते वस्त्राद्यनेन रज क्लीबलिङ्ग , "मिथिरञ्जि-" ॥ ( उणा–९७१ ) ॥ इति किदस् , तत्र ॥१॥ धूयते धूलि स्त्रीलिङ्ग , "धूमूभ्या-" ॥ (उणा–७०१) ॥ इति लिक् , ङ्या धूली ॥ २ ॥ 'पसुण् नाशने दन्त्यान्त' पसयति पांसु पुलिङ्ग , "पसेर्दीर्घश्च" ॥ ( उणा–७१८ ) ॥ इत्यु ॥ ३ ॥ रीयते रेणु स्त्रीलिङ्ग ,"अजिस्था-" ॥ ( उणा–७६८ ) ॥ इति णु ॥ ४ ॥

लोष्टे लोष्टुर्दलिर्लेष्टुः

लुष्यते लोष्ट. मृत्-शकल पुंक्लीबलिङ्ग , "लुषेष्ट" ॥ ( उणा–१३८ ) ॥ तत्र ॥ १ ॥ 'लोष्टि सङ्घाते' लोष्ट्यते लोष्टु पुलिङ्ग , "भृमृतृ" ॥ ( उणा–७१६ ) ॥ इत्यु ॥ २ ॥ दलयति दलि स्त्रीलिङ्ग , "स्वरेभ्य इ" ॥ ( उणा–६०६ ) ॥ ३ ॥ लिश्यते लेष्टु पुलिङ्ग , "कृसिकम्य-" ॥ ( उणा–७७३ ) ॥ इति बहुवचनात् तुन् ॥ ४ ॥

वल्मीकः कृमिपर्वतः ॥ ३६ ॥

वम्रीकूट वामलूरो नाकु शक्रशिरश्च स· ।

वलन्ते प्राणिनोऽत्र वल्मीक पुंक्लीबलिङ्ग , "सृणीकास्तीक-" ॥ (उणा–५०) इतीके निपात्यते ॥१॥ कृमीणा पर्वत इव कृमिपर्वत ॥२॥ ३६ ॥ वम्रीणामुपदेहिकाना कूट शिखरं वम्रीकूटम् ॥ ३ ॥ वाम वामैर्वा लूयते वामलूर , "सिन्दूर-" ॥ ( उणा–४३० ) ॥ इत्यूरे निपात्यते ॥ ४ ॥ नमति नाकु पुलिङ्ग , "नमेर्नाक् च" ॥ (उणा–७२०) ॥ इत्यु ॥ ५ ॥ शक्रस्य शिरो मूर्द्धा शक्रशिर ॥६॥

नगरी पू पूरी द्रङ्ग पत्तन पुटभेदनम् ॥ ३७ ॥
निवेशनमधिष्ठान स्थानीय निगमोऽपि च ।

नश्यन्त्यस्या नगरी स्त्रीक्लीबलिङ्ग, "जठर-"॥ (उणा-४०३) ॥ इत्यरे निपात्यते, नगा सन्त्यस्यामिति वा मध्वादित्वाद् र ॥१॥ पूर्यते पू, सपदादित्वात् क्विप् ॥ २ ॥ पुरति पूरी त्रिलिङ्ग ॥ ३ ॥ द्रमन्त्यत्रेति द्रङ्ग, "द्रमो णिद् वा"॥ (उणा-९५) ॥ इति ग ॥ ४ ॥ पतन्त्यस्मिन् पत्तनम्, "वापति-" ॥ (उणा-२९२) ॥ इति तन, पट्टनमपि ॥५॥ पुटा भाण्डवासनानि भिद्यन्तेऽत्र पुटभेदनम्॥६॥३७॥ निविशन्तेऽत्र निवेशनम् ॥ ७ ॥ अधितिष्ठन्त्यस्मिन्नधिष्ठानम् ॥ ८ ॥ तिष्ठन्त्यस्मिन् स्थानीयम्, "बहुलम्" ॥ ५ । १ । २ ॥ इत्यधिकरणेऽप्यनीय ॥ ९ ॥ नियत गच्छन्त्यत्र निगम, "गोचरसचर-" ॥ ५।३।१३१ ॥ इति घ, वाचस्पतिस्तु—

"स्यात् स्थानीय त्वतिलम्बो ग्रामो ग्रामशताष्टके ।
तदर्द्ध तु द्रोणमुख तच्च कर्वटमस्त्रियाम्" ॥ १ ॥
कर्वटार्द्धे कर्वुटिक स्यात्तदर्द्धे तु कार्वटम् ।
तदर्द्धे पत्तन तच्च पत्तन पुटभेदनम् ॥ २ ॥
निगमस्तु पत्तनार्द्धे तदर्द्धे तु निवेशनम् ।
कर्वटादधमो द्रङ्ग पत्तनादुत्तमश्च स ॥ ३ ॥
उद्रङ्गश्च निवेशश्च स एव द्रङ्ग इत्यपि ।" इति विशेषमाह ॥ १० ॥

शाखापूर तूपपुरम्

शाखा समीपवर्त्ति पुर शाखापुरम्, यदाह-

"शाखा वेदिविभागे स्यात् पादपाङ्गान्तिकेऽपि च"[1] ।

उप समीपे पुरस्य मूलनगरस्य उपपुरम् ॥ १ ॥

खेट. पुरार्द्धविस्तर. ॥ ३८ ॥

खिट्यते खेट, पुरस्यार्द्ध विस्तरोऽस्य पुरार्द्धविस्तर· ॥ १ ॥ ३८ ॥

स्कन्धावारो राजधानी

षण्णाममात्यादीना प्रधानभूतत्वाद् राजा स्कन्धस्तमावृणोति स्कन्धावार ॥ १ ॥ राजा नृपो धीयतेऽस्या राजधानी स्त्रीक्लीबलिङ्ग ॥ २ ॥

कोट्टदुर्गे पुन. समे ।

कुट्यते कोट पुंक्लीबलिङ्ग, पृषोदरादित्वाद् गुण ॥ १ ॥ दु·खेन गम्यतेऽस्मिन् दुर्गम्, "सुगदुर्गमाधारे" ॥५।१।१३२॥ इति साधु ॥ २ ॥

---

१ वृक्षा इत्यर्थ· ।

गया पूर्गयराजर्षेः

गच्छन्ति अस्या गया, "गयहृदया"॥ (उणा-३७०)॥ इत्यधे निपात्यते॥१॥

कन्यकुब्जं महोदयम् ॥ ३९ ॥

कन्याकुब्जं गाधिपुरं कौशं कुशस्थलं च तत् ।

कन्या कुब्जा अत्र कन्यकुब्जम्, तत्र हि जमदग्निना शापेन नरपते कन्या कुब्जीकृता इति प्रसिद्धिः, "ङ्यापो बहुलं" ॥ २।४।९९ ॥ इति ह्रस्वः, ह्रस्वत्वाऽभावे कन्याकुब्जम् ॥१॥२॥ महान् उदयोऽस्य महोदयम्, एते त्रयः स्त्रीक्लीबलिङ्गाः ॥३॥३९॥ गाधे राज्ञः पुरं गाधिपुरम्॥४॥कुशाः सन्ति अत्र कौशम्, चातुरर्थिकोऽण् ॥५॥ कुशानां स्थलं कुशस्थलम् ॥ ६ ॥

काशिर्वराणसी वाराणसी शिवपुरी च सा ॥ ४० ॥

काशते काशिः स्त्रीलिङ्गः, "पदिपठि-" ॥ ( उणा-६०७ ) ॥ इति इः ॥ १ ॥ वाराणसीशब्दस्य पृषोदरादित्वात् ह्रस्वत्वे वराणसी ॥२॥ वरणा च असिश्च वरणासी नद्यौ तयोरदूरभवा चातुरर्थिकोऽण्, "वृद्धिः स्वरेष्वादे -" ॥७।४।१॥ इति वृद्धौ रेफाऽकारस्य पृषोदरादित्वाद् दीर्घत्वे णकाराऽऽकारस्य ह्रस्वत्वे च ङ्यां वाराणसी, यद्वा वृणाते "मुमुचा-"॥ (उणा-२७८)॥ इत्याने वराणो वीरणाभिधानम्, वराणाः सन्त्यत्र वराणसा नदी "तृणादेः सल्"॥६।२।८१॥ इति चातुरर्थिकः सल्, तस्या अदूरभवेति वा देशो वा वराणसस्तत्र भवा वा, वारैरनितीति वा " गोपादेरनेरसिः "॥ ( उणा-७०८ ) ॥ इत्यसिस्ततो ङी ॥३॥ शिवस्य पुरी शिवपुरी ॥४॥४०॥

साकेतं कोसलाऽयोध्या

सा लक्ष्मीः कं सुखं ताभ्यामितं साकेतम् ॥ १ ॥ कोसलदेशयोगात् कोसला ॥ २ ॥ न योध्यते परैरयोध्या ॥ ३ ॥

विदेहा मिथिला समे ।

विदिह्यते विदेहा ॥ १ ॥ मिथ्यते मिथिला, " गुपिमिथि-" ॥ ( उणा-४८३ ) ॥ इति किदिलः ॥ २ ॥

त्रिपुरी चेदिनगरी

तृतीया पुरी त्रिपुरी मयूरव्यंसकादित्वात्, त्रयाणां पुराणां समाहारो वा भाष्यकारवचनात् स्त्रीत्वम् ॥ १ ॥ चेदीनां नगरी चेदिनगरी ॥ २ ॥

कौशाम्बी वत्सपत्तनम् ॥ ४१ ॥

कुशाम्बेन निर्वृत्ता कौशाम्बी चातुरर्थिकोऽण् ॥ १ ॥ वत्सराजस्य वत्सदेशे वा पत्तनं वत्सपत्तनम् ॥ २ ॥ ४१ ॥

५०

उज्जयनी स्याद् विशालाऽवन्ती पुष्पकरण्डिनी ।

उत्कर्षेण जयति उज्जयनी रम्यादित्वाद् अनट्, अन्ये तु उज्जयनी नाम राक्षसी देवता वा तस्या निवास उज्जयनीति चातुरर्थिकमणमुत्पाद्य तस्य लोपमिच्छन्ति ॥१॥ विशेषेण शालते विशाला, विशिष्टा शाला अत्रेति वा, विस्तीर्णत्वाद् वा॥२॥ अव्यतेऽवन्ती ॥३॥ पुष्पकरण्ड नामोद्यानम्, तदत्रास्ति पुष्पकरण्डिनी । यद्व्याडि –

"उज्जयन्या यदुद्यानं तत् स्यात् पुष्पकरण्डकम्" इति ॥ ४ ॥

पाटलिपुत्रं कुसुमपुर

पाटलिभि पुनाति पाटलिपुत्रम्," पुत्रादय " ॥ ( उणा–४५५ ) ॥ इति निपात्यते ॥ १ ॥ कुसुमबहुलं पुरं कुसुमपुरम् ॥ २ ॥

चम्पा तु मालिनी ॥ ४२ ॥

लोमपादकर्णयो पूः

चणन्ति अस्या चम्पा, " भापाचणि " ॥ (उणा–२९६) ॥ इति प ॥१॥ माला सन्त्यस्या मालिनी ॥ २ ॥ ४२ ॥ लोमपादो राजर्षि, कर्ण कौन्तेय तयो पू लोमपादपूरी ॥ ३ ॥ कर्णपूरी ॥ ४ ॥

देवीकोट उमावनम् ।

कोटिवर्षं बाणपुर स्यात् शोणितपुरं च तत् ॥ ४३ ॥

देव्या कोट कौटिल्यमत्र देवीकोट ॥ १ ॥ उमाया वनमुमावनम् ॥ २ ॥ कोटिभिर्वर्षति कोटिवर्षम् ॥ ३ ॥ बाणाऽसुरस्य पुर बाणपुरम् ॥ ४ ॥ शोणितलिप्त पुरं शोणितपुरम् ॥ ५ ॥ ४३ ॥

मथुरा तु मधूपघ्नं मधुरा

मथति चित्तं मथुरा, " वाश्यासि- " ॥ ( उणा–४२३ ) ॥ इत्युर, मथुराया पिशाच्या अदूरभव नगरमित्यन्ये ॥ १ ॥ मधोर्दानवस्य उपघ्न आश्रयोऽत्र मधूपघ्नम् ॥ २ ॥ मधुना राजते मधुरा, मधुराधिष्ठितोऽस्या अस्तीति वा मध्वादित्वाद् र ॥ १ ॥

अथ गजाह्वयम् ।

स्याद् हास्तिनपुर हस्तिनीपुरं हस्तिनापुरम् ॥ ४४ ॥

गजस्याह्वयोऽस्य गजाह्वयम्, यद्भारते–"नगरे नागसाह्वये" इति, "तेन गजपुरं नाम नगरम्, इत्यादि ॥१॥ हस्तिन्या इद हास्तिनं तच्च तत्पुरं च हास्तिनपुरम् ॥२॥ हस्तिन्या पुर हस्तिनीपुरम् ॥ ३ ॥ पृषोदरादित्वाद् आत्वे हस्तिनापुरम् ॥४॥४४॥

तामलिप्तं दामलिप्त तामलिप्ती तमालिनी ।

स्तम्बपूर्विष्णुगृहं च स्याद्

ताम्यद्भिर्लिप्यते तामलिप्तम्, तामलिप्ती पृषोदरादित्वात् ॥१॥२॥ दामभिर्लिप्यते छाद्यते दामलिप्तम् ॥३॥ तमाला सन्त्यस्या तमालिनी ॥४॥ स्तम्बगहना पू स्तम्बपू, समासान्तविधेरनित्यत्वाद् अदभाव ॥५॥ विष्णोर्गृहं विष्णुगृहम् ॥६॥

विदर्भा तु कुण्डिनम् ॥ ४५ ॥

विशिष्टो दर्भ सदर्भ कुशो वाऽस्या विदर्भा ॥१॥ कुड्यते पापमत्र कुण्डिनम्, 'शाकठि " ॥ (उणा–२८२)॥ इतीन, कुण्डिनपुरम्, कुण्डिनापुरमित्यपि॥२॥४५॥

द्वारवती द्वारका स्याद्

द्वाराणि सन्ति अस्या द्वारवती ॥१॥ द्वारै कायति द्वारका, द्वरतीति वा णके क्षिपकादित्वाद् इत्वाभाव ॥ २ ॥

निषधा तु नलस्य पूः ।

नितरा स्यन्ति कर्माणि अस्या निषधा, "ने स्यतेरधक्" ॥ (उणा–२५२) ॥ इत्यधक् ॥ १ ॥

प्राकारो वरणः साले

प्रकुर्वन्ति तमिति प्राकार, " घञ्युपसर्गस्य- " ॥ ३।२।८६ ॥ इति दीर्घ ॥ १ ॥ वृणोति वरण, "तॄकॄ-" ॥ ( उणा–१८७ ) ॥ इत्यण ॥ २ ॥ सल्यते सालस्तत्र ॥ ३ ॥

चयो वप्रोऽस्य पीठभूः ॥ ४६ ॥

अस्य प्राकारस्य पीठभूर्मूलभूमि चीयते चय प्राकाराऽऽधार ॥१॥ उप्यतेऽत्र इति वप्र पुक्लीबलिङ्ग, " भीव्रधि- " ॥ (उणा–३८७) ॥ इति र ॥२॥४६॥

प्राकाराग्रं कपिशीर्ष

प्राकारस्याऽग्र प्राकाराग्रम् ॥१॥ कपेरिव शीर्षमस्य कपिशीर्षम् ॥२॥

क्षौमाऽट्टाऽट्टालकाः समा ।

क्षुवन्ति शब्दायन्ते योधा अत्र क्षौमम्, " रुक्मग्रीष्म- " ॥ ( उणा–३४६) ॥ इति मे निपात्यते ॥ १ ॥ ' अट्टि हिंसाऽतिक्रमयो ' अट्टन्तेऽत्र अट्ट, पुक्लीबलिङ्गौ ॥ २ ॥ चात्वाल- ' ॥ (उणा -४८०) ॥ इत्याले निपातनाद् अट्टाल, केऽट्टालक प्राकाराग्रे रणगृहम् ॥ ३ ॥

पूर्द्वारे गोपुरं

पुरो द्वार पूर्द्वार तत्र ॥ १ ॥ गोप्यते गोपुरम्, "श्वश्रु-" ॥ (उणा-४२६) ॥ इति उरे निपात्यते ॥ २ ॥

**रथ्याप्रतोलीविशिखा. समाः ॥४७॥**

रथान् वहति रथ्या, "वहति रथ-" ॥७।१।२॥ इति य ॥ १ ॥ प्रतोल्यते प्रतोली ॥ २ ॥ विशायते जनसमर्दैन विशिखा, "श्यतेरिच्च वा" ॥ (उणा-८५) ॥ इति ख, विगता शिखा मुण्डितेव समत्वादिति वा ॥३॥४७॥

**परिकूटं हस्तिनखो नगरद्वारकूटके ।**

परित कूट्यते परिकूटं पुक्लीबलिङ्ग ॥ १ ॥ हस्तिनख इव हस्तिनख दुर्गद्वारावतरणार्थं क्रमनिम्नो मृत्कूटोऽपसोपानाख्य, बहिरतटमन्त सोपानयुक्तं युद्धार्थमित्येके ॥ २ ॥ नगरद्वारे कूटो नगरद्वारकूटस्तत्र ॥ ३ ॥

**मुख नि सरणे**

गृहादेर्नि स्रियते प्रविश्यते च येन तद् मुखमिव मुखम्, यत् कौटिल्य - "मुखसम सक्रम" इति ॥ १ ॥ नि स्रियतेऽनेन नि सरण तत्र ॥ २ ॥

**वाटे प्राचीनाऽऽवेष्टकौ वृति. ॥ ४८ ॥**

वट्यतेऽनेन वाट त्रिलिङ्गस्तत्र ॥ १ ॥ प्रागेव प्राचीनम्, "अदिक्स्त्रिया-" ॥ ७।१।१०७ ॥ इतीन ॥ २ ॥ आवेष्टते आवेष्टक ॥ ३ ॥ व्रियतेऽनया वृति ॥ ४ ॥ ४८ ॥

**पदव्येकपदी पद्या पद्धतिर्वर्त्म वर्त्तनी ।**
**अयन सरणिर्मार्गोऽध्वा पन्था निगमः सृति ॥ ४९ ॥**

पद्यन्तेऽनया पदवि, "छविच्छिवि-" ॥ (उणा-७०६) ॥ इति वौ निपात्यते ङया पदवी ॥ १ ॥ एक पादोऽस्यामेकपदी कुम्भपद्यादित्वात् साधु ॥ २ ॥ पदमस्या दृश्य पद्या, "हृद्यपद्य-" ॥ ७।१।११ ॥ इति य ॥ ३ ॥ पादाभ्या हन्यते पद्धति, "हिमहति" ॥ ३।२।९६ ॥ इति पदादेश ॥ ४ ॥ वर्त्तन्तेऽनेन वर्त्म क्लीबलिङ्ग, "मन्" ॥ (उणा-९११) ॥ इति मन् ॥ ५ ॥ "सदिवृति-" ॥ (उणा-६८०) ॥ इति अनौ वर्तनि, ङया वर्त्तनी ॥६॥ अयन्तेऽनेन अयनम् ॥७॥ सरन्ति अस्या सरणि स्त्रीलिङ्ग, 'ऋहृसृ-" ॥ (उणा-६३८) ॥ इत्यणि ॥ ८ ॥ मार्गन्ति अनेन मार्ग, म्रियन्तेऽत्रेति वा, 'भृङ्गशार्ङ्ग" ॥ (उणा-९६) ॥ इति गे निपात्यते ॥९॥ अतन्ति अत्र पान्था अध्वा, "अतेर्धच" ॥ (उणा-९०९) ॥ इति क्वनिप् ॥१०॥ पथन्ति अस्मिन् पन्था पुलिङ्गौ, "पथिमथिभ्याम्" ॥ (उणा-९२६) ॥ इतीन् ॥११॥ निगच्छन्ति अनेन निगम ॥१२॥ सरन्ति अनया सृति ॥१३॥४९॥

**सत्पथे सतितः पन्थाः**

संश्चासौ पन्थाश्च सत्पथस्तत्र ॥ १ ॥ स्वतिशब्दाभ्या पर पन्था, पूजित पन्था सुपन्था , पूजित पन्था अतिपन्था , "पूजास्वते प्राक् टात्" ॥ ७।३।७२ ॥ इति समासान्तनिषेध ॥ २ ॥ ३ ॥

अपन्था अपथ समे ।

न पन्था अपन्था , "नञ्तत्पुरुषात्" ॥७।३।७१॥ इति समासान्तनिषेध ॥१॥ नञो निर्दिष्टस्य अनित्यत्वात् समासान्ते सति अपथम्, "पथं[2] सङ्ख्याऽव्ययोत्तर "॥ (हैमलिङ्गानु० नपु० श्लो–८) ॥ इति क्लीबत्वम् , पथोऽभाव इति अव्ययीभावो वा॥२॥

व्यध्वो दुरध्व. कदध्वा विपथ कापथ च स ॥ ५० ॥

विरुद्धोऽध्वा व्यध्व ॥१॥ दुष्टोऽध्वा दुरध्व , "उपसर्गादध्वन " ॥७।३।७९॥ इत्यत्समासान्त ॥ २ ॥ कुत्सितोऽध्वा कदध्वा ॥३॥ विरुद्ध पन्था विपथम् ॥४॥ कुत्सित पन्था कापथम्, "काक्षपथो " ॥३।२।१३४॥ इति कादेश , "पथ सङ्ख्या ऽव्ययोत्तर "॥(हैमलिङ्गानु०नपु०श्लो–८)॥ इति क्लीबत्वम् । अमरस्तु– विपथका-पथशब्दौ पुस्याह, गौडश्च यदाह– "व्यध्वो विपथकापथौ" इति ॥ ५ ॥ ५० ॥

प्रान्तरं दूरशून्योऽध्वा

प्रगता अन्तरेऽस्मात् प्रान्तर दूरशून्यो मार्ग ॥ १ ॥

कान्तारो वर्त्म दुर्गमम् ।

कम्यते कान्तार पुंक्लीबलिङ्ग , "द्वारश्रृङ्गार-" ॥ ( उणा–४११) ॥ इत्यारे निपात्यते, कस्य अम्भसोऽन्तमियर्तीति वा ॥ १ ॥

सुरुङ्गा तु सन्धिला स्याद् गूढमार्गो भुवोऽन्तरे ॥ ५१ ॥

सरत्यनया सुरुङ्गा, "सर्त्तेे सुर्च" ॥ ( उणा–१०८ ) ॥ इत्युङ्ग ॥ १ ॥ सन्धिं लाति सन्धिला, सन्धिरपि, भूमिमध्ये गूढोमार्ग ॥ २ ॥ ५१ ॥

चतुष्पथे तु सस्थानं चतुष्क

चतुर्णा पथा समाहारश्चतुष्पथ तत्र ॥ १ ॥ सतिष्ठतेऽत्र संस्थानम् ॥ २ ॥ चत्वारोऽवयवा अस्य चतुष्कम् ॥ ३ ॥

त्रिपथे त्रिकम् ।

त्रयाणा पथा समाहारस्त्रिपथ तत्र ॥ १ ॥ त्रयोऽवयवा अस्य त्रिकम् ॥२॥

द्विपथं तु चारपथः

द्वौ पन्थानौ समाहृतौ द्विपथम् ॥ १ ॥ चाराय पन्थाश्चारपथ ॥ २ ॥

---

१ "समासान्ता ऽऽगम-सज्ञा ज्ञापक गण नञ्निर्दिष्टानि अनित्यानि " ॥ ( न्यायमञ्जूषा–न्या–३५ ) ॥ इति परिभाषया ।

२ सङ्ख्यावाचिनोऽव्ययाच्च पर पथशब्द क्लीबलिङ्ग , इति भाव ।

गजाद्यध्वा त्वसङ्कुल ॥ ५२ ॥
घण्टापथ ससरणं श्रीपथो राजवर्त्म च ।
उपनिष्क्रमण चोपनिष्कर च महापथ ॥ ५३ ॥

असङ्कुलो गजादीना मार्ग ॥ १ ॥ ५२ ॥ घण्टोपलक्षिताना हस्तिना पन्था घण्टापथ, चाणाक्योक्तोऽष्टदण्डपृथु पन्था ॥२॥ सम्यक् सरन्त्यत्र संसरणम् ॥३॥ श्रिया उपलक्षित पन्था श्रीपथ ॥ ४ ॥ राजयोग्य वर्त्म राजवर्त्म ॥ ५ ॥ उपनिष्क्रम्यतेऽस्मिन् उपनिष्क्रमणम् ॥ ६ ॥ उपनिष्कीर्यते सैन्यमस्मिन् उपनिष्करम् ॥ ७ ॥ महाश्चासौ पन्थाश्च महापथ ॥ ८ ॥ ५३ ॥

विपणिस्तु वणिग्मार्गः

विपण्यन्तेऽस्या विपणि स्त्रीलिङ्ग, "पदिपठि-" ॥ ( उणा–६०७ ) ॥ इति इ ॥ १ ॥ वणिजा मार्गो वणिग्मार्ग पण्यवीथ्यपि ॥ २ ॥

स्थान तु पदमास्पद ।

तिष्ठन्त्यस्मिन् स्थानम् ॥१॥ पद्यतेऽस्मिन् पदम्, "वर्षादय क्लीबे" ॥५।३।२९॥ इत्यल् ॥ २ ॥ आ समन्तात् पदमास्पद वर्चस्कादित्वात् साधु ॥ ३ ॥

श्लेषस्त्रिमार्ग्याः शृङ्गाट

त्रयाणा मार्गाणा श्लेषो मेलन श्रीयते तदिति शृङ्गाटम्, "कपाटविराट-" ॥ ( उणा–१४८ ) ॥ इत्याटे निपात्यते. शृङ्गैरटन्ति अस्मिन्निति वा, शृङ्गाटवद् मार्गै-स्त्रिकोणत्वाद् वा ॥ १ ॥

बहुमार्गी तु चत्वरम् ॥ ५४ ॥

बहवो मार्गा समाहृता बहुमार्गी ॥ १ ॥ चत्यते चत्वरम्, "कृगृशॄ-" ॥ ( उणा–४४१ ) ॥ इति वरट् ॥ २ ॥ ५४ ॥

श्मशानं करवीरं स्यात् पितृप्रेताद् वन गृहम् ।

शवाना शयन श्मशानम्, पृषोदरादित्वात् ॥ १ ॥ करैर्वीरयन्तेऽत्र करवीरम् ॥ २ ॥ पितृप्रेतादिति समाहारद्वन्द्वो यथासंख्यानिवृत्त्यर्थ, तेन पितृप्रेतशब्दाभ्या पर वन गृहं च, पितॄणा वन गृह च पितृवन पितृगृहम् ॥ ३ ॥ ४ ॥ एव प्रेतवनम् ॥ ५ ॥ प्रेतगृहम् ॥ ६ ॥

गेहभूर्वास्तु

गेहाय भूमिर्गेहभू ॥१॥ वसन्त्यत्र वास्तु पुक्लीबलिङ्ग, " वसेर्णिद् वा " ॥ ( उणा–७७४ ) ॥ इति तुन् ॥ २ ॥

गेह तु गृह वेश्म निकेतनम् ॥ ५५ ॥
मन्दिर सदनं सद्म निकाय्यो भवन कुट ।
आलयो निलय. शाला सभोदवसित कुलम् ॥ ५६ ॥
धिष्ण्यमावसथ· स्थानं पस्त्य सस्त्याय आश्रय ।
ओको निवास आवासो वसतिः शरण क्षय. ॥ ५७ ॥
धामाऽगार निशान्त च

केतन्ति निवसन्ति अत्र गेहम्, "कितो गे च" ॥ ( उणा–५८७) ॥ इति ह ॥ १ ॥ गृह्णाति पुरुषोपार्जित द्रव्यमिति गृहम्, " गेहे ग्रह " ॥ ५।१।५५ ॥ इति क, पुक्लीबलिङ्गावेतौ ॥२॥ विशन्ति अस्मिन्निति वेश्म क्लीबलिङ्ग, "मन्"॥ ( उणा–९११ ) ॥ इति मन् ॥ ३ ॥ निकेतन्त्यत्र निकेतनम् ॥ ४ ॥ ५५ ॥ मन्द्यते स्तूयतेऽत्र मन्दिर स्त्रीक्लीबलिङ्ग, " मदिमन्दि- " ॥ (उणा–४१२) ॥ इतीर ॥ ५ ॥ सीदन्त्यस्मिन् सदनम् ॥ ६ ॥ " मन् " ॥ ( उणा–९११ ) ॥ इति मनि सद्म क्लीबलिङ्ग ॥७॥ नितरा चीयते निकाय्य, ' धाय्यापाय्य-" ॥५।१।२४॥ इति ध्यणि निपात्यते ॥ ८ ॥ भवन्त्यस्मिन् भवन पुंक्लीबलिङ्ग ॥ ९ ॥ कुव्यतेऽस्मिन् कुट स्त्रीपुसलिङ्ग ॥ १० ॥ आलीयन्तेऽस्मिन्नालय ॥ ११ ॥ एवं निलय ॥ १२ ॥ शायते शाला, " शामाश्या- " ॥ ( उणा–४६२ ) ॥ इति ल शालते वा, शलन्त्यस्या वा ॥ १३ ॥ सह भान्त्यस्या सभा ॥ १४ ॥ उदवसिनोति स्मोदवसितम्, ऊर्ध्वमवसीयते वा ॥ १५॥ कोलन्ति अत्र कुलम्, स्थादित्वात् क ॥१६॥ ॥ ५६ ॥ धृष्णुवन्त्यस्मिन् धिष्ण्यम् " शिक्यास्याढ्या " ॥ ( उणा–३६४ ) ॥ इति ये निपात्यते ॥१७॥ आवसन्ति अस्मिन्नावसथ "उपसर्गाद् वस ॥(उणा–२३३) ॥ इत्यथ ॥ १८ ॥ तिष्ठन्त्यत्र स्थानम् ॥ १९ ॥ ' पसि निवासे ' सौत्रो दन्त्यान्त, पसन्त्यस्मिन् पस्त्यम्, " मृशीपसि- " ॥ (उणा–३६०) ॥ इति तकारादिर्ये, अपस्त्यायति सघातीभवतीति वा पृषोदरादित्वात् ॥ २० ॥ संस्त्यायन्त्यत्र सस्त्याय ॥ २१ ॥ आश्रयन्त्येनमाश्रय ॥२२॥ उच्यन्त्यस्मिन् ओक· क्लीबलिङ्ग·, " उच्यञ्चे कश्च " ॥ ( उणा–९६५ ) ॥ इत्यस् ॥ २३ ॥ निवसन्त्यस्मिन्निवास ॥२४॥ एवमावास ॥२५॥ वसन्त्यस्या वसति स्त्रीलिङ्ग, "खल्यमि-" ॥ ( उणा–६५३ ) ॥ इत्यति ॥ २६ ॥ शीर्यते शीताद्यनेन शरणम् ॥ २७ ॥ क्षयन्त्यत्र क्षय ॥ २८ ॥ ५७ ॥ दधत्यस्मिन्नाश्रयं धाम क्लीबलिङ्ग, " मन् " ॥ ( उणा–९११ ) ॥ इति मन्, " अर्त्तीरि- " ॥ ( उणा–३३८ ) ॥ इति मे धाममपि ॥ २९ ॥ अग्यतेऽस्मिन्नगारम् "अग्यङ्गि-" ॥ ( उणा–४०५ ) ॥ इत्यार·, अगान् वृक्षानियर्त्ति वा ॥ ३० ॥ निशाम्यन्त्यस्मिन्निशान्तम्, " अद्यर्थाच्चाधारे " ॥५।१।१२॥ इति क्त, निशाया अन्तोऽत्रेति केचित् ॥३१॥

कुट्टिम त्वस्य बद्धभू ।

अस्य गृहस्य पाषाणादिर्भिबद्धा भूमि , कुट्ट्यते कुट्टिम पुक्लीबलिङ्ग , "कुट्टि वेष्टि" ॥ (उगा-३४९) ॥ इताम ॥ १ ॥

चतु शाल सजवन

चनस्र शाला समाहृताश्चतु शालम् ॥ १ ॥ सजवन्तेऽत्र सजवनम् ॥ २ ॥

सौधं तु नृपमन्दिरम् ॥ ५८ ॥

सुधया धवलीकृत सौध पुक्लीबलिङ्ग ॥ १ ॥ ५८ ॥

उपकारिकोपकार्या

उपकरोत्युपकारिका ॥ १ ॥ उपक्रियते उपकार्या, उपकर्याऽपि, पटमण्डपादि राजसदनम् ॥ २ ॥

सिंहद्वारं प्रवेशनम् ।

सिंहस्येव द्वार सिंहद्वारम् ॥ १ ॥ प्रविश्यतेऽनेन प्रवेशनम् ॥ २ ॥

प्रासादो देवभूपाना

गृहमित्युत्तरत सबध्यते प्रसीदन्ति नयन-मनास्यस्मिन्निति प्रासाद , "घञ्यु पसर्गस्य" ॥ ३।२।८६ ॥ इति दीर्घ , प्रसादनोऽपि ॥ १ ॥

हर्म्यं तु धनिनां गृहम् ॥ ५९ ॥

हरति मनो हर्म्यम्, "शिक्यास्याढ्य" ॥(उणा-३६४)॥ इति ये निपात्यते ॥ १ ॥ ५९ ॥

मठाऽऽवसथ्याऽऽवसथाः स्युश्छात्र-व्रतिवेश्मनि ।

मठन्ति निवसन्त्यत्र मठ त्रिलिङ्ग , बाहुलकात् "पुनाम्नि"- ॥५।३।१३०॥ इति घ ॥ १ ॥ आवसथ एव आवसथ्यम्, भेषजादित्वाद् ट्यण् ॥२॥ आवसन्त्यस्मिन्नावसथ , छात्राणा व्रतिना च वेश्मनि ॥ ३ ॥

पर्णशालोटजः

पर्णमुपलक्षणं तेन पर्णतृणादे शाला पर्णशाला ॥ १ ॥ वव्यते वेष्ट्यते तृणपर्णादिभिरित्युटज मुनिकुटीर पुक्लीबलिङ्ग , "उटजादय" ॥ (उणा-१३४) ॥ इत्यजे निपात्यते ॥ २ ॥

चैत्यविहारौ जिनसद्मनि ॥ ६० ॥

चीयते चैत्यम्, "शिक्यास्या-" ॥ (उणा-३६४) ॥ इति ये साधु ॥ १ ॥

धरणियले गयणयले तूरनिनाओ परमरम्मो ॥ ३४९ ॥
एव सदेवमणुयाऽसुराइ परिसाइ परिवुडो भयव ।
अभित्थुव्वतु गिराहि सपत्तो नायसडवण ॥ ३५० ॥
उज्जाण सपत्तो ओरुहइ उत्तमाउ सीयाओ ।
सयमेव कुणइ लोअ सक्को से पडिच्छए केसे ॥ ३५१ ॥
जिणवरमणुन्नवित्ता अजणघणरुयगविमलसकासा ।
केसा खणेण नीया खीरसरिसनामय उदहिं ॥ ३५२ ॥
दिव्वो मणुस्सघोसो तूरनिनाओ य सक्कवयणेण ।
खिप्पामेव निलुक्को जाहे पडिवज्जइ चरित्त ॥ ३५३ ॥
काऊण नमुक्कार सिद्धाणमभिग्गह तु सो गिण्हे ।
सव्व मे अकरणिज्ज पाव ति चरित्तमारूढो ॥ ३५४ ॥
तिहिं नाणेहि समग्गा तित्थयरा जाव हुति गिहवासे ।
पडिवन्नम्मि चरित्ते चउनाणी जाव छउमत्था ॥ ३५५ ॥
बहिया य नायसडे आपुच्छित्ताण नायए सव्वे ।

धरणितले गगनतले तूरनिनाद परमरम्य ॥ ३४९ ॥
एव सदेवमनुजाऽसुरया परिषदा परिवृतो भगवान् ।
अभिष्टूयमानो गीर्भि सप्राप्तो ज्ञातखण्डवनम् ॥ ३५० ॥
उद्यान सप्राप्त अवरोहति उत्तमाया शिबिकाया
स्वयमेव करोति लोच शक्रस्तस्य प्रतीच्छति केशान् ॥ ३५१ ॥
जिनवरमनुज्ञाप्याऽञ्जन-घन रुचकविमलसकाशा ।
केशा क्षणेन नीता क्षीरसमुद्रनामानमुदधिम् ॥ ३५२ ॥
दिव्यो मनुष्यघोष तूरनिनादश्च शक्रवचनेन ।
क्षिप्रमेव निर्गतो यदा प्रतिपद्यते चारित्रम् ॥ ३५३ ॥
कृत्वा नमस्कार सिद्धेभ्योऽभिग्रह तु सोऽग्रहीत् ।
सर्व मयाऽकरणीय पापमिति चारित्रमारूढ ॥ ३५४ ॥
त्रिभिर्ज्ञानै समग्रास्तीर्थकरा यावद् भवन्ति गृहवासे ।
प्रतिपन्ने चरित्रे चतुर्ज्ञानिन यावत् छद्मस्था ॥ ३५५ ॥
बहिश्च ज्ञातखण्डे आपृच्छय ज्ञातकान् सर्वान् ।

दिवसे मुहुत्तसेसे कुमारगाम समणुपत्तो ॥ ३५६ ॥
गोवनिमित्तं सक्कस्स आगमो वागरेइ देविंदो ।
कुल्लाग बहुल छट्ठस्स पारणे पयस वसुहारा ॥ ३५७ ॥

॥ बीया वरवरिआ सम्मत्ता ॥

दूइज्जंतग पिउणो वयस तिव्वे अभिग्गहे पच ।
अवीयत्तुग्गहे निवसण निच्चं वोसट्ठ मोणेणं ॥ १ ॥
पाणीपत्त गिहिवंदणं च तह वड्ढमाण वेगवई ।
धणदेव सूलपाणिन्दसम्म वाऽसट्ठियग्गामे ॥ २ ॥
रुद्दा य सत्त वेयण थुइ दस सुमिणुप्पलद्धमासे य ।
मोराए सक्कार सक्को अच्छदए कुविओ ॥ ३ ॥
भीमट्टहास हत्थी पिसाय नागो य वेअणा सत्त ।
सिर कन्न नास दते नह च्छि पिट्ठी अ सत्तमिआ ॥ ४ ।
तालपिसाय दो कोइला य दामदुगमेव गोवग्ग ।

---

दिवसे मुहुर्तशेषे कुमारग्राम समनुप्राप्त ॥ ३५६ ॥
गोपनिमित्त शक्रस्याऽऽगमो व्याकरोति देवेन्द्र ।
कोल्लाके बहुल षष्ठस्य पारणे पायसं वसुधारा ॥ ३५७ ॥

॥ द्वितीया वरवरिका समाप्ता ॥

दूइज्जन्तक पितुर्वयस्यस्तीव्रा अभिग्रहा पञ्च ।
अप्रीत्यऽवग्रहे निवसनं नित्य व्युत्सृष्टो मौनेन ॥ १ ॥
पाणिपात्रं गृहिवन्दन च तथा वर्धमानो वेगवती ।
धनदेव शूलपाणिरिन्द्रशर्मा वाऽस्थिकग्रामं ॥ २ ॥
रुद्राश्च सप्त वेदना स्तुतिर्दश स्वप्ना उत्पलोऽर्धमासं च ।
मोराया सत्कार शक्र अच्छन्दके कुपित ॥ ३ ॥
भीमोऽट्टहासो हस्ती पिशाचो नागश्च वेदनाः सप्त ।
शिर कर्ण नासा दन्तो नखोऽक्षि पृष्ठ च सप्तमी ॥ ४ ॥
तालपिशाच द्वौ कोकिलौ दामाद्विकमेव गोवर्गम् ।

---

१ तन्नामा कश्चित् ।

सर सायर सूरं तो मन्दरं सुमिणुप्पले चेव ॥ ५ ॥
मोहे य ज्झाण पवयण धम्मे सघे य देवलोगे य ।
संसार नाण जसे धम्म परिसाइ मज्झम्मि ॥ ६ ॥
मोरयसनिवेसे बाहि सिद्धत्थतीयमाईणि ।
साहइ जणस्स अच्छदपओसो छेयणे सक्को ॥ ७ ॥
तण छेयगुलि कम्मारवीरघोस महिसिंदु दसपलिए ।
बिइयदसम्म ऊरण बयरीए दाहिणुक्करुडे ॥ ८ ॥
तइयमवत्त भज्जा कहिही नाह तओ पिउवयसो ।
दक्खिणचावाले सुवन्नवालुआ कटए वत्थ ॥ ९ ॥
उत्तरचावालतरवणसडे चडकोसिओ सप्पो ।
न डही चिता सरण जोइस कोहाओ जाओ हं ॥ १० ॥
उत्तरचावाल नागसेण खीरेण भोयण दिव्वा ।
सेयबीयाइ पएसी पचरहे निज्जरायाणो ॥ ११ ॥
सुरहिपुरि सिद्धजत्तो गंगा कोसिअ विजयखेमिलओ ।

---

सर सागर सूर ततो मन्दर स्वप्नान् उत्पलश्चैव ॥ ५ ॥
मोहश्च ध्यान प्रवचन धर्म सघश्च देवलोकश्च ।
ससार ज्ञानं यशो धर्म परिषदो मध्ये ॥ ६ ॥
मोराकसन्निवेशे बहि सिद्धार्थ अतीतादीनि ।
कथयति जनस्य अच्छन्दप्रद्वेषश्छेदने शक्र ॥ ७ ॥
तृण च्छेदोऽङ्गुलीना कर्मकारवीरघोषो महिषेन्दु दशपलक· ।
द्वितीयमिन्द्रशर्मा ऊरणको बदर्या दक्षिणे उत्कुरुट ॥ ८ ॥
तृतीयमवाच्य भार्या कथयिष्यति नाऽह तत पितृवयस्य· ।
दक्षिणचापाले सुवर्णवालुकाया कण्टके वस्त्रम् ॥ ९ ॥
उत्तरचापालान्तर्वनखण्डे चण्डकौशिक सर्प ।
न ददाह चिन्ता स्मरण ज्योतिष्क क्रोधाद् जातोऽहम् ॥ १० ॥
उत्तरचापाले नागसेन क्षीरेण भोजन दिव्यानि ।
श्वेताम्ब्या प्रदेशी पञ्चरथा नेयकगोत्रा राजान· ॥ ११ ॥
सुरभिपुरि सिद्धयात्रो गङ्गा कौशिको विजयखेमिलक ।

---

२ ददर्शेति शेष ।

नाग सुदाढे सीहे कबलसबला य जिणमहिम ॥ १२ ॥
महुराए जिणदासो आभीरविवाह गोण उववासो ।
भडीर मित्त वच्चे भत्ते णागोहि आगमण ॥ १३ ॥
वीरवरस्स भगवओ नावारूढस्स कासि उवसग्ग ।
मिच्छादिट्ठिपरद्ध कबलसबला समुत्तारे ॥ १४ ॥
थुणाइ बहि पूसो लक्खणमब्भितरे वरदेविदो ।
रायगिह ततुसाला मासक्खमणं च गोसालो ॥ १५ ॥
मखलिमख सुभद्दा सरवण गोबहुलमेव गोसालो ।
विजयानद सुनदे भोअणखज्जे अ कामगुणे ॥ १६ ॥
कुल्लाग बहुल पायस दिव्वा गोसाल दट्ठु पव्वज्जा ।
बाहिं सुवण्णखलए पायसथाली नियइगहणं ॥ १७ ॥
बभणगामे नदोवणंद उवणद तेयपडड्ढे ।
चपा दुमासखमणो वासावास मुणी खमइ ॥ १८ ॥
कालाइ सुन्नगारे सीहो विज्जुमइ गुट्ठिदासी य ।

---

नाग सुदंष्ट्र सिंह कम्बल शम्बलौ च जिनमहिमानम् ॥ १२ ॥
मथुराया जिनदास आभीरविवाहो गावौ उपवास ।
भण्डीरो मित्रेण अपत्ये भक्ते नागौ अवर्वेरागमनम् ॥ १३ ॥
वीरवरस्य भगवत नावाऽऽरूढस्याऽकार्षीदुपसर्गम् ।
मिथ्यादृष्टिप्रारब्ध कम्बल शम्बलौ समुत्तारयाचक्रतु ॥ १४ ॥
स्थूणाया बहि पुष्यो लक्षणमभ्यन्तरे वरदेवेन्द्र ।
राजगृहे तन्तुशाला मासक्षपण च गाशाल ॥ १५ ॥
मङ्खलिमङ्ख सुभद्रा शरवण गोबहुलमेव गोशाल ।
विजयानन्द सुनन्दो भोजनखाद्याश्च कामगुण ॥ १६ ॥
कोल्लाके बहुल पायस दिव्यानि गोशालो दृष्ट्वा प्रव्रज्यां ।
बहि सुवर्णखले पायसस्थाली नियतिग्रहणम् ॥ १७ ॥
ब्राह्मणग्रामे नन्द उपनन्द उपनन्दस्य तेज.प्रदग्धे ।
चम्पा द्विमासक्षपण वर्षावास मुनि क्षमते ॥ १८ ॥
कालाय शून्यागारे सिंहो विद्युन्मतिर्गोष्ठीदासी च ।

खंदो दत्तिलियाउ पत्तालग सुन्नगारम्मि ॥ १९ ॥
मुणिचंद कुमाराए कुलवय चंपरमणिज्जउज्जाणे ।
चोरा चारिअ अगडे सोमजयंती उवसमंति ॥ २० ॥
पिट्ठीचंपा वास तत्थ मुणी चाउमासखमणेण ।
कयंगल देउल वरिसे दरिद्दथेरा य गोसालो ॥ २१ ॥
सावत्थी सिरिभद्दा निंदू पिअदत्त पयस सिवदत्ते ।
दारगाण णह-वाले हलिद्दपडिमागणी पहिया ॥ २२ ॥
तत्तो अणगलाए डिंभ मुणी अच्छिकड्ढण चेव ।
आवत्ते मुहता मे मुणिउ त्ति अ वाहि बलदेवो ॥ २३ ॥
चोरा मडव भुज्ज गोसाले वहण तेयझावणया ।
मेहो अ कालहत्थी कलंबुआए उ उवसग्गा ॥ २४ ॥
लाढेसु अ ओवसग्गा घोरा पुन्नकलसीअ दो तेणा ।
वज्जहया सक्केण भद्दियवासासु चउमास ॥ २५ ॥
कयलिसमागम भोयण मखलि दहिकूर भगवओ पडिमा ।

स्कन्दो दत्तिल्किया पत्रालये शून्यागारे ॥ १९ ॥
मुनिचन्द्र कुमाराके कुलव्रतश्चम्परमणीयोद्याने ।
चौराके चारिकोऽवटे सोम-जयन्त्यौ उपशमयत ॥ २० ॥
पृष्ठचम्पाया वर्षा तत्र मुनिश्चतुर्मासक्षपणेन ।
कृताङ्गले देवकुले वर्षे[1] दरिद्रस्थविराश्च गोशाल ॥ २१ ॥
श्रावस्त्या श्रीभद्रा निन्दु[2] पितृदत्त पायस शिवदत्त ।
दारकाणा नख वालान् हरिद्रप्रतिमा अग्नि पथिका ॥ २२ ॥
ततश्चाऽनङ्गलाके डिम्भ मुनिरक्षिकर्षण चैव ।
आवर्ते[3] मुखता तस्य ज्ञात इति तु वाही बलदेव ॥ २३ ॥
चोराके मण्डपो भोज्य गोशालो वधन तेजोध्यापनता ।
मेघश्च कालहस्ती कलम्बुकाया तूपसर्गा ॥ २४ ॥
लाटेषु चोपसर्गा घोरा पूर्णकलश्या च द्वौ स्तेनौ ।
वज्रहतौ शक्रेण भद्रिकवर्षासु चतुर्मासम ॥ २५ ॥
कदलिसमागमो भोजन मङ्खलिर्दधिकूर भगवत प्रतिमा ।

१ मेघे । २ "नश्यत्प्रसूतिका निन्दु" इति हेम । ३ तन्नाम्नि ग्रामे ।

जंबूसडे गुट्ठि य भोअण भगवओ पडिमा ॥ २६ ॥
चंपाइ नदिसेणो पडिमा आरक्खि वहण भय डहणं ।
कूविय चारिय मुक्खो विजयपगब्भा य पत्तेअ ॥ २७ ॥
तेणेहि पहे गहिओ गोसालो माउलुत्ति वाहणया ।
भगव वेसालीए कम्मार घणेण देविंदो ॥ २८ ॥
गामाग विहेलग जक्खो तावसी उवसमावसाणथुई ।
छट्ठेण सालिसीसे विसुज्झमाणस्स लोगोही ॥ २९ ॥
पुणरवि भद्दियनयरे तवं विचित्त तु छट्ठवासम्मि ।
मगहाइ निरुवसग्ग मुणि उउबद्धम्मि विहरित्था ॥ ३० ॥
आलभियाए वास कुडग तह देउले पराहुत्तो ।
मद्दण देउल सागारिय मुहे दोसु पिसुणि त्ति ॥ ३१ ॥
वहुसालगसालवणे कडपूयण पडिम विग्घाणोवसमे ।
लोहग्गलम्मि चारिय जियसत्तू उप्पले मुक्खो ॥ ३२ ॥
तत्तो अ पुरिमताले वग्गुर ईसाण अच्चए पडिम ।

---

जम्बूखण्डे गोष्ठी च भोजन भगवत प्रतिमा ॥ २६ ॥
चम्पाया नन्दिषेण प्रतिमा आरक्षको वधन भय दहनम् ।
कूपिका चारिकौ मोक्ष विजयप्रगल्भौ च प्रत्येकम् ॥ २७ ॥
तेनैभि पथे गृहीत गोशालो मातुल इति वाहनता ।
भगवान् विशालाया कर्मकारो घनेन देवेन्द्र ॥ २८ ॥
ग्रामाक विभेलक यक्ष तापसी उपशमोऽवसानस्तुति ।
षष्ठेन शालिशीर्षे विशुध्यमानस्य लोकावधि ॥ २९ ॥
पुनरपि भद्रिकनगरे तपो विचित्रं तु षष्ठवर्षे ।
मगधादि निरुपसर्गं मुनि ऋतुबद्धे व्यहार्षीत् ॥ ३० ॥
आलभिकाया वर्षा कुण्डके तथा देवकुले पराङ्मुख ।
मर्दने देवकुले सागारिक मुखे द्वयो पिशुन इति ॥ ३१ ॥
बहुशालकशालवने कृतपूजन प्रतिमा विघ्नानामुपशम ।
लोहार्गले चारिको जितशत्रुरुत्पलेन मोक्ष ॥ ३२ ॥
ततश्च पुरिमताले वग्गुर ईशानेन अर्चति प्रतिमाम् ।

मल्लिजिणायणपडिमा उन्नाए वंसि वहुगुट्ठी ॥ ३३ ॥
गोभूमि वज्जलाढित्ति गोवकोवे य वसि जिणुवसमे ।
रायगिहट्ठमवासं तु वज्जभूमी वहूवसग्गा ॥ ३४ ॥
अनिययवास सिद्धत्थपुर तिलथभ पुच्छनिप्फत्ती ।
उप्पाडेइ अणज्जो गोसालो वासबहुलाए ॥ ३५ ॥
मगहा गोबरगामे गोसखी वेसियाण पाणामा ।
कुम्मारगामायावण गोसाले कोवण पउट्ठे ॥ ३६ ॥
वेसालीए पडिम सखो गणराय पिउवयसो य ।
गण्डइआसरिअ तिन्नो वित्तो नावाए भगिणिसुओ ॥ ३७ ॥
वाणियगामायावण आणदो ही परीसह सहित्ति ।
सावत्थीए वास चित्ततवो साणुलट्ठि बहिं ॥ ३८ ॥
पडिमा भद्द महाभद्द सव्वओ भद्द पढमिया चउरो ।
अट्ठयवीसाणदे बहुलिय तह उज्झिया दिव्वा ॥ ३९ ॥
दढभूमी बहुमिच्छा पेढालग्गाममागओ भयवं ।

मल्लिजिनायतनप्रतिमा उन्नाके वश्या वधूगोष्ठी ॥ ३३ ॥
गोभूमि वज्रलाटा [1] इति गोपकोपश्च वशी जिनोपशम ।
राजगृहे अष्टमवर्षा तु वज्रभूमिर्बहूपसर्गा ॥ ३४ ॥
अनियतवास सिद्धार्थपुर तिलस्तम्भे प्रश्ननिष्पत्ति ।
उत्पाटयति अनार्यो गोशालो वर्षाबहुले ॥ ३५ ॥
मगधे गोबरग्राम गोसखी वैश्यायतन प्रणामा ।
कुर्मारग्रामे आतापना गोशाले कोपन प्रद्विष्ट ॥ ३६ ॥
विशालाया प्रतिमा शङ्खो गणराज पितृवयस्यश्च ।
गण्डकिकासरित तीर्णो वृतो नावा भगिनीसुत ॥ ३७ ॥
वणिग्ग्रामे आतापनमानन्द हि परिषहान् सहस्वेति ।
श्रावस्त्या वर्षा चित्रतपा सानुलष्टि बहि ॥ ३८ ॥
प्रतिमा भद्रा महाभद्रा सर्वत प्रथमा चत्वारि ।
अष्ट विशतिरानन्दे बहुलिकया तथोज्झिता दिव्यानि ॥ ३९ ॥
दढभूमिर्बहुमिथ्या पेढालग्राममागतो भगवान् ।

1 दीक्षापर्याय ।

पोलासचेइअम्मि ट्ठिएगराइ महापडिम ॥ ४० ॥
सक्को य देवराया सहागओ भणइ हरिसिओ वयणं ।
तिन्नि वि लोगऽसमत्था जिण वीरमिण चलेउ जे ॥ ४१ ॥
सोहम्मकप्पवासी देवो सक्कस्स सो अमरिसेणं ।
सामाणिय संगमओ बेइ सुरिद पडिनिविट्ठो ॥ ४२ ॥
तेलुक्क असमत्थ ति पेहए अस्स चालण काउ ।
अज्जेव पासह इम मम वसग भट्ठजोगतव ॥ ४३ ॥
अह आगओ तुरतो देवो सक्कस्स सो अमरिसेण ।
कासी य उवसग्ग मिच्छादिट्ठी पडिनिविट्ठो ॥ ४४ ॥
धूली पिपीलिआओ उद्दंसा चेव तह य उण्होला ।
विच्छुअ नउला सप्पा ओ मूसगा चेव अट्ठमया ॥ ४५ ॥
हत्थी हत्थिणियाओ पिसाअए घोररूव वग्घे य ।
थेरो थेरी सूओ आगच्छइ पक्कणो अ तहा ॥ ४६ ॥
खरवाय कलकलिया कालचक्क तहेव य ।
पभाइयमुवसग्गे वीस इमे होन्ति अणुलोमे ॥ ४७ ॥

---

पोलासचैत्ये स्थित एकरात्रि महाप्रतिमाम् ॥ ४० ॥
शक्रश्च देवराज सभागत भणति हृष्टो वचनम् ।
त्रयोऽपि लोका असमर्था जिन वीरमिम चालयितुम् ॥ ४१ ॥
सौधर्मकल्पवासी देव शक्रस्य सोऽमर्षेण ।
सामानिक सङ्गमक ब्रवीति सुरेन्द्र प्रतिनिविष्ट ॥ ४२ ॥
त्रैलोक्यमसमर्थमिति प्रेक्षते यस्य चालन कृत्वा ।
अद्यैव पश्यथेम मम वशग भ्रष्टयोगतपसम् ॥ ४३ ॥
अथाऽऽगतस्त्वरमाणो देव शक्रस्य सोऽमर्षेण ।
अकार्षीदुपसर्ग मिथ्यादृष्टि प्रतिनिविष्ट ॥ ४४ ॥
धूलि पिपीलिका उद्दशाश्चैव तथा चोष्णला ।
वृश्चिका नकुला सर्पास्तु मूषकाश्चैव अष्टमका. ॥ ४५ ॥
हस्ती हस्तिनिका पिशाचको घोररूपो व्याघ्रश्च ।
स्थविर स्थविरा सूद आगच्छति पक्कणश्च तथा ॥ ४६ ॥
खरवात कलङ्कलिका कालचक्र तथैव च ।
प्रभातितमुपसर्गा विंशतिरिमे भवन्ति अनुलोमा ॥ ४७ ॥

सामाणियदेविड्ढि देवो दाएइ सो विमाणगओ ।
भणइ वरेहि महरिसि ! निप्फत्ती सव्वसुक्खाणं ॥ ४८ ॥
ओवहयमइविन्नाणो ताहे वीरं बहु पसाहेउ ।
ओहीए निज्झायइ ज्झायइ छज्जीवहियमेव ॥ ४९ ॥
वालुयपथे तेणा माउल पारणग तत्थ काणच्छि ।
तत्तो सुभूम अजलि सुच्छित्ताए विडरूव ॥ ५० ॥
मलए पिसायरूव सिवरूव हत्थिसीसए चेव ।
ओहसण पडिमाए मसाण सक्को जवणपुच्छा ॥ ५१ ॥
तोसलि कुसीसरूवे सधिच्छेओ इमुत्ति वज्झो य ।
मोएइ इदजालिय तत्थ महाभूइलो नामं ॥ ५२ ॥
मोसलि सधिसमागम मोएइ रट्ठिओ पिउवयसो ।
तोसलिय सत्तरज्जू वावत्ती तोसलीमुक्खो ॥ ५३ ॥
सिद्धत्थपुरे तेणुत्ति कोसिओ असवाणिओ मुक्खो ।
वयगाम हिंड णेसण बीयदिणे बेइ उवसतो ॥ ५४ ॥

---

सामानिकदेवर्धि देवो दर्शयति सो विमानगत ।
भणति वृणु महर्षे ! निष्पत्ति सर्वसौख्यानाम् ॥ ४८ ॥
अपहतमतिविज्ञानस्तदा वीरं बहु प्रसादयितुम् ।
अवधिना निध्यायति ध्यायति षड्जीवहितमेव ॥ ४९ ॥
वालुकापथे स्तेना मातुलः पारणक तत्र काणाक्षि ।
तत सुभूमे अञ्जलि सुक्षेत्राया विटरूपम् ॥ ५० ॥
मलये पिशाचरूप शिवरूप हस्तिशीर्षके चैव ।
अपहसनं प्रतिमाया श्मशाने शक्र यापनपृच्छा ॥ ५१ ॥
तोसिलके कुशीष्यरूपं संधिच्छेदोऽयमिति वध्यश्च ।
मोचयति इन्द्रजालिकस्तत्र महाभूतिलो नाम ॥ ५२ ॥
मोसलि सन्धिसमागमो मोचयति राष्ट्रिक पितृवयस्य ।
तोसलिक सप्तरज्जुभि व्यापत्तिस्तोसलिमोक्ष ॥ ५३ ॥
सिद्धार्थपुरे स्तेन इति कौशिकोऽश्ववणिग् मोक्ष ।
व्रजग्रामे हिण्डनमनेषणा द्वितीयदिने ब्रवीति उपशान्तः ॥ ५४ ॥

वच्चह हिंडह न करेमि किंचि इच्छा न किंचि वत्तव्वो ।
तत्थेव वत्थवाली थेरी परमन्न वसुहारा ॥ ५५ ॥
छम्मासे अणुबद्ध देवो कासी य सो अ उवसग्ग ।
दट्ठूण वयगामे वदिय वीर पडिनियत्तो ॥ ५६ ॥
देवो चुओ महिड्ढी सो मदरचूलियाइ सिहरम्मि ।
परिवारिओ वहूहिं तस्स य अयरोवमं सेस ॥ ५७ ॥
आलभिया हरिविज्जू जिणस्स भत्तीइ वंदिउं एइ ।
भयव पि य पुच्छामो जिय ओवसग्ग थोरमवसेस ॥ ५८ ॥
हरिसह सेयंबियाए सावत्थी खद पडिम सक्को य ।
ओअरियं पडिमाए लोगो आउट्टओ वदे ॥ ५९ ॥
कोसम्बि चंदसूरोअरण वाणारसीइ सक्को उ ।
रायगिहे ईसाणो मिहिला जणओ अ धरणो अ ॥ ६० ॥
वेसालि भूआणंदो चमरुप्पाओ अ सुसुमारपुरे ।
भोगपुरे सिदिकंटग माहिंदो खत्तिओ कुणइ ॥ ६१ ॥

---

व्रजत हिण्डध्व न करोमि किंचिद् इच्छा न किंचिद् वक्तव्य ।
तत्रैव वत्सपाली स्थविरा परमान्न वसुधारा ॥ ५५ ॥
षण्मासान् अनुबद्ध देवोऽकार्षीच्च स चोपसर्गम् ।
दृष्ट्वा व्रजग्रामे वन्दित्वा वीर प्रतिनिवृत्त ॥ ५६ ॥
देवश्च्युतो महर्धि. स मन्दरचूलिकाया शिखरे ।
परिवारितो वधूभिस्तस्य च सागरोपमं शेषम् ॥ ५७ ॥
आलभिका हरिविद्युत्कुमारो जिनस्य भक्त्या वन्दितुमेति ।
भगवन्तमपि च पृच्छामो जिता उपसर्गा स्तोकमवशेषम् ॥ ५८ ॥
हरिसह श्वेताम्ब्या श्रावस्त्या स्कन्दप्रतिमा शक्रश्च ।
अवतीर्य प्रतिमाया लोक आतुष्टकोऽवन्दिष्ट ॥ ५९ ॥
कौशाम्ब्या चन्दसूर्यावतरण वाराणस्या शक्रस्तु ।
राजगृहे ईशानो मिथिलाया जनकश्च धरणश्च ॥ ६० ॥
विशालाया भूतानन्दश्चमरोत्पातश्च सुंसुमारपुरे ।
भोगपुरि सिन्दाकण्टको माहेन्द्र क्षत्रिय. करोति ॥ ६१ ॥

वारण सणंकुमारे नंदिगामे अ पिउसहा वंदे ।
मिंढियगामे गोवा वित्तासणय च देविंदो ॥ ६२ ॥
कोसंबीइ सयाणिओ अभिग्गहो पोसबहुलपाडिवए ।
चाउम्मासी मिगावइ विजय सुगुत्तो अ नंदा य ॥ ६३ ॥
तच्चा वाई चंपा दहिवाहण वसुमई अ बीअनामा ।
धणवह मूलाऽऽलोअण संपुल दाणे अ पव्वज्जा ॥ ६४ ॥
तत्तो अ सुमंगल सणंकुमार सुच्छित्ताए एइ माहिंदो ।
वालुय वाइल वणिए अमंगल अप्पणो असिणा ॥ ६५ ॥
चंपा वासावास जक्खिन्दो साइदत्त पुच्छा य ।
वागरण बहु पएसण पच्चक्खाणे अ दुविहे अ ॥ ६६ ॥
जंभियगामे नाणस्स उप्पया वागरेइ देविन्दो ।
मिंढियगामे चमरो वंदण पियपुच्छणं कुणइ ॥ ६७ ॥
छम्माणि गोव कडसलपवेसण मज्झिमाइ पावाए ।
खरओ विज्जो सिद्धत्थ वाणिओ नीहरावेइ ॥ ६८ ॥

---

वारण सनत्कुमारो नन्दिग्रामे च पितृसखो ववन्दे ।
मेण्ढिकग्रामे गोपा वित्रासनकं च देवेन्द्र ॥ ६२ ॥
कौशाम्ब्या शतानीकोऽभिग्रह पौषबहुलप्रतिपदि
चतुर्मासी मृगावती विजय सुगुप्तश्च नन्दा च ॥ ६३ ॥
तथ्यो वादी चम्पाया दधिवाहनो वसुमती च द्वितीयनाम्नी ।
धनावहो मूलाऽऽलोकन संपुलो[1] दाने च प्रव्रज्या ॥ ६४ ॥
ततश्च सुमङ्गल सनत्कुमार सुक्षेत्रायामेति माहेन्द्र ।
पालक वाइलो वणिक् अमङ्गलमात्मनोऽसिना ॥ ६५ ॥
चम्पाया वर्षावास यक्षेन्द्र, स्वातिदत्तपृच्छा च ।
व्याकरण बहु प्रदेशन प्रत्याख्याने च द्विविधे च ॥ ६६ ॥
जृम्भिकग्रामे ज्ञानस्य उत्पाद व्यागृणोति देवेन्द्र ।
मेण्ढिकग्रामे चमरो वन्दन प्रियप्रच्छन करोति ॥ ६७ ॥
छमाणि गोप कटशलाकाप्रवेशन मध्यमाया पापायाम् ।
खरको वैद्य सिद्धार्थवणिक् निस्सारयति ॥ ६८ ॥

---

1 तन्नामा कञ्चुकी ।

जंभिय बहि उजुवालियतीर वि याऽवत्त सामासाल अहे ।
छट्टेणुकुडुयस्स ओ उप्पन्नं केवल नाणं ॥ ६९ ॥
॥ उवसग्गा सम्मत्ता ॥



जो अ तवो अणुचिन्नो वीरवरेण महाणुभावेणं ।
छउमत्थकालियाए अहक्कम कित्तइस्सामि ॥ १ ॥
नव किर चाउम्मासे छ किर दो मासिए ओवासीअ ।
बारस य मासियाइ बावत्तरि अद्धमासाइ ॥ २ ॥
इक्कं किर छम्मास दो किर तेमासिए उवासीअ ।
अड्ढाइज्जाइ दुवे दो चेव दिवड्ढमासाइ ॥ ३ ॥
भद्दं च महाभद्द पडिम तत्तो अ सव्वओ भद्द ।
दो चत्तारि दसेव य दिवसे ठासी यमणुबद्ध ॥ ४ ॥
गोअरमभिग्गहजुअ खमण छम्मासिअ च कासी अ ।
पच दिवसेहि ऊण अव्वहिओ वच्छनयरीए ॥ ५ ॥

---

जृम्भिकस्य बहि ऋजुपालिकातीरेऽपि चाऽव्यक्त[१]स्य श्यामाकशालस्याऽध
षष्ठेनोत्कुटुकस्य तु उत्पन्न केवल ज्ञानम् ॥ ६९ ॥
॥ उपसर्गा समाप्ता ॥



यच्च तपोऽनुचीर्णं वीरवरेण महानुभावेन ।
छद्मस्थकाले यथाक्रमं कीर्तयिष्यामि ॥ १ ॥
नव किल चतुर्मासिकानि षट् किल द्विमासिकानि उपाऽवात्सीत् ।
द्वादश च मासिकानि द्वासप्ततिश्चाऽर्धमासिकानि ॥ २ ॥
एक किल षण्मास द्वे किल त्रिमासिके उपोवास ।
अर्धतृतीये द्वे द्वे चैव द्व्यर्धमासे ॥ ३ ॥
भद्रा च महाभद्रा प्रतिमा ततश्च सर्वत भद्राम् ।
द्वौ चतुरो दशैव च दिवसान् अस्थाच्चाऽनुबद्धम् ॥ ४ ॥
गोचराऽभिग्रहयुत क्षपण षण्मासिक चाऽकार्षीच्च ।
पञ्चभिर्दिवसैरूनमव्यथितो वत्सनगर्याम् ॥ ५ ॥

---

१ चैत्यविशेषनाम ।

दस दो अ किर महप्पा ठाइ मुणी एगराइय पडिमं ।
अट्ठमभत्तेण जई इक्किक चरमराईअ ॥ ६ ॥
दो चेव य च्छट्ठसए अउणातीसे उवासिओ भयव ।
न कयाइ निच्चभत्त चउत्थभत्त च से आसि ॥ ७ ॥
बारसवासे अहिए छट्ठ भत्त जहन्नय आसि ।
सव्व च तवो कम्म अपाणय आसि वीरस्स ॥ ८ ॥
तिन्नि सए दिवसाण अउणापन्ने य पारणाकालो ।
उक्कुडुअनिसिज्जाए ठिय पडिमाण सए बहुए ॥ ९ ॥
पव्वज्जाए दिवसं पढम इत्थ तु पक्खिवित्ता ण ।
सकलियम्मि उ सते जं लद्ध त निसामेह ॥ १० ॥
बारस चेव य वासा मासा छच्चेव अद्धमासो अ ।
वीरवरस्स भगवओ एसो छउमत्थपरियाओ ॥ ११ ॥
एव तवोगुणरओ अणुपुव्वेण मुणी विहरमाणो ।
घोरं परीसहचमूं अहिआसित्ता महावीरो ॥ १२ ॥

दश द्वे च किल महात्माऽस्थाद् मुनिरेकरात्रिकीं प्रतिमाम् ।
अष्टमभक्तेन यतिरेकैका चरमरात्रिकाम् ॥ ६ ॥
द्वे चैव षष्ठशते ऐकोनत्रिंशे उपाऽवसद् भगवान् ।
न कदाऽपि नित्यभक्त चतुर्थभक्त च तस्याऽऽसीत् ॥ ७ ॥
द्वादशवर्षाण्यऽधिकानि षष्ठ भक्त जघन्यकमासीत् ।
सर्वं च तप कर्म अपानकमासीद् वीरस्य ॥ ८ ॥
त्रीणि शतानि दिवसानामेकोनपञ्चाशानि च पारणाकाल ।
उत्कुटुकनिषद्याया स्थित प्रतिमाना शतानि बहूनि ॥ ९ ॥
प्रव्रज्याया दिवस प्रथममत्र तु प्रक्षिप्य ।
सकलिते तु सति यल्लब्ध तद् निशमयत ॥ १० ॥
द्वादश चैव च वर्षाणि मासा षड् एव अर्धमासश्च ।
वीरवरस्य भगवत एषश्छद्मस्थपर्याय ॥ ११ ॥
एव तपोगुणरतोऽनुपूर्वेण मुनिर्विहरमाण ।
घोरा परीषहचमूमधिसह्य महावीर ॥ १२ ॥

१ अधिके इति शेष ।　　२ गोदोहासने ।

उप्पन्नम्मि अणंते नट्ठम्मि अ च्छाउमत्थिए नाणे ।
राईए संपत्तो महसेणवणम्मि उज्जाणे ॥ १३ ॥
अमर-नररायमहिओ पत्तो धम्मवरचक्कवट्टित्त ।
बीअ पि समोसरणं पावाए मज्झिमाए ओ ॥ १४ ॥
तत्थ किर सोमिलज्जत्ति माहणो तस्स दिक्खकालम्मि ।
पउरा जण जाणवया समागया जन्नवाडम्मि ॥ १५ ॥
एगंते अ विवित्ते उत्तरपासम्मि जन्नवाडस्स ।
तो देवदाणविंदा करिति महिमं जिणिदस्स ॥१६॥
भवणवइ-वाणमतर-जोइसवासी-विमाणवासी अ ।
अच्चइढीइ सपरिसा कासी नाणुप्पयामहिम ॥१७॥
समुसरणे केवइआ रूव पुच्छ वागरण सोअपरिणामे ।
दाणं च देवमल्ले मल्लाऽऽणयण उवरि तित्थं ॥१८॥
जत्थ पुव्वो सरणं जत्थ य देवो महड्ढिउ एइ ।
वाउदयपुप्फवद्दल पागारतिअं च अभिओगा ॥१९॥

---

उत्पन्ने अनन्ते नष्टे च छाद्मस्थिके ज्ञाने ।
रात्र्या संप्राप्तो महासेनवने उद्याने ॥ १३ ॥
अमर-नरराजमहित प्राप्तो धर्मवरचक्रवर्तित्वम् ।
द्वितीयमपि समवसरण पापाया मध्यमाया तु ॥ १४ ॥
तत्र किल सोमिलार्य इति ब्राह्मणस्तस्य दीक्षाकाले[1] ।
पौरा जना जानपदा. समागता यज्ञवाटे ॥ १५ ॥
एकान्ते च विविक्ते उत्तरपार्श्वे यज्ञवाटस्य ।
ततो देव-दानवेन्द्रा कुर्वन्ति महिमान जिनेन्द्रस्य ॥ १६ ॥
भवनपति वानव्यन्तर-ज्योतिर्वासि विमानवासिनश्च ।
अत्यर्ध्या सपरिषदोऽकार्षुर्ज्ञानोत्पादमहिमानम् ॥ १७ ॥
समवसरण कियन्तो रूप प्रश्नो व्याकरणं श्रोतृपरिणाम ।
दानं च देवमाल्य माल्याऽऽनयने उपरि तीर्थम् ॥ १८ ॥
यत्राऽपूर्वाऽवसरण[2] यत्र वा देवो महर्धिक एति ।
वातो-दक पुष्पवार्दलं प्राकारत्रिक च अभियोग्या ॥ १९ ॥

---

१ यज्ञावसरे ।  २ अवसरण समवसरणम् ।

मणि-कणग-रयणचित्तं भूमीभागं समंतओ सुरहिं ।
आजोअणंतरेणं करिंति देवा विचित्तं तु ॥२०॥
विटट्ठाइं सुरहिजलथलयंदिव्वकुसुमनिहारिं ।
पयरिंति समंतेणं दसद्धवन्नं कुसुमवासं ॥२१॥
मणि-कणग-रयणचित्ते चउद्दिसिं तोरणे विउव्विंति ।
सच्छत्तसालिभंजिअमयरद्धयचिंधसंठाणे ॥२२॥
तिन्नि य पायारवरे रयणविचित्ते तहिं सुरगणिंदा ।
मणि-कंचणकविसीसयविभूसिए ते विउव्विंति ॥२३॥
अब्भितर मज्झ बहिं विमाणजोइसभवणाहिवकया ओ ।
पायारा तिन्नि भवे रयणे कणगे य रयए य ॥२४॥
मणिरयणहेमया विय कविसीसा सव्वरयणिया दारा ।
सव्वरयणामय च्चिय पडागझयतोरण विचित्ता ॥२५॥
तत्तो असमंतेणं कालाऽगुरु-कुंदरुक्कमीसेणं ।
गंधेण मणहरेणं धूवघडीओ विउव्वंति ॥२६॥

---

मणि कनक रत्नचित्र भूमिभाग समन्तत सुरभि ।
आयोजनान्तरेण करन्ति देवा विचित्र तु ॥ २० ॥
वृन्तस्थायिन सुरभिजल-स्थलजदिव्यकुसुमनिहारिणम् ।
प्रकिरन्ति समन्ताद् दशार्धवर्ण कुसुमवर्षम् ॥ २१ ॥
मणि-कनक-रत्नविचित्राणि चतुर्दिशि तोरणानि विकुर्वन्ति ।
सच्छत्रशालभञ्जिकामकरध्वजचिह्नसस्थानानि ॥ २२ ॥
त्रींश्च प्राकारवरान् रत्नविचित्रास्तत्र सुरगणेन्द्रा ।
मणि काञ्चनकपिशीर्षकविभूषितान् ते विकुर्वन्ति ॥ २३ ॥
अभ्यन्तर मध्य बहिर्विमान ज्योतिर्भवनाऽधिपकृतास्तु ।
प्राकारास्त्रयो भवेयू रत्ने कनके च रजते च ॥ २४ ॥
मणि-रत्न हेममयानि अपि च कपिशीर्षाणि सर्वरत्नमयानि द्वाराणि ।
सर्वरत्नमयानि एव पताकाध्वजतोरणानि विचित्राणि ॥ २५ ॥
ततश्च समन्तत कालाऽ गुरु-कुन्दुरुक्[1]मिश्रेण ।
गन्धेन मनोहरेण धूपघटी विकुर्वन्ति ॥ २६ ॥

---

१ धूपविशेष ।

उक्किट्ठिसीहनायं कलयलसद्देण सव्वओ सव्वं ।
तित्थयरपायमूले करिति देवा निययमाणा ॥२७॥
चेइदुम पीढ छंदय आसण छत्तं च चामराओ अ ।
जं वऽन्नं करणिज्जं करिंति तं वाणमंतरिआ ॥२८॥
साहारणओसरणे एवं जत्थिड्ढिमं तु ओसरइ ।
इक्कुच्चिय तं सव्वं करेइ भयणाओ इयरेसि ॥२९॥
सूरुदय पच्छिमाए ओगाहंतीइ पुव्वओ एइ ।
दोहिं पउमेहिं पायामग्गेण य हुंति सत्तन्ने ॥ ३० ॥
आयाहिण पुव्वमुहा तिदिसिं पडिरूवगा ओ देवकया ।
जिट्ठ गणी अन्नो वा दाहिणपुव्वे अदूरम्मि ॥ ३१ ॥
जे ते देवेहिं कया तिदिसिं पडिरूवगा जिणवरस्स ।
तेसिं पि तप्पभावा तयाणुरूवं हवइ रूवं ॥ ३२ ॥
तित्थाइसेससंजय देवी वेमाणियाण समणीओ ।
भवणवइ-वाणमंतर-जोइसियाणं च देवीओ ॥ ३३ ॥

---

उत्कृष्टिसिंहनादं कलकलशब्देन सर्वत सर्वम् ।
तीर्थकरपादमूले कुर्वन्ति देवा निपतमाना ॥ २७ ॥
चैत्यद्रुम पीठं छन्दक आसनं छत्र च चामराश्च ।
यद् वा अन्यत् करणीय कुर्वन्ति तद् वानव्यन्तरा ॥ २८ ॥
साधारणाऽवसरणे यत्र ऋद्धिमान् त्ववसराति ।
एक एव तत् सर्व करोति भजना इतरेषाम् ॥ २९ ॥
सूरोदयः पश्चिमायामवगाहमानाया पूर्वत एति ।
द्वयो पद्मयो पादमार्गेण च भवन्ति सप्ताऽन्यानि ॥ ३० ॥
प्रदक्षिणीकृत्य पूर्वमुखा. त्रिदिशं प्रतिरूपकास्तु देवकृता ।
ज्येष्ठो गणी अन्यो वा दक्षिणपूर्वे अदूरे ॥ ३१ ॥
ये ते देवै कृतास्त्रिदिशि प्रतिरूपका जिनवरस्य ।
तेषामपि तत्प्रभावात् तदनुरूपं भवति रूपम् ॥ ३२ ॥
तीर्थमतिशेषसंयता देव्यो वैमानिकानां श्रमण्य ।
भवनपति वानव्यन्तर-ज्योतिष्काणा च देव्य ॥ ३३ ॥

केवलिणो तिउण जिण तित्थपणाम च मग्गओ तस्स ।
मणमाई वि नमन्ता वयंति सट्ठाण सट्ठाण ॥ ३४ ॥
भवणवइ-जोइसिया बोधव्वा वाणमतरसुरा य ।
वेमाणिया य मणुआ पयाहिणं ज च निस्साए ॥ ३५ ॥
संजय वेमाणित्थी सजइ पुव्वेण पविसिउ वीर ।
काउ पयाहिण पुव्वदक्खिणे ठति दिसिभाए ॥ ३६ ॥
जोइसिय-भवण-वतरदेवीओ दक्खिणेण पविसेउ ।
चिट्ठंति दक्खिणावरदिसिम्मि तिगुणं जिण काउ ॥ ३७ ॥
अवरेण भवणवासी-वतर-जोइससुरा य पडिगतु ।
अवरुत्तरदिसिभाए चिट्ठति जिण तो नमसित्ता ॥ ३८ ॥
समहिंदा कप्पसुरा राया नर नारिओ उइन्नेण ।
पविसित्ता पुव्वुत्तरदिसीइ चिट्ठति पजलिया ॥ ३९ ॥
इक्किकिइ दिसाए तिग तिगं होइ सनिविट्ठं तु ।
आइ चरिमे विमिस्सा थीपुरिसा सेस पत्तेअं ॥ ४० ॥

---

केवलिनस्त्रिगुण जिन तीर्थप्रणाम च मार्गतस्तस्य ।
मनोज्ञान्यादयोऽपि नमन्तो व्रजन्ति स्वस्थानं स्वस्थानम् ॥ ३४ ॥
भवनपति-ज्योतिष्का बोद्धव्या वानमन्तरसुराश्च
वैमानिकाश्च मनुजा प्रदक्षिणीकृत्य यच्च निश्रया ॥ ३५ ॥
संयता वैमानिकस्त्रिय संयत्य पूर्वेण प्रविश्य वीरम् ।
कृत्वा प्रदक्षिणा पूर्वदक्षिणे तिष्ठन्ति दिग्भागे ॥ ३६ ॥
ज्योतिष्क भवन-व्यन्तरदेव्यो दक्षिणेन प्रविश्य ।
तिष्ठन्ति दक्षिणाऽपरदिशि त्रिगुण जिनं कृत्वा ॥ ३७ ॥
अपरेण भवनवासि व्यन्तर-ज्योतिष्कसुराश्च प्रतिगत्य ।
अपरोत्तरदिशाभागे तिष्ठन्ति जिन तु नमस्यित्वा ॥ ३८ ॥
समहेन्द्रा कल्पसुरा राजानो नरा नार्य उदीच्येन ।
प्रविश्य पूर्वोत्तरदिशाया तिष्ठन्ति प्राञ्जलिका ॥ ३९ ॥
एकैकस्या दिशि त्रिकं त्रिक भवति सन्निविष्ट तु ।
आदौ चरमे विमिश्रा स्त्रीपुरुषा शेष प्रत्येकम् ॥ ४० ॥

इंतं महिड्ढिअं पणिवयति ठियमवि वयति पणमंता ।
नवि जतणा न विकहा न परुप्पर मच्छरो न भय ॥ ४१ ॥
बिइयम्मि हुंति तिरिया तइए पायारमतरे जणा ।
पायारजढे तिरिया वि हुंति पत्तेअ मिस्सा वा ॥ ४२ ॥
सव्वं पि देसविरइ सम्मं गहिस्सए व होइ कहणा ओ ।
इहरा अमूढलक्खो न कहेइ भविस्सइ न त च ॥ ४३ ॥
मणुए चउमन्नयरं तिरिए तिन्नि व दु चेव पडिवज्जे ।
जइ नत्थि नियमसुच्चिय सुरेसु समत्तपडिवत्ती ॥ ४४ ॥
तित्थपणामं काउं कहेइ साहारणेण सद्देण ।
सव्वेसिं सनीण जोअणनीहारिणा भयव ॥ ४५ ॥
तप्पुव्विआ अरिहया पूईअपूआ य विणयकम्मं च ।
कयकिच्चो वि जह कह कहेइ नमए तहा तित्थं ॥ ४६ ॥
जत्थ अपुव्वोसरण अदिट्ठपुव्वं च जेण समणेण ।
बारसहि जोअणेहिं सो एइ अणागए लहुआ ॥ ४७ ॥

---

आयन्तं महर्धिक प्रणिपतन्ति स्थितमपि व्रजन्ति प्रणमन्त ।
नाऽपि यन्त्रणा न विकथा न परस्परं मत्सरो न भयम् ॥ ४१ ॥
द्वितीये भवन्ति तिर्यञ्चस्तृतीये प्राकारान्तरे जना ।
प्राकारतो बहिस्तिर्यञ्चोऽपि भवन्ति प्रत्येकं मिश्रा वा ॥ ४२ ॥
सर्वमपि देशविरति सम्यक्त्वं ग्रहीष्यति वा भवति कथना तु ।
इतरथा अमूढलक्ष्यो न कथयति भवष्यति न तच्च ॥ ४३ ॥
मनुजेषु चतुरन्यतरत् तिर्यक्षु त्रीणि वा द्वे एव प्रतिपद्यते ।
यदि नास्ति नियमश एव सुरेषु सम्यक्त्वप्रतिपत्ति. ॥ ४४ ॥
तीर्थप्रणामं कृत्वा कथयति साधारणेन शब्देन ।
सर्वेषा संज्ञिना योजननिर्हारिणा भगवान् ॥ ४५ ॥
तत्पूर्विका अर्हत्ता पूजितपूजा च विनयकर्म च ।
कृतकार्योऽपि यथा कथा कथयति नमति तथा तीर्थम् ॥ ४६ ॥
यत्राऽपूर्वोऽवसरणमदृष्टपूर्वं च येन श्रमणेन ।
द्वादशभिर्योजनै. स एति, अनागते लघुता ॥ ४७ ॥

सव्वसुरा जइ रूवं अंगुट्ठपमाणयं विउव्विज्जा ।
जिणपायंगुट्ठ पइ न सोहए तं जहिंगालो ॥ ४८ ॥
गणहर आहारअणुत्तरा य जाव वाण-चक्कि-वासु-बला ।
मंडलिया जा हीणा छट्ठाणगया भवे सेसा ॥ ४९ ॥
संघयण रूवं सठाण वन्न गइ सत्त सार ऊसासो ।
एमाइ णुत्तराइ हवंति नामोदया तस्स ॥ ५० ॥
पगडीण अन्नासु वि पसत्थ उदया अणुत्तरा हुंति ।
खयउवसमे वि अ तहा खयम्मि अविकप्पमाहसु ॥ ५१ ॥
अस्सायमाइआओ जा वि अ असुहा हवंति पयडीओ ।
निंबरसलवुव्व पए न हुति ता असुहया तस्स ॥ ५२ ॥
धम्मोदएण रूव करिंति रूवस्सिणो वि जइ धम्मं ।
गज्झवओ सुरूव अ पससिमो तेण रूवम्मि ॥ ५३ ॥
कालेण असंखेण वि सखाइयाण संसईणं तु ।
मा ससयवुच्छित्ती न हुज्ज कमवागरणदोसा ॥ ५४ ॥

---

सर्वसुरा यदि रूपमङ्गुष्ठप्रमाणकं विकुर्वीरन् ।
जिनपादाऽङ्गुष्ठ प्रति न शोभते तद् यथा अङ्गारः ॥ ४८ ॥
गणधरा आहारकाऽनुत्तराश्च यावद् वान-चक्रि वासु बला ।
माण्डलिका यावद् हीना षट्स्थानगता भवेयु शेषा. ॥ ४९ ॥
सहननं रूपं संस्थानं वर्णो गति- सत्त्वं सार उच्छ्वास ।
एवमादीनि अनुत्तराणि भवन्ति नामोदयात् तस्य ॥ ५० ॥
प्रकृतीनामन्यासामपि प्रशस्ता उदया अनुत्तराभवन्ति ।
क्षयोपशमेऽपि च तथा क्षयेऽविकल्पमाहु ॥ ५१ ॥
असातादिका या अपि च अशुभा भवन्ति प्रकृतय ।
निम्बरसलव इव पयसि न भवन्ति ता असुखदास्तस्य ॥ ५२ ॥
धर्मोदयेन रूप कुर्वन्ति रूपवन्तोऽपि यदि धर्मम् ।
ग्राह्यवचा सुरूपश्च प्रशसामस्तेन रूपम् ॥ ५३ ॥
कालेन असख्येनाऽपि सख्यातीताना संशयिना तु ।
मा संशयव्युच्छित्तिर्न भवेत् क्रमव्यागरणदोषा ॥ ५४ ॥

सव्वत्थ अवि समत्तं रिद्धिविसेसो अ कालहरणं च ।
सव्वन्नुपच्चओ वि अ अचिंतगुणभूइओ जुगव ॥ ५५ ॥
बासोदगस्स व जहा वन्नाई हुंति भायणविसेसा ।
सव्वेसिं पि सभासं जिणभासा परिणमे एवं ॥ ५६ ॥
साहारणसवन्ने तदुवओगो उ गाहगगिराए ।
न य निविज्जइ सोआ किटिवाणियदासिओहरणा ॥ ५७ ॥
सव्वाउअं पि सोआ झविज्ज जइ वि हु सययं जिणो कहए ।
सी-उण्ह-खु-प्पिवासापरिस्समभए वि अ अविमणंतो ॥५८॥
वित्ती ओ सुवन्नस्स बारस अद्धं च सयसहस्साइ ।
तावइयं चिय कोडी पीईदाणं तु चक्कीण ॥ ५९ ॥
एय चेव पमाण नवर रयय तु केसवा दिंति ।
मडलियाण सहस्सा वित्तीपीई सयसहस्सा ॥ ६० ॥
भत्तिविहवाणुरूव अन्ने वि य दिंति इब्भमाईआ
सोऊण जिणागमण निउत्तमनिओइएसुं वा ॥ ६१ ॥

---

सर्वत्राऽपि च समत्वम् ऋद्धिविशेषश्च कालहरण च ।
सर्वज्ञप्रत्ययोऽपि च अचिन्त्यगुणभूतिको युगपत् ॥ ५५ ॥
वर्षोदकस्य वा यथा वर्णादयो भवन्ति भाजनविशेषात् ।
सर्वेषामपि स्वभाषा जिनभाषा परिणमति एवम् ॥ ५६ ॥
साधारणसपन्ना तदुपयोगस्तु ग्राहकगिरि ।
न च निर्विद्यते श्रोता किटिवणिग्दास्युदाहरणात् ॥ ५७ ॥
सर्वायुरपि श्रोता क्षपयेद् यद्यपि खलु सतत जिन कथयति ।
शीतो ष्ण क्षुत्-पिपासा-परिश्रमभयान्यपि अविगणयन् ॥ ५८ ॥
वृत्तिस्तु सुवर्णस्य द्वादश अर्धं च शतसहस्राणि ।
तावत्कमेव कोटि प्रीतिदान तु चक्रिणाम् ॥ ५९ ॥
एतदेव प्रमाण नवर रजत तु केशवा ददति ।
माण्डलिकाना सहस्राणि वृत्ति-प्रीत्यो शतसहस्राणि ॥ ६० ॥
भक्तिविभवाऽनुरूपमन्येऽपि च ददति इभ्यादिका ।
श्रुत्वा जिनाऽऽगमन नियुक्ताऽनियोजिताना वा ॥ ६१ ॥

देवाणुवित्ती भत्ती पूआ थिरकरणत्त सत्तअणुकपा ।
साउदय दाणगुणा पभावणा चेव तित्थस्स ॥ ६२ ॥
राया व रायमच्चो तस्साऽसइ पउर जणवउ वावि ।
दुब्बलिखडियबलिछडिअतदुलाणाढय कलमा ॥६३॥
भाइय पुणाणिआणं अखडफुडियाण फलगसरियाणं ।
कीरइ बली सुरा वि तत्थेव छुहति गंधाई ॥६४॥
बलिपविसण समकाल पुव्वदारेण ठाइ परिकहणा ।
तिगुण पुरओ पाडण तस्सद्धं अवडिअ देवा ॥६५॥
अद्धद्ध अहिवइणो अवसेस होइ पागयजणस्स ।
सव्वामयप्पसमणी कुप्पइ नऽन्नो य छम्मासे ॥६६॥
खेयविणोओ अ सीसगुणदीवणा पच्चओ उभयतो वि ।
सीसायरियकमो वि अ गणहरकहणे गुणा हुंति ॥६७॥
राउवणीयसीहासणोवविट्ठो य पायपीढम्मि ।
जिट्ठो अन्नयरो वा गणहारि कहेइ बीयाए ॥६८॥

---

देवाऽनुवृत्तिर्भक्ति· पूजा स्थिरकरणत्व सत्त्वाऽनुकम्पा ।
सातोदयो दानगुणा प्रभावना चैव तीर्थस्य ॥ ६२ ॥
राजा वा राजाऽमात्यस्तस्मिन्नसति पौर जनपदो वाऽपि ।
दुर्बलिखण्डितबलिछुटिततण्डुलानामाढक कलमानाम् ॥ ६३ ॥
भाजिता पुनरानीतानामखण्डस्फुटिताना फलकसृतानाम् ।
क्रियते बलि सुरा अपि तत्रैव क्षिपन्ति गन्धादीन् ॥ ६४ ॥
बलिप्रवेशनं समकाल पूर्वद्वारेण तिष्ठति परिकथना ।
त्रिगुण पुरत पातन तस्याऽर्धमपतित देवा ॥ ६५ ॥
अर्धाऽर्धमधिपतयोऽवशेष भवति प्राकृतजनस्य ।
सर्वाऽऽमयप्रशमन कुप्यति नाऽन्यश्च षण्मासान् ॥ ६६ ॥
खेदविनोदश्च शिष्यगुणदीपना प्रत्यय उभयतोऽपि ।
शिष्याचार्यक्रमोऽपि च गणधरकथने गुणा भवन्ति ॥ ६७ ॥
राजोपनीतसिंहासनोपविष्टश्च पादपीठे ।
ज्येष्ठोऽन्यतरो वा गणधारी कथयति द्वितीयस्याम् ॥ ६८ ॥

संखाईए वि भवे साहइ जं वा पुरो उ पुच्छिज्जा ।
न उ ण अणइसेसी वियाणइ एस छउमत्थो ॥६९॥

॥ समवसरण संमत्तं ॥



तं दिव्वदेवघोसं सोऊणं माहणा तहिं तुट्ठा ।
अहो ! जन्निएण जट्ठं देवा किर आगया इहयं ॥१॥
इक्कारस वि गणहरा सव्वे उन्नयविसालकुलवंसा ।
पावाइ मज्झिमाए समोसढा जन्नवाडम्मि ॥२॥
पढमित्थ इदभूई बीए पुण होइ अग्गिभूइ त्ति ।
तईए अ वाउभूई तओ विअत्ते सुहम्मे अ ॥३॥
मंडिय मोरिअपुत्ते अकम्पिए चेव अयलभाया य ।
मेअज्जे अ पभासे गणहरा हुन्ति वीरस्स ॥४॥
ज कारण निक्खमणं वुच्छं एएसिं आणुपुव्वीए ।
तित्थं अ सुहम्माओ निरवच्चा गणहरा सेसा ॥५॥

---

सख्यातीतानपि भवान् कथयति यद्वा पुरस्तु पृच्छेत् ।
न तु अनतिशेषी[1] विजानाति एष छद्मस्थः ॥ ६९ ॥

॥ समवसरण समाप्तम् ॥



तं दिव्यदेवघोष श्रुत्वा ब्राह्मणास्तत्र तुष्टा ।
अहो ! याज्ञिकेन इष्टं देवा किल आगता इह ॥ १ ॥
एकादशाऽपि गणधरा सर्वे उन्नतविशालकुलवंशा ।
पापाया मध्यमाया समवसृता यज्ञवाटे ॥ २ ॥
प्रथमोऽत्र इन्द्रभूतिर्द्वितीय पुनर्भवति अग्निभूतिरिति ।
तृतीयश्च वायुभूतिस्ततो व्यक्त सुधर्मा च ॥ ३ ॥
मण्डितो मौर्यपुत्र. अकम्पितश्चैव अचलभ्राता च ।
मेतार्यश्च प्रभासो गणधरा भवन्ति वीरस्य ॥ ४ ॥
यत् कारण निष्क्रमणे वक्ष्ये एतेषामानुपूर्व्या ।
तीर्थं च सुधर्मणो निरपत्या गणधरा शेषा ॥ ५ ॥

---

१ अनतिशायी ।

इअ वुत्तू णं पत्तो दट्टुं तेलुक्कपरिवुडं वीरं ।
चउतीसाइसयनिहिं[1] स संकिओ चिट्ठिओ पुरओ ॥ १३ ॥
आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं ।
नामेण य गुत्तेण सव्वन्नु सव्वदरिसिणा ॥ १४ ॥
हो ! इदभूइ ! गोअम ! सागयमुत्ते जिणे चिंतेइ ।
नाम पि मे विआणइ अहवा को मं न याणेइ ? ॥ १५ ॥
जइ वा हिअयगयं मे ससय मन्निज्ज अहव छिंदिज्जा ।
ता हुज्ज विम्हउ मे इय चिंततो पुणो भणिओ ॥ १६ ॥
किं मन्नि अत्थि जीवो उयाहु नत्थि त्ति ससओ तुज्झ ।
वेयपयाण य अत्थ न याणसी तेसिमो अत्थो ॥ १७ ॥
छिन्नम्मि ससयम्मि अ जिणेण जर-मरणविप्पमुक्केण ।
सो समणो पव्वइओ पचहि सह खडियसएहिं ॥ १८ ॥
त पव्वइअ सोउ बीओ आगच्छइ अमरिसेणं ।
वच्चामि णमाणेमी पराजिणित्ता ण तं समण ॥ १९ ॥

---

इत्युक्त्वा त प्राप्तो दृष्ट्वा तैलोक्यपरिवृतं वीरम् ।
चतुस्त्रिंशदतिशयानिधिं स शङ्कित स्थित पुरत ॥ १३ ॥
आभाषितश्च जिनेन जाति-जरा मरणविप्रमुक्तेन ।
नाम्ना च गोत्रेण सर्वज्ञेन सर्वदर्शिना ॥ १४ ॥
हे इन्द्रभूते ! गौतम ! स्वागतमुक्ते जिनेन चिन्तयति ।
नामाऽपि मे विजानाति अथवा को मा न जानाति ? ॥ १५ ॥
यदि वा हृदयगतं मे संशयं मन्येत अथवा छिन्दीत ।
ततो भवेद् विस्मयो मम इति चिन्तयन् पुनर्भणित ॥ १६ ॥
किं मन्यसे अस्ति जीव उताहो नास्ति इति संशयस्तव ।
वेदपदाना च अर्थं न जानासि तेषामयमर्थः ॥ १७ ॥
छिन्ने सशये च जिनेन जरा-मरणविप्रमुक्तेन ।
स श्रमण प्रव्रजित पञ्चभि सह खण्डिकशतैः ॥ १८ ॥
तं प्रव्रजित श्रुत्वा द्वितीय आगच्छति अमर्षेण ।
व्रजामि तमानयामि पराजित्य तं श्रमणम् ॥ १९ ॥

---

१ ख, जुअ, ।

अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [२९]

श्रीविनयचन्द्रसूरिविरचितं

# मल्लिनाथचरित्रम् ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरि-
पादाम्भोजचञ्चरीकायमाणाभ्यां

श्रावकपं०-हरगोविन्ददास-बेचरदासाभ्यां संशोधितम् ।

तच्च

वीसनगरवास्तव्य श्रेष्ठिवर्य जेठालाल दीपचन्द्र
इत्येतेषां साहाय्येन

वाराणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रित प्रकाशितं च ।

वीरसवत् २४३८ ।

मूल्य रूप्यकत्रितयम् ।

YASHOVIJAYA JAINA GRANTHAMALA, 29



THE

# MALLINATHA CHARITRA

OF

## SHREE VINAYA CHANDRA SURI



EDITED BY

SHRAVAK PANDIT HARGOVINDDAS

AND

SHRAVAK PANDIT BECHARDAS,

MOST DEVOTED SERVANTS OF

HIS HOLINESS SHASTRA VISHARAD JAINACHARYA

SHREE VIJAYA DHARMA SURI



WITH

THE PECUNIARY HELP OF

JETHALAL DIPCHAND PARI.

OF

VISNAGAR



PRINTED AND PUBLISHED

BY

HARSHCHAND BHURABHAI

Proprietor of Dharmabhyudaya Press.

BENARES



Veer-Era, 2438



Price, Rs 3-0-0

# प्रस्तावना ।

अस्य श्रीमल्लिस्वामिचरितनाम्नो महाकाव्यस्य प्रणेतार कविचक्र-शक्रा कुन्देन्दुकीर्तय आगमगगनगगनध्वजा श्रीविनयचन्द्रसूरय. के ?, कीदृशा ?, क च लोक कदा स्वचरित्रपावित्र्येण पावयाचक्रिवास ?, इति जिज्ञासमानस्य जिज्ञासाऽस्यैव काव्यस्य प्रशस्ति-प्रतिष्ठितश्लोकान् दृष्ट्वैवोपशाम्यति, तथाहि—

तमोपहारी सद्वृत्तो गच्छश्चन्द्रोऽभवद् भुवि ।
चित्र न जलधी राग यत्र चक्रे कदाचन ॥ १ ॥

तस्मिन्नभूत् शीलगणाभिधान
सूरि समापूरितभव्यवाञ्छ ।
यत्पञ्चशाख किल कल्पवृक्ष-
श्छाया नवीना तनुते जनानाम् ॥ २ ॥

यत्पार्श्वे किल देवता त्रिभुवनस्वामिन्युपेता स्वय
पूर्वप्रीतितरङ्गितेव वचसा बद्धेव कृष्टेव च ।
सौभाग्याद्भुतवैभवो भवमहाम्भोराशिकुम्भोद्भव
श्रीमानत्र स मानतुङ्गगणभृन्नन्द्याद्विद्यापह ॥ ३ ॥

यस्योच्चै परिपाकपेशलतरा तृप्ति प्रदत्तेऽङ्गिनां
व्याख्यापर्वणि भारती रसवती लावण्यपुण्या भृशम् ।
एतद् नूनमजीर्णमप्यविकल यस्या सुख निस्तुष
श्रीमानेष रविप्रभ स विजयी स्तात्सूपकार पर ॥ ४ ॥

विविधग्रन्थनिर्माणविरञ्चिरुचिरो गुरु ।
योऽभूद् रजोगुणो नैव नालीकस्थितिमान् क्वचित् ॥ ५ ॥

श्रीमद्रैवततुङ्गशैलशिखरे सुध्यानलीनायुषा
स्वायु कर्मतरुप्रपातवशतो लेभे गतिस्त्रािविषी ।

---

१ दैवी ।

भव्यव्रातमन कुरङ्गशमकृत् तत्पट्टभूषाकरो
राम श्रीनरसिंहसूरिरभवत् विद्यात्रयीपावन ॥ ६ ॥
नित्यं य समितौ रत कलयते मद्गुप्तिशक्तित्रय-
सातत्य व्रतपञ्चवल्लभलसद्गन्धर्वगर्वोद्धुर ।
श्रीमत्पूज्यरविप्रभप्रविकसत्पट्टक्षमालङ्कृति
साक्षादेष नरेन्द्र एव जयति श्रीमन्नरेन्द्रप्रभ ॥ ७ ॥
दुर्वारप्रतिवादिविन्ध्यशमकृच्चान्द्रेकुले विश्रुतो
देवानन्द इति प्रसिद्धमहिमोद्दामा मुनिग्रामणी ।
अष्टव्याकरणाम्बुधीन् निरवधीन् शब्दोर्मिमालाऽऽकुलान्
य॰ स्वव्याकरणप्रशस्तिचुलुकैश्चित्र चकारोच्चकै ॥ ८ ॥
तच्छिष्योऽजनि जागरूकमहिमा रत्नप्रभाख्यप्रभु
पट्टे श्रीकनकप्रभ प्रतिमया वाचस्पतिर्मूर्त्तिमान् ।
तत्पादाम्बुजचञ्चरीकचरित प्रद्युम्नसूरिर्नव-
प्रीति श्रीविनयेन्दुना तदखिल चाशोधयद् बोधये ॥ ९ ॥
पूज्यश्रीरत्न (?) सिंहसूरिसुगुरो श्रीमन्नरेन्द्रप्रभो-
रादेशाद् विनयाङ्कपार्श्वचरितस्रष्टाशया (?) ।
गच्छोत्तसरविप्रभाभिधगुरो शिष्योऽल्पमेधा अपि
सूरि. श्रीविनयेन्दुरेष विदधे मल्लेश्वरित्र नवम् ॥ १० ॥
क्षेत्रे भारतनामके जिनपतेर्यावत् पर शासन
(?) शस्यमिद वृषव्रजपरीपोषक्षमं वर्धते ।
एतद् नीरदवृन्दसुन्दरतनो श्रीमल्लितीर्थेशितु
प्रोद्दामं रसपूरचारुचरित तावच्चिर नन्दतात् ॥ ११ ॥

आपादयति चात्रार्थे तैरेव निर्मितस्य कल्पनिरुक्तनाम्नो ग्रन्थस्य पाश्चात्यः कियानंशो विशेषतो दार्ढ्यम्; स चायम्—

"सैद्धान्तिकश्रीमुनिचन्द्रशिष्या
प्राज्ञा अनूचानवरा जयन्ति ।
श्रीरत्नसिंहाह्वयसूरिमुख्या
यच्छिष्यलेशो विनयेन्दुसूरि ॥ १ ॥

श्रीविक्रमात् तत्त्व-गुणे-न्दुवर्षे ( १३२५ )
चूर्ण्यादि वीक्ष्य स्वगुरोर्मुखाच्च ।
ज्ञात्वाऽनघ पर्युषणाभिधाने
कल्पस्य किंचिद् विदधे निरुक्तम्" ॥ २ ॥

किञ्च, श्रीधर्मविधिग्रन्थवृत्तिविधायका श्रीउदयसिंहसूरयोऽप्येतानेवाचार्यवर्यान् महाकवित्वेन ग्रन्थशोधकशिरोमणित्वेन च प्रख्यापयन्ति, तथाच धर्मविधिप्रशस्ति –

"स श्रीमाणिक्यप्रभगुरुसेवी स्वगुरुबन्धुसमत्या ।
आचार्य उदयसिंहश्चक्रे श्रीधर्मविधिवृत्तिम् ॥ ११ ॥
श्रीमत्पूज्यरविप्रभमुनिपतिपदकमलमण्डनमराल ।
वृत्तिमशोधयदेना महाकविर्विनयचन्द्राख्य ॥ १२ ॥
या शासनपुष्टिपरा जननीवद् भव्यसतति पाति ।
सा श्रीशासनदेवी शिवतातिर्भवतु सघस्य ॥ १६ ॥
रस मङ्गल-सूर्य(१२८६)-मिते वर्षे श्रीविक्रमादतिक्रान्ते ।
चक्रे चन्द्रावत्या वृत्तिरिय सघसान्निध्यात् ॥ १७ ॥"

एभि सकलै प्रमाणैरेषा सूरिवराणा समयो द्वादशशताब्द्यादिभूतस्त्रयोदशशताब्द्यन्तभूतश्चेति निनरा निश्चीयते ।

सरस समुपवर्णितं चात्र गगनकुसुमायमानमनोमनोरथलक्षजलसकुलं दम्भस्तम्भानेकनक्रचक्रचक्रवालबलप्रबल दु खात्मनैकदुष्करमकरप्रकरप्रपूरित मिथ्याहकाराकारभूरिभूधराधृष्यकूटविकट सर्वत्र दुर्योधक्रोधप्रसर्पत्सरीसृपसर्पणभीषणमनादिगभीरापारससारपारावार सशोष्य, सभूष्य च स्वं निखिलनिर्मललोकाऽलोकलोकिन्या विज्ञानश्रिया, प्रतिष्ठाप्य च सकललोकाऽमितहितावह ससारोत्तारक तीर्थम्, प्रतिबोध्य च गाढमिथ्यात्वनिशानिद्रावशीभूतप्रभूतभूतगणान्, उत्तार्य च काश्चन ससारसागरात्, प्रापय्य च प्रवरशिवनगरनिकटम्, परमामनश्वरीमितरदेवदवीयसी गरीयसीं पदवी प्राप्ताना श्रीमल्लिस्वामिजिनेश्वराणामामूलचूलमदभ्रपापाभ्रधवित्र पुष्करारिष्टमललवित्र निसर्गगुणगणप-

वित्र चरित्रम्। अन्तर्भावितानि चात्र श्रीमल्लिमित्रषट्ककथानकानि। अन्या अपि लोकप्रबोधविधायिन्यो बह्व्य कथाश्च व्यावर्णिता । तत्र तत्र चानुरूप सुन्दर सकलरसावर्षि सवर्णनमपि पाठकहृदयकोशप्रवेशं प्रापितम्। समावेशितानि चात्र महाकाव्यनिखिललक्षणानि। इति सर्वैरेव प्रकारैरथ चारितग्रन्थ चरितग्रन्थेषूत्तम स्थान लम्भित ।

इमे चाचार्यपूज्या अन्यानपि कल्पनिरुक्त श्रीपार्श्वचरितप्रभृतीन् ग्रन्थान् जग्रन्थु., व्यशूशुधश्च धर्मविधिवृत्तिप्रमुखानल्पग्रन्थान् । एतेषा च सूरिवराणा ग्रन्थग्रन्थितृत्वं ग्रन्थशोधकत्व चेदमुभयं तदपूर्वादूष्य-वैदुष्य-लोकोपकारकत्वाऽन्यथानुपपद्यमान तेषा परमकारुणिकत्वं सकलशास्त्रनिष्णातत्व च स्पष्ट निष्टङ्कयति ।

सशोधकाश्चास्य शोधकप्रकाण्डता गताः श्रीप्रद्युम्नसूरय[1], येषा शोधननैपुण्य बहव. कविकुञ्जरा व्यावर्णयाबभूवास.। अतोऽपि चरित-

1 यदाह धर्मकुमारपण्डित स्वीये शालिभद्रचरित्रे प्रतिप्रक्रमम्—
"श्रीशालिचरिते धर्मकुमारसुधिया कृते। श्रीप्रद्युम्नधिया शुद्धे"
अन्त्यप्रक्रमे च—
"इय कथा वृद्धकुमारिकेव सदूषणा भूषणवर्जिताऽऽसीत् ।
प्रद्युम्नदेवस्य परं प्रसादाद् बभूव प्राणिग्रहणस्य योग्या" ॥ १५३ ॥
तेषा च श्रीविनयचन्द्रसूरिकृत श्रीमल्लिनाथमहाकाव्यम्, श्रीप्रभाचन्द्राचार्यविरचित श्रीप्रभावकचरित्रम्, श्रीदेवेन्द्रसूरिप्रणीत श्रीउपमितिभवप्रपञ्चकथासारोद्धार, श्रीरत्नप्रभसूरिविहिता श्रीकुवलयमालाकथा, श्रीबालचन्द्रसूरिनिर्मिता श्रीउपदेशकन्दलीटीका श्रीविवेकमञ्जरीटीका, श्रीउदयप्रभसूरिरचिता उपदेशमालाकर्णिकाटीका चेत्यादितात्कालिकबहुग्रन्थाना सशोधकत्वेन ग्रन्थसशोधननैपुण्यम्, श्रीसमरादित्यसंक्षेपादे स्वतन्त्र सविधानेन च शास्त्रवैशारद्य च सुतरा प्रतीतम् । ये पुनस्तदानीन्तनाचार्यैर्बाढ समानिता बभूवुरित्यपि श्रीमानतुङ्गाचार्यविरचितश्रीश्रेयासनाथचरित्रान्तर्गतेन—

"शिष्य श्रीकनकप्रभस्य सुकवि श्रीबालचन्द्रानुजो
ज्यायान् श्रीजयसिंहत प्रतिभया श्रीवस्तुपालस्तुत ।
अस्मद्गोत्रमहत्तर कविगुरु प्रद्युम्नसूरिप्रभु-
र्विद्वद्वृन्दर्कवित्वशोधनधनो ग्रन्थ मुदाऽशोधयत्" ॥ १ ॥

इति पद्येन व्यक्तमाविर्भवति ।

मिद विशेषेण महत्त्वमचकलत् ।

एतस्य श्रीमल्लिचरितस्य पुस्तकचतुष्टयमावा प्राप्तवन्तौ, तदर्थं च तदर्पयितॄन् नामग्राहमभिवन्दावहे-

१ श्रीमल्लिचरितमस्मद्गुरूणा श्रीशास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरीणा शुद्धदेश्यम् ।

२ " " पुण्यपत्तनस्थडक्कनकॉलेजाख्यपुस्तकालयस्य, नात्यशुद्धम् ।

३ " " मुनिमोहनलालजिपुस्तकालयस्य, अशुद्धम् ।

४ " " स्तम्भनपुरस्थधर्मशालाभिधभाण्डागारस्य, अपूर्णम्, शुद्धप्रायं च ।

तदेव पुस्तकचतुष्टयमाश्रित्य सशोधितम्, तत्र तत्र पाठान्तरित च चित्ताह्लादकमिद चरित सकर्णा निजविमलनेत्रसन्निकर्षाद् नायन्तु स्वीयनेत्रे पावित्र्यम् । पठित्वा चैतत् त्यजन्तु कपटनाटकपाटवपटं पटव, मुनयश्च लोकयन्तु कर्मनरपतिवैचित्र्यम्, मुच्यता च सकलो लोक, उत्साहयन्तु चास्मत्परिश्रान्तिम्, संशोधयन्तु सूचयन्तु च मतिमान्द्यसहभूनि दृग्दोषहेतूनि सीसकाक्षरयोजकजातानि च दूषणानि हसन्त. समन्तत सन्त ।

अस्य च मुद्रणादिव्ययदातु परमोदारश्रीश्रेष्ठिप्रवर**गोकुलभाइ**तनुजनुषो वदान्यवरेण्यस्य श्रीश्रेष्ठिवर**मणिलालस्य** परम धन्यवाद समर्पयाव. ।

इति

निवेदयतो—

**हरगोविन्द-बेचरदासौ ।**



# अनुक्रमणिका ।







तेजोमयोऽपि पूज्योऽपि घातिना नीचधातुना ।
लोहेन सङ्गतो वह्निः सहते घनताडनम् ॥ ३०१ ॥
वदने समतां बिभ्रत् पश्चाच्च विषमुल्वणम् ।
दूरं वृश्चिकवत् त्याज्यः क्षुद्रात्मा दुर्जनो जनः ॥ ३०२ ॥
स्तोकमप्युद्गमं प्राप्य न्यग्रोधाङ्कुरवत् खलः ।
प्रसरन् पाटयन् सन्धिं प्रासादं पातयेद् नृपम् ॥३०३॥
स्नेहे नाशं गुणे[1] दाहं वितनोत्यमले मलम्[2] ।
दीपज्वालोपमा देव ! खले मैत्री नृणां खलु ॥ ३०४ ॥
श्रूयते नीतिशास्त्रेषु हृद्दोच्चारोपकारिणः ।
हंसस्य यद्भूद् नीचकाकसंसर्गदोषतः ॥ ३०५ ॥
यथा कोऽपि सरस्याऽऽतिस्पर्धया[3] मूर्खवायसः ।
पतितोऽन्तर्जलं मीनजिघृक्षुर्व्योममण्डलात् ॥ ३०६ ॥
स तरीतुमजानानः सलिलप्लुतपक्षतिः[4] ।
सेवालैर्वेष्टितोऽत्यन्तं जातो मृत्युभयाऽऽकुलः ॥ ३०७ ॥
तं दृष्ट्वा कृपया हंसी तीरगा हंसमब्रवीत् ।
प्रिय ! पश्य कथं काको वराको म्रियते पुरः ? ॥३०८॥
विश्वपक्षिगणेषु त्वमुत्तमो गीयसे जनैः ।
तदस्य दीयतां जीवदानमुत्तार्य नीरतः ॥ ३०९ ॥
साधु साध्विति भाषित्वा हंसो हंसी च वायसम् ।
चञ्च्वाऽऽदाय तृणं तत्र विलग्नं निन्यतुर्बहिः ॥३१०॥
क्षणादाऽऽश्वास्य काकोऽथ वातेनोद्वानपक्षतिः ।
विलग्य पादयोर्बाढमिति हंसं न्यमन्त्रयत् ॥३११॥
कोऽपि प्रत्युपकारस्ते नैव निष्पद्यते मया ।
तथाऽपि कुरु मे तोषं समागम्याऽद्य मद्वनम् ॥३१२॥
हंसेनाऽपि तदाऽऽकर्ण्य प्रियाया वीक्षितं मुखम् ।

१ दवरके अपि । २ कज्जलमपि ।
३ पक्षिविशेष । ४ पक्षमूलम् ।

साऽपि ज्ञाततदाकूता[1] प्रच्छन्नमिदमब्रवीत् ॥३१३॥
सर्वस्योपकृतिर्देव निर्विचारं विधीयते ।
स्तोकाऽपि न पुनः कर्तुं युज्यते नीचसंगतिः ॥३१४॥
कान्तया वारितोऽप्येवमऽतिदाक्षिण्यतोऽथ सः ।
क्षणं यामीति तामुक्त्वा सहाऽनेन गतो वनम् ॥३१५॥
तत्र निम्बस्य शाखायामुपविष्टावुभावपि ।
वाह्यालिक्रीडया श्रान्तस्तदाऽधश्चाऽऽगतो नृपः ॥३१६॥
उड्डीनो वायसो विष्टां कृत्वाऽथ नृपमस्तके ।
दृष्ट्वा हंसो नरैकेन[2] धनुर्गुलिकया हतः ॥३१७॥
पतितं भुवि तं वीक्ष्याऽवदद् नृपपरिच्छदः ।
अहो ! चित्रं यदीक्ष्येत हंसरूपेण वायसः ॥३१८॥
हंसः कण्ठगताऽऽत्माऽपि जनालापं निशम्य तम् ।
स्वजातिदूषणोद्धारहेतवे नृपमब्रवीत् ॥३१९॥

यतः-

नाऽहं काको महाराज ! हंसोऽहं विमले जले ।
नीचसंगप्रसङ्गेन मृत्युरेव न संशयः ॥३२०॥
इत्यादि गदितं तस्य श्रुत्वा सदयमानसः ।
नृपस्तद्दिनमारभ्य निवृत्तो नीचसंगतः ॥३२१॥
कुर्वतो हि तमप्येवमहिताय खलो भवेत् ।
अतः प्रिय ! तदाऽऽसंगो वार्यते ते पुनः पुनः ॥३२२॥
सज्जनेनाऽपि किं तेन यः शङ्खसमलक्षणः ।
धवलो बहिरत्यन्तमन्तस्तु कुटिलस्थितिः ॥३२३॥
स्त्रीणामपि वचः कालेऽनुकूलं मन्यते बुधैः ।
दुर्गा[3] वामरवा किं न शस्यते मार्गगामिभिः ॥३२४॥
इदं हृदि कुमारस्य चमच्चक्रे तयोदितम् ।

---

१ विदितहसाऽभिप्राया । २ तृतीयान्तम् । ३ पक्षिविशेष, यो वामं शब्दायमानः सुशकुनचिह्नम् ।

परमार्थस्वभावस्य कर्त्तव्यमिति न स्थितम् ॥३२५॥
महतामप्यहो ! दैवाद् दुर्वारा नीचसंगतिः ।
कर्पूरस्य कथं न स्यादङ्गारेण समं रतिः ? ॥३२६॥
स्वस्वास्थित्या ततः काले कियत्यपि गतेऽन्यदा ।
पप्रच्छ वसुधाऽधीशः प्रच्छन्नमिति सज्जनम् ॥३२७॥
कः संबन्धः कुमारस्य त्वय्येवं यत् तदादरः ? ।
क्षुद्रभव्यजीवदोषेण सोऽपि चिन्तितवानिदम् ॥३२८॥
स्मृत्वा पूर्वविकारं मे कुमारोऽनर्थहेतवे ।
काऽपि भावी, विपद्येनं तदादावेव पातये ॥३२९॥
पापः स्वपोषकस्याऽपि संपदा हृदि खिद्यते ।
हरिताद्रीं भुवं पृष्ठे यथा दृष्ट्वा खरश्चरन् ॥३३०॥
जगाद च त्वया देव ! भूयः कथितसुन्दरम् ।
न पृष्टव्यमिदं राजा सुतरामाहतस्ततः ॥३३१॥
ददौ शपथमूचेऽसाऽवहो ! संकटमागतम् ।
निषेधाज्ञा कुमारस्य कथनाज्ञा महीपतेः ॥३३२॥
कुमारस्याऽपि पूज्यस्य दुर्लङ्घ्याऽऽज्ञाऽथवा तव ।
तेनैष कथयन्नस्मि शृणु देव ! यथातथम् ॥३३३॥
श्रीवासनगराधीशनरवाहननन्दनः ।
अहं देव ! महीयस्यकौरिकस्य सुतस्त्वयम् ॥३३४॥
प्रकृत्या रूपवानाऽऽप्तविद्यालाभः कुतोऽपि हि ।
स्वजातिलज्जया गेहं त्यक्त्वा देशान्तरं भ्रमन् ॥३३५॥
अत्राऽऽयातस्तदूर्ध्वं तु प्राच्यभाग्यवशादभूत् ।
यत् किञ्चिदिह तत्सर्वं तवैव विदितं विभो ! ॥३३६॥
( युग्मम् )
पितुः परिभवादत्राऽऽयातोऽहमपि पर्यटन् ।
दृष्टोपलक्षितस्तेन मर्मज्ञ इति संभ्रमात् ॥३३७॥
पुरस्त्वरितमाकार्य मा मामुद्घाटयेरिति ।

आज्ञां दत्त्वा विशेषेण संमान्य स्थापितोऽन्तिके ॥३३८॥
नितान्तममुना कर्णविषेण व्याकुलीकृतः ।
नृपो दध्यौ हहा ! कीदृक् संजातमसमञ्जसम् ॥३३९॥
पणबद्धामसौ कन्यां बाढं गृह्णातु, मेऽखिलम् ।
यत्पुनर्मलिनीचक्रे राज्यं दुःखाकरोति तत् ॥३४०॥
तदेनं निग्रहीष्यामि पापमित्यात्तनिश्चयः ।
आह्वास्त स रहो भृत्यान् यत् कृत्यादेशकारिणः ॥३४१॥
आदिशच्च य एकाकी निशि सौधाऽन्तराऽध्वना ।
एति वध्यः स युष्माभिर्निर्विचारमुदायुधैः ॥३४२॥
देवाऽऽदेशः प्रमाणं मे इति व्याहृत्य ते नराः ।
ततो गत्वाऽभूवन् राज्ञो निदेशकरणोद्यताः ॥३४३॥
अथ वर्षसमं नीत्वा दिनं राजा महानिशि ।
शिक्षयित्वा नरं प्रैषीत् कुमाराऽऽह्वानहेतवे ॥३४४॥
सोऽपि गत्वाऽवदद् देव ! नृदेवस्त्वां[2] दिदृक्षते ।
कार्यौत्सुक्यात् ततो मध्यमार्गेणैव समेयताम् ॥३४५॥
खड्गमादाय पल्यङ्कादुत्थाय सहसाऽचलत् ।
कुमारः प्रियया ऽभाणि करे धृत्वा पटाऽञ्चलम् ॥३४६॥
देव ! मुग्धस्वभावोऽसि राजनीतिं न वीक्षसे ।
इयत्यामविचार्यैव यदेवं चलितो निशि ॥३४७॥
एतदेव कुलीनानां जीवितव्यं प्रिये ! नृणाम् ।
निर्विकल्पं परीक्ष्याऽऽज्ञां यदादेशो विधीयते ॥३४८॥
विकल्पेन पुनस्तस्मिन् भक्तिव्याजाद् विडम्बना ।
इति शिष्टे कुमारेण राजपुत्री पुनर्जगौ । ३४९॥
सत्यमेतत् परं क्वापि विकल्पोऽप्युचितः प्रिय ! ।
जैनदर्शनवन्नैव सिद्धिरेकान्तपक्षतः ॥३५०॥
ऋजुता धन्व-गुणयोरस्तु वस्तुस्वरूपतः ।

---

१ हृंग् स्पर्धाशब्दयो. । २ स्वामित्यर्थ ।

कार्यसिद्धौ प्रशस्येत वक्रतैव तयोः पुनः ॥३५१॥
अन्यच्चित्तेऽन्यथा वाचि कर्त्तव्यं त्वन्यदेव हि ।
गणिकाक्रमवन्नाथ ! राजधर्मोऽप्यनेकधा ॥३५२॥
विश्वासोऽत्र न कर्त्तव्यस्तन्नरेण विजानता ।
नीतौ किं न श्रुतं राजा मित्रं कस्याऽपि नो भवेत् ? ॥३५३॥
अकारणप्रसादोऽपि प्रस्तावं न विना शुभः ।
अरिष्टाय तरोः पुष्पोद्भेदोऽप्यऽसमये भुवि ॥३५४॥
यथा दाहभयाद् देव ! ध्रियते दारुहस्तकः ।
फलकं घातरक्षार्थं प्रस्तावार्थं तथाऽनुगः ॥३५५॥
आस्ते समस्तकृत्येषु प्रधानस्तव सज्जनः ।
स एव प्रेष्यतां ज्ञात्वा कार्यं कुर्याद् यथोचितम् ॥३५६॥
दयितायाः स तादृक्षमिक्षुरम्भाफलोपमम् ।
वचः श्रुत्वा परं तोषाऽऽपूरितो हृद्यऽचिन्तयत् ॥३५७॥
कुलव्रतधरा नारी नरस्य यदि जायते ।
तदा सैव गुरुर्लक्ष्मीः शास्त्रं मित्रं मतिः सखा ॥३५८॥
अहो ! केयं मतिप्रौढिरस्याः कीदृक् वचःक्रमः ।
पक्षपातः सरस्वत्याः स्त्रीजातित्वादियं ध्रुवम् ॥ ३५९ ॥
प्रहितः सज्जनश्चाथ व्रजन् सौधाऽन्तराऽध्वना ।
तत्रस्थपुरुषैः तीक्ष्णखड्गघातैर्दृढं हतः ॥ ३६० ॥
अपतच्च हताशत्वादऽसावुभयथाऽप्यधः ।
सत्यमाभाणको जातः स्वस्य स्याच्चिन्तितं परे ॥ ३६१ ॥
श्रुत्वा कलकलं तत्र ज्ञात्वा च नृपपुत्रिका ।
पूरिता शोक-हर्षाभ्यां जगादेति सगद्गदम् ॥ ३६२ ॥
हा ! नाथ ! सरलस्वच्छप्रकृते ! कथितं यदि ।
नाऽकरिष्यः तदाऽवस्था काऽभविष्यन्ममाऽधुना ? ॥३६३॥
आर्यपुत्र ! तदद्यापि मुक्त्वा गजनिमीलिकाम् ।
भूत्वा स्वसैन्यसन्नद्धो बहिस्तिष्ठ पुरादरम् ॥ ३६४ ॥

तथैव विहिते तेन विदित्वा तन्नृपोऽपि हि ।
स्पष्टकोपो बलाटोपं कृत्वा सज्जो युधेऽभवत् ॥३६५॥
प्रसरत्तरलोत्तुङ्गतरङ्गाभतुरङ्गमे ।
दृश्यमानमहामानमत्तमातङ्गपर्वते ॥ ३६६ ॥
करालमकराकारवरूथिरथसंकुले ।
स्फुरच्चारभटाऽनेकनक्रचक्रभयङ्करे ॥ ३६७ ॥
डिण्डीरपिण्डसंकाशच्छत्रशङ्खविराजिते ।
महाकलकलध्वानपूरितव्योममण्डले ॥ ३६८ ॥
दुर्वातक्षुभितोत्तालपूर्वापरसमुद्रवत् ।
प्राणिक्षयाय सञ्जाते संग्रामे सैन्ययोर्द्वयोः ॥ ३६९ ॥
मन्त्रिभिश्चिन्तितं हन्त ! सत्स्वप्यऽस्मासु यद्यसौ ।
राज्ञा संहार आरेभे ततो जीवन्मृता वयम् ॥ ३७० ॥
( पञ्चभिः कुलकम् )
पुष्पैरपि न योद्धव्यं प्रबुद्धेन यथा तथा ।
अयं ह्यवसरोऽस्माकं तन्निवारणकर्मणि ॥ ३७१ ॥
सर्वे समुदितीभूय पश्चात्कृत्य बलद्वयम् ।
उपाऽसर्पन् नृपं नत्वा तेष्वेक इदमूचिवान् ॥ ३७२ ॥
कलानामिव शीतांशुर्नदीनामिव सागरः ।
निधिस्त्वमेको विद्यानां देव ! संप्रति भूतले ॥ ३७३ ॥
यथा च नृषु राजा त्वं विवेकश्च गुणेष्वयम् ।
अविमर्शो महानेष दोषो दोषेष्वयं तथा ॥३७४॥
शल्य-वह्नि-विषादीनां सुकरैव प्रतिक्रिया ।
सहसाकृतकार्योत्थाऽनुतापस्य तु नौषधम् ॥३७५॥
गुरुत्वं च लघुत्वं श्रीभावाऽभावतो जडाः ।
वदन्ति तत्पुनर्दक्षाः सद्विवेकाऽविवेकतः ॥ ३७६ ॥
निर्विवेकनरं नारी प्रायोऽन्याऽपि न काङ्क्षति ।
किं पुनः श्रीरियं देवी पुरुषोत्तमवल्लभा ? ॥३७७॥

निजपत्युर्निरीक्ष्यांऽशं श्रीरियं श्रयते नृपम् ।
तमनेनाऽविवेकेन मा हारय नरोत्तम ? ॥३७८॥
उक्तं च–
अविज्ञातविशेषस्य सर्वतेजोऽपहारिणः ।
स्वामिनो निर्विवेकस्य तमसश्च किमन्तरम् ? ॥३७९॥
कुदृष्टं कुश्रुतं चाऽपि कुज्ञातं कुपरीक्षितम् ।
कृत्वा कार्यं पुरा देव ! बहवः प्रापुरापदम् ॥३८०॥
सहसाकारिणं सद्यो मुञ्चन्ति सुखसंपदः ।
इत्यर्थे श्रूयतां देव ! जयराजो निदर्शनम् ॥३८१॥
तथाहि–
अस्ति विन्ध्याचलासन्नभूमिभागे महाटवी ।
अधृष्या हरि-भल्लूक-शार्दूल-सरभादिभिः ॥३८२॥
अभिगम्या च हिन्ताल-सरलाऽ-ञ्जन चन्दनैः ।
आम्र-जम्बू-प्रियालाद्यैर्बकुला-ऽशोक-चम्पकैः ॥ ३८३ ॥
तस्यामुत्सङ्गविस्तीर्णो नानालीनविहङ्गमः ।
वटवृक्षोऽस्ति तत्रैकं युग्मं वसति कीरयोः ॥ ३८४ ॥
तयोर्निर्वृतिसारेण सुखेन समयं सदा ।
सस्नेहं निर्गमयतोः शुकापत्यमजायत ॥३८५॥
पित्रोः पक्षाऽनिलस्वेदचूर्णिदानादिना क्रमात् ।
वर्धमानो बभूवाऽसौ किञ्चिदुद्भिन्नपक्षतिः ॥३८६॥
अन्यदा बालचापल्यादुड्डीय गमनोत्सुकः ।
कियद् दूरं गतो मार्गाऽन्तराले सहसाऽपतत् ॥३८७॥
श्रान्तो व्यात्तमुखो बिभ्यत् सलिलायाऽऽगतेन सः ।
दृष्ट्वा तपस्विनैकेन गृहीतः कृपया करे ॥३८८॥
वीजयित्वा वल्कलेन पाययित्वा कमण्डलोः ।
जलमाश्वास्य निन्येऽसौ तापसेन निजाऽऽश्रमम् ॥३८९॥
पुत्रवत् पोषितः स्वादुनीवारफलवारिभिः ।

संभूय मुनिभिश्चक्रे शुकराज इति प्रथा ॥३९०॥
सल्लक्षणधरो ज्ञात्वाऽऽदेशात् कुलपतेः शुकः ।
पाठितः शिक्षितश्चासौ तापसैर्हृष्टमानसैः ॥३९१॥
पितरावपि तन्मोहाद् तत्रैवाऽऽगत्य तस्थतुः ।
अन्यदा निजशिष्याणां पुरः कुलपतिर्जगौ ॥३९२॥
द्वीपो वारिनिधेर्मध्ये हरिमेलाऽभिधो वरः ।
तिष्ठतीशानकोणेऽस्य सहकारो महाद्रुमः ॥३९३॥
देव-दानव-गन्धर्व किन्नर-व्योमचारिणाम् ।
मिथुनैः सेवितच्छायः सुधासिक्तः सदाफलः ॥३९४॥
( युग्मम् )
देवाऽनुभावात् तस्योपजीवति स्वादु यः फलम् ।
दोषरोगजरामुक्तः स्फुटं स्यात् स पुनर्नवः ॥३९५॥
शुकोऽपीदं वचः श्रुत्वा दध्यौ हृष्टमना भृशम् ।
ध्रुवं मदर्थमेवेदं व्याख्यानं विदधे गुरुः ॥३९६॥
दृष्टिभ्रष्टौ जराजीर्णौ यद् मातापितरौ मम ।
तदाम्रफलदानेन किंचित् स्यामऽनृणस्तयोः ॥३९७॥
किं तेन जातु जातेन पृथिवीभारकारिणा ।
आस्तामऽन्यस्य पित्रोरप्याशां पूरयते न यः ? ॥३९८॥
स पुत्रो यः पितुर्मातुर्भूरिभक्तिसुधारसैः ।
निर्वापयति संतापं शेषस्तत्कृमिकीटकः ॥ ३९९ ॥
उक्तं च कुलपतिना–
मातृपित्रोरऽभरकः[1] क्रियामुद्दिश्य याचकः ।
मृतशय्याप्रतिग्राही न भूयः पुरुषो भवेत् ॥ ४०० ॥
वरं वृक्षोऽपि सिक्तोऽसौ यस्य विश्रम्यते तले ।
सचेतनोऽपि नो पुत्रो यः पित्रोः क्लेशकारकः ॥४०१॥

---

१ अपोषक ।

उच्यन्ते दुष्प्रतीकारा यद्यऽप्यऽम्बा पिता गुरुः ।
नरैस्तथाऽपि यत् शक्यं कृत्यं तेषां पदाऽर्चनम् ॥४०२॥
पूज्यपूजनबीजोत्थः स्फुटं भाग्यद्रुमो नृणाम् ।
तद्भक्तिसलिलैः सिक्तः सदा सौख्यैः फलत्यऽलम् ४०३
इति ध्यात्वा शुकः कीराऽऽवापृच्छ्योड्डीय सत्वरम् ।
ययौ वार्ध्यन्तरद्वीपं तमेवाऽऽम्रं ददर्श च ॥ ४०४ ॥
प्रीतश्चारु फलं चञ्चुपुटेनाऽऽदाय तस्य सः ।
व्यावृत्त्य गगने गच्छन् शुकः श्रान्तोऽभवद् भृशम् ॥४०५॥
अशक्तः स्वां तनुं धर्तुं पपात सहसाऽम्बुधौ ।
नाऽमुचत् चञ्चुतस्त्वाम्रं चिन्तातत्त्वं सुधीरिव ॥४०६॥
अत्राऽन्तरे सागराख्यसार्थेशेन महापुरात् ।
यानेन गच्छता दृष्टो व्याकुलः स जले ब्रुडन् ॥४०७॥
अरे ! गृह्णातु गृह्णातु कोऽप्येनमिति संभ्रमात् ।
उदिते सागरेणैकस्तारकः स्वं जलेऽक्षिपत् ॥४०८॥
गत्वाऽन्तिके शुकं धृत्वा सागरस्य स चाऽऽर्पयत् ।
सागरोऽपि करे धृत्वा शुकमाऽश्वासयच्चिरम् ॥४०९॥
शुकोऽपि लब्धचैतन्यः सागरं प्रत्यभाषत ।
उपकारिशिरोरत्न ! सार्थवाह ! चिरं जय ॥ ४१० ॥
न केवलं त्वयैकोऽहं जीवितः सार्थनायक ! ।
मेऽपि पित्रोऽरपि प्राणा दत्ता जीर्णाऽन्धयोर्ध्रुवम् ॥ ४११ ॥
सूर्याचन्द्रमसौ व्योम्नः, द्वौ नरौ भूषणं भुवः ।
उपकारे मतिर्यस्य यश्च तं न विलुम्पति ॥४१२॥
उक्तं च–
परकार्याय पर्याप्तं वरं भस्म वरं तृणम् ।
परोपकृतिमाधातुमक्षमो न पुनः पुमान् ॥ ४१३ ॥
किमपि प्रार्थये तत् त्वां प्रार्थनायोग्य ! सत्तम ! ।
यद् योग्यं प्रार्थयस्वेति सागरोक्ते शुकोऽतुषत् ॥ ४१४

वृत्तान्तं सर्वमाख्याय तत्फलं दातुमुद्यतः ।
सागरेणोदितः कीरस्त्वत्पित्रोर्हन्त ! का गतिः ? ॥४१५॥
सोऽप्याह गतभारत्वात् तत्र गत्वा पुनः फलम् ।
पूर्वं भुक्त्वा स्वयं पित्रोर्योग्यं नेष्यामि निश्चितम् ॥४१६॥
ततस्तत्प्रार्थनाभङ्गं सागरः कर्तुमक्षमः ।
जग्राहाऽऽम्रफलं कीरात् सोऽपि तुष्टः खमुद्ययौ ॥ ४१७॥
सागरोऽपि शुकं ध्यायन् चूतं यत्नेन धारयन् ।
क्रमाद् जयपुरं प्राप्तः स्वस्थित्याऽवासयद् बहिः ॥४१८॥
अचिन्तयच्च यदहो ! पक्षिणोऽपीदृशी मतिः ।
उपकर्तुं तदा मर्त्यभवे किं कृतऽमन्यकृत्[1] ॥४१९॥
तत् किं कुक्षिंभरित्वेन ममैतत्फलभक्षणात् ।
तथा कुर्वे यथा विश्वविश्वस्योपकृतिर्भवेत् ? ॥ ४२० ॥
यतः-
तुन्दस्य भरणे नीचास्तुष्टाः, स्वीयस्य मध्यमाः ।
उत्तमा भुवनस्याऽपि सतां स्वपरता न हि ॥४२१॥
स च सर्वोपकारोऽत्र न हि विश्वाऽधिपं विना ।
तदऽत्र राज्ञो दास्येऽदो हृदीदं निश्चिकाय सः ॥४२२॥
न्यस्य मुक्ताभृतस्थालोपरिचूतफलं क्षणे ।
तदुपायनमादाय जगाम नृपधाम सः ॥४२३॥
आस्थाने नृपमऽद्राक्षीत् प्रतीहारनिवेदितः ।
मुक्तास्थालं पुरो मुक्त्वा साऽष्टाङ्गं प्रणनाम च ॥४२४॥
तस्मिन् यथासनासीने चूतं मुक्ताफलोपरि ।
भूपालो वीक्ष्य विस्मेरमुखः पप्रच्छ सादरम् ॥४२५॥
सार्थेश ! किमियानऽर्घः फलमात्रस्य दृश्यते ।
कथं कदापि नो दृष्टः सहकारतरुस्त्वया ? ॥४२६॥
तत्प्रभावादिकं सर्वं कथयामास सागरः ।

१ अन्यत् ।

अतिप्रीतो नृपस्तस्य सन्मानं बह्वऽकारयत् ॥४२७॥
आकार्याऽऽरामिकं स्वीयं शिक्षयित्वाऽतियत्नतः ।
रोपणायाऽऽर्पयद् राजा तदाऽऽम्रं सह यामिकैः ॥४२८॥
सोऽपि गत्वा शुभस्थाने विधिना परिकर्मवित् ।
सिञ्चते रोपयित्वाऽऽम्रं सदाऽऽत्मानमिवाऽऽत्मवित्॥४२९॥
क्रमेणाऽङ्कुरमुद्भिन्नं श्रुत्वा नृपतिरुत्सवम् ।
मुदा तत्र सुपुत्रस्य जन्मेवाऽकारयत्तराम् ॥४३०॥
भक्तवस्त्रादिसत्कारैस्तोषयामास पूर्जनान् ।
विशेषेण तदेकाग्रचित्ताऽऽरामिकयामिकान् ॥४३१॥
स्वयं याति नृपो द्रष्टुं पल्लवे पल्लवेऽनिशम् ।
वर्धमाने प्रवर्धन्ते राज्ञो हृदि मनोरथाः ॥४३२॥
कन्दलस्कन्धशाखासु वर्ण्यमानासु भूपतिः ।
तत्र यन्नेप्सितं दत्ते शक्रंमन्यो मुदा हृदि ॥४३३॥
एवं सर्वाङ्गरम्यस्य सौभाग्यस्येव मञ्जरी ।
प्रादुर्बभूव चूतस्य तस्य विश्वदृशां सुधा ॥४३४॥
फलैश्चाऽलङ्कृतो भूरिभाग्यस्याऽऽरम्भवत् तरुः ।
मन्यते स्म जनं राजा गतरोगजरापदम् ॥ ४३५ ॥
अथैकस्य पपाताऽऽम्रफलस्योपरि पुष्करे[1] ।
व्रजत्शकुन्तिकात्तस्य सर्पस्य गरलं मुखात् ॥४३६॥
सद्यः पक्वं च तत् तेन गलित्वा चाऽपतद् भुवि ।
तद् नीत्वाऽऽरामिकस्तुष्यन् राज्ञोऽद्भुतमढौकयत् ॥४३७॥
प्रसाददानं कृत्वाऽस्य नृपो निजपुरोधसे ।
आद्यमिष्टेऽस्त्विति ध्यात्वा ददावाम्रं सगौरवम् ॥ ४३८ ॥
सोऽपि गत्वा निजावासे कृत्वा देवार्चनं मुदा ।
तदाम्रं भक्षयामास सहसा च विपन्नवान् ॥४३९॥
शोककोलाहले तत्र जाते ज्ञात्वा नराधिपः ।

---

१ गगने ।

किमेतदिति संभ्रान्तचित्तः श्यामसुखोऽभवत् ॥४४०॥
दधौ च हन्त! केनाऽपि वैरिणा वणिजः करात् ।
स्फुटं विषफलं मेऽदो दापितं हा! करोमि किम्? ॥४४१॥
सोऽथ पर्शुधरान् सर्वान् आदिदेश क्रुधा ज्वलन् ।
अरे! छेद्यस्तथाऽऽम्रोऽयं यथा नामाऽपि नो भवेत्॥४४२॥
तैः कुठारकरैः शीघ्रं गत्वाऽसौ तत्र शत्रुवत् ।
हारावपरलोकानां[1] छिन्नः सह मनोरथैः ॥४४३॥
तद् ज्ञात्वा जीवितोद्विग्नैः कुष्ठिपङ्ग्वन्धलादिभिः ।
गत्वाऽस्य फलपत्राद्यं भक्षितं सुखमृत्यवे ॥४४४॥
क्षणेन तत्प्रभावात् ते भूत्वा मन्मथसंनिभाः ।
उपतस्थुर्नृपं तुष्टास्तद्वृत्तं च न्यवेदयन् ॥४४५॥
विस्मितोऽथ नृपो दध्याऽवहो! किमिदमद्भुतम्! ।
ध्रुवं सत्यं वचः तस्य सार्थेशस्य महात्मनः ॥४४६॥
केनाऽपि कारणेनाऽभूदिदं विषमयं फलम् ।
इत्याऽऽरामिकमाकार्याऽप्राक्षीत् शपथमपूर्वकम् ॥४४७॥
वद भोः! यदिहाऽऽनिन्ये तदाम्रं किं त्वया द्रुमात् ।
जगृहे भूमिभागाद् वा स ऊचे देव! भूतलात्? ॥४४८॥
अचिन्तयद् नृपो नूनं कुतोऽप्यऽहिविषादिदम् ।
तापेन सहसा पक्वं गलित्वा भूतलेऽपतत् ॥४४९॥
प्रैषीच्च पुरुषान् वेगादाम्रशेषस्य रक्षितुम् ।
तैर्गत्वा वीक्ष्य चागत्य विज्ञप्तं श्रूयतां विभो! ॥४५०॥
विषवृक्ष इति श्रुत्वा संभूय स तथा जनैः ।
चूर्णीकृतो यथा तस्य न स्थानमऽपि लक्ष्यते ॥४५१॥
तद् निशम्य नृपः सास्रं विललाप महार्त्तिभाक् ।
हा! मया मन्दभाग्येन विहितं विश्ववैशसम्[2] ॥४५२॥
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुं न युज्यते ।

---

१ हाशब्द कुर्वता लोकाना पश्यतामित्यर्थ. । २ विश्वहानि ।

पीयूषवृक्षः किं त्वेष धिग् ममाऽचिन्त्यकारितम् ॥४५३॥
इत्येवं जीवितं यावत् पश्चात्तापाऽनलेन सः ।
दह्यमानोऽनिशं तस्थौ राज्यसौख्यपराङ्मुखः ॥४५४॥
तदेवं त्वमपि स्वामिन् ! सम्यग् हृदि विभावय ।
विमृश्य विहितं कार्यं कदाऽप्येति न विक्रियाम् ॥४५५॥
समस्तगुणसंपूर्णे ललिताङ्गेऽपि तत् त्वया ।
अपरीक्ष्य समारेभे सरम्भः कथमीदृशः ? ॥४५६॥
ततो यद्याऽऽदिशेद् देवः कुमारस्याऽन्तिकं तदा ।
गत्वा जानीमहे सम्यक् सर्वं तस्य कुलादिकम् ॥४५७॥
अमात्य ! साधु साध्वेतत् कुरुष्वेति नृपोदिते ।
तदप्राक्षीदुपागत्य मन्त्रिवर्गो नृपात्मजे ॥४५८॥
कुमारः प्राह मन्त्रीश ! जात्यादिकथको मम ।
इतोऽसौ सज्जनः स्वं तत् कथयामि कथं स्वयम् ? ॥४५९॥
मन्त्र्यूचे सज्जनेनैव पापिना जातिदोषजम् ।
तवैवं रिष्टमानिन्ये तत् त्वं तत्त्वं निवेदय ॥४६०॥
तन्निशम्य कुमारोऽपि ज्ञातकारणधीरधीः ।
स्वकीयं पुरपित्रादि यथातथमचीकथत् ॥४६१॥
शशंसुर्मन्त्रिणो राज्ञे तन्निशम्य नृपोऽभवत् ।
समं हर्ष-विषादाभ्यां संकीर्णहृदयः क्षणम् ॥४६२॥
प्राहिणोच्च नरानाप्तानाऽऽशु गत्वाऽथ तत्र ते ।
श्रीवासनगरेशाय तत्स्वरूप न्यवेदयन् ॥४६३॥
सहसा वचसा तेन भेकवज्जलदाम्भसा ।
स प्रत्युज्जीवित इवाऽभूद् नृपो नरवाहनः ॥४६४॥
हर्षेण च जगादाऽथ ममाऽहो ! कोऽपि संप्रति ।
जितशत्रुसमो बन्धुर्न परो भुवनत्रये ॥४६५॥
अतित्यागभवाऽऽस्माक[1]तिरस्काराऽपमानितः ।

---

१ आस्माक अस्मदीय ।

हंसः सर इव स्थानं मुक्त्वा देशान्तरं भ्रमन् ॥४६६॥
येन जीवितसर्वस्वं मम विश्वजनस्य च ।
स्थापितो ललिताङ्गोऽसौ पोषितश्चात्मसन्निधौ ॥ ४६७ ॥
किञ्च भोः पुरुषाः ! वाच्यः स्वस्वामी वचसा मम ।
स्नेहसारं यथा शीघ्रं कुमारः प्रेष्यतामिह ॥ ४६८ ॥
कलशो ह्यस्मद्वंशस्य त्वदीयसुकृतस्य च ।
चटतादिति संभाष्य सन्मान्य च महादरात् ॥४६९॥
स्वप्रधाननरैः सार्द्धं विशिष्टप्राभृतान्वितैः ।
विससर्ज पुरे गत्वा सर्वं राज्ञो न्यवेदयत् ॥ ४७० ॥
तत् श्रुत्वा जितशत्रुः स्वाऽज्ञानदोषाऽर्दितो हृदि ।
अचिन्तयदिदं मे धिग् महामोहविजृम्भितम् ॥ ४७१ ॥
इत्थं दुष्कीर्त्ति-पापाभ्यां जिघांसति भवद्वयम् ।
यस्तमेवाऽऽन्तरं शत्रुं मोहराजं विनिर्जये ॥४७२॥
इति निश्चित्य दीनाऽऽस्यामङ्कमारोप्य पुत्रिकाम् ।
गलदश्रुजलार्द्राक्षो जगादेति सगद्गदम् ॥ ४७३ ॥
वत्से ! यद् जीवितव्यादऽप्यधिकायां मया त्वयि ।
अचिन्ति गुरुवैधव्यदुःखमित्यसमञ्जसम् ॥४७४॥
विधित्सितं समस्तं तत् क्षन्तव्यं दुष्पितुर्मम ।
त्वत्तेजसा मुखोद्योतो बभूव कुलदीपिके ! ॥४७५॥
चिरं जीव समं भर्त्रा परिपूर्णमनोरथा ।
साऽप्येवं वत्सलं तातं ननाम प्रह्वमानसा ॥४७६॥
अथाऽऽहूय कुमारेन्द्रं प्रणामनतविग्रहम् ।
ऊर्ध्वीकृत्य नृपो दोर्भ्यां सलज्जवदनोऽवदत् ॥४७७॥
कुमार ! मयका पुत्रनिर्विशेषेऽपि यत् त्वयि ।
दुर्जनाऽहिवचस्तीव्रविषविह्वलचेतसा ॥४७८॥
विरुद्धमिदमारेभे तत्प्रतीकारकर्मणि ।
तवैव सुकृतस्फूर्त्तिर्जागर्त्ति परमौषधी ॥४७९॥

यत् तेन पापिनाऽलीकं त्वच्चित्ते मनसश्च मे ।
मालिन्यमाहितं तत्तु तस्यैव फलितं क्षणात् ॥ ४८० ॥
अग्राह्यनामधेयस्य तस्य भृत्याऽधमस्य तत् ।
विचिन्त्य चरितं भूयः कुसंगं वत्स ! मा कृथाः ॥४८१॥
किं चाऽधमऽस्य राज्यस्य गुणैरेवाऽर्जितं त्वया ।
शेषऽमर्धं च ते दत्तं प्रायश्चित्ते मया निजे ॥४८२॥
इति संबोध्य तं गाढमनिच्छन्तऽमपि स्वयम् ।
निजसिंहासनाऽऽसीनं विधाय विधिपूर्वकम् ॥४८३॥
मन्त्रपूतजलाऽऽपूर्णस्वर्णकुम्भाऽभिषेकतः ।
नृपं कृत्वा ययौ राजा तपस्यायै तपोवनम् ॥४८४॥
ललिताङ्गोऽपि तद् राज्यं प्राप्य कुर्वन् व्यवस्थया ।
जातः पितेव लोकानां सुखाय सुकृताय च ॥४८५॥
अथ तत्र समादिश्य मन्त्रिणं सुपरीक्षितम् ।
प्रधानपरिवारेण समं पुष्पावतीयुतः ॥४८६॥
पौरानापृच्छ्य सोत्कण्ठस्त्वरिताऽऽकारणात् पितुः ।
स प्रयाणैरविच्छिन्नैः श्रीवासनगरं ययौ ॥ ४८७ ॥
अद्राक्षीद् निर्विलम्बं च सौधमध्यस्थितं नृपम् ।
पुत्रविश्लेषसप्तार्चिस्तापग्लपितविग्रहम् ॥४८८॥
गलन्नेत्रजलैस्तापं पितुर्विध्यापयन्निव ।
प्रणम्य चरणौ मूर्ध्ना ललाटघटिताञ्जलिः ॥४८९
सस्नेहमधुरं सान्द्रं सानन्दं विनयान्वितम् ।
भक्तिव्यक्तीकृतात्मीयकुलीनत्वो व्यजिज्ञपत् ॥४९०॥
( युग्मम् )
कथ्यन्ते तात ! शास्त्रेषु नन्दनाः कुलदीपकाः ।
कुपुत्रेण तु पूज्यानां कृतं दुःखतमो[1] मया ॥४९१॥
मुक्तामणिनिभा वंशे पुत्राः स्युरितरे पितः ! ।

१ दुःखान्धकार ।

उत्किरंस्तु प्रविश्याऽन्तरऽहं घुण इवाऽभवम् ॥४९२॥
पितृपादान् सुदुर्लम्भान् निरन्तरमऽपश्यता ।
हा ! मया मन्दभाग्येन स्वार्थ एव विनाशितः ॥४९३॥
किं वाऽथ बहुना तात ! बालकालादवर्त्तिषम् ।
अद्य यावदऽहं पित्रोः क्लेशकार्येव केवलम् ॥४९४॥
तत् सर्वं क्षमयित्वैतत् ढौकनीये कृतं मया ।
कस्याऽप्यादिश्यतां चम्पाराज्यं पूज्यैः प्रसद्य मे ॥४९५॥
इतः कुलवधूश्चैषा पूज्यपादान् नमस्यति ।
यथोचितसमाचारेष्वऽनुज्ञां चाऽभिवाञ्छति ॥४९६॥
वदन्तमिति तं दोर्भ्यामादाय पृथुवक्षसा ।
दृढमालिङ्ग्य भूपालो मुखेनाऽऽघ्राय मूर्धनि ॥४९७॥
चिरेण निःसरद्दुःखप्रविशद्धर्षपूरतः ।
बभूव हृदि सांकर्थ्यात् पर्याकुल इव क्षणम् ॥४९८॥
( युग्मम् )
अथ पुत्रमुखं वीक्ष्य पूर्णचन्द्रसमं नृपः ।
उल्लसन्मानसाऽम्भोधिर्वचोवीचीर्वितेनिवान् ॥४९९॥
त्वं मैवं वत्स ! भाषिष्ठाः सुवर्णे श्यामता यदि ।
जायते तत् तवाऽपि स्याद् गुरुष्वबहुमानिता ॥ ५०० ॥
स्वपुण्यस्येव मूर्त्तस्य द्वारं वारयता तव ।
तदा मयैव कल्पद्रौ कुकूलक्षेपणं कृतम् ॥ ५०१ ॥
यदि मे वृद्धभावेन परावृत्तिं गता मतिः ।
ततः पित्रेकभक्तेन किमऽहं मुमुचे त्वया ? ॥५०२॥
त्वद्वियोगार्त्तिलूनस्य याऽवस्था मनसो मम ।
बभूव वत्स ! सा भूयः शत्रूणामपि मा स्म भूत् ॥ ५०३॥
महते राज्यलोभाय तव देशान्तरोऽप्यऽभूत् ।
त्वदेकजीवितव्यस्य दुर्दशेयं पुनर्मम ॥५०४॥

---
१ तुषाग्निक्षेपः ।

किं च कृत्रिमरोषेण तवैवाऽऽयतिमुत्तमाम् ।
विधित्सता मया तादृक् कृतं लोके यदुच्यते ॥ ५०५ ॥
पितृभिस्ताडितः पुत्रः शिष्यस्तु गुरुशिक्षितः ।
घनाहतं सुवर्णं च जायते जनमण्डनम् ॥ ५०६ ॥
अथवाऽलमुपालम्भैः शुभायाऽखिलमप्यऽभूत् ।
ईदृक् स्वपुत्रमाहात्म्यं पश्यामि कथमन्यथा ? ॥५०७॥
ललिताङ्ग ! तदऽद्यापि मम भाग्यानि जाग्रति ।
अनभ्रवृष्टिवद् दृष्टो यदद्य सहसा भवान् ॥ ५०८ ॥
इदं राज्यमिदं गेहमयं परिजनो जनः ।
सर्वमङ्गीकुरुष्वेदं योग्यस्त्वत्तो हि नाऽपरः ॥ ५०९ ॥
अस्याश्च वध्वास्तत् तादृक् कुलमेवोपदेशकम् ।
यत् कर्त्तव्यविधौ पाणिगृहीत्यास्ते विशेषतः ॥ ५१० ॥
विधिसृष्टाऽनुसारेण सततं पालय प्रजाः ।
वत्स ! त्वं हरिवल्लक्ष्म्या राजपुत्र्या युतो भुवि ॥५११॥
अहं तु पूर्वजाऽऽचीर्णं व्रतं सुगुरुसंनिधौ ।
त्वय्याऽऽरोपितभारत्वाद् निश्चिन्तमतिराश्रये ॥ ५१२ ॥
ललिताङ्गो वचः श्रुत्वा पितुर्विरहसूचकम् ।
सदैन्यमवदद् देव ! किं मया दुष्कृतं कृतम् ? ॥ ५१३ ॥
यदेतावन्ति मे तात ! दिनानि विफलान्यगुः ।
दूरेण गुरुपादानां तदद्य यदि कर्मणा ॥ ५१४ ॥
दत्तेऽन्तरे मया तातो हृष्टस्तत् तेन किं पुनः ? ।
वर्षारविरिवाऽभ्रेण ममाऽदृष्टीकरिष्यति ॥ ५१५ ॥
पुनर्नैव समादेश्यमऽश्रोतव्यमिदं विभो ! ।
कस्याऽपि दिवसो मा गात् सतः पूज्यानपश्यतः ॥५१६॥
तात ! किं तेन राज्येन जीवितेन दिनोदये ।
प्रसन्नं नेष्यते यत्र पितृपादाम्बुजद्वयम् ? ॥ ५१७ ॥

१ वध्वा ।

पितुः पुरो निषण्णस्य या शोभा जायते भुवि ।
उच्चैः सिंहासनस्थस्य तच्छतांशेऽपि सा कुतः? ॥५१८॥
य. कोऽपि परमाऽऽस्वादो गुरुभुक्तोज्झितेऽभवत् ।
दिव्यपाकेऽपि मिष्टान्नरसवत्या न तं लभे ॥ ५१९ ॥
या प्रीतिर्लभमानस्य गुरोरादेशमुज्ज्वलम् ।
भुवनत्रयलाभेऽपि न सा भवति निश्चितम् ॥ ५२० ॥
देवाऽऽदेशय यत् कृत्यं सेवाहेवाकिनो मम ।
चिरान्नेत्रपथाऽऽयातः संपूरय मनोरथान् ॥ ५२१ ॥
इति पुत्रवचोनीरासिक्तमोहतरुः क्षणम् ।
भूत्वा किंकृत्यतामूढो भूयोऽवष्टभ्य धीरताम् ॥ ५२२ ॥
जगाद नृपतिर्मैवं प्रतिबन्धं विधेहि मे ।
क्रमाऽऽयातं द्वयं वत्स ! तव राज्यं व्रतं मम ॥ ५२३ ॥
इति धृत्वा करे बाढं विलक्षवदनं सुतम् ।
तत्कालमुच्छलत्पञ्चशब्दनिर्घोषपूर्वकम् ॥ ५२४ ॥
राज्ये निवेशयामास शिक्षयामास चेदृशम् ।
वर्त्तितव्यं तथा येन न स्मरन्ति प्रजा मम ॥ ५२५ ॥
मन्त्रिसामन्तमुख्यांश्चाऽऽदिदेश यदऽतः परम् ।
एतदाज्ञापरैर्भाव्यं युष्माभिरिह सर्वथा ॥ ॥ ५२६ ॥
क्रोधोद्बोधेन लोभेन चिरं परिचयेन च ।
श्रीभवोन्मादवैकल्याद् दर्पोद्धुरतया मया ॥ ५२७ ॥
यत् किंचिदपचक्रे तत् क्षन्तव्यमिति भूपतिः ।
लोकानापृच्छय जग्राह सद्गुरोरन्तिके व्रतम् ॥५२८॥
( युग्मम् )
स परित्यक्तराज्यश्रीकलत्रादिपरिग्रहः ।
प्रोज्ज्वलः शुशुभेऽत्यन्तं मुक्ततोय इवाऽम्बुदः ॥५२९॥
महाव्रतधरः शान्तो दान्तः समितिगुप्तिभिः ।
सदाविशुद्धसद्धर्मश्रद्धानध्यानतत्परः ॥५३०॥

अल्पकालेन चाऽऽभ्यस्तसदागमपरिश्रमः ।
गुरुणा गुणगौरव्यो न्यस्तो गुरुपदक्रमे ॥५३१॥
जनस्याऽप्यऽन्तरङ्गाऽरिमथनाय कृतोद्यमः ।
महामुनिपरीवारो विजहार धरातले ॥५३२॥
ललिताङ्गो नृपः प्राप्य प्राज्यसाम्राज्यसम्पदम् ।
विश्वस्याऽपि मुदेऽत्यन्तं पूर्णं सर इवाऽभवत् ॥५३३॥
शुद्धपक्षद्वयेनेव न्यायराज्यद्वयेन सः ।
विराजन् राजहंसोऽथ कस्य नोवास मानसे? ॥५३४॥
उत्खन्याऽऽरोपयन् भूयः कुर्वन् कण्टकिनो बहिः ।
अत्युच्चान् नमयन्नुच्चैः कुर्वन्नीचाऽनपि क्रमात् ॥५३५॥
मूलानि पालयन् नीत्या चिन्वानः पुष्पितान् शनैः ।
स लोकाऽऽरामवृद्ध्यर्थं मालाकार इवाऽभवत् ॥ ५३६ ॥
तथाहि—
जननीव परित्राणात् पितेव धनदानतः ।
गुरुवद् धर्मकारित्वादाचार्य इव शिक्षणात् ॥५३७॥
मित्रवच्च हिताऽऽख्यानाद् न्यायधर्मपरायणः ।
राजा किमिव लोकानां न करोति समीहितम्? ॥५३८॥
( युग्मम् )

तस्यैवं शासतो राज्यमन्येद्युर्मुदिताननः ।
उद्यानपालकोऽभ्येत्य विहिताञ्जलिरब्रवीत् ॥५३९॥
दिष्ट्या वर्ध्याप्यसे देव! जयेन विजयेन च ।
आययौ बहिरुद्याने राजर्षिर्नरवाहनः ॥ ५४० ॥
तत् श्रुत्वा भाविभद्राशाजातहर्षोल्लसन्मनाः ।
शकुनायाऽर्थवत् तस्मै कोटिसङ्ख्यं धनं ददौ ॥५४१॥
सत्वरं च गुरोः पादवन्दनाय महादरः ।
सान्तःपुरपरीवारो ललिताङ्गनृपो ययौ ॥५४२॥
सोऽपश्यत् तत्र तं नेत्राऽऽनन्दनं मुनिमण्डनम् ।

विधिना शुद्धभूभागे कृतासनपरिग्रहम् ॥५४३॥
तपःप्रभावसम्पन्नज्ञानाऽतिशयभासुरम् ।
साधुहंसगणै रम्यैः संसेवितपदाम्बुजम् ॥५४४॥
अन्तःशमसुधोल्लासिवदनेन्दुप्रभाभरैः ।
प्रीणयन्तमऽसङ्ख्याताऽऽयातवन्दारुनागरान् ॥५४५॥
( त्रिभिः विशेषकम् )
त्रिश्च प्रदक्षिणीकृत्य भूतलन्यस्तमस्तकः ।
प्रणम्य पुरतो भक्त्या प्राञ्जलिः समुपाविशत् ॥५४६॥
आशिषं गुरुऽप्यऽस्मै दत्त्वा कल्याणकारिणीम् ।
रहस्यं जिनधर्मस्य सप्रसादमुदाहरत् ॥ ५४७ ॥
मरुस्थलपथे यद्वद् दुष्प्रापः कल्पपादपः ।
तथा भवेऽत्र जन्तूनां मानुष्यमतिदुर्लभम् ॥ ५४८ ॥
आर्यदेशश्च तत्राऽपि सुकुलं निर्मला मतिः ।
विशिष्टगुरुसम्पर्को भूरिभाग्यैरऽवाप्यते ॥५४९॥
आसादिते पुनस्तस्मिन्नऽक्षयं सुखमिच्छुभिः ।
धारणीयं हृदि ज्ञात्वा सम्यक् सम्यक्त्वमऽच्युतम् ॥५५०॥
यथा विना प्रतिष्ठानकाष्ठं पोतो न सिध्यति ।
प्रासादो निष्ठुरं पीठबन्धं च न विना भवेत् ॥५५१॥
गाढमूलं विना प्रौढिं नाऽऽसादयति पादपः ।
सम्यक्त्वं च विना तद्वद् धर्मो नैवाऽवतिष्ठते ॥५५२॥
तद् देवगुरुधर्माणां तत्त्वनिश्चयलक्षणम् ।
भवे भवति भव्यानामऽभव्यानां कदापि न ॥५५३॥
विश्वं विश्वमऽपि व्याप्तं रागद्वेषादिभिर्भृशम् ।
निःशेषा यस्य ते क्षीणा वीतरागः स देवता ॥५५४॥
शान्तचित्तवचस्काये सर्वसत्त्वोपकारिणि ।
वीतरागे विसंवादः सहृदां हृदये कुतः ? ॥५५५॥
दुःखगर्भं सुखं रागे निरागत्वे निरन्तरम् ।

तत् पुनः प्राप्यते देववीतरागप्रसादतः ॥५५६॥
यादृक् संसेव्यते स्वामी लेश्या भवति तादृशी ।
वीतरागे ह्यऽतो नाथे नीरागं जायते मनः ॥५५७॥
स्वपरोत्तारणे काष्ठयानतुल्यो भवाम्बुधौ ।
संविग्नः स्याद् गुरुर्धीरः सदा सदुपदेशकः ॥५५८॥
अन्तःपरिग्रहो रागो बहिस्त्वऽनुचितोपधिः ।
स द्विधाऽप्युज्झितो येन स महात्मा गुरुर्गुरुः ॥५५९॥
लोकेऽपि वन्द्यते त्यक्तबहिरन्तःपरिग्रहः ।
अत्र निस्तुषरागाणामक्षतानां निदर्शनम् ॥५६०॥
अश्रीदोऽपि गुरुः सेव्यश्चित्तक्लेशोपशान्तये ।
अफलोऽपि तरुस्तापं हरते मार्गयायिनाम् ॥५६१॥
धर्मतत्त्वं त्विदं ज्ञेयं भुवनत्रयसम्मतम् ।
यद् दया सर्वभूतेषु त्रसेषु स्थावरेषु च ॥४६२॥
मूलमन्त्रं विना सिद्धिर्मालामन्त्रेण नो यथा ।
भूयोभिरपि नो कृच्छ्रैस्तथा धर्मो दयां विना ॥५६३॥
तद् ध्येयं मनसा तच्च वाच्यं वाचा मनीषिभिः ।
चेष्टितव्यं तदङ्गेन येन कोऽपि न पीड्यते ॥५६४॥
यथाऽऽत्मनः प्रियं वाञ्छेत् ततः कुर्वीत तत् परे ।
बुभुक्षुः शालिधान्यं यः क्षेत्रेऽपि वपते स तत् ॥५६५॥
अहिंसैव परो धर्मः शेषस्तु व्रतविस्तरः ।
अस्यैव परिरक्षायै, पादपस्य यथा वृति[1]ः ॥५६६॥
इति तत्त्वत्रयीरूपं शमप्रमुखलक्षणैः ।
लक्षितं पञ्चभिर्धर्मस्थैर्याद्यैर्भूषितं पुनः ॥५६७॥
सम्यक्त्वरत्नं यत्नेन धार्यं चित्तकरण्डके ।
रक्ष्यं शङ्कादिचौरेभ्यः सहगामि भवाऽन्तरे ॥५६८॥
इतरोऽपीह नो मन्त्रो नृणां सिद्ध्यति शङ्कया ।

१ वाटी, इत्यर्थः ।

सम्यक्त्वाऽऽख्यमहामन्त्रः किमु शाश्वतसौख्यदः? ॥५६९॥
आसीत् पुरे वसन्ताख्ये गन्धारः श्रावको वरः ।
देवपूजा दया दानं दाक्ष्यदाक्षिण्यसंयुतः ॥५७०॥
स याति प्रायशो दूरमुद्यानवनमध्यगे ।
जिनेन्द्रभवने देवपूजार्थं सदुपस्करः ॥५७१॥
चैत्येऽसौ यावदन्येद्युः प्रविश्य विधिना जिनम् ।
स्नपयित्वा समभ्यर्च्य सुगन्धकुसुमादिभिः ॥५७२॥
रोमाञ्चितवपुः स्तौति स्तवैर्भावमनोहरैः ।
विद्याधरो महाजैनः तत्रैकस्तावदागतः ॥ ५७३ ॥
दृष्ट्वा श्रुत्वा च तत्सर्वमखर्वाऽऽनन्दमेदुरः ।
साञ्जसं निकटीभूय गन्धारमिदमब्रवीत् ॥ ५७४ ॥
अहो ! धार्मिक ! वन्दे त्वाऽमद्य मे नेत्रकर्णयोः ।
चिरात् पारणकं जज्ञे तेन किंचिद् ददामि ते ॥५७५॥
अदृश्यीकरणाऽऽकृष्टी रूपान्तरकृतिस्तथा ।
परकायप्रवेशाद्या विद्याः सन्तीह भूरिशः ॥ ५७६ ॥
आकाशगामिनी विद्या दुर्लभा किं तु भूतले ।
गृहाण तदिमां साधो ! योग्योऽसि कुरु मे प्रियम् ॥५७७॥
यतः–
यथा दोषोऽत्र विद्यायाः कुपात्रन्यासतो भवेत् ।
तथा स्थाननियोगेन महानाऽऽसाद्यते गुणः ॥ ५७८ ॥
गन्धारः प्राह भो भद्र ! किं ममाऽपरविद्यया ।
एकैव धर्मविद्याऽस्तु या दुष्प्रापा सुरैरपि ? ॥ ५७९ ॥
किं च–
सर्वमौपाधिकं सौख्यं विपाके दुःखदायकम् ।
स्वभावाद् जायमानं तु धर्मिणां स्यात् चटत्कमम् ॥ ५८० ॥
खेचरोऽप्याह जानामि संतोषं तव धार्मिक ! ।
समाधानाय मे किन्तु करणीयमिदं त्वया ॥ ५८१ ॥

जडैकप्रकृतिर्न स्याद् महात्मा तेन तद्वचः ।
श्रेष्ठिनाऽङ्गीकृतं सोऽपि मन्त्रं विधियुतं ददौ ॥ ५८२ ॥
स्वस्वस्थानं जग्मतुस्तौ कृतकृत्यावुभावऽपि ।
परोपकारी गन्धारो गते काले कियत्यपि ॥ ५८३ ॥
वृथैषोऽरण्यजातीव मा गादिति विचिन्त्य तम् ।
मन्त्रमात्मीयमित्राय स्कन्दिलाय प्रदत्तवान् ॥ ५८४ ॥
विद्यां साधयितुं सोऽपि सोपस्करकरो निशि ।
ययौ कृष्णचतुर्दश्यां श्मशानाऽऽसन्नकानने ॥ ५८५ ॥
कृत्वा बलिविधानाद्यं विशिष्टैकतरोरधः ।
प्रज्वलत्खादिराऽङ्गारपूरितं कुण्डमातनोत् ॥ ५८६ ॥
बद्धं तस्यैव शाखायां द्रुतमारुह्य शिक्यकम् ।
अष्टोत्तरशतं वारान् जपित्वा मन्त्रमक्षतम् ॥ ५८७ ॥
यावत् क्षुरिकया रज्जुपादमेकं छिनत्त्यऽसौ ।
वीक्ष्याऽङ्गारानधस्तावदिति शङ्का मनस्यऽभूत् ॥ ५८८ ॥
छिन्ने पादचतुष्केऽपि शिक्यकस्य क्रमेण मे ।
अत्राऽहो ! सिद्धिसन्देहो वह्निपातस्तु निश्चितः ॥५८९॥
हार्यन्ते किं मुधा प्राणा जीवतां भविता शुभम् ।
इति कृत्वा समुत्तीर्य ततो भूमावुपागतः ॥ ५९० ॥
भाविन्येवंविधा भूयः सामग्री दुर्लभा खलु ।
किं करोमीति कर्तव्यसंकुलो यावदस्ति सः ॥५९१॥
आदाय नृपतेः सौधादलङ्कारकरण्डकम् ।
तावत् तत्र भयव्यग्रश्चौर एकः समाययौ ॥ ५९२ ॥
पदाऽनुसारतः पृष्ठलग्नास्तं राजपुरुषाः ।
ज्ञात्वा तत्रस्थमा रात्रिं वेष्टयित्वा स्थिता वनम् ॥५९३॥
उद्द्योतदर्शनाच्चौरोऽप्यागत्य स्कन्दिलाऽन्तिके ।
किमेतदिति पप्रच्छ सोऽपि सर्वं शशंसिवान् ? ॥ ५९४ ॥

---

१ अरण्यस्थमालतीवत् ।

चिन्तितं दस्युनेदं यद् गन्धारो जिनधार्मिकः ।
तदाख्यातमतोऽलीकं युगान्तेऽपि न संभवेत् ॥ ५९५ ॥
उक्तं चाऽऽख्याहि मे मन्त्रं त्वं गृहाण करण्डकम् ।
साधयित्वा यथा सद्यः प्रत्ययं जनयामि ते ॥ ५९६ ॥
स्कन्दिलोऽपि तदा तस्मै कौतुकेन भयेन च ।
संपूरितमना मन्त्रं यथातथमऽचीकथत् ॥ ५९७ ॥
चौरः शिक्यकमारुह्य मन्त्रमेकमनाः स्मरन् ।
चिच्छेद युगपत् पादांश्चतुरोऽप्यस्य साहसात् ॥५९८॥
विद्याऽधिष्ठायिनी तुष्टा विमानं देव्यऽढौकयत् ।
तस्करोऽपि तदाऽऽरुह्य ययौ गगनमण्डलम् ॥५९९॥
अथ प्रभातसमये विष्वग् व्याहारका नराः ।
अरे ! गृह्णीत बध्नीत लब्धश्चौरः सवस्तुकः ॥६००॥
जल्पन्त इति ते यावत् स्कन्दिलं प्रति ढौकिताः ।
चौरविद्याधरस्तावद् विकुर्व्य महतीं शिलाम् ॥६०१॥
मद्गुरोः स्कन्दिलस्याऽस्य विरुद्धं यः करिष्यति ।
तस्योपरि शिलां मोक्ष्ये गगनस्थोऽब्रवीदिति ॥६०२॥
( विशेषकम् )
भीताः सर्वेऽथ तद् गत्वा शशंसुर्भूभुजे भटाः ।
नृपोऽपि सम्भ्रमात् तत्राऽऽगत्य तं विनतोऽवदत् ॥६०३॥
कथ्यतां खेचराधीश ! कथं गुरुरऽयं तव ? ।
वृत्तान्ते कथिते तेन गताः सर्वेऽपि विस्मयम् ॥६०४॥
अन्वय व्यतिरेकाभ्यां शङ्कोदाहरणं बुधैः ।
इत्थं विभाव्य सम्यक्त्वं धार्यं निःशङ्कमानसैः ॥६०५॥
चारित्रयाने भग्नेऽपि गुणमाणिक्यपूरिते ।
तरत्येव भवाऽम्भोधिं सम्यक्त्वफलकग्रहात् ॥६०६॥
तमोग्रस्तस्य सामस्त्याद् जीवेन्दोर्यदि जायते ।
सचैतन्यकला काऽपि व्यक्ता मुक्तिस्ततो ध्रुवम् ॥६०७॥

विहरन्त्यस्मिन् विहार पुक्लीबलिङ्ग ,अमरस्तु–"चैत्यमायतन तुल्ये" इति, "बौद्धाना विहारोऽस्त्री" इति च चैत्यविहारौ भिन्नार्थावाह ॥ २ ॥ ६० ॥

गर्भागारेऽपवरको वासौक शयनास्पदम् ।

अगारस्य गर्भो गर्भागारम्, राजदन्तादित्वात् पूर्वनिपात ॥१॥ तत्र अपवृणोति आच्छादयति अपवरक, "दृकृनृ" ॥ (उणा- २७) ॥ इत्यक ॥ २ ॥ वासाय वासमध्ये वा ओको गृह वासौक ॥ ३ ॥ शयनस्य शय्याया आस्पद शयनास्पदम् ॥ ४ ॥

भाण्डागार तु कोश. स्यात्

भाण्डस्याऽगार भाण्डागारम् ॥ १ ॥ कुश्यति भाण्डमत्र कोश, पुक्लीबलिङ्ग ॥ २ ॥

चन्द्रशाला शिरोगृहम् ॥ ६१ ॥

चन्द्रेणाऽदूरवर्तिना शालते चन्द्रशाला ॥ १ ॥ शिरसि सौधस्य गृह शिरोगृहम् ॥ २ ॥ ६१ ॥

कुप्यशाला तु सन्धानी

कुप्य ताम्रादि तस्य शाला कुप्यशाला ॥ १ ॥ सन्धीयतेऽस्या सन्धानी ॥२॥

कायमान तृणौकसि ।

कायो मानमस्य कायमानम् ॥ १ ॥ तृण काष्ठादेरुपलक्षणम्, तेन तृणकाष्ठादिभि गृहस्योपरि रचितमोको लभ्यते ॥ २ ॥

होत्रीय तु हविर्गेहं

जुह्वति अस्या होत्रा, "हुयामा-" ॥ ( उणा–४५१ ) ॥ इति त्र, होत्रैव होत्रीयम्, "होत्राया ईय" ॥ ७।२।१६३ ॥ इति स्वार्थे इय ॥ १ ॥ हविषो होतव्यस्य गेह हविर्गेहम् ॥ २ ॥

प्राग्वश प्रागूहविर्गृहात् ॥ ६२ ॥

वश कुल स्थूणा वा, प्राग् वशोऽत्र प्राग्वश, पत्नीशालाख्योऽग्निशालाया आद्यो भाग ॥ १ ॥ ६२ ॥

आथर्वण शान्तिगृहम्

आथर्वणिकाना धर्म आम्नाय सङ्घो वा आथर्वण, "आथर्वणिकादण् इक लुक् च" ॥ ६।३।१६७ ॥ इत्यणि साधु, सोऽत्राऽस्ति आथर्वणम् अभ्रादित्वाद् अ ॥ १ ॥ शान्त्यै गृह शान्तिगृह शान्तीगृहकमपि । यद् वाचस्पति –

"आथर्वणं शान्तिगृह शान्तीगृहकमप्यद" इति ॥ २ ॥

आस्थानं गृहमिन्द्रकम् ।

आस्थानाय गृहमास्थानगृहम ॥१॥ इन्द्र कायतीव सश्रीकत्वाद् इन्द्रकम् ॥२॥

तैलिशाला यन्त्रगृहं

तैलिन शाला तैलिशाला ॥ १ ॥ तिलनिष्पीडनयन्त्रस्य गृहम् ॥ २ ॥

अरिष्टं सूतिकागृहम् ॥ ६३ ॥

न रिष्यते हिंस्रै कृतरक्षत्वाद् अरिष्टम् ॥ १ ॥ सूतिकायै गृह सूतिकागृहम् ॥ २ ॥ ६३ ॥

सूदशाला रसवती पाकस्थानं महानसम् ।

सूदाना शाला सूदशाला ॥ १ ॥ रसा सन्त्यस्या रसवती, रस आस्वादो ऽस्त्यस्यामिति वा ॥२॥ पाकाय स्थानं पाकस्थानम् ॥३॥ अनसा उपकरणसम्भारवत्त्वं उच्यते ततो महच्च तदनश्चेति महानसम्, "सरोऽनोऽश्माऽयसो जातिनाम्नो" ॥७।३।११५॥ इत्यट् समासान्त ॥ ४ ॥

हस्तिशाला तु चतुरं

हस्तिना शाला हस्तिशाला ॥ १ ॥ चत्यते चतुरम् ॥ २ ॥

वाजिशाला तु मन्दुरा ॥ ६४ ॥

वाजिना शाला वाजिशाला ॥ १ ॥ मन्थने स्तूयते मन्दुरा स्त्रीक्लीबलिङ्ग, "वाश्यसि-' ॥ (उणा-४२३) ॥ इत्युर ॥ २ ॥ ६४ ॥

सन्दानिनी तु गोशाला

सन्दानं गोबन्धनरज्जुरस्त्यस्या सन्दानिनी ॥१॥ गवा शाला गोशाला ॥२॥

चित्रशाला तु जालिनी ।

चित्राऽलङ्कृता शाला चित्रशाला ॥ १ ॥ जालानि सन्त्यस्या जालिनी ॥ २ ॥

कुम्भशाला पाकपुटी

कुम्भाना घटनाय शाला कुम्भशाला ॥ १ ॥ पाकेन पुटति संश्लिष्यति पाकपुटी ॥ २ ॥

तन्तुशाला तु गर्त्तिका ॥ ६५ ॥

तन्तुवानाय शाला तन्तुशाला ॥ १ ॥ कुविन्दस्थितये गर्तोऽस्त्यस्या गर्तिका, "अतोऽनेकस्वरात्" ॥ ७।२।६ ॥ इतीक ॥ २ ॥ ६५ ॥

नापितशाला वपनी शिल्पा खरकुटी च सा ।

नापितस्य शाला नापितशाला ॥१॥ वपन्त्यस्यां वपनी ॥२॥ शिल्प विज्ञान-मस्त्यस्या शिल्पा ॥ ३ ॥ खरस्य कुटीव खरकुटी ॥ ४ ॥

आवेशनं शिल्पिशाला

आविशन्त्यस्मिन् आवेशनं गृहादन्यत् कारुणा कर्मस्थानम् ॥१॥ शिल्पिनां शाला शिल्पिशाला ॥ २ ॥

सत्रशाला प्रतिश्रय ॥ ६६ ॥

सत्रं सदादानं तस्य शाला सत्रशाला ॥१॥ प्रतिश्रीयते प्रतिश्रयः ॥२॥६६॥

आश्रमस्तु मुनिस्थानम्

आश्राम्यन्ति तपस्यन्त्यस्मिन् आश्रमः पुंक्लीबलिङ्गः ॥ १ ॥

उपघ्नस्त्वन्तिकाश्रयः ।

उपहन्यते समीप इति ज्ञायते उपघ्नः, "निघोद्घ-" ॥ ५।३।३६ ॥ इत्यनेन निपात्यते ॥ १ ॥ अन्तिक आसन्न आश्रयोऽन्तिकाश्रयः ॥ २ ॥

प्रपा पानीयशाला स्यात्

प्रपिबन्त्यस्यां प्रपा स्थादित्वात् क ॥ १ ॥ २ ॥

गञ्जा तु मदिरागृहम् ॥ ६७ ॥

गञ्जन्ति नदन्त्यस्यां क्षीबा गञ्जा ॥ १ ॥ २ ॥ ६७ ॥

पक्कणः शबरावासः

पच्यतेऽस्मिन् पक्कणः पुंक्लीबलिङ्गः, "चिक्कण-" ॥ (उणा–१९०) ॥ इत्यणे निपात्यते ॥ १ ॥ २ ॥

घोषस्त्वाभीरपल्लिका ।

घोषन्ति गावोऽत्रेति घोषः ॥ १ ॥ आभीराणां गोपानां पल्लिर्गृहाली आभीरपल्लिका "कुटीग्रामकयोः पल्लिः" इति तु शाश्वतः ॥ २ ॥

पण्यशाला निषद्याऽट्टो हट्टो विपणिरापणः ॥ ६८ ॥

पण्यस्य शाला पण्यशाला ॥ १ ॥ निषीदन्त्यस्यां निषद्या, "समज-" ॥ ५।३।९९ ॥ इति क्यप् ॥ २ ॥ अट्टन्तेऽस्मिन् अट्टः पुंक्लीबलिङ्गः ॥ ३ ॥ हटति दीप्यतेऽत्र हट्टः, "घटाघाटा-" ॥ (उणा– १४१) ॥ इति टे निपात्यते ॥ ४ ॥ विविधं पणायन्त्यस्यां विपणिः स्त्रीलिङ्गः ॥५॥ एत्य पणायन्त्यस्मिन् आपणः, "गोचर-सञ्चर-" ॥ ५।३।१३१ ॥ इति घः ॥ ६ ॥ ६८ ॥

वेश्याऽऽश्रय पुर वेश

वेश्यानामाश्रयो वेश्याश्रय' ॥ १ पुरति पुरम् ॥ २ ॥ विशन्त्यस्मिन् भुजङ्गा वेश ॥ ३ ॥

मण्डपस्तु जनाश्रय. ।

मण्ड्यते नानालोकैर्मण्डप पुक्लीबलिङ्ग, "विष्टप-" ॥ (उणा-३०७) ॥ इत्यादिशब्दाद् अपे निपात्यते ॥ १ ॥ जनानामाश्रयो जनाश्रय ॥ २ ॥

कुड्य भित्ति.

कोलनि सस्त्यायति कुड्यम्, "कुलेर्ड् च वा" ॥ (उणा-३६२) ॥ इति क्रिद् य, कुटया साम्विति वा पृषोदरादित्वाद् डत्वम्, क्लीबलिङ्गोऽयम्, वाचस्पतिस्तु- "कुड्यमस्त्रियाम्" इति पुस्यऽप्याह ॥ १ ॥ भिद्यते भित्ति ॥ २ ॥

तदेडूकमन्तर्निहितकीकसम् ॥ ६९ ॥

तत् कुड्य अन्तर्निहिताऽस्थि एडयति एडूकम्, "शम्बूकशाम्बूक" ॥ (उणा-६१) ॥ इत्यूके निपात्यते ॥ १ ॥ ६९ ॥

वेदी वितर्दि

विदन्त्यस्या वेदि, ङया वेदी दारुपरिष्कृता चतुरस्रा विश्रान्तभू ॥ १ ॥ वितर्यते वितर्दि, "पदिपठि" ॥ (उगा- ६०७) ॥ इति इ, स्त्रीलिङ्गावेतौ ॥२॥

अजिर प्राङ्गण चत्वराऽङ्गने ।

अजन्त्यस्मिन्नजिरम्, "स्थविर-" ॥ (उणा-४१७) ॥ इनीरे निपात्यते ॥१॥ प्राङ्गन्त्यत्र प्राङ्गणम्, "तृकृशृ" ॥ (उणा-१८७) ॥ इत्यण, अङ्गणमपि ॥२॥ चत्यते चत्वरम् ॥ ३ ॥ अङ्गन्त्यस्मिन्नङ्गनम् ॥ ४ ॥

वलज प्रतीहारो द्वार्द्वारे

वल्यतेऽस्मिन् वलजम्, "वलेर्वोऽन्तश्च वा" ॥ (उणा-१३३) ॥ इत्यज ॥१॥ प्रतिह्रियन्ते रुध्यन्तेऽनेन बाहुलकाद् घञि दीर्घत्वे च प्रतीहार ॥ २ ॥ व्रियते द्वारयति वा द्वा स्त्रीलिङ्ग, "वार्द्वारौ" ॥ (उणा-९४४) ॥ इति क्विपि निपात्यते ॥३॥ उभ्यते पूर्यते द्वारम्, "द्वारशृङ्गार-" ॥ (उणा-४११) ॥ इत्यारे निपात्यते, द्वारयतीति वा तत्र ॥ ४ ॥

अथ परिघोऽर्गला ॥ ७० ॥

परिहण्यतेऽनेन परिघ दारुमयो लौहो वा दण्ड, "परेर्घ" ॥ ५।३।४० ॥ इत्यल् ॥ १ ॥ इयर्ति अर्गला त्रिलिङ्ग, "ऋजनेर्गोऽतन्श्च" ॥ (उणा-४६७) ॥ इत्यल, अरेण कर्षणेन गलतीति वा ॥ २ ॥ ७० ॥

साऽल्पा त्वर्गलिका सूचिः

सा अर्गला अल्पा अर्गलिका ॥ १ ॥ सूचयति सूचिः स्त्रीलिङ्ग ॥ २ ॥

कुञ्चिकायां तु कूचिका ।

साधारण्यङ्कुटश्चासौ

कुञ्च्यतेऽनया कुञ्चिका, "नाम्नि पुंसि च" ॥ ५।३।१२१ ॥ इति णक तत्र ॥ १ ॥ कूचति कूचिका ॥२॥ साधारयन्ति अनया साधारणी ॥३॥ अङ्कयतेऽङ्कुट, "नर्कुटकुक्कुट" ॥ ( उणा–१५५ ) ॥ इत्युटे निपात्यते ॥ ४ ॥

द्वारयन्त्र तु तालकम् ॥ ७१ ॥

द्वारपिधानाय लोहमय यन्त्र द्वारयन्त्रम् ॥ १ ॥ ताड्यतेऽनेनेति ताडकम्, लत्वे तालकम् ॥ २ ॥ ७१ ॥

अस्योद्घाटनयन्त्रं तु ताल्यपि प्रतिताल्यपि ।

अस्य तालकस्य उद्घाटनाय यन्त्रमुद्घाटनयन्त्र ताड्यतेऽनया ताली ॥ १ ॥ प्रतिताड्यतेऽनया प्रतिताली ॥ २ ॥

तिर्यग्द्वारोर्ध्वदारूत्तरङ्ग स्याद्

द्वारस्य ऊर्ध्वे उपरि तिर्यग् निहित दारु उत्तरमूर्ध्वं गच्छत्युत्तरङ्गम्, "नाम्नो गम -" ॥ ५।१।१३१ ॥ इति खड ॥ १ ॥

अरर पुन ॥ ७२ ॥

कपाटोऽररि. कुवाटः

इयर्ति अररम्, "ऋच्छिचटि-" ॥ ( उणा–३९७ ) ॥ इत्यर ॥१॥७२॥ कम्पते कपाट त्रिलिङ्ग, "कपाटविराट-" ॥ (उणा–१४८) ॥ इत्याटे निपात्यते. क शिर पाटयति प्रविशतामिति वा जपादित्वाद् वत्वे कवाटोऽपि ॥२॥ इयर्ति अररि पुक्लीबलिङ्ग, "नदिवल्लि-" ॥ (उणा–६९८) ॥ इत्यरि ॥३॥ कुत्सित वध्यतेऽनेन कुवाट ॥ ४ ॥

पक्षद्वार तु पक्षकः ।

पक्षद्वार पार्श्वद्वारम् ॥ १ ॥ पक्षस्य तुल्य पक्षक, खटक्किकाऽपि ॥ २ ॥

प्रच्छन्नमन्तर्द्वार स्याद्

प्रकर्षेण छाद्यते स्म प्रच्छन्नम्, गृहस्य मध्यद्वारं एकमेतदिति । कात्यो यदाह—"प्रच्छन्नमन्तर्द्वार यत् पक्षद्वार तदुच्यते" ॥ १ ॥

बहिर्द्वार तु तोरणम् ॥ ७३ ॥

द्वाराग्रे स्तम्भोपरि निबद्ध बहिर्द्वारम् ॥ १ ॥ मङ्गलार्थं तारयन्त्यत्र तोरणं पुंक्लीबलिङ्ग ॥ २ ॥ ॥ ७३ ॥

तोरणोर्ध्वे तु मङ्गल्य दाम वन्दनमालिका ।

तोरणस्योपरि मङ्गलार्थं सहकारादि पल्लवनिर्मित दाम माला वन्दनाय माला वन्दनमालिका ॥ १ ॥

स्तम्भादेः स्यादधोदारौ शिला

स्तम्भादीनामधः आधारदारुणि शिलति शिला, "स्तम्भोर्ध्वे दार्वन्तरस्थापनार्थं यदासज्यते सा शिला" इति गौड ॥ १ ॥

नासोर्ध्वदारुणि ॥ ७४ ॥

नासेव नासा स्तम्भादीनामुपरिस्थितं दारु, द्वारशाखाया अपऊर्ध्वं दारुणी शिलानासेति तु माला, यदाह-नासा दारूपरि द्वारस्याऽधो दारुशिला स्त्रियाम्" इति ॥ १ ॥ ७४ ॥

गोपानसी तु वलभीच्छादने वक्रदारुणि ।

गोपेन गोपनेन अनिति गोपानसि, "गोपादेरनेरसि" ॥ (उणा-७०८) ॥ इत्यसि ङया गोपानसी वलभी, पटलाधारो वंशपञ्जर तदाच्छादने वक्रे दारुणि॥१॥

गृहावग्रहणी देहल्युम्बरोदुम्बरोम्बुराः ॥ ७५ ॥

गृहे अवगृह्येते द्वारशाखे अनया गृहावग्रहणी ॥ १ ॥ दिह्यते घृतादिना देहली, "मृदिकन्दि-" ॥ (उणा-४६५) ॥ इत्यल. ॥ २ ॥ उद्यते क्रियते उम्बर, उदुम्बर, "तीवरधीवर-" ॥ (उणा-४४४) ॥ इति वरटि निपात्यते ॥ ३ ॥ ४ ॥ "श्वशुर-" ॥ (उणा-४२६) ॥ इत्युरे निपातनाद् उम्बुरः ॥ ५ ॥ ॥ ७५ ॥

प्रघाणः प्रघणोऽलिन्दो बहिर्द्वारप्रकोष्ठके ।

प्रहण्यते प्रघाण प्रघण, "प्रघणप्रघाणौ गृहांशे" ॥ ५ । ३ । ३५ ॥ इत्यलि निपात्यते ॥ १ ॥ २ ॥ अलति भूषयति द्वारमलिन्द पुंक्लीबलिङ्गः, "कल्यलि-" ॥ ( उणा-२४६ ) ॥ इतीन्दक्, द्वारप्रकोष्ठकाद् बहिर्द्वाराग्रवर्तिचतुष्किकान्ते उपालिन्दकाख्यः ॥ ३ ॥

कपोतपाली विटङ्कः

कपोतान् पक्षिणः पालयति कपोतपाली ॥ १ ॥ विशिष्टं टङ्क्यते विटङ्कः पुंक्लीबलिङ्ग, पक्षिविश्रामार्थं बहिर्निर्गत दारु वक्रदार्वाधार, पक्षिपङ्क्तिर्हि तत्रोत्कीर्यते ॥ २ ॥

पटलच्छदिषी समे ॥ ७६ ॥

पटति स्थगयति पटल त्रिलिङ्ग ,"मृदिकन्दि-" ॥ (उणा-४६५) ॥ इत्यल , पटं लातीति वा ॥ १ ॥ छाद्यतेऽनेन च्छदि क्लीबलिङ्ग , "रुच्यर्चि-" ॥ (उणा-९८९) ॥ इति इस्, "छदेरिस्मन्-" ॥४।२।३३॥ इति ह्रस्व ॥२॥॥७६॥

नीव्र वलीक तत्प्रान्तः

नीयते जलमनेन नीव्रम्, "खुरक्षुर" ॥ (उणा-३९६) ॥ इति रे निपात्यते ॥ १ ॥ वलत सवृणोति वलीक पुंक्लीबलिङ्ग , "स्यमिकषि-" ॥ (उणा -४६) ॥ इतीक , तस्य पटलस्य प्रान्तस्तत्प्रान्त ॥ २ ॥

इन्द्रकोशस्तमङ्गकः ।

इन्द्रेण कुश्यतीव इन्द्रकोश ॥ १ ॥ ताम्यन्ति कात्स्र्न्येन तमङ्गो हर्म्य-निर्यूह , "पतितमि-" ॥ (उणा- ९८ ) ॥ इत्यङ्ग ॥ २ ॥

वलभी छदिराधार

'वड गौत्र' वडति वडभी, "कृशृगृ-" ॥ ( उणा- ३२९ ) ॥ इत्यभ त्र्ने, वलभी अयमिकारान्तोऽपि, छदिष आधारो वशपञ्जरादिश्छदिराधार ॥ १ ॥

नागदन्तास्तु दन्तका. ॥ ७७ ॥

नागस्येव दन्ता नागदन्ता ॥ १ ॥ दन्तप्रतिकृतयो दन्तका ॥२॥७७॥

मत्तालम्बोऽपाश्रयः स्यात् प्रग्रीवो मत्तवारणे ।

मत्तै प्रमादिभिरालम्ब्यते मत्तालम्ब ॥ १ ॥ अपाश्रीयतेऽपाश्रय· ॥२॥ प्रसृता ग्रीवाऽत्र प्रग्रीव पुंक्लीबलिङ्ग ॥ ३ ॥ मत्तान् वारयति मत्तवारणस्तत्र ॥४॥

वातायनो गवाक्षश्च जालके

वातस्य अयन मार्गोऽस्मिन् वातायन पुंक्लीबलिङ्ग ॥१॥ गोरक्षीव गवाक्ष , "अक्ष्णोऽप्राण्यङ्गे" ॥ ७ । ३ । ८५ ॥ इत्यट् समासान्त , "गोर्नाम्न्यवोऽक्षे" ॥ १।२।२८ ॥ इत्यवादेश ॥ २ ॥ जलति जाल ज्वलादित्वात् ण , के जालकं तत्र ॥ ३ ॥

अथान्नकोष्ठकः कुसूल· ॥ ७८ ॥

कुष्णाति कोष्ठ "कुषेर्वा" ॥ ( उणा-१६४ ) ॥ इति ट , अन्नस्य कोष्ठोऽन्नकोष्ठक ॥ १ ॥ 'कुसच् संश्लेषे दन्त्यान्त' कुस्यति धान्येन कुसूल , "कुल-पुलकुसिभ्य· कित्" ॥ (उणा- ४९०) ॥ इत्यूल , तालव्यमध्योऽप्ययम् ॥२॥७८॥

अश्रिस्तु कोणोऽणिः कोटिः पाल्यस्र इत्यपि ।

अश्नुतेऽश्रि स्त्रीलिङ्ग, "तङ्क्विक्कि" ॥ (उणा-६९२) ॥ इति रि ॥१॥ कुणति कोणो गृहादेर्विदिक् ॥ २ ॥ अणत्यणि पुंस्त्रीलिङ्ग ॥ ३ ॥ कुटति कोटि स्त्रीलिङ्ग ॥ ४ ॥ पलति पालि, "कुशृकुटि" ॥ (उणा- ६१९) ॥ इति णिदि, ङ्या पाली ॥ ५ ॥ अस्यतेऽस्मिन् अस्र, "भीवृधि-" ॥ ( उणा-३८७ ) ॥ इति र ॥ ६ ॥

**आरोहणं तु सोपान**

आरुह्यतेऽवरुह्यते चाऽनेन आरोहणम् ॥१॥ सह उपानमन्त्यस्मिन् सोपानम्, पृषोदरादित्वात् ॥ २ ॥

**निःश्रेणिस्त्वधिरोहणी ॥ ७९ ॥**

नि श्रयति भित्ति नि श्रेणि स्त्रीलिङ्ग, "कावावी-" ॥ ( उणा-६३४ ) ॥ इत्यणि, नियोजिता श्रेणि सोपानपङ्क्तिरत्रेति वा ॥ १ ॥ अधिरोहन्त्यवरोहन्ति चाऽनया दारुमय्या अधिरोहणी ॥ २ ॥ ७९ ॥

**स्थूणा स्तम्भः**

तिष्ठति अस्यामाधेयं स्थूणा, "स्थाक्षुतोरूच्च" ॥ ( उणा- १८५ ) ॥ इति ण ॥ १ ॥ स्तम्भ्यते स्तम्भ ॥ २ ॥

**सालभञ्जी पाञ्चालिका च पुत्रिका ।**

**काष्ठादिघटिता**

साल वृक्षं भनक्ति तन्निर्मितत्वात् सालभञ्जी ॥ १ ॥ पञ्च्यते "ऋकृमृ-" ॥ ( उणा- ४७५ ) ॥ इत्याले पञ्चाली तत स्वार्थे अणि के च पाञ्चालिका ॥ २ ॥ कृत्रिमा पुत्री पुत्रिका काष्ठदन्तादिमयी ॥ ३ ॥

**लेप्यमयी त्वञ्जलिकारिका ॥ ८० ॥**

लेप्यनिर्मिता पुत्रिका ॥१॥ अञ्जलि करोति अञ्जलिकारिका ॥२॥८०॥

**नन्द्यावर्त्तप्रभृतयो विच्छन्दा आढ्यवेश्मनाम् ।**

नन्दी आवर्त्तोऽत्र नन्द्यावर्त्त प्रभृतिग्रहणात् स्वस्तिक-सर्वतोभद्राद्या ॥१॥ विशेषेण छन्दयन्त्याच्छादयन्ति विच्छन्दा रचनाविशेषा ॥ १ ॥

**समुद्गः सम्पुटः**

समुब्ज्यते समुद्ग, घञि न्यङ्क्वादित्वात् निपात्यते, समुद्गच्छतीति वा "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड ॥ १ ॥ सम्पुट्यते श्लेष्यते सम्पुटो भूषणाद्यावपनम्, पुटोऽपि ॥ २ ॥

पेटा स्याद् मञ्जूषा

पेटति पेटा, पेटकोऽपि 'पीडण् गहने' इत्यस्य पेडेत्यमर ॥ १ ॥ 'मञ्ज सौत्र ' मञ्जति मञ्जूषा, "खलिफलि" ॥ ( उणा-५६० ) ॥ इत्यूष, मञ्जु मनोज्ञ कृत्वा वस्त्राद्यैरुष्यतेऽत्रेति वा ॥ २ ॥

अथ शोधनी ॥ ८१ ॥

संमार्जनी बहुकरी वर्धनी च समूहनी ।

शोध्यते निर्मलीक्रियते गृहमनया शोधनी, पवनी अपि ॥१॥८१॥ संमृज्यतेऽनया समार्जनी ॥ २ ॥ बहु करोति बहुकरी पुन्नपिलिङ्ग ॥ ३ ॥ वर्धते श्रीरनया वर्धनी ॥ ४ ॥ समुह्यते रजोऽनया समूहनी ॥ ५ ॥

सङ्कराऽवकरौ तुल्यौ

समुह्य कीर्यतेऽसौ सङ्कर ॥ १ ॥ अवकीर्यते बहि क्षिप्यतेऽवकर ॥ २ ॥

उदूखलमुलूखलम् ॥ ८२ ॥

ऊर्ध्व ख बिल वाऽस्य उदूखलम्, उलूखलम्, कण्डनभाण्ड पृषोदरादित्वात साधू ॥ १ ॥ २ ॥ ८२ ॥

प्रस्फोटन तु पवनम्

प्रस्फोट्यते असार बहिष्क्रियते प्रस्फोटन निर्बुसीकरणम् ॥ १ ॥ पूयते पवन तुषादिशोधनम् ॥ १ ॥

अवघातस्तु कण्डनम् ।

मुसलेन अवहननमवघात ॥ १ ॥ कण्ड्यते कण्डनम् ॥ २ ॥

कट किलिञ्ज

कटति आवृणोति कटो वीरणादिनिर्मित त्रिलिङ्ग ॥ १ ॥ किल्यते क्षिप्यतेऽस्मिन् किलिञ्ज, उटजादौ निपात्यते ॥ २ ॥

मुसलोऽयोऽग्र

मुस्यते खण्ड्यतेऽनेन मुसल, "तृपिवपि-" ॥ (उणा-४६८) ॥ इति किदलः, मुहु खन लाति, मुहुर्मुहुर्लसतीति वापृषोदरादित्वात् ॥१॥ अय अग्रे मुखे अस्य अयोऽग्रम्, पुल्लीबलिङ्गौ, अयोनिारत्नेके, यद्वैजयन्ती- "अयोग्रमुसलाऽस्त्री स्यात्" इति ॥ २ ॥

---

१ श्रीवर्णनिर्देशनाकारस्तु मूर्धन्यमध्योऽयथम्, इति श्रीवल्लभगणिपादा ।

कण्डोलक पिटम् ॥ ८३ ॥

कण्ड्यते कण्डोल, " कटिपटि- " ॥ (उणा-४९३) ॥ इत्योल, के कण्डोलक ॥ १ ॥ पेटति पिटम्, पुक्लीबलिङ्ग, वशदलादिमय भाण्डम्, के पिटकोऽपि ॥ २ ॥ ॥ ८३ ॥

चालनी तितउः

चाल्यतेऽनया चालनी क्षुद्रच्छिद्रशतोपेत परिपवन स्त्रीक्लीबलिङ्ग ॥ १ ॥ तनोति सार तितउ पुक्लीबलिङ्ग, "तनेर्डउ" ॥ (उणा-७४८) ॥ इति डउ सन्वद्भावश्च ॥ २ ॥

शूर्पं प्रस्फोटनम्

शीर्यतेऽनेन शूर्पम्, "कृशृस्तुभ्य ऊर्चान्तस्य" ॥ (उणा-२९८) ॥ इति प 'शूर्पण् माने' इत्यस्य वा ॥ १ ॥ प्रस्फोट्यतेऽनेन प्रस्फोटन पुक्लीबलिङ्गौ, धान्यादिनिष्पवनभाण्डमित्यर्थ ॥ २ ॥

अथाऽन्तिका ।

चुल्ल्यऽश्मन्तकमुद्धानं स्याद् अधिश्रयणी च सा ॥ ८४ ॥

अन्तोऽस्त्यस्यामन्तिका, "अन्त्यधिश्रयणी भवेत्" इति तु माला ॥ १ ॥ चुल्लति चुल्लि, " किलपिलि- " ॥ (उणा-६०८) ॥ इति इ ङ्या चुल्ली ॥ २ ॥ अश्नुतेऽश्मन्तम्, "सीमन्त-" ॥ (उणा-२२२) ॥ इत्यन्ते निपात्यते केऽश्मन्तकम् ॥ ३ ॥ उद्धीयतेऽनेन उद्धानम् ॥ ४ ॥ अधि श्रीयतेऽस्यामधिश्रयणी ॥ ५ ॥ ॥ ८४ ॥

स्थाल्युखा पिठर कुण्डं चरुः कुम्भी

तिष्ठत्यस्यां स्थाली, "स्थो वा" ॥ (उणा-४७३) ॥ इत्यल, स्थलति इति वा ज्वलादित्वाद् णः ॥ १ ॥ उषन्ति पचन्त्यस्यामुखा, " उषे किद् लुक्च " ॥ (उणा-८८) ॥ इति ख, ओखतीति वा ॥ २ ॥ पिठ्यते अत्र पिठरम्, "मृदुन्दि-" ॥ (उणा-३९९) ॥ इति किदर ॥ ३ ॥ कुणति उपकरोति कुण्डम्, " कुगुहु- " ॥ (उणा-१७०) ॥ इति ड, त्रिलिङ्गावेतौ ॥ ४ ॥ चरति याति क्लेदमनेन चरु, पुंलिङ्ग " मिवहि- " ॥ (उणा-७२६) ॥ इत्यु ॥ ५ ॥ कायति कुम्भी, " काकुसिभ्या- " ॥ (उणा-३३७) ॥ इति कुम्भ. द्वौ द्वौ भिन्नार्थावित्येके ॥ ६ ॥

घट. पुनः ।

कुटः कुम्भः करीरश्च कलशः कलसो निपः ॥ ८५ ॥

घटते घटः पुंस्त्रीलिङ्गः ॥१॥ कुटति कुटः पुंक्लीबलिङ्गः ॥ २ ॥ कायत्यम्भसा भ्रियमाणः कुम्भः पुस्त्रीलिङ्गः, “ काकुसिभ्याः ” ॥ (उणा–३३७) ॥ इति कुम्भः, कैरुम्भ्यते वा पृषोदरादित्वात् ॥ ३ ॥ कीर्यते करीरः पुक्लीबलिङ्गः, “ कृशॄपॄ- ” ॥ ( उणा–४१८) ॥ इतीरः ॥ ४ ॥ कलते सख्याति शब्दायते वा कलशः, “कलेष्टत्” ॥ ( उणा– ५३२ ) ॥ इत्यशः ॥ ५ ॥ केन जलेन लसति कलसः त्रिलिङ्गाविमौ ॥६॥ निपिबन्त्यस्माद् निपः पुक्लीबलिङ्गः, स्थादित्वात् कः ॥७॥८५॥

## हसन्यङ्गारात् शकटीधानीपात्र्यो हसन्तिका ।

हसत्यङ्गारैर्हसनी ॥ १ ॥ अङ्गारशब्दात् शकटीधानीपात्र्यः, अङ्गाराणां शकटी अङ्गारशकटी ॥ २ ॥ अङ्गारा धीयन्तेऽस्यामङ्गारधानी ॥ ३ ॥ अङ्गाराणां पात्री अङ्गारपात्री ॥ ४ ॥ अङ्गारैर्हसतीव हसन्ती के हसन्तिका ॥ ५ ॥

## भ्राष्ट्रोऽम्बरीषः

भृज्यतेऽस्मिन् भ्राष्ट्रः, “ जिभृसृभ्रस्जि- ” ॥ ( उणा– ४४७ ) ॥ इति त्रट् वृद्धिश्च ॥ १ ॥ अम्यतेऽम्बरीषः, “अमेर्बरादि ” ॥ (उणा– ५५५ ) ॥ इतीषः पुक्लीबलिङ्गावेतौ ॥ २ ॥

## ऋचीषमृजीषं पिष्टपाकभृत् ॥ ८६ ॥

ऋच्यते स्तूयते पाकोत्कर्षाद् ऋचीषम्, “ऋजिशॄ-” ॥ ( उणा– ५५४ ) ॥ इति बहुवचनादीषः ॥ १ ॥ ऋज्यते ऋजीषम्, “ऋजिशॄ-” ॥ (उणा– ५५४) ॥ इति किदीषः, पिष्टकृतस्य भक्ष्यस्य पाकं बिभर्ति पिष्टपाकभृद् भाजनविशेषः ॥ २ ॥ ॥ ८६ ॥

## कम्बिर्दर्वि खजाका

काम्यते कम्बिः, “छविच्छिवि ” ॥ ( उणा– ७०६ ) ॥ इति वौ निपात्यते ॥ १ ॥ दृणाति पाक्यं दर्विः, ‘ दॄपॄवॄभ्यो विः ” ॥ ( उणा– ७०४ ) ॥ स्त्रीलिङ्गावेतौ ॥ २ ॥ खजति मथ्नाति खजाका, “शालिबलि-” ॥ ( उणा– ३४ ) ॥ इत्याऽऽकः ॥ ३ ॥

## अथ स्यात् तर्दूर्दारुहस्तकः ।

तरति पाक्येषु तर्दूः, स्त्रीलिङ्गः, “ तॄदॄभ्या ” ॥ (उणा–८४६) ॥ इति दूः, दारुमयो हस्तप्रतिकृतिर्दारुहस्तकः परिवेषणभाण्डम् ॥ १ ॥

## वार्धान्यां तु गलन्त्यालूः कर्करी करकः

वाः पानीयं धीयतेऽस्यां वार्धानी तत्र ॥ १ ॥ गलति अम्भोऽस्या गलन्ती, “सीमन्त-” ॥ ( उणा– २२२ ) ॥ इत्यन्ते निपात्यते ॥ २ ॥ अडत्यनया आलू

स्त्रीलिङ्ग , "अडा ल च वा" ॥ (उणा-८३७) ॥ इति णिट् ॥ ३ ॥ किरत्यम्भ कर्करी, " ऋतष्टित् " ॥ ( उणा- ९ ) ॥ इत्यप्रत्यय सरूपद्वित्व च ॥ ४ ॥ "दृकृ" ॥ ( उणा- २७ ) ॥ इत्यके करक , पुक्लीबलिङ्ग ॥ ५ ॥

अथ स ॥ ८७ ॥

नालिकेरज करङ्क

स करङ्क ॥ ८७ ॥ नालिकेरफलाद् जातो नालिकेरज , किरत्यम्बु करङ्क "किरोऽङ्को-" ॥ ( उणा- ६२ ) ॥ इत्यङ्क ॥ १ ॥

तुल्यौ कटाहकर्परौ ।

कटत्यावृणोति कटाह त्रिलिङ्ग , "वृकटि' ॥ ( उणा ५९१ ) ॥ इत्याह ॥ १ ॥ कीर्यते कर्पर , "जठर-" ॥ ( उणा-४०३ ) ॥ इत्यरे निपात्यते ॥ २ ॥

मणिकोऽलिञ्जर

मणत्यम्भसा ध्रियमाणो मणि, "पदिपठि" ॥ (उणा-६०७) ॥ इति इ , यत् शाश्वत -"अलिञ्जर मणि विद्याद् मेहनावयवो मणि ," स्वार्थे के मणिक ॥ १ ॥ अल जरयति जलमलिञ्जर पुक्लीबलिङ्गौ, पृषोदरादित्वात् ॥ २ ॥

गर्गरीकलश्यौ तु मन्थनी ॥ ८८ ॥

गिरति दधि गर्गरी, "ऋतष्टित्-" ॥ ( उणा- ९ ) ॥ इत्यप्रत्यय सरूपद्वित्वं च ॥ १ ॥ कल्यते कलशि ङ्या कलशी, कस्य अम्भसो राशिरत्रेति वा पृषोदरादित्वात् ॥ २ ॥ मथ्यते दध्यस्या मन्थनी ॥ ३ ॥ ॥८८ ॥

वैशाखः खजको मन्था मन्थानो मन्थदण्डकः ।

मन्थ क्षुब्ध

विशाखा प्रयोजनमस्य वैशाख , " विशाखाषाढान् मन्थदण्डे " ॥ ६ । ४। १२० ॥ इत्यणि विशाखस्य अयमिति वा, विशिष्टा शाखा अस्य विशाखस्तत स्वार्थेऽण् वा ॥ १ ॥ खजति मथ्नाति खजक , " कीचक- " ॥ ( उणा-३३ ) ॥ इत्यके निपात्यते, खज खजकाऽपि ॥२॥ मथ्यतेऽनेन मन्था, "पान्थिमन्थिभ्याम्" ॥ ( उणा-९२६ ) ॥ इतीन ॥ ३ ॥ " सस्तुस्पृशि-" ॥ ( उणा-२७६ ) ॥ इत्यानेन मन्थान ॥ ४ ॥ मन्थनाय दण्ड मन्थदण्ड ॥ ५ ॥ मथ्यतेऽनेन मन्थ ॥ ६ ॥ क्षुभ्नाति क्षुब्ध , " क्षुब्धविरिब्ध- " ॥ ४ । ४ । ७० ॥ इति क्ते साधु ॥ ७ ॥

अस्य विष्कम्भो मञ्जीर कुटरोऽपि च ॥ ८९ ॥

अस्य मन्थस्य विष्कभ्नाति बध्नातीति विष्कम्भो दण्डकटक, यस्मिन् बद्ध्वा मन्थ आकृष्यते, दण्डकरोटकमित्यन्ये ॥ १ ॥ 'मञ्जि सौत्र' मञ्जति मञ्जीर, "कृशृपॄ-" ॥ ( उणा-४१८) ॥ इतीर ॥ २ ॥ कुटति कुटर, "ऋच्छिचटि-" ॥ ( उणा- ३९७) ॥ इत्यर कुटादित्वाद् गुणाऽभाव कुटकोऽपि,'मदीरम्' देश्याम् ॥ ३ ॥ ॥ ८९ ॥

शालाजीरो वर्धमान शराव·

शालाया जीर्यति शालाजीर, पृषोदरादित्वात् ॥ १ ॥ वर्धते मृत्पिण्डाद् वर्धमान, वर्ध्यते छेद्यते चक्रादिति वा ॥ २ ॥ शीर्यते मनागपि आघातेन शराव, "शृणातेराव" ॥ ( उणा- ५२० ) ॥ पुंक्लीबलिङ्गावेतौ ॥ ३ ॥

कोशिका पुन ।

मल्लिका चषक· कस पारी स्यात् पानभाजनम् ॥ ९० ॥

कुश्यति कोशिका ॥ १ ॥ मल्लते मल्लिका ॥ २ ॥ चषन्ति अनेन चषक ॥ ३ ॥ काम्यते कम, "मावावद्य-" ॥ (उणा-५६४) ॥ इति स पुंक्लीबलिङ्गावेतौ ॥ ४ ॥ पारयति पारी ॥ ५ ॥ पानस्य भाजन पानभाजनम् ॥६॥९०॥

कुतूश्चर्मस्नेहपात्रम्

चर्मण स्नेहपात्र कुत्सित तन्यते कुतू स्त्रीलिङ्ग, "अनिगमि-" ॥ (उणा-८४३) ॥ इति डिदू ॥ १ ॥

कुतुपस्तु तदल्पकम् ।

तत् चर्मस्नेहपात्र ह्रस्वा कुतू कुतुप, पुंक्लीबलिङ्ग, "कुत्वा डुप" ॥ ७।३।४९॥१॥

दृतिः खल्ल

द्रियते दृति पुलिङ्ग, "दृमुषि" ॥(उणा-६५१)॥ इति कित् ति ॥ १ ॥ खलति खल्ल, "भिल्लाच्छभल्ल" ॥ (उणा-४६४) ॥ इति ले निपात्यते पुलिङ्गोऽयम्, वैजयन्ती तु "खल्ल क्लीबम्" इत्याह ॥ २ ॥

चर्म्ममयी त्वालू करकपात्रिका ॥ ९१ ॥

करकवत् पिबन्त्यनया करकपात्री, के करकपात्रिका ॥ १ ॥ ९१ ॥

सर्वमावपनं भाण्ड

आ उप्यते आधेयमस्मिन्नावपनम् ॥१॥ भामतेऽस्माद् भाण्डम्, "पञ्चमाद्-" ॥ (उणा-१६८) ॥ इति ड ॥ २ ॥

पात्राऽमत्रे तु भाजनम्

पाति आधेयम्, पीयतेऽस्मादिति वा पात्र त्रिलिङ्ग ॥१॥ अमति आधेयमस्मिन् अमत्रम्, "वृञ्नक्षि-" ॥ (उणा- ४५६) ॥ इत्यत्र ॥ २ ॥ भाज्यतेऽस्मिन्नाधेयमिति भाजनम्, अमरस्तु आवपनादीन् पश्चाऽप्येकार्थानाह ॥ ३ ॥

तद्विशाल पुन स्थालं

तद् भाजन विस्तीर्ण स्थलति स्थाल स्त्रीक्लीबलिङ्ग, ज्वलादित्वात् ण, तिष्ठति अत्रेति वा ॥ १ ॥

स्यात् पिधानमुदञ्चनम् ॥ ९२ ॥

पिधीयतेऽनेन पिधानम् ॥ १ ॥ उदच्यतेऽनेन उदञ्चनम् ॥ २ ॥ ९२ ॥

शैलोऽद्रि शिखरी शिलोच्चयगिरी गोत्रोऽचलः सानुमान्
ग्रावा पर्वतभूध्रभूधरधराहार्या नग.

शिलानामय शैल, शिला सन्त्यत्रेति वा ज्योत्स्नादित्वादण् ॥ १ ॥ अद्यते वज्रेण अद्रि, "तङ्किवङ्कि-" ॥ ( उणा-६९२ ) ॥ इति रि ॥ २ ॥ शिखराणि सन्त्यत्र शिखरी ॥ ३ ॥ शिलानामुच्चयोऽत्र शिलोच्चय ॥ ४ ॥ गीर्यते गिरि, "नाम्युपान्त्य-" ॥ (उणा-६०९) ॥ इति कि ॥ ५ ॥ गा पृथ्वी त्रायते गोत्र ॥ ६ ॥ न चलति अचल ॥ ७ ॥ सानूनि सन्त्यस्य सानुमान् ॥ ८ ॥ गृह्णाति ग्रावा, "ग्रहेरा च" ॥ (उणा-९०५) ॥ इति वन् ॥ ९ ॥ पर्व्यते पूर्यते शिलाभि पर्वत, "दृपृभृ-" ॥ (उणा-२०७) ॥ इत्यत, पर्वाणि सन्त्यत्रेति वा "मरुत्-पर्वणस्त" ॥ ७।२।१५ ॥ १० ॥ भुव धरति भूध्र मूलविभुजादित्वात् क, यौगिकत्वात् कुध्र-महीध्रादय, "आयुधादिभ्य" ॥ ५।१।९४ ॥ इत्यवि भूधर, यौगिकत्वात् महीधर भूभृदादय ॥ ११ ॥ १२ ॥ धरति ध्रियते वा धर ॥ १३ ॥ हर्तुमशक्योऽहार्य ॥ १४ ॥ न गच्छति स्थावरत्वाद् नग, "नगोऽप्राणिनि वा" ॥ ३।२।१२७ ॥ इति वा नञोऽदभाव, अगोऽपि ॥ १५ ॥

शेषश्चात्र-
गिरौ प्रपाती कुट्टार उर्वङ्ग कन्दराकर ।

अथोदयः ।

पूर्वाद्रिः

उदयत्यत्रोदय ॥ १ ॥ पूर्वश्चासावद्रिश्च पूर्वाद्रिः ॥ २ ॥

चरमाद्रिरस्त.

चरम पश्चिमोऽद्रिश्चरमाद्रि ॥१॥ अस्यत्यर्कादीन्, अस्यते वाऽस्त, "दम्य-

मि-" ॥ ( उणा- २०० ) ॥ इति त ॥ २ ॥

उदगद्रिस्त्वद्रिराड् मेनका-

प्राणेशो हिमवान् हिमालयहिमप्रस्थौ भवानीगुरु. ॥९३ ॥

उदङ् उत्तरोऽद्रिरुदगद्रि ॥ १ ॥ अद्रीणा राजा अद्रिराट् ॥ २ ॥ मेनकाया प्राणेशो वल्लभो मेनकाप्राणेश ॥३॥ हिममस्त्यस्मिन् हिमवान् ॥ ४ ॥ हिमस्याऽऽलयो हिमालय ॥ ५ ॥ हिम प्रतिष्ठतेऽस्मात्, हिम प्रस्थे अस्य वा हिमप्रस्थ ॥६॥ भवान्या गौर्या गुरु पिता भवानीगुरु ॥ ७ ॥ ॥ ९३ ॥

हिरण्यनाभो मैनाक सुनाभश्च तदात्मज ।

हिरण्यं नाभावस्य हिरण्यनाभ, "नाभेर्नाम्नि" ॥ ७।३।१३४ ॥ इत्यट् समासान्त ॥ १ ॥ मेनकाया अपत्य मैनाक, पृषोदरादित्वात् ॥ २ ॥ शोभना नाभिरस्य सुनाभ, तस्य हिमालयस्यात्मज तदात्मज ॥ ३ ॥

रजताद्रिस्तु कैलासोऽष्टापद स्फटिकाचल. ॥ ९४ ॥

रजतमयोऽद्रि रजताद्रि ॥ १ ॥ क जलं इला भूमिस्तयोरास्ते, के लसनमस्य वा केलास स्फटिकस्तस्यायं कैलास, ॥ २ ॥ अष्टौ पदानि सन्त्यस्मिन् अष्टापद, "नाम्नि" ॥३।२।७५॥ इति दीर्घ ॥ ३ ॥ स्फटिकमयोऽचल स्फटिकाचल ॥ ४ ॥ ॥ ९४ ॥

शेषश्चात्र–कैलासे धनदावासो हराद्रिर्हिमवद्धस ।

क्रौञ्च· कुञ्च·

कुञ्चति कुञ्च प्रज्ञादिषु क्रौञ्च, क्रौञ्जोऽपि ॥ १ ॥ २ ॥

अथ मलय आषाढो दक्षिणाचलः ।

मलते चन्दनान् मलय पुल्लीबलिङ्ग, "कुगुवलि-" ॥ (उणा–३६५) ॥ इत्यय ॥१॥ आषाढासु जात आषाढ, "श्रविष्ठाषाढा" ॥ ६।३।१०५ ॥ इत्यत्र मतान्तराश्रितोऽण् ॥ २ ॥ दक्षिणश्चासावचलश्च दक्षिणाचल ॥ ३ ॥

शेषश्चात्र–मलयश्चन्दनगिरि

स्याद् माल्यवान् प्रस्रवण·

माल्याऽऽकारताऽस्ति अस्य माल्यवान् ॥१॥ प्रस्रवति निर्झरै प्रस्रवण ॥२॥

विन्ध्यस्तु जलवालकः, ॥ ९५ ॥

विध्यति विन्ध्य, "शिक्याऽऽस्याऽऽढ्य" ॥ (उणा–३६४) ॥ इति ये

निपात्यते ॥ १ ॥ जलेन वाडते आप्लावयति जलवालक ॥ २ ॥ ९५ ॥

शत्रुञ्जयो विमलाद्रि

शत्रून् जयति शत्रुञ्जय, 'भृवृजि" ॥ ५।१।११२ ॥ इति ख ॥ १ ॥ विमलश्चासावद्रिश्च विमलाद्रि ॥ २ ॥

इन्द्रकीलस्तु मन्दर ।

इन्द्रेण कील्यते इन्द्रकील ॥ १ ॥ मन्यते मन्दर, "ऋच्छिचटि" ॥ (उणा-३९७) ॥ इत्यर

सुवेल. स्यात् त्रिमुकुटस्त्रिकूटस्त्रिककुच्च सः ॥ ९६ ॥

शोभना वेलाऽस्य आसन्नपयोधित्वात् सुवेल ॥ १ ॥ त्रयो मुकुटभूता कूटा-अस्य त्रिमुकुट ॥ १ ॥ त्रीणि कूटान्यस्य त्रिकूट ॥ ३ ॥ त्रीणि ककुदानि ककुदाकाराणि शिखराण्यस्य त्रिककुत्, "त्रिककुद् गिरौ" ॥ ७।३।१६८ ॥ इति ककुदादेश ॥ ४ ॥ ९६ ॥

उज्जयन्तो रैवतक

उज्जयतीति उज्जयन्त, "तृजि-" ॥ ( उणा-२२१ ) ॥ इत्यन्त ॥ १ ॥ बन्यते स्म वत राया सुवर्णेन वतो रैवत के रैवतक, रैवता सन्त्यत्रेति वा अरीहणादित्वाच्चातुरथिकोऽण् ॥ २ ॥

सुदारु. पारियात्रक. ।

शोभनानि दारूण्यस्मिन् सुदारु ॥१॥ परितो यात्राया भव स्वाऽऽरोहत्वात् पारियात्रक ॥ २ ॥

लोकालोकश्चक्रवाल·

अन्तर्लोक्यते अस्य बाह्य च न लोक्यतेऽनर्कत्वाद् लोकालोक, यत्कालिदास - "प्रकाशश्चान्धकारश्च लोकालोक इवाऽचल" इति ॥१॥ चक्राऽऽकारेण वलति वाडते वा चक्रवाल, आवेष्ट्य द्वीपाब्धीन् स्थितो ह्यसाविति प्रसिद्धि ॥ २ ॥ ९६ ॥

अथ मेरु कर्णिकाचलः ॥ ९७ ॥

रत्नसानु. सुमेरु स्व.-स्वर्गि-काञ्चनतो गिरिः ।

मिनोति क्षिपत्युच्चत्वाद् ज्योतींषि इति मेरु, "चिनीपी-" ॥(उणा-८०६)॥ इति रु ॥ १ ॥ जम्बूद्वीपपद्मस्य कर्णिकाभूतोऽचल कर्णिकाचल ॥ २ ॥ ९७ ॥ रत्नानि सानुष्वस्य रत्नसानु ॥ ३ ॥ सुमेरुर्मेरोरभिन्नाऽर्थ, इन्द्रमहेन्द्रवत् ॥ ४ ॥

लोकालोकश्चक्रवाल

अन्तर्लोक्यतेऽस्य, बाह्य च न लोक्यतेऽनर्कत्वात् लोकालोक , यत्कालिदास – "प्रकाशश्चान्धकारश्च लोकालोक इवाऽचल " इति ॥ १ ॥ चक्राकारेण वलति वाडते वा चक्रवाल , आवेष्ट्य द्वीपाब्धीन् स्थितो ह्यसाविति प्रसिद्धि ॥ २ ॥

अथ मेरु कर्णिकाचल ॥ ९७ ॥

रत्नसानु. सुमेरु. स्व -स्वर्गि-काञ्चनतो गिरिः ।

मिनोति क्षिपत्युच्चत्वाज्ज्योतीषीति मेरु, " चिनीपी- " ॥ ( उणा–८०६ ) ॥ इति रु ॥ १ ॥ जम्बूद्वीपपद्मस्य कर्णिकाभूतोऽचल कर्णिकाचल ॥२॥९७॥ रत्नानि सानुष्वस्य रत्नसानु ॥३॥ सुमेरुर्मेरोरभिन्नार्थ , इन्द्रो महेन्द्रवत् ॥ ४ ॥ स्व स्वर्गि-काञ्चनशब्देभ्यो गिरि – स्वर्गिरि स्वर्गिरि ॥ ५ ॥ स्वर्गिणा गिरि स्वर्गिगिरि ॥ ६ ॥ काञ्चनस्य गिरि काञ्चनगिरि ॥७॥ सर्वाणि पर्वतनामानि पुलिङ्गानि ॥

शृङ्गं तु शिखर कूट

शीर्यते निघातेन शृङ्गम्, " शृङ्गशार्ङ्ग- " ॥ ( उणा–९६ ) ॥ इति गे निपात्यते ॥ १ ॥ शाखति व्याप्नोति गगन शिखरम्, "शाखेरिदेतौ चात " ॥ (उणा–४०० ) ॥ इत्यर ॥ २ ॥ कूट्यते दह्यतेऽर्क दावाभ्या कूटम्, त्रय पुक्लीबलिङ्गा ॥ ३ ॥

प्रपातस्त्वतटो भृगु ॥ ९८ ॥

प्रपतन्त्यस्मात् प्रपात , "व्यञ्जनाद् घञ्" ॥ ५।३।१३२॥१ ॥ तटशून्योऽतट ॥ २ ॥ भृज्यते दवेन भृगु , पुलिङ्ग " स्पशिभ्रस्जे स्लुक् च " ॥ ( उणा–७३१ ) ॥ इति किदु । "प्रपत्यते यस्मात् तटात् स भृगु " इत्येके ॥ ३ ॥ ९८ ॥

मेखला मध्यभागोऽद्रेर्नितम्ब कटकश्च स ।

अद्रेर्मध्यभागो मिनोति मेखला, "मिग खलश्चैच" ॥ ( उणा–४९७ ) ॥ इति खल ॥ १ ॥ नितरा तनोति नितम्ब , "वलिनितनिभ्या" ॥(उणा–३१७) ॥ इति ब ॥ २ ॥ कटकत्यावृणोति कटक , पुक्लीबलिङ्ग ॥ ३ ॥

दरी स्यात् कन्दर

दीर्यते दरी ॥ १ ॥ कन्दन्ते विप्लवन्तेऽस्मिन् कन्दर , त्रिलिङ्ग , "ऋच्छिचटि " ॥ ( उणा–३९७ ) ॥ इत्यर , कं दीर्यते, क दृणातीति वा, कन्दा सन्त्यत्र वा, अश्मादित्वाद् र ॥ २ ॥

अखातबिले तु गह्वर गुहा ॥ ९९ ॥

अखातमकृतकं यद् बिल तत्र गूहति गाह्यते वा गह्वरम्, पुंक्लीबलिङ्ग, "तीवर-" ॥ (उणा-४४४) ॥ इति बरटि निपात्यते, गह्वा सन्त्यत्र वा, अश्मादित्वाद् र ॥ १ ॥ गुह्यतेऽनया गुहा, भिदादित्वादङ् ॥ २ ॥ ९९ ॥

द्रोणी तु शैलयो. सन्धिः

द्रवन्त्यस्या द्रोणी, द्रुणतीति वा, पर्वतयो सश्लेषभूमि ॥ १ ॥

पादा पर्यन्तपर्वताः ।

पादा इव अध स्थत्वाद् धारणत्वाच्च पादा, मुख्यशैलान्ते क्षुद्रपर्वता ॥१॥

दन्तकास्तु बहिस्तिर्यक्प्रदेशा निर्गता गिरेः ॥ १०० ॥

दन्तप्रकृतयो दन्तका ॥ १ ॥

अधित्यकोर्ध्वभूमिः स्यात्

पर्वतमधिरूढा ऊर्ध्वभूमिरधित्यका, "उपत्यकाधित्यके" ॥ ७।१।१३१ ॥ इति साधु ॥ १ ॥

अधोभूमिरुपत्यका ।

पर्वतस्याऽऽसन्ना अधोभूमिरुपत्यका ॥ १ ॥

स्नुः प्रस्थ सानु

स्नौत्यम्भ. स्नु पुलिङ्ग, पृषोदरादित्वात् ॥ १ ॥ प्रतिष्ठन्तेऽस्मिन् समभूभागत्वात् प्रस्थम् ॥ २ ॥ सनति मृगादीन्, सुनोति सुख वा सानु, "कृवापाजि-" ॥ ( उणा- १ ) ॥ इत्युण्, पुक्लीबलिङ्गावेतौ ॥ ३ ॥

अश्मा तु पाषाणः प्रस्तरो दृषद् ॥ १०१ ॥

ग्रावा शिलोपलः

अश्नुतेऽश्मा पुलिङ्ग, "मन्" ॥ ( उणा- ९११ ) ॥ इति मन् ॥ १ ॥ पषति बाधते पादौ पाषाण, "पषो णित्" ॥ ( उणा-१९२ ) ॥ इत्याण ॥ २ ॥ प्रस्तीर्यते प्रस्तर ॥ ३ ॥ दृणाति दीर्यते वा दृषत्, स्त्रीलिङ्ग, "द्रो ह्रस्वश्च" ॥ ( उणा- ८९८ ) ॥ इति सद् ॥४॥१०१॥ "ग्रहेरा च" ॥ ( उणा-९०५ ) ॥ इति वन्, पुलिङ्ग ॥ ५ ॥ शिलति शिला ॥ ६ ॥ उप्यते उपल, पुंक्लीबलिङ्ग, "तृपिवपि-" ॥ ( उणा- ४६८ ) ॥ इति किदल ॥ ७ ॥

गण्डशैलाः स्थूलोपलाश्च्युताः ।

शैलस्य गण्डा इव गण्डा, शैला इव वा गण्डशैला, गिरे स्थूलाऽश्मानश्च्युता भूकम्पादिना गलिता ॥ १ ॥

स्यादाकरः खनिः खानिर्गञ्जा

आकीर्यन्ते धातवोऽस्मिन्नाकर ॥ १ ॥ खन्यन्ते धातवोऽस्या खनि, खानि, स्त्रीलिङ्गौ "कृशूकुटि-" ॥ ( उणा–६१९ ) ॥ इति वा णिदि ॥ २ ॥ ३ ॥ गञ्जन्ति शब्दायन्तेऽस्या गञ्जा, पुंस्त्रीलिङ्ग ॥ ४ ॥

धातुस्तु गैरिकम् ॥ १०२ ॥

दधाति पीतत्व धातु, पुलिङ्ग, "कृसिकमि" ॥ ( उणा– ७७३ ) ॥ इति तुन् ॥ १ ॥ गिरौ भव गैरिकम्, अध्यात्मादित्वादिकण् ॥ २ ॥ १०२ ॥

शुक्लधातौ पाकशुक्ला कठिनी खटिनी खटी ।

शुक्लश्चासौ धातुश्च शुक्लधातुस्तत्र ॥ १ ॥ पाके शुक्ला पाकशुक्ला ॥ २ ॥ कठन्त्यनया कठिनी, "श्याकठि-" ॥ ( उणा–२८२) ॥ इतीन ॥ ३ ॥ खट आकाङ्क्षोऽस्त्यस्या खटिनी ॥ ४ ॥ खटति खटी, कखटीत्यपि ॥ ५ ॥

लोहं कालायस शस्त्र पिण्ड पारशव घनम् ॥ १०३ ॥

गिरिसार शिलासार तीक्ष्ण-कृष्णामिषे अयः ।

लुनाति लोहम्, पुंक्लीबलिङ्ग, "लूगो ह" ॥ (उणा–५८६ ) ॥ लुहे सौत्रस्य वाऽच् ॥ १ ॥ कालं च तदयश्च कालायसम्, "सरोऽनोऽश्मायसो" ॥ ७।३।११५ ॥ इत्यट्समासान्त ॥ २ ॥ शस्यतेऽनेन शस्त्रम् ॥ ३ ॥ पिण्ड्यते पिण्डम् ॥४॥ परशवे इद परशव्यम्, तस्य विकार. पारशवम्, पुंक्लीबलिङ्ग, "परशव्याद् यलुक् च" ॥६।२।४०॥ इति अण् ॥५॥ हन्यते घनम् ॥६॥१०३॥ गिरे सार गिरिसारम् ॥ ७ ॥ शिलाया अश्मन सार शिलासारम्, यत्स्मृति – "अश्मभ्यो लोहमुत्थितम्" एतौ क्लीबे, पुस्यपि इत्यमर ॥८॥ तेजयति तेज्यते वा तीक्ष्णम्, "भ्रूणतृण-" ॥ ( उणा– १८६ ) ॥ इति णे निपात्यते ॥ ९ ॥ कृष्णेन वस्तुना आमिषति स्पर्धते कृष्णामिषम् ॥ १० ॥ अयते भेद्यमय, क्लीबलिङ्ग "अस्" ॥ ( उणा– ९५२ ) ॥ इत्यस् ॥ ११ ॥

शेषश्चात्र– स्याल्लोहे वीनधीवरे ॥

सिहानधूर्तमण्डूरसरणान्यस्य किट्टके ॥ १०४ ॥

अस्य लोहस्य ध्मायमानस्य किट्टके मले हिनस्ति सिहानम्, पृषोदरादित्वात् ॥ १ ॥ धूर्वति हिनस्ति धूर्तम्, "शीरी-" ॥ ( उणा– २०१ ) ॥ इति कित् त ॥ २ ॥ मण्डयति मण्डूरम्, "मीमासि-" ॥ ( उणा–४२७ ) ॥ इत्यूर ॥ ३ ॥ सरत्यनेन सरणम् ॥ ४ ॥ १०४ ॥

सर्वं च तैजसं लोह

तेजसो विकारस्तैजस हेमाद्यपि, रोहति लोहम् पुक्लीबलिङ्ग , यदाहु —

"सुवर्ण रजत ताम्र रीति कास्य तथा त्रपु ।
सीस च वीवर चैव अष्टौ लोहानि चक्षते" ॥ १ ॥

शस्त्र तु विशेषलोहम् ॥ १ ॥

**विकारस्त्वयस. कुशी ।**

अयसो विकार कुश्यति कुशी फाल, यच्छाश्वत –"कुशो दर्भे कुशी फाल" कुत्सितं श्यति इति वा "भाजगोण-" ॥ २।४।३० ॥ इति ङी ॥ १ ॥

**ताम्रं म्लेच्छमुखं शुल्वं रक्तं द्व्यष्टमुदुम्बरम् ॥ १०५ ॥**
**म्लेच्छशावरभेदाख्य मर्कटास्य कनीयसम् ।**
**ब्रह्मवर्धनं वरिष्ठ**

ताम्यति वह्निना ताम्रम्, "चिजि-" ॥ (उणा-३९२)॥ इति रो दीर्घत्व च, वर्णेन वा ॥ १ ॥ म्लेच्छदेशे मुखमुत्पत्तिरस्य म्लेच्छमुखम् ॥२॥ शिलति शुल्वम्, "शल्यलेरुच्चात" ॥ (उणा-३१९) ॥ इति व, 'शुल्वण् सर्जने' इत्यस्य वाऽच् ॥ ३ ॥ रक्त वर्णेन ॥ ४ ॥ द्वे हेमरूप्येऽश्नुते स्म द्व्यष्टम् ॥ ५ ॥ उनत्ति क्लिद्यते उदुम्बरम्, 'उद्गताम्बरम्' इति नैरुक्ता, ओदुम्बरमित्यन्ये ॥ ६ ॥ १०५॥ म्लेच्छशावरभेदेन आख्याऽस्य म्लेच्छशावरभेदाख्यं म्लेच्छम्, शावर चेत्यर्थ ॥ ७॥८ ॥ मर्कटास्यवर्णत्वाद् मर्कटास्यम् ॥ ९ ॥ कनति दीप्यते कनीयसम्, "फनस-" ॥ (उणा-५७३) ॥ इत्यसे निपात्यते ॥ १० ॥ ब्रह्म वर्धयति पवित्रत्वाद् ब्रह्मवर्धनम् ॥ ११ ॥ अतिशयेन वर वरिष्ठम्, कालिकानिर्वृत्त स्वर्ण हि तत् ॥ १२ ॥

शेषश्चात्र– ताम्रे पवित्र कास्य च ॥

**सीसं तु सीसपत्रकम् ॥ १०६ ॥**
**नाग गण्डूपदभवं वप्रं सीन्दूरकारणम् ।**
**वर्ध्रं स्वर्णारियोगेष्टे यवनेष्टं सुवर्णकम् ॥ १०७ ॥**

सिनोति बध्नाति पारतं सीसम्, "सेर्डित्" ॥ (उणा-५७७) ॥ इतीस. क्लीबलिङ्गोऽयम्, वैजयन्ती तु-"सीसोऽस्त्री" इति पुंस्यप्याह ॥ १ ॥ सीस च तत् पत्रं च सीसपत्रम् ॥ २॥१०६ ॥ न गच्छति द्रवत्वाद् नागम्, नखादित्वात् साधु ॥ ३ ॥ गण्डूपदेभ्यो भवति गण्डूपदभवम् ॥ ४ ॥ उप्यते वप्रम्, हेम्नो वर्णोत्कर्षे बीजत्वात् ॥ ५ ॥ सिन्दूरस्य कारणं सिन्दूरकारणम् ॥ ६ ॥ वर्धते वर्ध्रम्, पुंक्लीबलिङ्ग. ॥ ७ ॥ स्वर्णस्य अरिः स्वर्णारिः ॥ ८ ॥ हेम्नो वर्णोत्कर्षार्थं योगे

श्लेषेइष्टं योगेष्टम् ॥ ९ ॥ यवनानामिष्ट यवनेष्टम् ॥ १० ॥ सुवर्ण करोति कारयति वा सुवर्णकम् ॥ ११ ॥ १०७ ॥

शेषश्चात्र–सीसके तु महाबलम् ॥
चीनपट्ट समोलूक कृष्ण च त्रपुबन्धकम् ॥

वङ्गं त्रपु स्वर्णजनागजीवने
मृद्वङ्गरङ्गे गुरुपत्रपिच्चटे ।
स्याच्चक्रसञ्ज्ञं तमरं च नागजं
कस्तीरमालीनकसिंहले अपि ॥ १०८ ॥

वङ्गति द्रवति वङ्गम् ॥ १ ॥ त्रपते इवाग्नेराशुद्रवणात् त्रपु, क्लीबलिङ्ग, "भृमृतृ-" ॥ ( उणा– ७१६ ) ॥ इत्यु ॥ २ ॥ स्वर्णाज्जायते स्वर्णजम् ॥ ३ ॥ नाग जीवयति नागजीवनम् ॥ ४ ॥ मृदु कोमलमङ्गमस्य मृद्वङ्गम् ॥ ५ ॥ रङ्गति रङ्गम् ॥ ६ ॥ गुरु पत्रमस्य गुरुपत्रम् ॥ ७ ॥ पिच्यते कुट्यते पिच्चटम्, "कपट" ॥ ( उणा– १४४ ) ॥ इत्यटे निपात्यते ॥ ८ ॥ चक्रस्य सञ्ज्ञा अस्य चक्रसञ्ज्ञम् ॥ ९ ॥ ताम्यत्यग्निसपर्कात् तमरम्, "जठर" ॥ ( उणा– ४०३ ) ॥ इत्यरे निपात्यते ॥ १० ॥ नागाज्जायते नागजम् ॥ ११ ॥ कसति कस्तीरम्, "जम्बीराभीर" ॥ ( उणा– ४२२ ) ॥ इतीरे निपात्यते ॥ १२ ॥ आलीयते स्म आलीनम् ॥ १३ ॥ सिंहलदेशोद्भवत्वात् सिंहलम् ॥ १४ ॥ १०८ ॥

शेषश्चात्र–त्रपुणि श्वेतरूप्य स्यात् शण्ठ सलवण रज ।
परास मधुक ज्येष्ट घनं च मुखभूषणम् ॥

स्याद् रूप्यं कलधौततारजतश्वेतानि दुर्वर्णकं
खर्जूरं च हिमांशुहंसकुमुदाभिख्य

रूप्यति रूप्यम्, "शिक्याऽऽस्याढ्य" ॥ ( उणा–३६४ ) ॥ इति ये निपात्यते ॥ १ ॥ कल मनोज्ञ धौत कलधौतम् ॥ २ ॥ तारयति तारम् ॥ ३ ॥ रज्यते हेम्ना रजतम् पुक्लीबलिङ्ग, "पृषिरञ्जि-" ॥ ( उणा– २०८ ) ॥ इति किदत ॥ ४ ॥ श्वेतते श्वेतम्, सिताद्यपि ॥ ५ ॥ दुष्टो वर्णोऽस्य दुर्वर्ण सुवर्णापेक्षया ॥ ६ ॥ खर्जति खर्जूरम्, "मीमसि-" ॥ ( उणा–४२७) ॥ इति ऊर ॥ ७ ॥ हिमांशुहंसकुमुदानामभिख्या यस्य तत्तथा– चन्द्राह्वयम्, हंसाह्वयम्, कुमुदाह्वयम्, इत्यर्थ ॥ ८॥९॥१० ॥

शेषश्चात्र– रजते त्रापुष वङ्गजीवन वसु भीरुकम् ।
श्वभ्र सौम्य च साध्य च रूप्र भीरु जवीयसम् ॥

सुवर्ण पुन ।

स्वर्णं हेम हिरण्यहाटकवसून्यष्टापदं काञ्चनं
कल्याणं कनकं महारजतरैगाङ्गेयरुक्माण्यपि ॥ १०९ ॥
कलधौतलौहोत्तमवह्निबीजा-
न्यपि गारुडं गैरिकजातरूपे ।
तपनीयचामीकरचन्द्रभर्मा-
ऽर्जुननिष्ककार्तस्वरकर्बुराणि ॥ ११० ॥
जाम्बूनदं शातकुम्भं रजतं भूरि भूत्तमम् ।

शोभनो वर्णोऽस्य सुवर्णम्, पृषोदरादित्वाद् उलोपे स्वर्णम्, पुक्लीबलिङ्गावेतौ ॥ १ ॥ २ ॥ हिनोति हेम, क्लीबलिङ्ग, "मन्" ॥ (उणा-९११) ॥ इति मन्, "क्षुहिभ्या" ॥ (उणा-३४१) ॥ इति मे हेमम्, अकारान्त पुक्लीबलिङ्गोऽपि ॥ ३ ॥ ह्रियते हिरण्यम्, पुंक्लीबलिङ्ग, "हिरण्यपर्जन्य" ॥ (उणा-३८०)॥ इत्यन्ये निपात्यते ॥ ४ ॥ हटति दीप्यते हाटकम्, हाटकाकरभवत्वाद् वा, क्लीबलिङ्गोऽयम्, पुस्यपि वाचस्पति, यदाह- "हाटकमस्त्रियाम्, हाटकाकरसभूत पलाशकुसुमच्छवि" ॥ ५ ॥ वसत्याकरे वसु, क्लीबलिङ्ग ॥ ६ ॥ अष्टसु लोहेषु पद प्रतिष्ठाऽस्याऽष्टापदम्, पुक्लीबलिङ्ग, "नाम्नि" ॥३।२।७५॥ इति दीर्घ ॥७॥ कञ्चत दीप्यते काञ्चनम्, "विदनगगन-" ॥ (उणा- २७५) ॥ इत्यने निपात्यते ॥८॥ कल्यते कल्याणम्, "कल्याणपर्याण-" ॥ (उणा-१९३) ॥ इत्याणे निपात्यते ॥ ९ ॥ कनति दीप्यते कनकम्, "दृकृनॄ" ॥ (उणा-२७) ॥ इत्यक ॥ १० ॥ महच्च तद् रजत रञ्जक च महारजतम् ॥ ११ ॥ रायते उदारै रा, पुस्त्रीलिङ्ग, "रातडै" ॥ (उणा-८६६) ॥ इति डै ॥ १२ ॥ गङ्गाया अपत्य गाङ्गेयम्, शुभ्रादित्वादेयण् ॥ १३ ॥ रोचते रुक्मम्, "रुक्मग्रीष्म-" ॥ (उणा-३४६) ॥ इति मे निपात्यते ॥ १४ ॥ १०९ ॥ कलं सुवर्णकालिका तद्धौतमस्मिन् कलधौतम् ॥ १५ ॥ लोहेषूत्तमं लोहोत्तमम् ॥ १६ ॥ वह्नेर्बीज वह्निबीजम्, यदाह -"अग्नेरपत्य प्रथमं सुवर्णम्" इति ॥ १७ ॥ गरुडस्येद गारुडम् ॥ १८ ॥ गिरौ जात गैरिकम् ॥ १९ ॥ जात रूपमस्य जातरूपमकृतकरूप सुद्रीदेशजम् ॥२०॥ तप्यते तपनीयम् ॥ २१ ॥ चमीकराकरे भव चामीकरम् ॥ २२ ॥ चन्दते चन्द्र, पुक्लीबलिङ्ग, ॥२३॥ भ्रियते भर्म, क्लीबलिङ्ग, "मन्" ॥ (उणा-९११) ॥ इति मन् ॥२४॥ अर्ज्यते पुण्यैरर्जुनम् ॥ २५ ॥ निषीदति मनोऽत्र निष्क, पुंक्लीबलिङ्ग, "निष्क-तुरुष्क-" ॥ (उणा-२६) ॥ इति के निपात्यते ॥ २६ ॥ कृतस्वराऽऽकरे भव कार्तस्वरम् ॥ २७ ॥ कर्वति लोहमध्ये दृप्यति कर्बुरम्, "वाश्यासि-" ॥ (उणा-४२३) ॥ इत्युर, नानारूपत्वाद् वा ॥२८॥११०॥ जम्बूद्वीपे जम्बूफल-रसोत्थनद्या जातं जाम्बूनदम्, यत्पुराणम्-

तीरमृत् तद्रस प्राप्य मुखवायुविशोषिता ।
जाम्बूनदाख्य भवति सुवर्ण सिद्धभूषणम् ॥ १ ॥ २९ ॥

शातकुम्भे गिरौ भव शातकुम्भम्, अनुशतिकादित्वादुभयपदवृद्धौ शातकौम्भमपि ॥ ३० ॥ रज्यते रजतम् ॥ ३१ ॥ भवत्याकरे भूरि, "भूसूकुशि" ॥ ( उणा–६९३ ) ॥ इति किद् रि, क्लीबलिङ्गोऽयम्, वाचस्पतिस्तु– "भूरिरष्टापदोऽस्त्रियाम्" इति पुस्यप्याह ॥ ३२ ॥ भुवि उत्तम भूत्तमम् ॥ ३३ ॥

शेषश्चात्र–सुवर्णे लोभन शुक्र नारजीवनमौजसम् ।
दाक्षायण रक्तवर्ण श्रीमकुम्भ शिलोद्भवम् ॥
वैणव तु कर्णिकारच्छाय वेणुभटीभवम ।

## हिरण्यकोशाकुप्यानि हेम्नि रूप्ये कृताकृते ॥ १११ ॥

ह्रियते हिरण्यम् ॥ १ ॥ कूयते कोशम्, "कोर्वा" ॥ ( उणा– ५२९ ) ॥ इति श ॥ २ ॥ न कुप्यमकुप्यम्, हेम्नि रूप्ये च कृताकृते घटिताऽघटिते इत्यर्थ ॥ ३ ॥

## कुप्यं तु तद्द्वयादन्यद्

हेमरूप्याभ्यामन्यत् ताम्रादि गोपाय्यते तादिति कुप्यम्, "कुप्यभिद्य-" ॥ ५।१।३९ ॥ इति क्यपि निपात्यते ॥ १ ॥

## रूप्यं तु द्वयमाहतम् ।

आहत रूपमस्य रूप्य दीनारादि, "रूपात्प्रशस्ताहतात्" ॥ ७।२।५४ ॥ इति य, द्वयमिति कुप्याकुप्यम् ॥ १ ॥

## अलङ्कारसुवर्णं तु शृङ्गीकनकमायुधम् ॥ ११२ ॥

अलङ्काराय सुवर्णमलङ्कारसुवर्णम् ॥ १ ॥ शृङ्गी अलङ्कारमकरिका तदर्थं कनकं शृङ्गीकनकम् ॥ २ ॥ आयुधमिव आयुधम् ॥ ३ ॥ ११२ ॥

## रजतं च सुवर्णं च सश्लिष्टे घनगोलक. ।

घनश्चासौ गोलकश्च घनगोलक, पुक्लीबलिङ्ग, यद्वाचस्पति – "तारहेम्नी तु सश्लिष्टे घनगोलकमस्त्रियाम्" इति ॥ १ ॥

## पित्तलाऽऽरे

पित्त लाति पित्तला, स्त्रीक्लीबलिङ्ग ॥१॥ आ इयर्ति आर, पुलिङ्गस्तत्र, वाचस्पतिस्तु– "पित्तल त्वारमस्त्रियाम्" इति क्लीबेऽप्याह ॥ २ ॥

## अथाऽऽरकूटः कपिलोहं सुवर्णकम् ॥ ११३ ॥

## रिरी रीरी च रीतिश्च पीतलोह सुलोहकम् ।

आ इयर्ति आरस्तस्य कूट आरकूट , पुक्लीबलिङ्ग', कश्चिदमुं पित्तलापर्याय-माह ॥ १ ॥ कपिवर्ण लोह कपिलोहम् ॥ २ ॥ सुवर्णप्रतिकृति सुवर्ण-कम् ॥ ३॥११३ ॥ रीयते द्रवति रिरी, रीरी, "खुरक्षुर-" ॥ (उणा- ३९६ ) ॥ इति रे निपात्यते ॥ ४ ॥ ५ ॥ रिणन्त्येना रीति ॥ ६ ॥ पीतवर्ण लोह पीत-लोहम् ॥ ७ ॥ शोभन लोह सुलोहम् ॥ ७ ॥

ब्राह्मी तु राज्ञी कपिला ब्रह्मरीतिर्महेश्वरी ॥ ११४ ॥

ब्रह्मण इयं ब्राह्मी ॥ १ ॥ राजते राज्ञी ॥ २ ॥ कापिला वर्णेन ॥३॥ ब्रह्मणो रीतिर्ब्रह्मरीति ॥ ४ ॥ महती चासावीश्वरी च महेश्वरी ॥ ५ ॥ ११४ ॥

कास्ये विद्युत्प्रिय घोष. प्रकाश वङ्ग-शुल्वजम् ।
घण्टाशब्दमसुराह्वरवण लोहजं मलम् ॥ ११५ ॥

कसाय इद द्रव्य कसीय तस्य विकार कास्यम्, "कसीयाञ्ञ्य " ॥ ६ । २ । ४१ ॥ इति साधु , कसमेव वा भेषजादित्वाट् ष्यण् तत्र ॥ १ ॥ विद्युत प्रिय विद्युत्प्रियम् ॥ २ ॥ घोषति घोष ॥ ३ ॥ प्रकाशते प्रकाशम् ॥ ४ ॥ वङ्ग शुल्वाभ्या जायते वङ्गशुल्वजम् ॥ ५ ॥ घण्टाया इव शब्दोऽस्य घण्टाशब्दम्, घण्टाया शब्दोऽस्येति वा ॥ ६ ॥ असुरस्य कसनाम्न आह्वाऽस्य असुराह्व कसमित्यर्थ. ॥ ७ ॥ रौति रवणम् ॥ ८ ॥ लोहाभ्या जायते लोहजम् ॥ ९ ॥ मलोऽस्त्यस्य मलम् ॥ १० ॥ ११५ ॥

सौराष्ट्रके पञ्चलोहं

सुराष्ट्राया भवं सौराष्ट्र के सौराष्ट्रकम्, तत्र ॥ १ ॥ पञ्च ताम्र रीति त्रपु-सीसक कालायसलक्षणानि लोहान्यस्मिन् पञ्चलोहम् ॥ २ ॥

वर्तलोह तु वर्तकम् ।

वर्तते आवर्तते वर्तम्, तच्च तद् लोह च वर्तलोहम् ॥ १ ॥ वर्तते आवर्तते वर्तकम् ॥ २ ॥

पारदः पारत सूतो हरबीज रसश्चलः ॥ ११६ ॥

पार ददाति पारद , पार तनोति पारत , "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड , अर्थप्राधान्यात् पुक्लीबलिङ्गावेतौ ॥१॥२॥ सूते हेमायुषी सूत , शिवात् प्रसूतो वा ॥ ३ ॥ हरस्य बीज हरबीजम् ॥ ४ ॥ रस्यते रसायनार्थिभिरिति रस. ॥ ५ ॥ चलोऽस्थैर्यात्, चपलोऽपि ॥ ६ ॥ ११६ ॥

अभ्रक स्वच्छपत्रं खमेघाख्य गिरिजामले ।

अभ्रप्रतिकृतिरभ्रकम् ॥ १ ॥ स्वच्छानि पत्राण्यस्य स्वच्छपत्रम् ॥ २ ॥

छलिओ छलाइणा सो मन्ने माइदजालिओ वावि ।
को जाणइ कह वत्तं इत्ताहे वट्टमाणी से ? ॥ २० ॥
सो पक्खंतरमेग पि जाइ जइ तओ मि तस्सेव ।
सीसत्तं हुज्ज गओ वुत्तु पत्तो जिणसगासं ॥ २१ ॥
आभट्ठो अ जिणेण० ॥ २२ ॥
हे ! अग्गिभूइ ! गोअम ! सागयमुत्ते० ॥ २३ ॥
जइ वा हिअय० ॥ २४ ॥
किं मन्नि अत्थि कम्मं उआहु नत्थित्ति ससओ तुज्झ ? ।
वेअपयाण० ॥ २५ ॥
छिन्नम्मि० ॥ २६ ॥
ते पव्वइए सोउं तइओ आगच्छइ जिणसगासं ।
वच्चामि ण वन्दामि वदित्ता पज्जुवासामि ॥ २७ ॥
सीसत्तेणोवगया संपइ इंद-ग्गिभूइणो जस्स ।
तिहुअणकयपणामो स महाभागोऽभिगमणिज्जो ॥ २८ ॥

---

छलितश्छलादिना स, मन्ये मायेन्द्रजालिको वाऽपि ।
को जानाति कथ वृत्तमेतस्मिन् वर्तमाना तस्य ? ॥ २० ॥
स पक्षान्तरमेकमपि याति यदि ततोऽस्मि तस्यैव ।
शिष्यत्वेन भवेयं गत उक्त्वा प्राप्तो जिनसकाशम् ॥ २१ ॥
हे ! अग्निभूते ! ( शेष पूर्ववत् ) ॥ २३ ॥
कि मन्यसे अस्ति कर्म उताहो नास्ति इति संशयस्तव ? ॥ २५ ॥
तौ प्रव्रजितौ श्रुत्वा तृतीय आगच्छति जिनसकाशम् ।
व्रजामि वन्दे वन्दित्वा पर्युपासे ॥ २७ ॥
शीष्यत्वेन उपगतौ सप्रति इन्द्राऽग्निभूती यस्य ।
त्रिभुवनकृतप्रणाम स महाभागोऽभिगमनीय ॥ २८ ॥

तदभिगम-वंदण-नमसणाइणा हुज्ज पूअपावो हं ।
वुच्छिन्नससओ वा वुत्तु पत्तो जिणसगास ॥ २९ ॥
आभट्ठो अ जिणेण० ॥ ३० ॥
तज्जीव तस्सरीर संसओ, न वि अ पुच्छसे किंचि ।
वेअपयाण० ॥ ३१ ॥
छिन्नम्मि० ॥ ३२ ॥
ते पव्वइए सोउ विअत्तो आगच्छइ जिणसगास ।
वच्चामि ण वन्दामि वदित्ता पज्जुवासामि ॥ ३३ ॥
आभट्ठो अ जिणेणं० ॥ ३४ ॥
कि मन्नि पंच भूआ अत्थि नत्थित्ति संसओ तुज्झं? ।
वेअपयाणं० ॥ ३५ ॥
छिन्नम्मि० ॥ ३६ ॥
ते पव्वइए सोउ सुहम्मो आगच्छइ जिणसगासं ॥ ३७ ॥
आभट्ठो अ जिणेणं० ॥ ३८ ॥
किं मन्नि जारिसो इह भवम्मि सो तारिसो परभवे वि ।
वेअपयाण० ॥ ३९ ॥

---

[1] तदभिगम-वन्दन-नमस्यनादिना भवेय पूतपापोऽहम् ।
व्युच्छिन्नसशयो वा उक्त्वा प्राप्तो जिनसकाशम् ॥ २९ ॥
तज्जीव तच्छरीरं सशय, नाऽपि च पृच्छसि किञ्चित् ॥३१॥
तान् प्रव्रजितान् श्रुत्वा व्यक्त आगच्छति जिनसकाशम् ।
व्रजामि वन्दे वन्दित्वा पर्युपासे ॥३३॥
किं मन्यसे पञ्च भूतानि सन्ति न सन्तीति संशयस्तव? ॥३५॥
स प्रव्रजित श्रुत्वा सुधर्मा आगच्छति जिनसकाशम् ॥३७॥
किं मन्यसे यादृश इह भवे स तादृश. परभवेऽपि ॥ ३९ ॥

छिन्नम्मि० ॥ ४० ॥

ते पव्वइए सोउं मंडिओ आगच्छइ जिणसगासं ॥ ४१ ॥

आभट्ठो अ जिणेणं० ॥ ४२ ॥

किं मन्नि बध-मुक्खो अत्थि नत्थित्ति संसओ तुज्झ ? ।

वेअपयाण० ॥ ४३ ॥

छिन्नम्मि० ।

अद्धुट्ठेहिं सह खडियसएहिं ॥ ४४ ॥

ते पव्वइए सोउ मोरिउ आगच्छइ जिणसगास ॥ ४५ ॥

आभट्ठो अ जिणेणं० ॥ ४६ ॥

किं मन्नि अत्थि देवा उआहु नत्थित्ति संसओ तुज्झं ? ॥४७॥

छिन्नम्मि० ।

अद्धुट्ठेहिं सह खंडिअसएहिं ॥ ४८ ॥

ते पव्वइए सोउ अकपिओ आगच्छइ जिणसगासं ॥ ४९ ॥

आभट्ठो अ जिणेणं० ॥ ५० ॥

किं मन्ने नेरइआ अत्थि नत्थित्ति ससओ तुज्झ ? ।

वेअपयाण० ॥ ५१ ॥

छिन्नम्मि० ।

तिहि ओ सह खडिअसएहिं ॥ ५२ ॥

---

तान् प्रव्रजितान् श्रुत्वा मण्डित आगच्छति जिनसकाशम् ॥४१॥

किं मन्यसे बन्ध मोक्षौ स्तो न स्त इति संशयस्तव ? ॥ ४३ ॥

अर्धचतुर्थै सह खण्डिकशतै ० ॥४४॥

स प्रव्रजित श्रुत्वा मौर्य आगच्छति जिनसकाशम् ॥४५॥

किं मन्यसे सन्ति देवा उताहो न सन्तीति सशयस्तव ? ॥ ४७ ॥

तान् प्रव्रजितान् श्रुत्वा अकम्पित ० ॥४९॥

कि मन्यसे नैरयिका सन्ति न सन्तीति सशयस्तव ?॥५१॥

छिन्ने । त्रिभिस्तु सह खण्डिकशतै ॥५२॥

ते पव्वइए सोउ अयलभाया आगच्छइ जिणसगासं ॥५३॥

आभट्ठो अ जिणेणं० ॥ ५४ ॥

किं मन्नि पुण्णपावा अत्थि नत्थित्ति ससओ तुज्झं ? ॥५५॥

छिन्नम्मि० ।

तिहि ओ सह खडिअसएहि ॥ ५६ ॥

ते पव्वइए सोउ मेअज्जो आगच्छइ जिणसगासं ॥ ५७ ॥

आभट्ठो अ जिणेण० ॥ ५८ ॥

किं मन्ने परलोओ अत्थि नत्थित्ति संसओ तुज्झ ? ॥ ५९ ॥

छिन्नम्मि० ।

तिहि ओ सह खडिअसएहिं ॥ ६० ॥

ते पव्वइए सोउं पहासो आगच्छइ जिणसगास ॥ ६१ ॥

आभट्ठो अ जिणेणं० ॥ ६२ ॥

किं मन्ने निव्वाणं अत्थि नत्थित्ति संसओ तुज्झ ? ॥ ६३ ॥

छिन्नम्मि० ।

तिहि ओ सह खंडियसएहिं ॥ ६४ ॥

---

तान् प्रव्रजितान् श्रुत्वा अचलभ्राता आगच्छति० ॥५३॥

किं मन्यसे पुण्य-पापे स्तो न स्त इति सशयस्तव ? ॥५५॥

छिन्ने । त्रिभिस्तु सह खण्डिकशतै ॥५६॥

तान् प्रव्रजितान् श्रुत्वा मेतार्य आगच्छति० ॥५७॥

किं मन्यसे परलोकोऽस्ति नास्ति इति सशयस्तव ? ॥५९॥

छिन्ने । त्रिभिस्तु सह खण्डिकशतै ० ॥६०॥

तान् प्रव्रजितान् श्रुत्वा प्रभास आगच्छति० ॥६१॥

किं मन्यसे निर्वाणमस्ति नास्ति ?० ॥६३॥

छिन्ने । त्रिभिस्तु सह खण्डिकशतै ० ॥६४॥

खित्ते काले जम्मे गुत्तमगार छउमत्थपरिआए ।
केवलि अ आउ आगम परिनिव्वाणे तवे चेव ॥ ६५ ॥
मगहा गुब्बरगामे जाया तिन्नेव गोयमसगुत्ता ।
कुल्लागसंन्निवेसे जाओ वियत्तो सुहम्मो अ ॥ ६६ ॥
मोरीअ सनिवेसे दो भायर मडि-मोरिआ जाया ।
अयलो अ कोसलाए मिहिलाए अकपिओ जाओ ॥ ६७ ॥
तुगीअ सनिवेसे मेअज्जो वच्छभूमीए जाओ ।
भगवं पि य पभासो रायगिहे गणहरो जाओ ॥ ६८ ॥
जिट्ठा कत्तिअ साई सवणो हत्थुत्तरा माहओ अ ।
रोहिणि उत्तरसाढा मिगसिर तह अस्सिणी पुस्सो ॥ ६९ ॥
वसुभूई धणमित्तो धम्मिल धणदेव मोरिए चेव ।
देवे वसू अ दत्ते बले अ पिअरो गणहराण ॥ ७० ॥
पुहवी अ वारुणी भद्दिला य विजयदेवा ।
तहा जयती य नंदा य वरुणदेवा अइभद्दा य मायरो ॥ ७१ ॥

---

क्षेत्र कालो जन्म गोत्रमगार छद्मस्थपर्याय ।
केवली च आयु आगम परिनिर्वाण तपश्चैव ॥ ६५ ॥
मगधे गोवरग्रामे जातास्त्रय एव गौतमसगोत्रा ।
कोल्लाकसन्निवेशे जातो व्यक्त सुधर्मा च ॥ ६६ ॥
मौर्या सन्निवेशे द्वौ भ्रातरौ मण्डित-मौर्यौ जातौ ।
अचलश्च कोशलाया मिथिलायामकम्पितोऽजनि ॥ ६७ ॥
तुङ्गया सन्निवेशे मेतार्यो वत्सभूमावजनिष्ट ।
भगवानऽपि प्रभासो राजगृहे गणधरो जात ॥ ६८ ॥
ज्येष्ठा कृत्तिका स्वाति श्रवणो हस्तोत्तरा मघाश्च ।
रोहिणी उत्तराषाढा मृगशिरस्तथा अश्विनी पुष्य ॥ ६९ ॥
वसुभूतिर्धनमित्रो धम्मिलो धनदेवो मौर्यश्चैव ।
देवो वसुश्च दत्तो बलश्च पितरो गणधराणाम् ॥ ७० ॥
पृथिवी च वारुणी भद्रिला च विजयदेवा ।
तथा जयन्ती च नन्दा च वरुणदेवा अतिभद्रा च मातर ॥ ७१ ॥

तिन्नि अ गोअमगुत्ता भारद्दा अग्गिवेस वासिट्ठा ।
कासव गोअम हारिअ कोडिन्नदुगं च गुत्ताइ ॥ ७२ ॥
पन्ना छायालीसा बायाला होइ पन्न पन्ना य ।
तेवन्न पचसट्ठी अडयालीसा य छायाला ॥ ७३ ॥
छत्तीसा सोलसग अगारवासो भवे गणहराण ।
छउमत्थपरियाग अहक्कम कित्तइस्सामि ॥ ७४ ॥
तीसा बारस दसग बारस बायाल चउद्दसदुग च ।
नवग बारस दस अट्ठगं च छउमत्थपरिआओ ॥७५॥
छउमत्थपरियाग अगारवासं च वुक्कसित्ता णं ।
सव्वाउअस्स सेस जिणपरियागं वियाणाहि ॥७६ ॥
बारस सोलस अट्ठारसेव अट्ठारसेव अट्ठेव सोलस ।
सोलस तह इक्कवीस चउदस सोले अ सोले अ ॥७७॥
बाणउई चउहत्तरि सत्तरि तत्तो भवे असीई य ।
एगं च सयं तत्तो तेसीई पचनउईआ ॥ ७८ ॥

---

त्रयश्च गौतमगोत्रा भारद्वाजोऽग्निवैश्यो वासिष्ठ ।
काश्यपो गौतमो हारित कौण्डिन्यद्विक चं गोत्राणि ॥ ७२ ॥
पञ्चाशत् षट्चत्वारिंशत् द्वाचत्वारिंशत् भवति पञ्चाशत् पञ्चाशच्च ।
त्रिपञ्चाशत् पञ्चषष्टि अष्टचत्वारिंशच्च षट्चत्वारिंशत् ॥ ७३ ॥
षट्त्रिंशत् षोडशकमगारवासो भवेद् गणधराणाम् ।
छद्मस्थपर्याय यथाक्रम कीर्तयिष्यामि ॥ ७४ ॥
त्रिंशद् द्वादश दशक द्वादश द्वाचत्वारिंशत् चतुर्दशद्विक च ।
नवक द्वादश दश अष्टक च छद्मस्थपर्याय ॥ ७५ ॥
छद्मस्थपर्यायमगारवासं च व्यवकलय्य ।
सर्वायुष शेषं जिनपर्याय विजानीहि ॥ ७६ ॥
द्वादश षोडश अष्टादशैव अष्टादशैव अष्टैव षोडश ।
षोडश तथैकविंशतिश्चतुर्दश षोडश च षोडश च ॥ ७७ ॥
द्वानवतिश्चतु सप्तति सप्ततिस्ततो भवेद् अशीतिश्च ।
एक च शत ततस्त्र्यशीति पञ्चनवतिः ॥ ७८ ॥

---

१ तमेव नीचैर्दर्शयति ।

अट्ठत्तरिं च वासा तत्तो च बावत्तरिं वासाइ ।
बावट्ठी चत्ता खलु सव्वगणहराउअ एअं ॥ ७९ ॥
सव्वे य माहणा जच्चा सव्वे य अज्झावया विऊ ।
सव्वे दुवालसगीआ सव्वे चउदसपुव्विणो ॥ ८० ॥
परिनिव्वुआ गणहरा जीवते नायए नव जणा ओ ।
इदभूई सुहम्मो अ रायगिहे निव्वुए वीरे ॥ ८१ ॥
मासं पावोवगया सव्वे वि य सव्वलद्धिसपन्ना ।
वज्जरिसहसंघयणा समचउरसा य संठाणे ॥ ८२ ॥

गणहरवाओ सम्मत्तो ।

दव्वे अद्ध अहाउअवक्कमे देस कालकाले य ।
तह य पमाणं वन्ने भावे पगय तु भावेण ॥ १ ॥

---

अष्टसप्ततिश्च वर्षाणि ततश्च द्वासप्ततिर्वर्षाणि ।
द्वाषष्टिश्चत्वारिंशत् खलु सर्वगणधराऽऽयुष्कमेतत् ॥ ७९ ॥
सर्वे च ब्राह्मणा जात्या सर्वे च अध्यापका विद्वाम ।
सर्वे द्वादशाङ्गिन सर्वे चतुर्दशपूर्विण ॥ ८० ॥
परिनिर्वृता गणधरा जीवति ज्ञातके[1] नव जनास्तु ।
इन्द्रभूति सुधर्मा च राजगृहे निर्वृते वीरे ॥ ८१ ॥
मास पादपोपगता सर्वेऽपि च सर्वलब्धिसपन्ना ।
वज्रऋषभसहनना समचतुरस्राश्च संस्थाने[2] ॥ ८२ ॥

॥ गणधरवाद समाप्त ॥

द्रव्ये अद्धा अथाऽऽयुष्कमुपक्रमो देश कालकालश्च ।
तथा च प्रमाणं वर्णो भाव प्रकृत तु भावेन ॥ १ ॥

---

१ ज्ञातकुलोत्पन्ने श्रीवीरे । २ शरीराकृतौ ।

चेयणमचेयणस्स य दव्वस्स ट्ठिई ओ जा चउविगप्पा ।
सो होइ दव्वकालो अहवा दविअ तु तं चेव ॥ २ ॥
गइ सिद्धा भविआ य अभविअ पुग्गल अणागयद्धा य ।
अतीयद्ध तिन्नि काया जीवा जीवट्ठिई चउहा ॥ ३ ॥
समयावलिअ मुहुत्ता दिवस अहोरत्त पक्ख मासो य ।
सवच्छर जुग पलिया सागर ओसप्पि पराअट्ट ॥ ४ ॥
नेरईअ-तिरिय-मणुस-देवाण अहाउअं तु जं जेण ।
निव्वत्तिअमन्नभवे पालति अहाउकालो सो ॥ ५ ॥
दुविहोवक्कमकालो सामायारी अहाउअ चेव ।
सामायारी तिविहा उहे दसहा पयविभागे ॥ ६ ॥

॥ इत्थन्तरे उ ओहनिजुत्ती भाणियव्वा ॥-

अरिहन्ते वदित्ता चउदसपुव्वी तहेव दसपुव्वी ।
इक्कारसगसुत्तत्थधारए सव्वसाहू अ ॥ ७ ॥

---

चेतनाऽचेतनयोश्च द्रव्यस्य स्थितिस्तु या चतुर्विकल्पा ।
स भवति द्रव्यकालोऽथवा द्रव्यं तु तदेव ॥ २ ॥
गति सिद्धा भव्याश्चाऽभव्या पुद्‌गला अनागताऽद्धा च ।
अतीताद्धा त्रय काया जीवा जीवस्थितिश्चतुर्धा ॥ ३ ॥
समया आवलिका मुहूर्त दिवसोऽहोरात्र पक्षो मासश्च ।
सवत्सरो युग पल्योपम सागर उत्सर्पिणी परावर्त. ॥ ४ ॥
नैरयिक तिर्यग्-मनुष्य-देवाना यथाऽऽयुष्कं तु यद् येन ।
निर्वर्तितमन्यभवे पालयन्ति यथाऽऽयु काल स ॥ ५ ॥
द्विविध उपक्रमकाल सामाचारी यथाऽऽयुष्क चैव ।
सामाचारी त्रिविधा ओघा दशधा पदविभाग ॥ ६ ॥

॥ अत्रान्तरे तु ओघनिर्युक्तिर्भणितव्या ॥-

अर्हतो वन्दित्वा चतुर्दशपूर्विणस्तथैव दशपूर्विण ।
एकादशाङ्गसूत्रार्थधरान् सर्वसाधूंश्च ॥ ७ ॥

---

१ समूहरूपा सक्षिप्ता इति यावत् ।

इच्छा मिच्छा तहक्कारे आवस्सिआ य निसीहिआ ।
आपुच्छणा य पडिपुच्छा छदणा य निमतणा ॥ ८ ॥
उवसपया य काले सामायारी भावे दसविहाओ ।
एएसिं तु पयाण पत्तेअ परूवण वुच्छ ॥ ९ ॥
जइ अब्भत्थिज्ज पर कारणजाए करिज्ज से को इ ।
तत्थ वि इच्छाकारो न कप्पइ बलाभिओगाओ ॥ १० ॥
अब्भुवगयम्मि नज्जइ अब्भत्थेउ न वट्टइ परो ओ ।
अणिगूहिअबलविरिएण साहुणा ताव होअव्व ॥ ११ ॥
जइ हुज्ज तस्स अनलो कज्जस्स वियाणइ नवा वाण ।
गेलन्नाईहि वि हुज्ज वावडो करणेहि सो ॥ १२ ॥
राइणियं वज्जित्ता इच्छाकार करेइ सेसाणं ।
एअ मज्झं कज्ज तुब्भेह करेह इच्छाए ॥ १३ ॥
अहवा वि विणासत अब्भत्थत च अन्न दट्ठूणं ।

---

इच्छाकारो मिथ्याकारस्तथाकार आवश्यकी च नैषेधिकी ।
आपृच्छना च प्रतिपृच्छा छन्दना च निमन्त्रणा ॥ ८ ॥
उपसपच्च काले सामाचारी भावे दशविधा ।
एतेषा तु पदाना प्रत्येक प्ररूपणा वक्ष्ये ॥ ९ ॥
यदि अभ्यर्थयेत पर कारणजाते कुर्यात् तस्य कोऽपि ।
तत्राऽपि इच्छाकारो न कल्पते बलाऽभियोगात् ॥ १० ॥
अभ्युपगते ज्ञायतेऽभ्यर्थयितु न वर्तते परस्तु ।
अनिगूहितबलवीर्येण साधुना तावद् भवितव्यम् ॥ ११ ॥
यदि भवेत् तस्य अनल[1] कार्यस्य विजानाति न वा ।
ग्लानादिभिरपि भवेद् व्यापृत करणै स ॥१२॥
रत्नाधिक वर्जयित्वा इच्छाकार करोति शेषाणाम् ।
एतद् मम कार्य यूय कुरुत इच्छया ॥१३॥
अथवाऽपि विनाशयन्तमभ्यर्थयमान च अन्य दृष्ट्वा ।

---

१ असमर्थ ।

अन्नो को इ भणिज्जा तं साहुं निज्जरट्ठिओ ॥ १४ ॥
अहय तुब्भ एअ कज्जं तु करेमि इच्छकारेणं ।
तत्थ वि सो इत्थ से करेइ मज्जायमूलीअ ॥ १५ ॥
अहवा सय करंत किंची अन्नस्स वा वि दट्ठूण ।
तस्स वि करेइ इत्थ मज्झ पि इम करेह त्ति ॥ १६ ॥
तत्थ वि सो इत्थ से करेइ दीवेइ कारण वावि ।
इहरा अणुग्गहत्थं कायव्वं साहुणो किच्चं ॥ १७ ॥
अहवा नाणाईण अट्ठाए जइ करिज्ज किच्चाणं ।
वेआवच्चं कोई तत्थ वि तेसिं भवे इच्छा ॥ १८ ॥
आणा बलाभिओगो निग्गन्थाणं न कप्पए काउ ।
इच्छा पउजिअव्वा सेहे रायणिए तहा ॥ १९ ॥
जह जच्चवाहलाणं आसाणं जणवएसु जायाणं
सयमेव खलिणगहणं अहवा वि बलाभिओगेणं ॥ २० ॥

---

अन्य कोऽपि भणेत् त साधु निर्जरार्थिक ॥१४॥
अह युष्माकमेतत् कार्य तु करोमि इच्छाकारेण ।
तत्राऽपि स इत्थ तस्य करोति मर्यादामूलीयम् ॥१५॥
अथवा स्वकं कुर्वन्त किंचिदन्यस्य वाऽपि दृष्ट्वा ।
तस्याऽपि करोति इत्थ ममाऽपि इदं कुरुतेति ॥१६॥
तत्राऽपि स इत्थ तस्य करोति दीपयति कारणं वाऽपि ।
इतरथाऽनुग्रहार्थं कर्तव्यं साधो कृत्यम् ॥ १७ ॥
अथवा ज्ञानादीनामर्थाय यदि कुर्यात् कृत्यानि ।
वैयावृत्य कोऽपि तत्राऽपि तेषा भवेद् इच्छा ॥ १८ ॥
आज्ञा बलाऽभियोग निर्ग्रन्थाना न कल्पते कर्तुम् ।
इच्छा प्रयोक्तव्या शैक्षे रत्नाधिके तथा ॥१९॥
यथा जात्यवाल्हीकानामश्वाना जनपदेषु जातानाम् ।
स्वयमेव खलीनग्रहणमथवाऽपि बलाभियोगेन ॥२०॥

पुरिसज्जाए वि तहा विणीअविणयम्मि नत्थि अभिओगो ।
सेसम्मि अ अभिओगो जणवयजाअे जहा आसे ॥ २१ ॥
अब्भत्थणाइ मरुओ वानरओ चेव होइ दिट्ठन्तो ।
गुरुकरणे सयमेव उ वाणिअगो दुन्नि दिट्ठन्ता ॥ २२ ॥
सुत्तत्थेसु अ चिन्तण आएसे वुड्ढ-सेहग-गिलाणे ।
बाले खवगे वाई इड्ढीमाई अणिड्ढी अ ॥ २३ ॥
एएहि कारणेहिं तुम्बभूओ होइ आयरिओ ।
वेआवच्चं करणे कायव्व तस्स सेसेहि ॥ २४ ॥
जेण कुल आइन्न त पुरिस आयरेण रक्खेह ।
न हु तुंबम्मि विणट्ठे अरगा साहारगा हुन्ति ॥ २५ ॥
वेआवच्चे अब्भुट्ठिअस्स सद्धाइ काउकामस्स ।
लाभो चेव तवस्सिस्स होइ अदीणमणसस्स ॥ २६ ॥
सजम–जोगे अब्भुट्ठिअस्स जं किंचि वितहमायरिअं ।

---

पुरुषजातेऽपि तथा विनीतविनये नास्ति अभियोग ।
शेषे त्वऽभियोगो जनपदजाते यथाऽश्वे ॥ २१ ॥
अभ्यर्थनाया मरुको वानरकश्चैव भवति दृष्टान्त ।
गुरुकरणे स्वयमेव च वणिग्द्वय दृष्टान्त ॥ २२ ॥
सूत्रार्थेषु च चिन्तनमादेशे वृद्ध शैक्ष ग्लाने ।
बाले क्षपके वादी ऋद्धिमान् अनृद्धिश्च ॥२३॥
एतै कारणैस्तुम्बभूतो भवति आचार्य ।
वैयावृत्य करणे कर्तव्य तस्य शेषै ॥२४॥
येन कुलमाचीर्णं त पुरुषमादरेण रक्षत ।
न तु तुम्बे विनष्टे अरका साधारका भवन्ति ॥२५॥
वैयावृत्येऽभ्युत्थितस्य श्रद्धया कर्तुकामस्य ।
लाभश्चैव तपस्विनो भवति अदीनमानसस्य ॥ २६ ॥
संयमयोगे अभ्युत्थितस्य यत् किंचिद् वितथमाचरितम् ।

वायणपडिसुणणाए उवएसे सुत्त-अत्थकहणाए ।
अवितहमेअ ति तहा पडिसुणणाए अ तहक्कारो ॥ ३४ ॥
जस्स य इच्छाकारो मिच्छाकारो अ परिचिआ दो वि ।
तइओ अ तहक्कारो न दुल्लहा सुग्गई तस्स ॥ ३५ ॥
आवस्सय च निअन्तो ज च अ इन्तो निसीहिअ कुणइ ।
एअ इच्छ नाउ गणिवर ! तुज्झतिए निउण ॥ ३६॥
आवस्सय च निअन्तो जं च अ इन्तो निसीहिअ कुणइ ।
वञ्जणमेअ तु दुहा अत्थो पुण होइ सो चेव ॥ ३७ ॥
एगग्गस्स पसन्तस्स न हुति, इरिआदओ गुणा हुति ।
गतव्वमवस्स कारणम्मि आवस्सिआ होइ ॥ ३८ ॥
आवस्सिआ उ आवस्सएहिं सव्वेहि जुत्तजोगिस्स ।
मणवयणकायगुत्तिन्दिअस्स आवस्सिआ होइ ॥ ३९ ॥
सिज्ज ठाणं च जहिं चेइए तहिं निसीहिआ होइ ।

---

वाचनाप्रतिश्रवणायामुपदेशे सूत्रार्थकथनायाम् ।
अवितथमेतदिति तथा प्रतिश्रवणाया च तथाकार ॥ ३४ ॥
यस्य च इच्छाकारो मिथ्याकारश्च परिचितौ द्वावपि ।
तृतीयश्च तथाकारो न दुर्लभा सुगतिस्तस्य ॥ ३५ ॥
आवश्यकी च निर्गच्छन् यच्च आगच्छन् नैषेधिकी करोति ।
एतद् इच्छामि ज्ञातु गणिवर ! तवाऽन्तिके निपुणम् ॥ ३६ ॥
आवश्यकी च निर्गच्छन् यच्च आयन् नैषेधिकीं करोति ।
व्यञ्जनमेतत्तु द्विधा अर्थ पुनर्भवति स एव ॥ ३७ ॥
एकाग्रस्य प्रशान्तस्य न भवन्ति, ईर्यादयो गुणा भवन्ति ।
गन्तव्यमवश्य कारणे आवश्यकी भवति ॥ ३८॥
आवश्यकी तु आवश्यकै सर्वै युक्तयोगिन ।
मनोवचनकायगुप्तेन्द्रियस्य आवश्यकी भवति ॥ ३९ ॥
शय्या स्थान च यत्र चैत्ये तत्र नैषेधिकी भवति ।

जम्हा तत्थ निसिद्धो तेण तु निसीहिआ होइ ॥ ४० ॥
जो होइ निसिद्धप्पा निसीहिआ तस्स भावओ होइ ।
अनिसिद्धस्स निसीहिआ केवलमित्त हवइ सद्दो ॥ ४१ ॥
आवस्सयम्मि जुत्तो निअमनिसिद्धु त्ति होइ नायव्वो ।
अहवा वि निसिद्धप्पा निअमा आवस्सये जुत्तो ॥ ४२ ॥
आपुच्छणा य कज्जे पुव्वनिसिद्धेण होइ पडिपुच्छा ।
पुव्वगहिएण छन्दण निमन्तणा होइ अगहिएण ॥ ४३ ॥
उवसपया य तिविहा नाणे तह दसणे चरित्ते अ ।
दसण-नाणे तिविहा दुविहा य चरित्तअट्ठाए ॥ ४४ ॥
वत्तणा सधणा चेव गहण सुत्तत्थतदुभए ।
वेयावच्चे खमणे काले आवकहाइ अ ॥ ४५ ॥
सदिट्ठो सदिट्ठस्स चेव सपज्जइ उ एमाइ ।
चउभगो इत्थ पुण पढमो भगो हवइ सुद्धो ॥ ४६ ॥

---

यस्मात् तत्र निषिद्धस्तेन तु नैषेधिकी भवति ॥ ४० ॥
यो भवति निषिद्धात्मा नैषेधिकी तस्य भावतो भवति ।
अनिषिद्धस्य नैषेधिकी केवलमात्रं भवति शब्द ॥ ४१ ॥
आवश्यके युक्त नियमानिषिद्ध इति भवति ज्ञातव्य ।
अथवाऽपि निषिद्धात्मा नियमाद् आवश्यके युक्त ॥ ४२ ॥
आपृच्छना च कार्ये पूर्वनिषिद्धेन भवति प्रतिपृच्छा ।
पूर्वगृहीतेन छन्दना निमन्त्रणा भवति अगृहीतेन ॥ ४३ ॥
उपसपच्च त्रिविधा ज्ञाने तथा दर्शने चारित्रे च ।
दर्शन ज्ञाने त्रिविधा द्विविधा च चारित्रार्थम् ॥ ४४ ॥
वर्तना सधान चैव ग्रहणं सूत्रार्थतदुभये ।
वैयावृत्ये क्षपणे कालो यावत्कथिकाया च ॥ ४५ ॥
सदिष्ट सदिष्टस्य चैव सपद्यते तु एवमादि ।
चतुर्भङ्गोऽत्र पुनः प्रथमो भङ्गो भवति शुद्ध ॥ ४६ ॥

अथिरस्स पुव्वगहिअस्स वत्तणा जं इहं थिरीकरणं ।
तस्सेव पएसंतरनट्ठस्सणुसधण घडणा ॥ ४७ ॥
गहण तप्पढमतया सुत्ते अत्थे तदुभए चेव ।
अत्थगहणम्मि पाय एस विही होइ नायव्वो ॥ ४८ ॥
मज्जण निसिज्ज अक्खो किइकम्मुस्सग्गु वंदण जिट्ठे ।
भास तु होइ जिट्ठो न उ परिआएण तो वंदे ॥ ४९ ॥
ठाण पमज्जिऊण दुन्नि निसिज्जा य हुति कायव्वा ।
इक्का गुरुणो भणिआ बिइआ पुण होइ अक्खाणं ॥ ५० ॥
दो चेव मत्तगाइ खेले तह काइयाइ बीअ तु ।
जावइआ अ सुणंती सव्वे वि अ ते उ वदंति ॥ ५१ ॥
सव्वे काउस्सग्ग करिति सव्वे पुणो वि वदति ।
नासन्नि नाइदूरे गुरुवयणयपडिच्छगा हुति ॥ ५२ ॥
निद्दा-विगहापरिव्वज्जिएहि गुत्तेहि पजलिउडेहि ।

---

अस्थिरस्य पूर्वगृहीतस्य वर्तना यदिह स्थिरीकरणम् ।
तस्यैव प्रदेशान्तरनष्टस्य अनुसन्धान घटना ॥ ४७ ॥
ग्रहणं तत्प्रथमतया सूत्रेऽर्थे तदुभये चैव ।
अर्थग्रहणे प्राय एष विधिर्भवति ज्ञातव्य ॥ ४८ ॥
मार्जनं निषद्या अक्ष· कृतिकर्मोत्सर्ग वन्दनं ज्येष्ठे ।
भाषस्तु भवति ज्येष्ठो न तु पर्यायेण ततो वन्देत ॥ ४९
स्थान प्रमार्ज्य द्वे निषद्ये च भवत कर्तव्ये ।
एका गुरोर्भणिता द्वितीया पुनर्भवति अक्षाणाम् ॥ ५० ॥
द्वे एव मातृके खेलस्तथा कायिकादि द्वितीय तु ।
यावन्तश्च श्रृण्वन्ति सर्वेऽपि च ते तु वन्दन्ते ॥ ५१ ॥
सर्वे कायोत्सर्ग कुर्वन्नि सवेऽपि पुनरपि वन्दन्ते ।
नाऽऽसन्ने नाऽतिदूरे गुरुवचनप्रतीच्छका भवन्ति ॥ ५२ ॥
निद्रा-विकथापरिवर्जितै गुप्तै प्राञ्जलिपुटै ।

---

१ भाषते भाष , भाषक इत्यर्थ ।

भत्तिबहुमाणपुव्वं उवउत्तेहि सुणेअव्व ॥ ५३ ॥
अभिकखतेहि सुभासिआइ अत्थसाराइ ।
विम्हिअमुहेहिं हरिसागएहिं हरिस जणतेहि ॥ ५४ ॥
गुरुपरितोसगएण गुरुभत्तीए तहेव विणएण ।
इच्छिअसुत्तत्थाण खिप्प पार समुवयंति ॥ ५५ ॥
वक्खाणसमत्तीए जोग काऊण काइआईण ।
वदंति तओ जिट्ठ अन्ने पुव्व चिय भणति ॥ ५६ ॥
चोएइ जओ जिट्ठो कहचि सुत्तत्थधारणाविगलो ।
वक्खाणलद्धिहीणो निरत्थय वंदण तम्मि ॥ ५७ ॥
अह वयपरियाएहिं लहुओ वि हु भासओ इह जिट्ठो ।
रायणियवंदणे पुण तस्स वि आसायणा भते ! ॥ ५८ ॥
जइवि वयमाइएहि लहुओ सुत्तत्थधारणापडुओ ।
वक्खाणलद्धिमं जो सुच्चिय इह घिप्पए जिट्ठो ॥ ५९ ॥

---

भक्तिबहुमानपूर्वमुपयुक्तै श्रोतव्यम् ॥ ५३ ॥
अभिकाङ्क्षद्भि सुभाषितानि अर्थसाराणि ।
विस्मितमुखैर्हर्षागतैर्हर्ष जनयद्भि ॥ ५४ ॥
गुरुपरितोषगतेन गुरुभक्त्या तथैव विनयेन ।
इच्छितसूत्रार्थाना क्षिप्रं पार समुपयन्ति ॥ ५५ ॥
व्याख्यानसमाप्त्या योगं कृत्वा कायिकादीनाम् ।
वन्दन्ते ततो ज्येष्ठ अन्ये पूर्वमेव भणन्ति ॥ ५६ ॥
चोदयति यतो ज्येष्ठ कथञ्चित् सूत्राऽर्थधारणाविकल ।
व्याख्यानलब्धिहीनो निरर्थकं वन्दन तस्मिन् ॥ ५७ ॥
अथ व्रतपर्यायैर्लघुकोऽपि खलु भाषक इह ज्येष्ठ ।
रत्नाधिकवन्दने पुनस्तस्याऽपि आशातना भगवन् ! ॥ ५८ ॥
यद्यपि व्रतादिकैर्लघुक सूत्रार्थधारणापटुक ।
व्याख्यानलब्धिमान् य स एव इह गृह्यते ज्येष्ठ ॥ ५९ ॥

आसायणा वि नेव पडुच्च जिणवयणभासिअं जम्हा ।
वंदणयं रायणिए तेण गुणेण तु सो चेव ॥ ६० ॥
न वओ इत्थ पमाणं न य परिआओ वि निच्छयनएणं ।
ववहारओ उ जुज्जइ उभयनयमयं पुण पमाण ॥ ६१ ॥
निच्छयओ दुन्नेय को भावे कम्मि वट्टए समणो ।
ववहारओ अ कीरइ जो पुव्वट्ठिओ चरित्तम्मि ॥ ६२ ॥
ववहारो वि हु बलव जं छमउत्थ पि वदइ अरिहा ।
जा होइ अणभिन्नो जाणतो धम्मय एय ॥ ६३ ॥
इत्थ ओ जिणवयणाओ सुत्तासायणबहुत्तदोसाओ ।
भासत जिट्ठगस्स ओ कायव्व होइ किइकम्म ॥ ६४ ॥
दुविहा य चरित्तम्मि वेयावच्चे तहेव खमणे य ।
निअगच्छादअन्नम्मि उ सीअणदोसाइणा होइ ॥ ६५ ॥
इत्तिरआइ विभासा वेआवच्चे तहेव खमणे अ ।

---

आशातनाऽपि नैवं प्रत्युत जिनवचनभाषितेन यस्मात् ।
वन्दनक रत्नाधिके तेन गुणेन तु स एव ॥ ६० ॥
न वयोऽत्र प्रमाण न च पर्यायोऽपि निश्चयनयेन ।
व्यवहारतस्तु युज्यते उभयनयमत पुन प्रमाणम् ॥ ६१ ॥
निश्चयतो दुर्ज्ञेय को भाव कस्मिन् वर्तते श्रमण ।
व्यवहारतश्च क्रियते य पूर्वस्थितश्चारित्रे ॥ ६२ ॥
व्यवहारोऽपि खलु बलवान् यत् छद्मस्थमपि वन्दते अर्हन् ।
यावद् भवति अनभिज्ञो जानन् धर्मक्रमेतम् ॥ ६३ ॥
अत्र तु जिनवचनात् सूत्राशातनाप्रभूतदोषात् ।
भाषमाणस्य ज्येष्ठकस्य तु कर्तव्य भवति कृतिकर्म ॥ ६४ ॥
द्विविधा च चारित्रे वैयावृत्ये तथैव क्षपणे च ।
निजगच्छादन्यस्मिंस्तु सीतनादोषादिना भवति ॥ ६५ ॥
इत्वराया विभाषा वैयावृत्ये तथैव क्षपणे च ।

अविगिट्ठविगिट्ठम्मि गणिणा गच्छस्स पुच्छाए ॥ ६६ ॥
उवसपन्नो ज कारण तु ज कारणं अपूरतो ।
अहवा समाणिअम्मि सारणया वा विसग्गो वा ॥ ६७ ॥
इत्तिरिअ पि न कप्पइ अविदिन्न खलु परुग्गहाईसु ।
चिट्ठत्तु निसीइत्तु च तइअव्वयायारक्खणट्ठाए ॥ ६८ ॥
एव सामायारी कहिआ दसहा[1] समासओ एसा ।
संजम-तवड्ढगाणं निग्गन्थाणं महरिसीणं ॥ ६९ ॥
एअं सामायारिं जुंजता चरण-करणमाउत्ता ।
साहू खवति कम्मं अणेगभवसचिअमणंत ॥ ७० ॥

॥ दसहा[2] सामायारी सम्मत्ता ॥

---

अज्झवसाणा निमित्ते आहारे वेअण पराघाए ।

---

अविकृष्टविकृष्टे गणिना गच्छस्य पृच्छायाम् ॥ ६६ ॥
उपसपन्न यत्कारण तु यत् कारणमपूरयन् ।
अथवा समानीते सारणं वा विसर्गो वा ॥ ६७ ॥
इत्वरितमपि न कल्पतेऽविदत्त खलु परावग्रहादिषु ।
स्थातुं निषत्तु च तृतीयव्रताऽऽचाररक्षणार्थम् ॥ ६८ ॥
एव सामाचारी कथिता दशधा समासत एषा ।
सयम तप आढ्यकैर्निग्रन्थैर्महर्षिभि ॥ ६९ ॥
एता सामाचारी युञ्जाना चरणकरणाऽऽयुक्ता ।
साधव क्षपयन्ति कर्म अनेकभवसचितमनन्तम् ॥ ७० ॥

॥ दशधा सामाचारी समाप्ता ॥

---

अध्यवसान निमित्ते आहारे वेदना पराघाते ।

---

१ ख, मे धीरपुरिसपन्नत्ता । २ ख, दसविहा ।

फासे आणपाणू सत्तविह जिज्झए आउं ॥ १ ॥
दंड-कस-सत्थ-रज्जु-अग्गी-उदगपडण विस वाला ।
सी-उण्हं अरइभयं खुहा पिवासा य वाही अ ॥ २ ॥
मुत्त-पुरीसनिरोहे जिन्नाजिन्ने च भोअण बहुसो ।
घसण-घोलण-पीलण आउस्स उवक्कमा एए ॥ ३ ॥
निद्धूमग च गाम महिलाथूभ च सुन्नय दट्ठु ।
नीअ च कागाओलि ति जाया भिक्खस्स हरहरा ॥ ४ ॥
निम्मच्छिअ महु पायडो निही खज्जगावणो सुन्नो ।
जायंगणे पसुत्ता पउत्थवइ आयमत्ता य ॥ ५ ॥
कालेण कओ कालो अम्ह सज्झायदेसकालम्मि ।
तो तेण हओ कालो अकालि कालं करतेण ॥ ६ ॥
दुविहो पमाणकालो दिवसपमाणं च होइ राईआ ।
चउपोरिसिओ दिवसो राई चउपोरिसी चेव ॥ ७ ॥

---

स्पर्श आन प्राणौ सप्तविध क्षीयते आयु ॥१॥
दण्ड कशा शस्त्र-रज्जु अग्नि उदकपतन विष व्याला ।
शीतो-ष्णमरतिभय क्षुत् पिपासा च व्याधिश्च ॥२॥
मूत्र पुरीषनिरोधे जीर्णाऽजीर्णे च भोजन बहुश ।
घर्षण-घूर्णन पीडनमायुष उपक्रमा एते ॥३॥
निर्धूमक च ग्राम महिलास्तूप च शून्यक दृष्ट्वा ।
नीचानि च गृहाणीति जाता भिक्षस्य हरहरा ॥४॥
निर्मक्षिक मधु प्रकटो निधि खाद्यकाऽऽपण शून्य ।
जायाऽङ्गने प्रसुप्ता प्रस्तावयत्यात्ममात्र च ॥ ५ ॥
कालेन कृत कालोऽस्माक स्वाध्यायदेशकाले ।
ततस्तेन हत काल अकाल काल कुर्वता ॥ ६ ॥
द्विविध प्रमाणकाल दिवसप्रमाण च भवति रात्री ।
चतुष्पौरुषिको दिवसो रात्री चतुष्पौरुषी चैव ॥ ७ ॥

पंचण्ह वण्णाण जो खलु वन्नेण कालओ वण्णो ।
सो होइ वण्णकालो वण्णिज्जइ जो व ज काल ॥ ८ ॥
साई सपज्जवसिओ चउभगविभागभावणा इत्थ ।
उदईआईआण त जाणसु भावकाल तु ॥ ९ ॥
इत्थ पुण अहिगारो पमाणकालेण होइ नायव्वो ।
खित्तम्मि कम्मि काले विभासिअं जिणवरिन्देण ॥ १० ॥
वइसाहसुद्धइक्कारसीइ पुव्वण्हदेसकालम्मि ।
महसेणवणुज्जाणे अणतर परपर सेस ॥ ११ ॥
खइअम्मि वट्टमाणस्स निग्गयं भगवओ जिणिंदस्स ।
भावे खओवसमिअम्मि वट्टमाणेहि त गाहिअ ॥ १२ ॥
दव्वाऽभिलाव चिंधे वेए धम्मत्थ भोग भावे अ ।
भावपुरिसो उ जीवो भावे पगयं तु भावेण ॥ १३ ॥
निक्खेवु कारणम्मि चउव्विहो दुविहो होइ दव्वम्मि ।

---

पञ्चाना वर्णाना य खलु वर्णेन कालको वर्ण ।
स भवति वर्णकाल वर्ण्यते यो वा यत् कालम् ॥ ८ ॥
सादि सपर्यवसितश्चतुर्भङ्गविभागभावना अत्र ।
औदयिकादीना तं जानीहि भावकालं तु ॥ ९ ॥
अत्र पुनरधिकार प्रमाणकालेन भवति ज्ञातव्य ।
क्षेत्रे कस्मिन् काले विभाषित जिनवरेन्द्रेण ॥ १० ॥
वैशाखशुक्लैकादश्या पूर्वाह्णदेशकाले ।
महासेनवनोद्याने अनन्तरं परम्पर शेषम् ॥ ११ ॥
क्षायिके वर्तमानस्य निर्गतं भगवतो जिनेन्द्रस्य ।
भावे क्षयोपशमिके वर्तमानैस्तद् गृहीतम् ॥ १२ ॥
द्रव्यमभिलापश्चिह्न वेदो धर्मोऽर्थो भोगो भावश्च ।
भावपुरुषस्तु जीवो भावे प्रकृत तु भावेन ॥ १३ ॥
निक्षेप. कारणे चतुर्विधो द्विविधो भवति द्रव्ये ।

तद्दवमन्नदव्वे अहवा वि निमित्त-नेमित्ती ॥ १४ ॥
समवाइ असमवाई छव्विह कत्ता य करणं कम्मं च ।
तत्तो अ संपयाणाऽपयाण तह सन्निहाणे अ ॥ १५ ॥
दुविहं च होइ भावे अपसत्थ पसत्थगं च अपसत्थं ।
ससारम्सेगविहं दुविह तिविहं च नायव्व ॥ १६ ॥
असजमो अ इक्को अन्नाणं अविरई अ दुविहं तु ।
मिच्छत्तं अन्नाण च अविरई चेव तिविह तु ॥ १७ ॥
होइ पसत्थ मुक्खस्स कारण एग दुविह तिविह वा ।
त चेव य विवरीअ अहिगारु पसत्थएणित्थ ॥ १८ ॥
तित्थयरो किं कारण भासइ सामाइअ तु अज्झयण [१] ।
तित्थयरनामगुत्त कम्मं मे वेइअव्व ति ॥ १९ ॥
तं च कह वेइज्जइ अगिलाए धम्मदेसणाईहि [२] ।
बज्जइ तं तु भगवओ तइअभवोसक्कइत्ता ण ॥ २० ॥

---

तद् द्रव्यमन्यद् द्रव्यमथवाऽपि निमित्त नैमित्ती ॥ १४ ॥
समवायि असमवायि षड्विध कर्त्ता च करण कर्म च ।
ततश्च सप्रदानमपादान तथा सन्निधान च ॥ १५ ॥
द्विविध च भवति भावेऽप्रशस्त प्रशस्त चाऽप्रशस्तम् ।
ससारस्यैकविध द्विविध त्रिविध च ज्ञातव्यम् ॥ १६ ॥
असयमश्चैकोऽज्ञानमविरतिश्च द्विविध तु ।
मिथ्यात्वमज्ञान चाऽविरतिश्चैव त्रिविध तु ॥ १७ ॥
भवति प्रशस्त मोक्षस्य कारणमेक द्विविध त्रिविधं वा ।
तदेव च विपरीतमाधिकार प्रशस्तेनाऽत्र ॥ १८ ॥
तीर्थिकर कस्मात् कारणात् भाषते सामायिक त्वध्ययनम् [१] ।
तीर्थकरनामगोत्र कर्म मया वेदितव्यमिति ॥ १९ ॥
तच्च कथ वेद्यतेऽग्लान्या धर्मदेशनादिभि [२] ।
बध्यते तत्तु भगवन तृतीयभवमवष्टभ्य ॥ २० ॥

निअमा मणुअगईए इत्थी पुरिसअरो व सुहलेसो ।
आसेविअबहुलेहि वीसाए अन्नयरयेहि ॥ २१ ॥
गोअममाई कि कारण तु सामाइअ निसामति [२] ।
नाणस्स त तु सुदर मगुलभावाण उवलद्धी ॥ २२ ॥
होइ पवित्ति-निवित्ती सजमतव पावकम्मअग्गहण ।
कम्मविवेगो अ तहा कारणमसरीरया चेव ॥ २३ ॥
कम्मविवेगो असरीरयाइ असरीरयाऽणबाहाए ।
होअणबाहनिमित्त अवेअणुअणाउलो निरुओ ॥ २४ ॥
निरुअत्ताए अयलो अयलत्ताए अ सासओ होइ ।
सासयभावमुवगओ अव्वाबाहं सुह लहइ ॥ २५ ॥
पच्चयनिक्खेवो खलु दव्वम्मि तत्तमासगाई ओ ।
भावम्मि ओहिमाई तिविहो पगय तु भावेण ॥ २६ ॥
केवलनाणि त्ति अह अरिहा सामाइअ परिकहेइ ।
तेसि पि पच्चओ खलु सव्वन्नू तो निसामंति ॥२७॥

नियमाद् मनुजगतौ स्त्री पुरुषेतरो वा शुभलेश्य ।
आसेवितबहुलैर्विशतावन्यतरै ॥ २१ ॥
गौतमादय कस्मात् कारणात् तु सामायिक निशाम्यन्ति [२] ।
ज्ञानाय तत् तु सुन्दर मङ्गुलभावानामुपलब्धि ॥ २२ ॥
भवत प्रवृत्तिर्निवृत्ति सयमतपसी पाप कर्माऽग्रहणम् ।
कर्मविवेकश्च तथा कारणमशरीरता चैव ॥ २३ ॥
कर्मविवेकोऽशरीरताया अशरीरताऽनाबाधाया ।
भवत्यनाबाधनिमित्तमवेदनाऽनाकुलो निरुग्ण ॥ २४ ॥
नीरुक्तया अचलोऽचलतया च शाश्वतो भवति ।
शाश्वतभावमुपगतोऽव्याबाध सुखं लभते ॥ २५ ॥
प्रत्ययनिक्षेप खलु द्रव्ये तप्तमाषकादिस्तु ।
भावे अवधि-आदिस्त्रिविध प्रकृतं तु भावेन ॥ २६ ॥
केवलज्ञानीति अह अर्हन्तं सामायिक परिकथयति ।
तेषामपि प्रत्यय. खलु सर्वज्ञ इति निशाम्यन्ति ॥ २७ ॥

---

१ मङ्कुल सुन्दरेतर । २ अकारान्तोऽपि ।

नाम ठवणा दविए सरिसे सामन्नलक्खणागारे ।
गइरागइ नाणत्ते निमित्त उप्पाय विगमे अ ॥२८॥
वीरिअभावे अ तहा लक्खणमेअ समासओ भणिअ ।
अहवा वि भावलक्खण चउव्विह सद्दहणमाई ॥२९ ॥
सद्दहण जाणणा खलु विरई मीसा य लक्खण कहइ ।
ते वि निसामन्ति तहा चउलक्खणसजुअ चेव ॥३०॥
नेगम संगह ववहारुज्जुसुए चेव होइ बोधव्वे ।
सद्दे अ समभिरूढे एवभूए अ मूलनया ॥३१॥
नेगेहि माणेहि मिणइत्ती नेगमस्स निरुत्ती ।
सेसाण पि नयाण लक्खणमिणमो सुणह वुच्छ ॥३२॥
सगहिअपिण्डिअत्थ सगहवयण समासओ बिति ।
वच्चइ विणिच्छिअत्थ ववहारो सव्वदव्वेसु ॥३३॥
पच्चुपन्नग्गाही उज्जुसुओ नयविही मुणेअव्वो ।
इच्छइ विसेसिअतर पच्चुपन्न नओ सद्दो ॥३४॥

---

नाम स्थापना द्रव्य सादृश्यं सामान्यलक्षणाकारम् ।
गतिरागतिर्नानात्व निमित्तमुत्पादो विगमश्च ॥ २८ ॥
वीर्यभावश्च तथा लक्षणमेतत् समासतो भणितम् ।
अथवा पि भावलक्षण चतुर्विध श्रद्धानादि ॥ २९ ॥
श्रद्धान ज्ञान खलु विरतिर्मिश्रा च लक्षण कथयति ।
तेऽपि निशाम्यन्ति तथा चतुर्लक्षणसयुत चैव ॥ ३० ॥
नैगम संग्रहो व्यवहार ऋजुसूत्रश्चैव भवति बोद्धव्य ।
शब्दश्च समभिरूढ एवंभूतश्च मूलनया ॥ ३१ ॥
नैकैर्मानैर्मिनोति इति नैगमस्य निरुक्ति ।
शेषाणामपि नयाना लक्षणमिद तु शृणुत वक्ष्ये ॥ ३२ ॥
सगृहीतपिण्डितार्थ सग्रहवचन समासतो ब्रवते ।
व्रजति विनिश्चयार्थ व्यवहार सर्वद्रव्येषु ॥ ३३ ॥
प्रत्युत्पन्नग्राही ऋजुसूत्रो नयविधिर्ज्ञातव्य ।
इच्छति विशेषिततर प्रत्युत्पन्न नय शब्द ॥ ३४ ॥

वत्थूओ सकमण होइ अवत्थू नये समभिरूढे ।
वंजण-अत्थतदुभयं एवंभूओ विसेसेइ ॥३५॥
इक्किक्को अ सयविहो सत्त नयसया हवंति एवं तु ।
अन्नो वि अ आएसो पंचसया हुंति उ नयाणं ॥३६॥
एएहिं दिट्ठिवाए परूवणा सुत्तअत्थकहणा य ।
इह पुण अणब्भुवगमो अहिगारो तीहि ओसन्नं ॥३७॥
नत्थि नएहि विहूणं सुत्तं अत्थो व जिणमए किंचि ।
आसज्ज उ सोआरं नए य नयविसारओ बूआ ॥३८॥
मूढनइअं सुअं कालिअं तु न नया समोअरंति इह ।
अपुहत्ति समोआरो नत्थि पुहत्ते समोआरो ॥३९॥
जावंत अज्जवइरा अपुहत्तं कालिआणुओगस्स ।
तेणारेण पुहत्तं कालिअसुइ दिट्ठिवाए अ ॥४०॥
तुंबवणसन्निवेसाउ निग्गयं पिउसगासमल्लीणं ।
छम्मासिअं छसु जयं माऊइ समन्निअं वंदे ॥४१॥

वस्तुन संक्रमण भवति अवस्तु नये समभिरूढे ।
व्यञ्जन अर्थतदुभयमेवंभूतो विशेषयति ॥ ३५ ॥
एकैकश्च शतविध सप्त नयशतानि भवति एव तु ।
अन्योऽपि चादेश पञ्च शतानि भवन्ति तु नयानाम् ॥ ३६ ॥
एतैर्दृष्टिवादे प्ररूपणा सूत्राऽर्थकथना च ।
इह पुनरनभ्युपगमोऽधिकारस्त्रिभिरुत्सन्नम् ॥ ३७ ॥
नास्ति नयैर्विहीनं सूत्रमर्थो वा जिनमते किंचित् ।
आसाद्य तु श्रोतार नयाश्च नयविशारदो ब्रवीत ॥ ३८ ॥
मूढनयिक श्रुतं कालिक तु न नया समवतरान्ति इह ।
अपृथक्त्वे समवतारो नास्ति पृथक्त्वे समवतार· ॥ ३९ ॥
यावद् आर्यवज्रा अपृथक्त्वं कालिकाऽनुयोगस्य ।
तत अरत पृथक्त्वं कालिकश्रुते दृष्टिवादे च ॥ ४० ॥
तुम्बवनसंनिवेशाद् निर्गत पितृसकाशमालीनम् ।
षाण्मासिक षट्सु[1] यतं मात्रा समन्वितं वन्दे ॥ ४१ ॥

१ षड्विधेषु जीवेषु ।

जो गुज्झगेहि बालो निमंतिओ भोअणेण वासते ।
निच्छिमु विणीअविणओ त वयररिसि नमंसामि ॥४२॥
उज्जेणीए जो जभगेहि आलक्खिऊण थुअमहिओ ।
अक्खीणमहाणसिअं सीहगिरिपससिअ वदे ॥४३॥
जस्स अणुन्नाए वायगत्तणेण दसपुरम्मि नयरम्मि ।
देवेहि कया महिमा पयाणुसारि नमसामि ॥४४॥
जो कन्नाइ धणेण य निमंतिओ जुव्वणम्मि गिहवइणा ।
नयरम्मि कुसुमनामे त वइररिसि नमसामि ॥ ४५ ॥
जेणुद्धरिआ विज्जा आगासगमा महापरिन्नाओ ।
वदामि अज्जवइर अपच्छिमो जो सुअधराण ॥ ४६ ॥
भणइ य आहिंडिज्जा जबुदीव इमाइ विज्जाए ।
गंतु च माणुसनग विज्जाए एस मे विसओ ॥ ४७ ॥
भणइ अ धारेअव्वा न हु दायव्वा इमा मए विज्जा ।
अप्पिड्ढिआ उ मणुआ होहिन्ति अओ पर अन्ने ॥ ४८ ॥

---

यो गुह्यकैर्बालो निमन्त्रितो भोजनेन वर्षति[1] ।
निरच्छैर्षुर्विनीतविनयस्तं वज्रर्षि नमस्यामि ॥ ४२ ॥
उज्जयिन्या यो जृम्भकैरालक्ष्य स्तुतमहित ।
अक्षीणमहानसिक सिंहगिरिप्रशस्त वन्दे ॥ ४३ ॥
यस्याऽनुज्ञया वाचकत्वेन दशपुरे नगरे ।
देवै कृतो महिमा पदानुसारिण नमस्यामि ॥ ४४ ॥
य कन्यया धनेन च निमन्त्रितो यौवने गृहपतिना ।
नगरे कुसुमनाम्नि त वज्रर्षि नमस्यामि ॥ ४५ ॥
येनोद्‌धृता विद्या आकाशगमा महापरिज्ञात ।
वन्द आर्यवज्रमपश्चिमो य श्रुतधराणाम् ॥ ४६ ॥
भणति च आहिण्डेत जम्बूद्वीपमनया विद्यया ।
गत्वा च मानुषनग विद्याया एष मम विषय ॥ ४७ ॥
भणति च धारयित्वा न खलु दातव्येय मया विद्या ।
अल्पर्धिकास्तु मनुजा भविष्यन्त्यत परमन्ये ॥ ४८ ॥

---

१ मेघे इति शेष ।

माहेसरीओ सेसापुरिअ नीआ हुआसणगिहाओ ।
गयणयलमइवइत्ता वइरेण महाणुभागेण ॥ ४९ ॥
अपुहत्ते णुओगो चत्तारि दुवार भासइ एगो ।
पुहत्ताणुओगकरणे ते अत्थ तओ ओ वुच्छिन्ना ॥ ५० ॥
देविन्दवन्दिएहिं महाणुभावेण रक्खिअअज्जेहि ।
जुगमासज्ज विहत्तो अणुओगो ता कओ चउहा ॥ ५१ ॥
माया य रुद्दसोमा पिआ य नामेण सोमदत्तुत्ति ।
भाया य फग्गुरक्खिअ तोसलिपुत्ता य आयरिआ ॥ ५२ ॥
निज्जवण भद्दगुत्ते वीसुं पढण च तस्स पुव्वगयं ।
पव्वाविओ अ भाया रक्खिअखमणेहि जणओ अ ॥५३॥
कालिअसुअं च इसिभासिआइ तइओ अ सूरपन्नत्ती ।
सव्वो अ दिट्ठिवाओ चउत्थओ होइ अणुओगो ॥५४॥
जं महाकप्पसुअं जाणिअ सेसाणि छेअसुत्ताणि ।
चरण-करणाणुओगत्ति कालिअत्थे उवगयाणि ॥५५॥

---

माहेश्वर्या शेषापुरिका नीता हुताशनगृहात् ।
गगनतलमतिव्यतीत्य वज्रेण महानुभागेन ॥ ४९ ॥
अपृथक्त्वेऽनुयोगश्चत्वारि द्वाराणि भाषत एक ।
पृथक्त्वानुयोगकरणे तेऽर्थास्ततस्तु व्युच्छिन्ना ॥ ५० ॥
देवेन्द्रवन्दितैर्महानुभावै रक्षितार्यै ।
युगमासाद्य विभक्तोऽनुयोग तस्मात् कृतश्चतुर्धा ॥ ५१ ॥
माता च रुद्रसोमा पिता च नाम्ना सोमदत्त-इति ।
भ्राता च फल्गुरक्षितस्तोसलिपुत्राश्चाचार्या ॥ ५२ ॥
निर्यापण भद्रगुप्तो विष्वक् पठनं च तस्य पूर्वगतम् ।
प्रव्राजितश्च भ्राता रक्षितक्षमणैर्जनकश्च ॥ ५३ ॥
कालिकश्रुत च ऋषिभाषितानि तृतीयश्च सूर्यप्रज्ञप्ति ।
सर्वश्च दृष्टिवादश्चतुर्थको भवत्यनुयोग ॥ ५४ ॥
यद् महाकल्पश्रुत ज्ञात्वा शेषाणि च्छेदसूत्राणि ।
चरणकरणानुयोग इति कालिकार्थ उपगतानि ॥ ५५ ॥

बहुरय पएस अवत्त समुच्छ दुग तिग अवद्धिआ चेव ।
सत्ते एए निण्हगा खलु तित्थम्मि उ वद्धमाणस्स ॥ ५६ ॥
बहुरय जमालिपभवा जीवपएसा य तीसगुत्ताओ ।
अवत्ता साढाओ सामुच्छेआ समित्ताओ ॥ ५७ ॥
गगाओ दोकिरिया छलुगा तेरासिआण उप्पत्ती ।
थेरा य गुट्ठमाहिल पुट्ठमबद्ध परूविन्ति ॥ ५८ ॥
सावत्थी उसभपुर सेअम्बिआ महिल उल्लगातीर ।
पुरिमतरंजि दसपुर रहवीरपुर च नयराइ ॥ ५९ ॥
चउदस सोलस वासा चउदस वीमुत्तरा य दुण्णि सया ।
अट्ठावीसा य दुवे पचेव सया य चोआला ॥ ६० ॥
पंचसया चुलसीआ छच्चेव सया नवुत्तरा हुति ।
नाणुपत्तीइ दुवे उप्पन्ना निव्वुए सेसा ॥ ६१ ॥
चउदस वासाणि तया जिणेण उप्पाडिअस्स नाणस्स ।
तो बहुरयाण दिट्ठी सावत्थीए समुप्पन्ना ॥ ६२ ॥

---

बहुरत प्रदेशोऽव्यक्त समुच्छेदो द्विक त्रिकमबद्धिकाश्चैव ।
सप्तैते निह्नवा खलु तीर्थे तु वर्धमानस्य ॥ ५६ ॥
बहुरता जमालिप्रभवा जीवप्रदेशाश्च तिष्यगुप्तात् ।
अव्यक्ता आषाढात् सामुच्छेदा अश्वमित्रात् ॥ ५७ ॥
गङ्गाद् द्वैक्रिया षडुलूका त्रैराशिकानामुत्पत्ति ।
स्थविराश्च गोष्ठामाहिला स्पष्टमबद्ध प्ररूपयन्ति ॥ ५८ ॥
श्रावस्ती वृषभपुर श्वेताम्बिका मिथिला उल्लुकातीरम् ।
पुरमन्तरञ्जिका दशपुरं रथवीरपुर च नगराणि ॥ ५९ ॥
चतुर्दश षोडश वर्षाणि चतुर्दश विंशत्युत्तरे च द्वे शते ।
अष्टाविंशतिश्च द्वे पञ्चैव शतानि च चतुश्चत्वारिंशत् ॥ ६० ॥
पञ्चशतानि चतुरशीति षडेव शतानि नवोत्तराणि भवन्ति ।
ज्ञानोत्पन्नौ द्वावुत्पन्नौ निर्वृते शेषा ॥ ६१ ॥
चतुर्दश वर्षाणि तदा जिनेनोत्पादितस्य ज्ञानस्य ।
ततो बहुरतानां दृष्टि श्रावस्त्यां समुत्पन्ना ॥ ६२ ॥

जिट्ठा सुदसण जमालिणुज्ज सावत्थीतिंदुगुज्जाणे ।
पञ्च सया य सहस्सं ढकेण जमालि मुत्तूण ॥ ६३ ॥
सोलस वासाणि तया जिणेण उप्पाडिअस्स नाणस्स ।
जीवपएसिअदिट्ठी उसभपुरम्मि समुप्पन्ना ॥ ६४ ॥
रायगिहे गुणसिलए वसु चउदसपुव्वि तीसगुत्ताओ ।
आमलकप्पा नयरी मित्तसिरी कूरपिउडाई ॥ ६५ ॥
चउदस दो वास सया तइया सिद्धिं गयस्स वीरस्स ।
अव्वत्तगाण दिट्ठी सेअम्बिआए समुप्पन्ना ॥ ६६ ॥
सेयबि पोलासाढे जोगे तद्दिवसहिअयसूले य ।
सोहम्मि नलिणिगुम्मे रायगिहे सुरिअबलभद्दे ॥ ६७ ॥
वीसा दो वाससया तइआ सिद्धिं गयस्स वीरस्स ।
सामुच्छेइअदिट्ठी मिहिलपुरीए समुप्पन्ना ॥ ६८ ॥
मिहिलाए लच्छिघरे महगिरि कोडिन्न आसमित्ते अ ।
नेउणि अणुप्पवाए रायगिहे खंडरक्खा य ॥ ६९ ॥

---

ज्येष्ठा सुदर्शना जमालिरनवद्या श्रावस्तीतिन्दुकोद्याने ।
पञ्च शतानि च सहस्र ढङ्केन जमालि मुक्त्वा ॥ ६३ ॥
षोडश वर्षाणि तदा जिनेनोत्पादितस्य ज्ञानस्य ।
जीवप्रदेशिकदृष्टि ऋषभपुरे समुत्पन्ना ॥ ६४ ॥
राजगृहे गुणशिलके वसुश्चतुर्दशपूर्वी तिष्यगुप्तात् ।
आमलकल्पा नगरी मित्रश्री कूर बुद्धुकादि ॥ ६५ ॥
चतुर्दश द्वे वर्षशते तदा सिद्धि गतस्य वीरस्य ।
अव्यक्तकाना दृष्टि. श्वेताम्व्या समुत्पन्ना ॥ ६६ ॥
श्वेताम्व्या पोलास आषाढो योगे तद्दिवसहृदयशूले च ।
सौधर्मे नलिनीगुल्मे राजगृहे सौर्यबलभद्र ॥ ६७ ॥
विंशतिर्द्वे वर्षशते तदा सिद्धि गतस्य वीरस्य ।
सामुच्छेदिकदृष्टिर्मिथिलापुर्यां समुत्पन्ना ॥ ६८ ॥
मिथिलाया लक्ष्मीगृहे महागिरि कौण्डिन्योऽश्वमित्रश्च ।
नैपुणिकमनुप्रवादे राजगृहे खण्डरक्षश्च ॥ ६९ ॥

अट्ठावीसा दो वाससया तइआ सिद्धिं गयस्स वीरस्स ।
दोकिरिआण दिट्ठी उल्लगतीरे समुप्पन्ना ॥ ७० ॥
नइखेडजणवउल्लग महगिरि धणगुत्त अज्जगंगे अ ।
किरिया दो रायगिहे महातवो तीरमणिनाए ॥ ७१ ॥
पच सया चोआला तइआ सिद्धिं गयस्स वीरस्स ।
पुरिमतरजिआए तेरासिट्ठी उप्पन्ना ॥ ७२ ॥
पुरिमतरजि भूअगुह बलसिरि सिरिगुत्त रोहगुत्ते अ ।
परिवाय पुट्टसाले घोसण पडिसेहणा वाए ॥ ७३ ॥
विच्छू सप्पे मूसग मिगी वराही य कागि पोयाई ।
एआहिं विज्जाहि सो उ परिव्वायगो कुसलो ॥ ७४ ॥
मोरि य नउलि बिराली वग्घी सीही य उलुगिओ ।
एआओ विज्जाओ गिण्ह परिव्वाय महणीओ ॥ ७५ ॥
सिरिगुत्तेण वि छलुगो छम्मासे विकड्ढिऊण वायजिओ ।
आहरण कुत्तिआवण चोयालसएण पुच्छाण ॥ ७६ ॥

---

अष्टाविंशतिर्द्वे वर्षशते तदा सिद्धिं गतस्य वीरस्य ।
द्वैक्रियाणां दृष्टिरुल्लुकातीरे समुत्पन्ना ॥ ७० ॥
नदीखेटजनपदोल्लुके महागिरिर्धनगुप्त आर्यगङ्गश्च ।
क्रिये द्वे राजगृहे महातपस्तीरमणिनाग ॥ ७१ ॥
पञ्च शतानि चतुश्चत्वारिंशत् तदा सिद्धिं गतस्य वीरस्य ।
पुरि अन्तरञ्जिकायां त्रैराशिकदृष्टिरुत्पन्ना ॥ ७२ ॥
पुरि अन्तरञ्जिकायां भूतगुह बलश्री श्रीगुप्तो रोहगुप्तश्च ।
परिव्राजक पोट्टशालो घोषणा प्रतिषेधना वादे ॥ ७३ ॥
वृश्चिक सर्पो मूषको मृगी वाराही काकी पोताकी ।
एताभिर्विद्याभि स तु परिव्राजक कुशल ॥ ७४ ॥
मौरी च नाकुली बैराली व्याघ्री सैही चौलुकी ।
एता विद्या गृहाण परिव्राजको मथनीय ॥ ७५ ॥
श्रीगुप्तेनाऽपि षडुलूको षण्मासान् विकृष्य वादजित ।
उदाहरण कुत्रिकापणं चतुश्चत्वारिंशच्छतेन पृच्छानाम् ॥ ७६ ॥

नव दव्व गुणा सत्तरस कम्म सत्ताइआ उ पणया दो ।
सव्वे वि चऊहिं गुणिआ चोआलसय तु पुच्छाण ॥ ७७ ।
भूमी जल जलणाऽनिल नह काल दिसा मणो अ अप्पा अ
भन्नति नवेआइ सत्तरस गुणा इमे अन्ने ॥ ७८ ॥
रूव-रस-गध-फासा सखा परिमाणमह पुहत्त च ।
संजोगविओग पराऽपरत्त बुद्धी सुहं दुक्ख ॥ ७९ ॥
इच्छादोसपयत्ता इत्तो कम्म तयं च पचविहं ।
उक्खेवण निक्खेवण पसारणाऽऽकुञ्चण गमण ॥ ८० ॥
सत्ता सामन्न पि अ सामन्नविसेसया विसेसा अ ।
समवाओ य पयत्थे वि य हुति छत्तीस ॥ ८१ ॥
पयईइ यगारेण नोकारोभयनिसेहओ सव्वो ।
गुणिआ चोयालसय पुच्छाण पुच्छिओ देवो ॥ ८२ ॥
इक्किक्को चउगुणिओ चोआलसय हविज्ज पुच्छाण ।
सव्वेसु जाइएसु पुणरवि दो चेव रासी अ ॥ ८३ ॥

---

नव द्रव्याणि गुणा सप्तदश कर्मसत्तादिकौ पञ्च द्वौ च ।
सर्वेऽपि चतुर्भिर्गुणिताश्चतुश्चत्वारिंशच्छतं तु पृच्छानाम् ॥ ७७ ।
भूमिर्जल ज्वलनोऽनिलो नभ कालो दिग् मनश्च आत्मा च ।
भण्यन्ते नवैतानि सप्तदश गुणा इमेऽन्ये ॥ ७८ ॥
रूप-रस गन्ध स्पर्शा सख्या परिमाणमथ पृथक्त्व च ।
सयोग-वियोगौ पराऽपरत्वे बुद्धि सुख दु खम् ॥ ७९ ॥
इच्छा-द्वेष प्रयत्ना इत कर्म तच्च पञ्चविधम् ।
उत्क्षेपण निक्षेपण प्रसारणमाकुञ्चन गमनम् ॥ ८० ॥
सत्ता सामान्यमपि च सामान्यविशेषका विशेषाश्च ।
समवायश्च पदार्था अपि च भवन्ति षट्त्रिंशत् ॥ ८१ ॥
प्रकृतौ चाऽकारेण नोकारोभयनिषेधक सर्व ।
गुणिताश्चतुश्चत्वारिंशच्छत पृच्छाना पृष्टो देव ॥ ८२ ॥
एकैकश्चतुर्गुणितश्चतुश्चत्वारिंशच्छतं भवेत् पृच्छानाम् ।
सर्वेषु जातेषु पुनरपि द्वावेव राशी च ॥ ८३ ॥

---

१ अनुक्रमेण अन्वय ।

पुढवित्ति देइ लिट्ठु दे सो वि समाणजाइलिगु त्ति ।
पुढवित्ति नो-अपुढवी देहित्ति अ देइ तोयाई ॥ ८४ ॥
जीवमजीव दाउं नोजीव जाइओ पुणो अजीव ।
देइ चरिमम्मि जीव न य नोजीव सजीवदल ॥ ८५ ॥
जीवमजीवं नोजीवमेव तत्तो अ नो अजीव तु ।
पुढवाईसु वि एव चउरो चउरो य नायव्वा ॥ ८६ ॥
वाए पराजिओ सो निव्विसओ कारिउ नरिन्देण ।
घोसाविअं च नयरे जयइ जिणो वद्धमाणुत्ति ॥ ८७ ॥
पच सया चुलसीआ तइआ सिद्धिं गयस्स वीरस्स ।
अबद्धिगाण दिट्ठी दसपुरनयरे समुप्पन्ना ॥ ८८ ॥
दसपुरनगरुच्छघरे अज्जरक्खिअपूसमित्ततिअगं च ।
गुट्ठामाहिल नवअट्ठमेसु विंझस्स ॥ ८९ ॥
पुट्ठो जहा अबद्धो कंचुइणं कंचुओ समन्नेइ ।
एवं पुट्ठमबद्ध जीवं कम्म समन्नेइ ॥ ९० ॥

---

पृथिवीति ददाति लेष्टु द्वौ सोऽपि समानजातिलिङ्ग इति ।
पृथिवीति नो-अपृथिवी देहि इति च ददाति तोयादि ॥ ८४ ॥
जीवमजीव दातु नोजीव जात पुनरजीवम् ।
ददाति चरमे जीव न च नोजीव सजीवदलम् ॥ ८५ ॥
जीवमजीव नोजीवमेव ततश्च नो अजीवं तु ।
पृथिव्यादिष्वप्येव चत्वारश्चत्वारश्च ज्ञातव्या ॥ ८६ ॥
वादे पराजित सो निर्विषय कारयित्वा नरेन्द्रेण ।
घोषितं च नगरे जयति जिनो वर्धमान इति ॥ ८७ ॥
पञ्च शतानि चतुरशीतिस्तदा सिद्धि गतस्य वीरस्य ।
अबद्धिकाना दृष्टिर्दशपुरनगरे समुत्पन्ना ॥ ८८ ॥
दशपुरनगर इक्षुगृहे आर्यरक्षितपुष्यमित्रत्रिकं च ।
गोष्ठामाहिल नवमाऽष्टमयोर्विन्ध्यस्य ॥ ८९ ॥
स्पृष्टश्च यथाऽबद्ध कञ्चुकिन कञ्चुक समन्वेति ।
एव स्पृष्टमबद्ध जीव, कर्म समन्वेति ॥ ९० ॥

पच्चक्खाणं सेयं अपरिमाणेण होइ कायव्व ।
जेसिं तु परीमाणं त दट्ठु आससा होइ ॥ ९१ ॥
छवाससयाइं नवुत्तराइं तईआ सिद्धि गयस्स० ।
तो बोडिआण दिट्ठी रहवीरपुरे समुप्पन्ना ॥ ९२ ॥
रहवीरपुर नगर दीवगमुज्जाणमज्जकण्हे य ।
सिवभूइस्सुवहिम्मि पुच्छा थेराण कहणा य ॥ ९३ ॥
ऊहाए पन्नत्तं बोडिअसिवभूई-ओत्तराहि इमं ।
मिच्छादंसणमिणमो रहवीरपुरे समुप्पन्न ॥ ९४ ॥
बोडिअसिवभूईओ बोडिअलिङ्गस्स होइ उप्पत्ती ।
कोडिन्नकुट्टवीरा परपरा फासमुप्पन्ना ॥ ९५ ॥
एव एए कहिआ ओसप्पिणिए उ निण्हा सत्त ।
वीरवरस्स पवयणे सेसाणं पवयणे नत्थि ॥ ९६ ॥
मुत्तूणमेसिमिक्क सेसाण जाव जीविआ दिट्ठी ।
इक्किक्कस्स य इत्तो दो दो दोसा मुणेअव्वा ॥ ९७ ॥

---

प्रत्याख्यान श्रेयोऽपरिमाणेन भवति कर्तव्यम् ।
येषा तु परिमाण तद् दृष्ट्वाऽऽशसा भवति ॥ ९१ ॥
षड्वर्षशतानि नवोत्तराणि तदा सिद्धि गतस्य० ।
ततो बोटिकाना दृष्टी रथवीरपुरे समुत्पन्ना ॥ ९२ ॥
रथवीरपुरं नगर दीपकमुद्यानमार्यकृष्णश्च ।
शिवभूतेरुपधौ पृच्छा स्थविराणा कथना च ॥ ९३ ॥
ऊहाया प्रज्ञप्त बोटिकशिवभूति-उत्तराभ्यामिदम् ।
मिथ्यादर्शनमिदं तु रथवीरपुरे समुत्पन्नम् ॥ ९४ ॥
बोटिकशिवभूतितो बोटिकलिङ्गस्य भवति उत्पत्ति ।
कौण्डिन्य-कोट्टवीरात् परम्परा स्पर्शमुत्पन्ना ॥ ९५ ॥
एवमेते कथिता अवसर्पिण्या तु निह्नवा सप्त ।
वीरवरस्य प्रवचने शेषाणा प्रवचने नास्ति ॥ ९६ ॥
मुक्त्वैषामेकं शेषाणा यावज्जीव दृष्टि ।
एकैकस्य च इतो द्वौ द्वौ दोषौ ज्ञातव्यौ ॥ ९७ ॥

श्रीविजयधर्मसूरिभ्यो नमः ।

# मल्लिनाथमहाकाव्यम् ।

## प्रथमः सर्गः ।

महातेजःप्रभूः सर्वमङ्गलोल्लासकारणम् ।
अर्हन् गणाश्रयं प्रीणन् जयताद् वृषभध्वजः ॥ १ ॥
कुम्भजन्मा सितध्यानाञ्जलिपीतभवोदधिः ।
श्रीमन्मल्लिर्जिनो भूयात् पापवातापितापनः ॥ २ ॥
क्रमहीनो द्विजिह्वोऽपि क्षमाभारक्षमोऽजनि ।
आश्रयाद्यस्य स स्याद्वः श्रिये पार्श्वजिनेश्वरः ॥ ३ ॥
वन्दारुसुरकोटीरचकोरीचक्रचुम्बिताः ।
जीयासुर्वीरनाथस्य क्रमद्वन्द्वनखेन्दवः ॥ ४ ॥
अन्यानपि गतत्रासान् सच्छायान् विमलानलम् ।
नौमि मुक्तावलीमध्यनायकान् जिननायकान् ॥ ५ ॥
त्रिपद्यपि जिनानां गौर्जगद्गोचरचारिणी ।
सालङ्काराङ्गिनी मे स्यात्तत्त्वपीयूषवर्षिणी ॥ ६ ॥
रजःक्षोदपयोदं श्रीविद्याहृद्यावतंसकम् ।
प्रणौम्यहं भवोद्यानभञ्जनागं गुरुं स्वकम् * ॥ ७ ॥
जगज्जैत्रस्य यस्यैते किङ्करास्ते सुरेश्वराः ।
तं जिगाय जिनो मारं कौमारेऽपि जवेन यः ॥ ८ ॥
तस्य श्रीमल्लिनाथस्य जगन्नाथस्य पावनम् ।
श्रोतृश्रोत्रसुधासत्रं सच्चरित्रमुदीर्यते ॥ ९ ॥

---

(१) गणश्रियमित्यपि (२)-नमलान इत्यपि (३) जितेन्द्रिय इत्यपि ।
* आद्यान्त्याक्षरैर्गुरोर्नाम कवे. श्रोत्रयितुश्च रविप्रभ, श्रीकनकम् ।

श्रीषष्ठाङ्गादिदं चित्रमहं ग्रथ्नामि माल्यवत् ।
आरामिक इवारामादुच्चित्य सुमनोभरम् ॥ १० ॥
जम्बूद्वीप इति द्वीपः कनकाचलकर्णिकः ।
स्पष्टाष्टदिग्दलाकीर्णः प्रोन्निद्रशतपत्रति ॥ ११ ॥
तत्रापरविदेहेषु विजयः सलिलावती ।
वीतशोका पुरी तत्र वीतशोकजनाकुला ॥ १२ ॥
प्रबन्धाः पुष्करिण्यश्च गम्भीरपदसंक्रमाः ।
राजन्ते यत्र सरसाः कविसूत्रभृता कृताः ॥ १३
परोपकारप्रगुणा उत्तमर्णाः प्रियम्वदाः ।
धैर्यवन्तो जना यत्र सुषमाकालजातवत् ॥ १४ ॥
अहाद्धिर्वारिधेरेव निष्कोशत्वमसेरपि ।
दानच्छेदो गजस्यापि न यस्यां पौरुषेष्वभूत् ॥ १
बलो नाम नृपस्तत्र बलेन बलसूदनः ।
वैरिवारबलोन्माथी ऋद्ध्या बलिनिषूदनः ॥ १६ ।
अम्भोधिना गभीरत्वे पारीन्द्रैश्च पराक्रमे ।
कल्पक्षितिरुहैर्दाने जाने यस्याधमर्ण्यते ॥ १७ ॥
आकार एव यस्योच्चैः शशंस प्रभुसम्पदम् ।
छत्रचामरकोटीरहारप्रभृति तु स्थितिः ॥ १८ ॥
विलासराजहंसानां विकस्वरसरोजिनी ।
वशीकरणविद्येव शृङ्गाररसयोगिनः ॥ १९ ॥
देव्यस्य धारिणी नाम शीलालङ्कारधारिणी ।
सारिणी गुणवल्लीनां चातुर्यरसहारिणी ॥ २० ॥
पुर्यामन्येद्युरुद्याने वने नाम्नेन्द्रकुब्जके ।
रत्नचन्द्राभिधोऽभ्यागात् मुनिर्दोषान्धकारभित् ॥
यस्यासन्नसरस्तीरपादपाः प्रतिबिम्बिताः ।

(१) योगिनीत्यपि ।

भान्ति वारिणि सर्वाङ्गं नीरं पातुमिवातुराः ॥२२॥
पुष्पाक्षताविहस्तैर्द्रुहस्तैर्यद्द्विजलीलया ।
मन्त्रोच्चारमलिध्वानैस्तनुतेऽभ्यागतं प्रति ॥ २३ ॥
नक्षत्रैरिव सन्मित्रैस्तदुद्यानभोऽङ्गणम् ।
राजा समागमन्नेत्रकैरवस्मेरतागुरुः ॥ २४ ॥
( त्रिभिर्विशेषकम् )
तस्मिन् वीक्ष्य मुनेरूपं स्वरूपं दिवसेशितुः ।
उत्फुल्लवदनो नत्वा राजा पप्रच्छ सादरम् ॥ २५ ॥
रूपेऽप्यप्रतिरूपेऽस्मिन् लावण्ये च समुज्ज्वले ।
कथं त्यक्त्वा गृहस्थत्वं भवद्भिर्जगृहे व्रतम् ॥ २६ ॥
द्योतयन्निव दन्तांशुडम्बरैरम्बरान्तरम् ।
रत्नेन्दुर्भगवानेवं व्याजहार मनोहरम् ॥ २७ ॥
असारेऽमुत्र संसारे सर्वमेव विरागकृत् ।
विशेषतोऽपि चास्माकमिदं वैराग्यकारणम् ॥ २८ ॥
तथाह्यत्र विदेहाख्ये क्षेत्रे कुरुविभूषणम् ।
पुरं चन्द्रपुरं नाम वासौकः सर्वसंपदाम् ॥ २९ ॥
वसुभूतिर्नृपस्तत्र महातेजाः परन्तपः ।
तस्य रत्नावली देवी रत्नचन्द्रस्तयोः सुतः ॥ ३० ॥
अन्येद्युरश्ववाहिन्यां गतो नृपतिनन्दनः ।
उच्चैरुच्चैःश्रवस्तुल्यं निर्मासमुखमण्डलम् ॥ ३१ ॥
लघुस्तब्धश्रवोयुग्मं पीनं पश्चिमपार्श्वयोः ।
दशावर्तमनोज्ञाङ्गं मनोवेगातिवेगिनम् ॥ ३२ ॥
दक्षश्चतुष्प्रकारासु धारासु क्रमयन् क्रमान् ।
अवाहयद्धयं चारु क्षातपातादि कारयन् ॥ ३३ ॥
( त्रिभिर्विशेषकम् )

आरूढः पञ्चमीं धारामुदूढः प्रौढविक्रमः ।
जवं चकार चतुरं वाजी[1] वाजाजितानिलः ॥ ३४ ॥
स्फुरत्खुरपुटोड्डीनरजःसङ्गमपि त्यजन् ।
अङ्गमालिन्यभीत्येव रभसा नभसि व्रजन् ॥ ३५ ॥
सरित्पुरगिरिग्रामसमुल्लङ्घनजाङ्घिकः ।
जगाम काननं क्रीडत्पञ्चाननभयानकम् ॥ ३६ ॥
रत्नचन्द्रे समुत्तीर्णे तत्पृष्ठाद्व्यसनादिव ।
चित्रमेकोऽपि स प्राप पञ्चत्वं दूरलङ्घनात् ॥ ३७ ॥
क्व सा राज्यस्थितिः क्वैषा महावनबिभीषिका ।
क्व च बन्दिजनोल्लापः क्व चेदं व्याघ्रबूत्कृतम् ॥३८॥
अथवा क्षीणपुण्यत्वादित्थं सम्पद्यतां मम ।
नहि त्यक्ष्यामि धीरत्वकङ्कटं सङ्कटे स्फुटम् ॥ ३९ ॥
इत्थं विचार्य सद्धैर्यपरिच्छदपरावृतः ।
चचाल पादचारेण महारण्ये नृपाङ्गजः ॥ ४० ॥
हा तात ! तात हा ! भ्रातर्हा भ्रातर्भुवनोत्तम ! ।
खण्डशः खड्गयष्ट्याऽहं क्रिये सूरणकन्दवत् ॥ ४१ ॥
नेयं वीरप्रसूः क्षोणी नापि संक्रन्दनादयः ।
लोकपाला यथार्थाख्या हन्ये यदबला बलात् ॥४२॥
रत्नचन्द्र ! गतः क्वापि ममाभाग्यैर्भवानपि ।
यन्मां व्यसनमापन्नां न रक्षसि मृगीमिव ॥ ४३ ॥
सर्वज्ञेनेव दैवज्ञ ! यत्त्वयाऽऽख्यायि मे पितुः ।
सुप्तप्रलपितं तत्किं किं वा ते मतिविभ्रमः ॥ ४४ ॥
सुदतीं रुदतीमेकामित्थं स करुणस्वरैः ।
रोदयन्तीमरण्यानीं प्रतिशब्दैः सखीमिव ॥ ४५ ॥
श्रुत्वा भूमीपतेः सूनुर्निदध्याविति मानसे ।

(१) हय इत्यपि ।

केयं रोदिति सत्रासं निर्वीरेव वराकिका ? ॥ ४६ ॥
उच्चचार कथङ्कारं मन्नाम प्रकटाक्षरम् ।
सदृक्षाण्यभिधानानि श्रूयन्ते वाऽवनीतले ॥ ४७ ॥
परं देहव्ययेनापि सबलैरबलाजनः ।
त्रातव्योऽतिप्रयत्नेन क्षत्रियार्थं वितन्वता ॥ ४८ ॥
विमृश्येति करे कृत्वा कृपाणं सकृपाशयः ।
स्वरानुसारतस्तस्या दधावे क्रोधदुर्धरः ॥ ४९ ॥
प्रज्वलत्खदिराङ्गारपूर्णकुण्डतटस्थिताम् ।
कण्ठपीठधृतारक्तकरवीरस्रजं पुरः ॥ ५० ॥
बद्धपाणिपदद्वन्द्वां सूनानीतामजामिव ।
भयलोलदृशं चिल्ली श्येनचञ्चुगतामिव ॥ ५१ ॥
अद्राक्षीदबलां बालामालानितवशामिव ।
कपालिनं च धाराळकर्त्तिकानर्त्तनोद्यतम् ॥ ५२ ॥
( त्रिभिर्विशेषकम् )
तमूचे च विमर्याद ! रे रे कापालिकाधम ! ।
अशरण्यामरण्ये किमेनां हन्तुं समुद्यतः ? ॥ ५३ ॥
रे प्रहर्तुमिमां पाप ! कथमुत्सहते मनः ? ।
अथवा पापकुम्भस्ते तूर्णं पूर्णोऽद्य विद्यते ॥ ५४ ॥
तन्मन्ये तव निर्लज्ज ! भुजौजः शिष्टगर्हितम् ।
यदीदृशे जने दीने प्रजिहीर्षुः प्रवर्तसे ॥ ५५ ॥
इत्युक्तिव्यक्तिमाकर्ण्य कर्णायःसूचिसूचिकाम् ।
उद्दधावेतरां योगी भीमः कल्पान्तभीमवत् ॥ ५६ ॥
कटुवाक्यगिरां कल्पः शिक्षितोऽद्य कुतस्त्वया ।
आविरासीद् ध्रुवं धात्र्यां यदि वा त्वत्त एव सः ॥५७॥
रे वीरखेटवाचाट ! याहि दृष्टेन वर्त्मना ।
यदि वैष स्वभावेन परतापिपरो जनः ॥ ५८ ॥

विक्रमैककथाव्यासश्चन्द्रहासो ममोज्ज्वलः ।
सकल्मषाणां तद्वाचामाचारं शोधयिष्यति ॥ ५९ ॥
इत्युक्तवति सत्यस्मिन् रत्नचन्द्रोऽवदत्तथा ।
मुञ्च घातं तथा चक्रे योगिनाऽन्योऽप्यवञ्चयत्॥ ६० ॥
कापालिकप्रहारेऽथ वितथे रत्नचन्द्रमाः ।
तदायुःकमलं खड्गधारांशुभिरमीलयत् ॥ ६१ ॥
विच्छिद्य बन्धसम्बन्धं प्रेमबन्धं प्रपञ्चयन् ।
उवाच कन्यकामेनां कुतस्त्वं कास्ययं च कः ? ॥ ६२ ॥
तद्वीक्ष्य जातमन्दाक्षा पद्माक्षी साऽब्रवीदिति ।
समस्ति नगरी चम्पा गतकम्पा रिपुव्रजात् ॥ ६३ ॥
तस्यां भूमिपतिः शङ्खः शङ्खशुभ्रगुणोज्ज्वलः ।
पद्मेव पद्मलेखेति तस्य देवी पतिव्रता ॥ ६४ ॥
तयोरभूवं तनया नाम्नाऽहं पद्मलोचना ।
उन्मथ्य बाल्यपाथोधिं प्रपन्ना यौवनश्रियम् ॥ ६५ ॥
मौहूर्त्तिकं शुभं नाम शुभाशुभविशारदम् ।
अन्येद्युः शङ्खभूपालः पर्यपृच्छत् कलानिधिम् ॥ ६६ ॥
को नामास्याः पतिर्भावी रूपेण वयसा समः ।
खेचरः क्षितिचारी वा विचिन्त्य मम कथ्यताम् ॥६७॥
अभ्यधादथ दैवज्ञः सम्यग्ज्ञानबलेन सः ।
कुरुदेशे पुरे चन्द्राभिधाने सन्निकेतने ॥ ६८ ॥
वसुभूतेः सुतो रत्नचन्द्रस्तन्द्राविवर्जितः ।
परिणेष्यति ते पुत्रीं रोहिणीमिव चन्द्रमाः ॥ ६९ ॥
एवं शुभगिरः श्रुत्वा मित्रभूतिं पुरोधसम् ।
वरीतुं रत्नचन्द्रं स्म प्रहिणोति महीपतिः ॥ ७० ॥
इति कापालिकोऽप्येष जालकान्तरवर्त्तिनीम् ।
दृष्ट्वा मां कृत्रिमैः पुत्रैः क्रीडन्तीं ससखीजनाम् ॥७१॥

पद्मिनीमिव मातङ्गः करेणाभ्यासवर्त्तिनीम् ।
अपाहार्षीदयं पापः पूर्ववैरस्मृतेरिव ॥ ७२ ॥ (युग्मम्)
अभ्यर्थिता ततोऽत्यन्तं न मन्ये तद्वचो यदा ।
तदाऽनेनातिपापेन प्रापिताऽस्मीदृशीं दशाम् ॥ ७३ ॥
ततो रोदितुमारब्धा विरसैः करुणस्वरैः ।
विधुरे रोदनादन्यत्र भीरूणां बलं किल ॥ ७४ ॥
स्वयमेव विजानासि परन्तप ! ततः परम् ।
निजेन तु चरित्रेण पवित्रय मम श्रुती ॥ ७५ ॥
अभ्यधादथ रत्नेन्दुः स्मितशुभ्ररदद्युतिः ।
अहं चन्द्रपुरे रत्नचन्द्रस्यास्मि परिग्रहे ॥ ७६ ॥
कल्याणि ! त्वां तदादेशादायातस्त्रातुमातुराम् ।
एतस्य शासने शक्तिस्तस्यैवेयं प्रगल्भते ॥ ७७ ॥
तया विशिष्टचेष्टाभिर्लक्षणैरपि लक्षितः ।
रत्नचन्द्रः स एवायमिति स्व गोपयन्नपि ॥ ७८ ॥
भवेदन्यस्य कस्येदं वीरव्रतमनुद्धतम् ।
यतो मां त्रातवानस्माद्योगिनो भोगिनो यथा ॥ ७९ ॥
ध्यात्वेत्युवाच सा रत्नचन्द्रमुद्वीक्ष्य विस्मिता ।
गतोऽस्त्यानेतुमेधांसि वीरशिष्योऽस्य योगिनः ॥८०॥
अत्यर्थमसमर्थः संश्छलेन च बलेन सः ।
किञ्चिदत्याहितं कुर्यात्तदपक्रमणं कुरु ॥ ८१ ॥
युक्तियुक्तमिति प्रोक्तस्तयाऽऽतङ्केद्धचित्तया ।
प्रेम स्थेमानमानेतुं मेने तस्या वचस्ततः ॥ ८२ ॥
शक्त्येवासक्तया सार्कं तया क्षितिपतेः सुतः ।
प्रचचालाचलं प्रीत इतश्चास्तमगाद्रविः ॥ ८३ ॥
अञ्जनाद्रेरिवोद्भूतः पातालविवरादिव ।
सूचीभेद्यस्तमस्तोमः प्रससार रसां प्रति ॥ ८४ ॥

अमूकघूकघूत्कारैरटन्ति मलिनाननाः ।
अस्त गते रवौ नाथे दिशः शोकाकुला इव ॥ ८५ ॥
विश्वमित्रे जगन्नेत्रे परलोकमुपेयुषि ।
तमोभिः पर्यपूर्य्यन्त लोचनानि तदाऽङ्गिनाम् ॥ ८६ ॥
कासारेभ्यः शशाङ्केन मुष्यन्ते कमलाकराः ।
जडात्मकानां गेहेषु न हि श्रीः स्थायिनी चिरम् ॥८७॥
ततः कुमारो रत्नेन्दुर्दुस्तरे वंशगह्वरे ।
शाययित्वा विशालाक्षीं तस्य द्वारि स्थितः स्वयम् ॥८८॥
विभातायां विभावर्यां यावदाह्वयति प्रियाम् ।
ददौ प्रत्युत्तरं शैलः प्रतिशब्दैर्न सा पुनः ॥ ८९ ॥
मदीया दयिता हन्त ! न वेद्मि च्छद्मसद्मना ।
हहा केनापि पापेनापहृताऽपहृताऽथवा ? ॥ ९० ॥
कुतोऽश्वेनापहारो मे कुतश्चास्याः समागमः ।
अपहारः कथं चैष ऊर्द्धस्थादपि जाग्रतः ? ॥ ९१ ॥
अथवा पुण्यनिर्णाशे जायते सर्वमीदृशम् ।
विधिरेव प्रगल्भोऽत्र कृते योगवियोगयोः ॥ ९२ ॥
एवं विमृश्य रत्नेन्दुश्चलितः काननोदरे ।
आराममिव धर्मद्रोर्निधानमिव सम्पदाम् ॥ ९३ ॥
पिधानमिव दुष्कर्मविरोचननिकेतने ।
ददर्श देवधामैकं विस्मयोत्फुल्ललोचनः ॥ ९४ ॥
मध्येचैत्यं प्रविष्टोऽसौ प्रमोदमिव देहिनाम् ।
निदध्यौ तीर्थकृद्बिम्बं दृग्मृगीपाशबन्धनम् ॥ ९५ ॥
प्रणत्य परया भक्त्या वीतरागं जगद्गुरुम् ।
अभ्यगान्मण्डपे चारुदन्तपञ्चालिकावृते ॥ ९६ ॥
इतश्चागान्नरः कोऽपि जराजर्जरविग्रहः ।
कौपीनवसनः क्षामः क्लिन्नक्लिन्नो मलेन च ॥ ९७ ॥

स प्रणम्य जिनाधीशं भावशुद्धया पवित्रितः ।
कुमारं प्रति सस्नेहं जगाद वदतां वरः ॥ ९८ ॥
गन्धारश्रावकं विद्धि मामयोध्यानिवासिनम् ।
धुर्येष्विव स्वपुत्रेषु न्यस्तौकोभारसम्पदम् ॥ ९९ ॥
जन्मदीक्षादितीर्थेषु प्रतिमास्त्रिजगद्गुरोः ।
वन्दमानो महातीर्थमहमागतवानिह ॥१००॥
अत्रैवानशनं कृत्वा परलोकः सुनिर्मलः ।
उपार्जनीयो भावेन नो कार्यं मयकाऽपरम् ॥ १ ॥
यतोऽहि ह्यस्तने भद्र ! विद्याधरमहामुनिः ।
वन्दितो भावतो ज्ञानज्ञातविश्वत्रयास्थितिः ॥ २ ॥
स प्रणम्य मयाऽपृच्छि प्रमाणं निजकायुषः ।
तेनोचे जीवितं भद्र ! पञ्चैव दिवसानि ते ॥ ३ ॥
मया तदत्रायातेन साध्यैवानशनास्थितिः ।
मुक्तिःश्रीवश्यविद्येव त्वत्त उत्तरसाधकात् ॥ ४ ॥
निशम्येदमुवाचोच्चै रत्नेन्दुर्विस्मिताशयः ।
किं साहाय्यं मया कार्यं परलोकोत्सुकस्य ते ॥ ५ ॥
अथाभाषिष्ट गन्धारो गृहाण विधिपूर्वकम् ।
मन्त्रं पञ्चनमस्कारसंज्ञया ख्यातिमागतम् ॥ ६ ॥

यतः—

ये याता येऽपि यास्यन्ति ये च यान्ति परं पदम् ।
ते सर्वेऽपि नमस्कारं स्मारं स्मारं कृतस्मयाः ॥ ७ ॥
नमस्कारः पिता माता नमस्कारः परो गुरुः ।
नमस्कारः प्रियं मित्रं नमस्कारः कुलं बलम् ॥ ८ ॥
आयान्ति यस्य माहात्म्यादाकृष्टा इव सम्पदः ।
विपदश्च विनश्यन्ति श्रुतेरिव कुवासनाः ॥ ९ ॥
नमोऽर्हदादिभ्य इति महामन्त्रं पवित्रधीः ।

अपठच्छ्रावकाभ्यर्णे शुद्धवर्णं यथाविधि ॥ १० ॥
अथ प्रोवाच गन्धारः समयेऽस्मिन् सखे ! मम ।
कर्णयोर्निकटस्थेन प्रदेयः प्रकटाक्षरम् ॥ ११ ॥
आमेति भाषिते तेन गन्धारः श्रावकोत्तमः ।
अकरोत् त्रिविधाहारपरीहारं यथाविधि ॥ १२ ॥
कर्णाभ्यासनिषण्णेन सुस्वरं नृपसूनुना ।
दीयमानेषु शुद्धेषु नमस्कारेषु भावतः ॥ १३ ॥
समाधिध्यानमाधाय श्रद्धासंशुद्धमानसः ।
देवभूयमगादेष गन्धारः पञ्चमेऽहनि ॥१४॥ (युग्मम्)
रत्नेन्दुः प्रेतकार्याणि कृत्वाऽस्य निजबन्धुवत् ।
तस्माच्चचाल पूर्वाशामुद्यमी देवतासखः ॥ १५ ॥
सिच्यमानतरुं मुग्धतापसैः कुटवाहिभिः ।
क्रीडन्मृगाङ्गनाग्रामं नीवारै राजिताजिरम् ॥ १६ ॥
इङ्गुदीतैलनिर्माणव्यग्रतापसकन्यकम् ।
तिम्यत्तारवतन्तूनां मालया राजितोटजम् ॥ १७ ॥
वेदिकामार्जनानिष्ठऋषिपत्नीमनोहरम् ।
अपश्यदाश्रममसौ दृक्चकोरीहिमद्युतिम् ॥ १८ ॥
( त्रिभिर्विशेषकम् )

तत्र प्रविश्य भूपालतनयो विनयोज्ज्वलः ।
भक्त्या कुलपतिं नत्वा निषसाद विनेयवत् ॥१९॥
इतश्च तापसद्वन्द्वे प्रणन्तरि कृताञ्जलौ ।
पप्रच्छ तापसस्वामी स्वागतं प्रीतिकार्मणम् ॥ २० ॥
अथ तावूचतुः पूज्य ! स्वागतं त्वत्प्रसादतः ।
अस्मन्मुखेन वः पादान् शङ्खराजो नमस्यति ॥२१॥
सुखेन तत्र संप्राप्ता पित्रोर्नेत्रसुधा प्रभो ! ।
नमत्यस्मात्द्गिरा युष्मच्चरणौ पद्मलोचना ॥ २२ ॥

निशम्य शङ्खनामादि बभाषे रत्नचन्द्रमाः ।
कोऽयं शङ्खमहीपालः का वेयं पद्मलोचना ? ॥२३॥
प्रत्यवादीत्कुलपतिश्चम्पायां पुरि शङ्खराट् ।
तस्याभून्नन्दिनी नेत्रानन्दिनी पद्मलोचना ॥ २४ ॥
इतश्च केनचिद्बालाऽपहृता जालकान्तरात् ।
न भवेदन्यथाभावः पूर्वोपार्जितकर्मणाम् ॥ २५ ॥
एतस्यां हन्यमानायां रत्नचन्द्रः कुतश्चन ।
समागात्तत्र युद्धेन योगिनं तं जघान च ॥ २६ ॥
नृपपुत्र्या तया सार्द्धं चलितो वसुभूतिजः ।
निशि वंशदरीकोणे तां कृत्वा द्वारि सोऽस्वपत् ॥ २७ ॥
इतश्च योगिशिष्येण पदिकेनेव गह्वरे ।
समागत्यापजह्रे सा द्वारं निर्माय पश्चिमम् ॥ २८ ॥
कण्ठपीठे स्वसिचयाञ्चलेन सुरभीमिव ।
गह्वराच्चालयामास विनिद्रां पद्मलोचनाम् ॥ २९ ॥
कियन्मार्गमतिक्रान्ते बभाषे योगिसेवकः ।
अरे रे ! तव किं कुर्वे मद्गुरोः प्राणघातिके ! ॥३० ॥
अथोचे भूपतिसुता दधती हृदि धीरताम् ।
तान्निर्मिमीष्व वेगेन यत्ते सङ्गतिमङ्गति ॥ ३१ ॥
प्रत्यवादीदसौ बाले ! जीवितं न हरामि ते ।
सिद्धमन्त्रौषधीविद्यं यदि मां परिणेष्यसि ॥ ३२ ॥
इदं निशम्य सा दध्यौ मानसे पद्मलोचना ।
भवितव्यं कथङ्कारं प्राप्यो राजसुतो मया ॥ ३३ ॥
धीमानशुभकालस्य हरणं विदधीत यत् ।
न विधेया क्वचिच्चिन्ता कालः कालो भविष्यति ॥ ३४ ॥
विमृश्यैवं सुता राज्ञस्तं प्रत्याह स्मितोत्तरम् ।
युक्तमुक्तं त्वया सर्वं परं मम वचः शृणु ॥ ३५ ॥

अस्मद्द्वयस्या देवश्रीर्विद्यते तापसाश्रमे ।
प्रपन्नमेतया सार्द्धमेवं शपथपूर्वकम् ॥ ३६ ॥
आवाभ्यां रूपलावण्यपुण्यश्रीभ्यां ससौहृदम् ।
एकः कार्यः पतिः प्रीतिरतिभ्यामिव मन्मथः ॥ ३७ ॥
तदाश्रममनुप्रीतस्त्वरस्व गुणवारिधे ! ।
एकक्रमेण ते भावि पाणितद्वयमुत्तमम् ॥ ३८ ॥
योगिशिष्यस्तथेत्युक्त्वा समागात्तापसाश्रमम्
साऽस्मन्नेत्रपथं प्राप्ता सिंहाकृष्टा मृगी यथा ॥ ३९ ॥
भद्रास्य ! सा मे जामेयी जीवन्ती कुलभाग्यतः ।
मुदेऽजनिष्ट वल्लीव घना घनघनोदयात् ॥ ४० ॥
योगिशिष्यस्ततोऽस्माभिः प्रहतो मुष्टियष्टिभिः ।
प्रणनाश महारण्ये घूकवद्धानुधामभिः ॥ ४१ ॥
इयं कथा मयाऽज्ञायि कथिता पद्मनेत्रया ।
इष्टसङ्गे भवेत्प्राय उदन्तः सुखदुःखयोः ॥ ४२ ॥
अथानयोरर्पयित्वा भागिनेयीं तपस्विनोः ।
सा शङ्खभूपतेः पार्श्वे प्रेषिता प्रीतिनिर्भरम् ॥ ४३ ॥
ताविमौ तापसौ शान्ततामसौ कोपनिग्रहात् ।
इहायातौ गुणाम्भोधे ! प्रष्टव्यस्त्वं कुतः पुनः ॥ ४४ ॥
अहं वैदेशिकः स्वामिन् ! प्रदेशमिममागमम् ।
गन्ता चम्पापुरीं पृथ्वीसमालोकनकौतुकी ॥ ४५ ॥
स्वामिन् ! प्रसादमाधाय दर्शयादर्शशुद्धधीः ।
चम्पायाः पदवीं साधुः प्रार्थनाविमुखो नहि ॥ ४६ ॥
अथर्षिर्दर्शयामास चम्पामार्गं तपोवनात् ।
तस्यां पुरि समायातो वसुभूतिनृपात्मजः ॥ ४७ ॥
विलोक्य नगरीं सर्वां कन्यान्तःपुरसन्निधौ ।
निविष्टः कामदेवस्य प्रासादे तुङ्गजालके ॥ ४८ ॥

सन्ध्यायां वलभौ पद्मलोचना निहितासना ।
विलोकते स्म रत्नेन्दुं द्वितीयेन्दुमिवोदितम् ॥ ४९ ॥
चन्द्राश्मप्रतिमेवास्य सुधांशोरिव दर्शनात् ।
सिस्विदे सर्वतः पद्मा निश्छद्मप्रेममन्दिरम् ॥ ५० ॥
आलस्यचञ्चलैर्लज्जानिर्जितैर्नयनोत्पलैः ।
पपौ पद्मा मुहुः प्रेमरसं नालैरिवोच्चकैः ॥ ५१ ॥
कोऽयं किं नाम कौतस्त्य इति पृष्टे सखीजनैः ।
साऽङ्गुष्ठेन विनम्रास्या विलिलेख महीतलम् ॥ ५२ ॥
इङ्गिताकारतत्त्वज्ञो ज्ञातवांस्तत्सखीजनः ।
नूनं रत्नकुमारोऽसौ स्वामिनीजीवितप्रदः ॥ ५३ ॥
ततः सखीजनाद् ज्ञातवृत्तान्तः क्षितिनायकः ।
रत्नं महोत्सवैः सौधमानिन्ये काममूर्त्तिवत् ॥ ५४ ॥
शुभे मुहूर्त्ते दैवज्ञजनेन विनिवेदिते ।
साकं रत्नेन्दुना राजा पर्यणाययदङ्गजाम् ॥ ५५ ॥
अतिष्ठद्रत्नचन्द्रोऽथ मासमेकं तदालये ।
अपि विज्ञपयामास श्वशुरं शिष्यवद् गुरुम् ॥ ५६ ॥
कलावानपि संपूर्णतेजा अपि पिता मम ।
लभते मद्वियोगेऽपि कृष्णपक्षादिव क्षयम् ॥ ५७ ॥
अतस्तत्राशु गन्तास्मि परं तव निदेशतः ।
संभावयामि पितरौ चिरं विरहदुःखितौ ॥ ५८ ॥
महत्याऽथ विभूत्याऽसौ साकं राजीवनेत्रया ।
रत्नेन्दुं प्रेषयामास शङ्खश्चन्द्रपुरं प्रति ॥ ५९ ॥
समायान्तं सुतं श्रुत्वा वसुभूतिः क्षितीश्वरः ।
प्रसादधवलैर्नेत्रकमलैरर्घमादधौ ॥ ६० ॥
देवताभिर्दत्तमिव पुनर्जातमिवात्मजम् ।
आलिलिङ्ग महीपालश्चिरान्मिलितमित्रवत् ॥ ६१ ॥

आ वाजिहरणाच्छ्रुत्वा वृत्तान्त तनयोद्भवम् ।
युगपच्छोकहर्षाभ्यामभ्यपूर्यत भूपतिः ॥ ६२ ॥
कियत्यथ गते काले परलोकं प्रपित्सुना ।
राज्ये भूपतिना न्यस्तो रत्नचन्द्रः शुभे दिने ॥ ६३ ॥
असौ ररक्ष भूपीठमखिलं ग्रामलीलया ।
अरिषड्कं निजग्राह दुर्ग्रहं शास्त्रसम्पदा ॥ ६४ ॥
अन्येद्यवि निशाशेषे सुखसुप्तं क्षितीश्वरम् ।
सर्पः सदर्पो निद्राणं वामपाणौ ददंश तम् ॥ ६५ ॥
आहूता मान्त्रिकास्तेषामुपचारपरम्परा ।
अजायत वृथा सर्वा दुर्जनोपकृतिर्यथा ॥ ६६ ॥
अथ विज्ञाय पञ्चत्वं प्रस्थितं पद्मलोचना ।
विललापेति विरसैर्विषदिग्धैरिवाक्षरैः ॥ ६७ ॥
एतत्तदेव हृदयं विशालं व्योमपीठवत् ।
यत्र ज्योत्स्नेव रेमेऽहं शारदीनहिमद्युतेः ॥ ६८ ॥
हे नाथनाथ ! विस्मेरप्रसूनैस्त्वां विनाऽपरः ।
कः करिष्यति मे कर्णौ कर्णोत्तंसविभूषणौ ? ॥ ६९ ॥
अनङ्गलीलालुलितानलकानतिचञ्चलान् ।
कः कर्त्ता स्थानविन्यस्तसुभगान्निधने तव ? ॥ ७० ॥
विषमायुधसन्तापतप्ते मम शरीरके ।
कः कर्ता चन्दनरसैः शीतशीतैर्विलेपनम् ? ॥ ७१ ॥
को विधास्यति मे नाथ ! पत्रवल्लीं कपोलयोः ? ।
सिक्तां प्रेमरसैः काम कामारामिकलालिताम् ॥ ७२ ॥
विलप्यैवं प्रिया राज्ञः प्रकृतीः प्रत्यकालिमम् ।
योजयित्वा करद्वन्द्वं बभाषे सात्त्विकं वचः ॥ ७३ ॥
प्राणनाथपथं भद्राः ! याताऽहं विरहासहा ।
यानपात्रमिवाद्याय सज्जीकुरुत पावकम् ॥ ७४ ॥

अथ प्रकृतयः प्रोचुर्मा वादीः स्वामिनीदृशम् ।
अनाथाः प्रकृतीः कृत्वा गन्तासि स्वामिवत् कथम्? ॥७५॥
प्रत्युवाच वचो धीरं सात्त्विकं पद्मलोचना ।
अम्भोधरं वरं मुक्त्वा किं खेलन्ति तडिल्लताः? ॥७६॥
अथ वाञ्छाधिकं दानं ददाना पद्मलोचना ।
सशोकपौरलोकेन वार्यमाणा पदे पदे ॥ ७७ ॥
कारागारचरान् वैरिवारान् धृतशुकानिव ।
मोचयन्ती सतीभ्यः स्वं कथयन्ती विशेषतः ॥ ७८ ॥
अमावास्यामयमिव कुर्वाणा निखिलं पुरम् ।
पितृवेश्मन्यगादेवी पितृवेश्मेव संमुदा ॥ ७९ ॥
चितायां तल्पकल्पायां दाक्षिणाशापतेरथ ।
चन्दनैधांसि भूयांसि तत्र युक्तानि चिक्षिपुः ॥८०॥
पयःपूर्णाञ्जलिं बद्ध्वा प्रज्वलन्तं हविर्भुजम् ।
त्रिश्च प्रदक्षिणीचक्रे तत्क्षणं दाक्षिणार्चिषम् ॥ ८१ ॥

इतश्च—

दिव्यरूपधरः कोऽपि दीप्यमानस्तनुद्युता ।
अवाततार नभसा रभसा विजितानिलः ॥ ८२ ॥
मा पद्मलोचने ! देवि ! कुरु साहसमद्भुतम् ।
जीवयिष्यामि ते नाथं केयं विषविभीषिका? ॥८३ ॥
श्रुत्वेति देवी दध्यौ कः पूरयत्यमृतैः श्रुती ? ।
यद्वा सत्त्वपरीक्षायै प्रतारयति कोऽपि माम् ॥ ८४ ॥
इत्यस्यां ध्यातवत्यां द्रागपि नेत्रनिरीक्षणात् ।
स भूपं निर्विषीचक्रे तोत्तलेव महेश्वरम् ॥ ८५ ॥
ध्वस्ताशेषविषो राजा विकसल्लोचनद्वयः ।
मृत्यवे कृतनेपथ्यामपश्यत् पद्मलोचनाम् ॥ ८६ ॥
पुरस्तादूर्द्धगं दिव्यं दिव्यरूपधरं नरम् ।

दृष्ट्वा जजल्प भूपालः के यूयं कुत्र वासिनः? ॥ ८७ ॥
अथ व्याहृतवानेष रत्नेन्दो! वेत्सि किं न माम्?।
सोऽहं गन्धारनामाऽस्मि मिलितस्तव यो वने ॥८८॥
त्वत्तः प्राप्तनमस्कारादभूवं लान्तके सुरः।
इदानीमवधिज्ञानादागतस्ते विषोद्धृतौ ॥ ८९ ॥
नेदं तवोपकारस्य प्रत्युपकारकारणम्।
किन्त्वेतल्लवणोदन्वल्लवणप्राभृतोपमम् ॥ ९० ॥
अन्यस्मिन्नपि विधुरे स्मर्त्तव्योऽहं पदातिवत्।
इत्युदित्वा सुधाभोजी पुनस्त्रिदिवमासदत् ॥ ९१
बन्दिवृन्देषु सानन्दं पठत्सु विरुदावलीः।
आजगाम नृपः सौधं विमानमिव नाकसत् ॥ ९२ ॥
ततः प्रभृति पद्मायाः प्रेमभिर्भूपतेर्मनः।
अरञ्जि कम्बल इव लाक्षारङ्गैर्विकस्वरैः ॥ ९३ ॥
एवंरूपकथोपेतः सोऽहमस्मि सुधीर्बलः।
यन्मे संसारवैराग्यं तत् सर्वं कथयिष्यते ॥ ९४ ॥
तथाऽन्येद्युर्युसन्नाथ इव दन्तीन्द्रपृष्ठगः।
चतुरङ्गचमूयुक्तः क्रीडार्थमचलं पथि ॥ ९५ ॥
विस्मेरमञ्जरीपुञ्जमञ्जुगुञ्जन्मधुव्रतैः।
पथिकान् परिपृच्छन्तामिव स्वागतमागतान् ॥ ९६ ॥
चतुर्दिगन्तशाखोपशाखाशतसमाकुलम्।
सेवितं पक्षिसङ्घातैः सहकारमथैक्षिषि ॥९७॥ (युग्मम्)
वीक्षमाणस्य तल्लक्ष्मीं नेत्रव्यापार एव मे।
वृत्तिः शेषेन्द्रियाणां तु सकलाऽपि तिरस्कृता ॥ ९८ ॥
अथागमं महोद्यानं मधुना कृतसान्निधि।
यस्मिन् पिकीरवैर्मन्द्रैर्बोध्यते मकरध्वजः ॥ ९९ ॥
लोलप्रवालकलिता यस्मिन् किंकिल्लिवल्लयः।

रम्याङ्गना इवाभान्ति पिकीरवविभूषणाः ॥ २०० ॥
श्रूयते चर्चरी यत्र पञ्चमोद्गारहारिणी ।
शृङ्गारनीरधेः सेतुर्वेलेव तटगामिनी ॥ १ ॥
मखलाकलिता काचित्कटकावलिमालिनी ।
ललना खेलति प्रेङ्खासुभगा गिरिभूरिव ॥ २ ॥
तस्मिन्नुपवने क्रीडामकार्षं प्रेयसीवृतः ।
रागसागरमध्यस्थः पुष्पकेतुवशंवदः ॥ ३ ॥
तस्मात्प्रतिनिवृत्तोऽहमथ तेनैव वर्त्मना ।
तमेव चूतमद्राक्षमन्यादृक्षमिव व्रजन् ॥ ४ ॥
कोऽयं वृक्ष इति भ्रान्तं तस्मिन्मम मनश्चिरम् ।
क्षणाद्विमुक्तनेपथ्यनटरूप इवाधिकम् ॥ ५ ॥
ममाभिप्रायविज्ञानादभ्यधात् सचिवोत्तमः ।
राजन् ! स एष चूतोऽयं यः पुरा ददृशे त्वया ॥ ६ ॥
परं दवाग्निचारेण नरः कुष्ठरुजा यथा ।
अस्तोककालतः स्वाभिनन्त्राप्त इवानि ॥ ७ ॥
श्रुत्वेदं मन्त्रिणो वाक्यं मद्गुरोरिव वाक्यतः ।
अचिन्तयमहं तत्त्वं वैराग्यद्रुमदोहदम् ॥ ८ ॥
मन्ये यथाऽसौ माकन्दोऽन्यादृक्षोऽजायत क्षणात् ।
विनश्वरी तथान्याऽपि दृष्टनष्टा भवस्थितिः ॥ ९ ॥
पुत्रमित्रकलत्रेषु याऽऽत्मीयमिति वासना ।
पित्तोद्रेकवतः सेयं शङ्खादिषु सुवर्णधीः ॥ १० ॥
न दुःखैः खिद्यते प्राणी न सुखैरपि तुष्यति ।
तस्मान्मुमुक्षुभिः किं न भूयते द्वन्द्वहारिभिः ? ॥११॥
य एव रूपान्नारीणां कन्दर्पं तनुतेतराम् ।
स एव वार्द्धके प्राप्ते कंदर्पं संविधास्यति । १२ ॥
य एव मन्द्रनादेन भारतीवल्लकीयते ।
स एव श्लेष्मणा हन्त ! भाषमाणोऽरघट्टति ॥ १३ ॥

यैरेव श्यामलैः स्निग्धैः केशपाशैः प्रशस्यते ।
तैरेव तूलपूलप्रस्पर्द्धिभिः परिभूयते ॥ १४ ॥
य एव सुरभिद्रव्यैश्चलत्कर्पूरवृक्षति ।
स एव कुष्ठसम्भूतव्रणगन्धैः शवायते ॥ १५ ॥
इत्थं विमृशतो मेऽभूद्वैराग्यं तत्तथा तदा ।
येन प्रत्येकबुद्धोऽहमभवं कर्मलाघवात् ॥ १६ ॥
विहरन् वसुधापीठं प्रतिबोधविधित्सया ।
अत्रागां तव बोधार्थमथोचे बलभूपतिः ॥ १७ ॥
स्वामिन्! वश्चरितं श्रुत्वा व्यावृत्तो भववासतः ।
परं क्रमागतां क्षोणीं न क्षमस्त्यक्तुमञ्जसा ॥ १८ ॥
तथापि येन धर्मेण सुकरेण मुनीश्वर !
पवित्रः स्यां नृपत्वेऽपि तं धर्मं मह्यमादिश ॥ १९ ॥
अथाचार्योक्तसुश्राद्धव्रतानि क्षितिनायकः ।
प्रपद्य मेने स्वं जन्म कृतकृत्यं निधीनिव ॥ २० ॥
इतश्चैत्य नभोमार्गात् कश्चिद्विद्याधरो नरः ।
त्रिश्च प्रदक्षिणीकृत्य मुनीन्द्रं स्म नमस्यति ॥ २१ ॥
तीर्थयात्रिक ! विद्याभृत्! प्रष्टव्योऽसि, कुतोऽधुना ।
इत्युक्ते सूरिणाऽवादीदसौ विनयमेदुरः ॥ २२ ॥
नगर्यां पुण्डरीकिण्यां नत्वा पूज्यपदद्वयीम् ।
व्रतं प्रपित्सुर्वैताढ्यमेरुनन्दीश्वरादिषु ॥ २३ ॥
तीर्थानि वन्दमानोऽहं कृत्रिमाकृत्रिमाण्यपि ।
दक्षिणे भारतस्यार्द्धेऽयोध्यायां पुर्यगां प्रभो! ॥२४॥ (युग्मम्)
तत्र शक्रावताराख्यं तीर्थं दृष्टं मनोहरम् ।
हरिश्चन्द्रनरेन्द्रेण सम्प्रत्येव समुद्धृतम् ॥ २५ ॥
एकं तादृग्महातीर्थं हरिश्चन्द्रोद्धृतं परम् ।
एकं सुवर्णमपरं परं परिमलाकुलम् ॥ २६ ॥

तत्रास्थां तीर्थसेवायै कुर्वाणोऽष्टाह्निकोत्सवम् ।
इदानीं प्रभुपादान्ते प्रवित्रजिषुरागतः ॥ २७ ॥
अथोवाच बलो राजा किमिदं तीर्थमुत्तमम् ।
कोऽयं राजा हरिश्चन्द्रः स्वामिन्निति निगद्यताम्॥२८॥
महीश !जम्बूद्वीपेऽस्मिन् क्षेत्रे दक्षिणभारते ।
अभूत्कुलकरो नाभिराभिमुख्यमिव श्रियाम् ॥२९॥
मरुदेवा प्रिया तस्य स्वच्छा शान्ता पतिव्रता ।
तयोरात्मभवः श्रीमान् भगवानृषभध्वजः ॥ ३० ॥
तदर्थं पुरुहूतेन कृताऽयोध्या महापुरी ।
द्वादशयोजनायामा नवयोजनविस्तृता ॥ ३१ ॥
तत्र शक्रावताराख्यं यथार्थं तीर्थमुत्तमम् ।
युगादिदेवप्रतिमाभासुरं सम्पदां पदम् ॥ ३१ ॥
हरिश्चन्द्रो नृपस्तत्र नाभेयान्वयभूषणम् ।
नलिनं नीतिभृङ्गीणां कामकुम्भः सदाऽर्थिनाम् ॥३२॥
सुतारा प्रेयसी तस्य च्छायेव तुहिनद्युतेः ।
वसुभूतिरमात्योऽस्य नयवल्लीघनाघनः ॥ ३३ ॥
अन्येद्युर्यामिनीशेषे सुखसुप्तः क्षितीश्वरः ।
इमं शुश्राव सत्त्वाम्बुजलधिं श्लोकमीदृशम् ॥३४॥
धीरैर्वीरैः समर्यादैः सत्त्वं रक्ष्यं विवेकिभिः ।
समापन्ने निजप्राणसंशये सुमहत्यपि ॥ ३५ ॥
इति श्रुत्वा पठन्नेवं निद्रां तत्याज भूपतिः ।
अस्मराद्विस्मयोल्लासात्पौनःपुन्येन मन्त्रवत् ॥ ३६ ॥
इतश्च तापसः कोऽपि सभीकोऽरिगृहीतवत् ।
समागादित्युवाचोच्चैर्वाचा सग्रहकण्ठया ॥ ३७ ॥
त्वयि शासति भूनाथ ! मेदिनीमन्यदेहिनाम् ।
न भयं वास्तवं किञ्चिद् दृश्यते शशशृङ्गवत् ॥ ३८ ॥

[illegible] ज्ञानध्यानवता भयम् ।
[illegible]र्तं येन निनाथा इव स्मः क्षितिनायक ! ॥ ३९ ॥
कुतोऽप्यभ्येत्य भीमास्यः कोलः काल इवापरः ।
बभञ्जारमद्द्रुमान्पुत्रानिव संवर्द्धितान् स्वयम् ॥ ४० ॥
चकर्त्त च लताः क्रोधात् मूर्त्ता अस्मत्क्रिया इव ।
यज्ञानिव कुशावासानालवालान्ममर्द च ॥ ४१ ॥
आश्रमाणां पुराणां च त्राता येन त्वमेव भोः ! ।
इति तस्मिन्वदत्येव राजोचे धीरया गिरा ॥ ४२ ॥
एष हन्मि दुरात्मानं क्रोडं कुल्यं विरोधिवत् ।
एवं प्रत्यशृणोद्वीरो मुनिश्चाथ तिरोदधे ॥ ४३ ॥
अथ प्रातः स कृत्यानि कृत्वा सेनापरीवृतः ।
मनोजवमिवारुह्य वाजिनं निर्ययौ ततः ॥ ४४ ॥
क्वचित्पान्थैः कृतस्नानां क्वचित् यूपैश्च दन्तुराम् ।
क्वचिद्गन्धाविविध्यग्रद्विजलोकसमाकुलाम् ॥ ४५ ॥
कल्लोलक्रीडगान् हंसान् क्रीडयन्ती सुतानिव ।
वोक्षांचक्रे क्षमाधीशः सरयूं सरिदुत्तमाम् ॥४६॥ (युग्मम्
राजा पप्रच्छ पार्श्वस्थौ कपिञ्जलकपिङ्गलौ ।
क्व क्रोडः प्रोचतुस्तौ तु स्वामिन्नेष पुरस्थितः ॥ ४७ ॥
स क्रोडस्तद्वचः श्रुत्वा शौर्यचर्यातरङ्गितः ।
संमुखीनोऽभवत्तस्य वादीव प्रतिवादिनः ॥ ४८ ॥
अथ राजा धनुः सज्जं कृत्वा शौर्यमिवात्मनः ।
टङ्कारैः पूरयन् व्योम पातयामास तं भुवि ॥ ४९ ॥
यावदेति नृपस्तत्र तं स्वयं हतमीक्षितुम् ।
तावदैक्षत भूमिष्ठां लुठद्गर्भां हतां मृगीम् ॥ ५० ॥
विषण्णमानसः स्माह हरिश्चन्द्रः कृपापरः ।
धिग् धिग्मां हरिणीभ्रूणघातपातकलङ्कितम् ॥ ५१ ॥

दुर्भगोऽपि दरिद्रोऽपि राढाधिव्याधिमानपि ।
पराश्रयाभिभूतोऽपि प्राणी प्राणितुमिच्छति ॥ ५२ ॥
इयतः कल्मषाच्छुद्धिः कथं मम भविष्यति ।
विना मुनीन् शमध्यानतत्परान् भवतारकान् ॥ ५३ ॥
विमृश्येति दयानिघ्नो विरक्तः पापवर्त्मनः ।
प्राविशदाश्रमं पद्भ्यां सखिभ्यांसह भूपतिः ॥ ५४
ततः कुलपतिं दृष्ट्वा ननाम जगतीपतिः
न्यधात् मूर्ध्नि करक्रोडमुच्चरन्नाशिषं स च ॥ ५५ ॥
हर्षाल्लालकालितः फलितः सुकृतद्रुमः ।
यौष्माकं दर्शनं यन्मे जातमित्यूचिवान्नृपः ॥ ५६ ॥
मुनिः प्राह महीपाल ! वयमद्य जगत्यपि ।
धन्या येन भवान् दृष्टः पञ्चमो लोकपालकः ॥ ५७ ॥
अस्मिन्नवसरे तत्र बहुलस्तुमुलोऽभवत् ।
अब्रह्मण्यमब्रह्मण्यमिति ध्वानभयङ्करः ॥ ५८ ॥
उत्कर्णो मुनिभूमीन्द्रौ सिंहवत्तद्विपाविव ।
जातावगण्यकारुण्यरससंसिक्तमानसौ ॥ ५९ ॥
ततस्तारतरं सास्रं रुदती सुदती भृशम् ।
सुवत्सां वञ्चनां स्नेहादनुयान्ती शनैः शनैः ॥ ६० ॥
रक्ष रक्षाश्रमगुरो ! निर्नाथामिव मामिति ।
जल्पन्ती निकृतिं भार्यामपश्यन्स्वां तपोधनः ॥६१॥ (युग्मम्)
ऋषिः पुत्रीं निरीक्ष्योचे कथं रोदिषि बालिके ! ।
माऽवोचत्तात ! केनापि सखी मम मृगी हता ॥ ६२ ॥
सास्र कुलपतिः प्राह या किलासीत्प्रजावती ।
एकं मृगीवधोऽन्यच्च भ्रूणहत्या वचोऽतिगा ॥ ६३ ॥
कोपाक्रान्तः पुनः प्राह हृदयस्फोटकृद्वचः ।
अरे रे ! तेन दुष्टेन कृतोऽस्माकं कुलक्षयः ॥ ६४ ॥

यतः—विनेमां हरिणी बालवयस्यामिव मत्सुता ।
विप्रनङ्क्ष्यति पश्चान्मे नूनं पत्नी विपत्स्यते ॥ ६५ ॥
विना प्राणप्रियामेनां कुतो मे स्यात्तपोविधिः ? ।
विना तपोविधिं क्व स्याद् ब्राह्मण्यमनघं मम ? ॥६६॥
अहो ! अन्याय ईदृक्षः क्षमिणामपि दुःसहः ।
यन्मृगी मृगयाऽन्धेन हता केनापि पापिना ? ॥६७॥
एवं विषादमापन्नोऽवादीत् कुलपतिस्ततः ।
ज्ञात्वा कुतोऽपि भूपाल ! ससाध्यः पितृवैरिवत् ॥६८॥
इतोऽभ्यधान् मुनेः पुत्री सास्रं जनक ! सत्वरम् ।
प्रगुणीकुरु मद्योग्यां चितां वह्निसमाचिताम् ॥ ६९ ॥
किं न वेत्सि मृगीमेनां विना मे जीवितं कुतः ? ।
पश्चादपि हि यत् कृत्यं तत् पूर्वं किं न तन्यते ॥७०॥
अथ सास्रं नृपः प्रोचे दुष्कृत्यन्यञ्चदाननः ।
शिक्षां कर्त्तास्मि सर्वेषां नात्मनो निन्द्यकर्मणः ॥७१॥
तच्छ्रुत्वा स मुनिः स्माह यथार्थः क्षात्रियो भवान् ।
सत्यार्थेयं त्वया चक्रे नितरां प्राकृतश्रुतिः ॥ ७२ ॥
निर्मिता शस्यरक्षार्थं वृत्तिः क्षेत्रे कृषीवलैः ।
सा चेदत्तितरां शस्यं कस्य पूत्कुर्महे पुरः ॥ ७३ ॥
प्रणिपत्य मुनेः पादौ राजाऽवादीन्नयान्वितम् ।
[1]क्षमस्वेदं ममागस्त्वं क्षमाधरशिरोमणे ! ॥ ७४ ॥
[2]श्रुत्वेत्याख्यत् कुलपतिर्ममापसर दृक्पथात् ।
आः पाप ! कौलटेरोऽसि रे रे क्षत्रियपांशन ! ॥७५॥
अथाङ्गारमुखोऽवादीन्मा रुषो वदतांवर ! ।
नैवापमानमुर्वीशः सोढुं परिवृढस्तत्र ॥ ७६ ॥

(१) सहस्व मन्तुमेकं मे सन्तो यन्नतवत्सलाः इत्यपि ।
(२) मुनिः पराङ्मुखीभूय चुक्रोश क्षितिनायकम् इत्यपि ।

धैर्यं भज महाराज ! प्रतीकारोऽस्ति पाप्मनः ।
मलिनस्यापि वस्त्रस्य शोधकं वारि किं नहि ॥ ७७ ॥
शुद्धिर्जायत एवास्य पापस्यापि प्रथीयसः ।
ददासि राज्यं यद्यस्मै दानं हन्ति हि दुर्नयम् ॥७८॥
सोल्लासमिव राज्ञोचे प्रसन्नोऽस्म्युपदेशतः ।
भवानङ्गारवक्त्रोऽपि सुधावक्त्रो ममाभवत् ॥ ७९ ॥
सकोशग्रामनगरा भूरियं वार्द्धिमेखला ।
तुभ्यं दत्ता तत्प्रसीदेत्युक्त्वा भूपोऽनमन्मुनिम् ॥ ८० ॥
प्रणत्याङ्गारवक्त्रोऽपि तमवादीत् कृताञ्जलिः ।
अयं यदाभिधत्ते गाद् प्रतिपद्यस्व तत्तथा ॥ ८१ ॥
एवमस्त्विति भाषित्वा स साक्षेपमदोऽवदत् ।
अद्यप्रभृति धात्रीयं धात्रीव ध्यायतां त्वया ॥ ८२ ॥
अथाभ्यधाद् धराधीशो धरा दत्तैव तेऽधुना ।
प्रातिभूरत्र कौटिल्यो भूमिदाने विचिन्तय ॥ ८३ ॥
अथ विज्ञपयामास कोऽपि शिष्यो महामुनिम् ।
न तपो न जपस्तावद्यावदस्ति मृता मृगी ॥ ८४ ॥
सखेदं सोऽप्यभाषिष्ट कारयानलसंस्कृतिम् ।
वञ्चनोचे मया साकमेतस्याः सा भविष्यति ॥ ८५ ॥
उवाच विनयाद्राजा वञ्चने ! दुर्नयं मम ।
सहस्वैकं महाभागे ! सार्द्राऽसि नतदेहिषु ॥ ८६ ॥
अहं तुभ्यं प्रदास्यामि स्वर्णलक्ष सुलक्षणे! ।
आमेत्युवाच सा यद्वा किं न स्याद्दानकर्मणा ? ॥८७॥
महर्षिः प्राह मे याहि पुरीं लक्ष्मीविकस्वराम् ।
सन्ध्याकृत्यं विधायाशु पश्यैते वयमागताः॥ ८८ ॥
एवमाकर्ण्य निर्वर्ण्य तं मुनिं क्षितिनायकः ।
ततो राजन्यमूर्द्धन्योऽयोध्यां प्राप निजां पुरीम् ॥८९॥

...नर्वेषु ज्ञात्वा यात्यस्तं तेजसां पतिः ।
...पाण्डुरच्छायाः प्रसस्रुस्तारका अमी ॥ ९० ॥
इति वैतालिकीमुक्तिं भावयन् भवितव्यताम् ।
जगाम धाम भूमीशो धाम्नां निधिरिवाम्बुधिम् ॥ ९१ ॥
राजामित्रद्वयात् ज्ञातवृत्तान्तः सचिवाग्रणीः ।
हतसर्वस्ववच्छून्यो वसुभूतिरचिन्तयत् ॥ ९२ ॥
अनेन दम्भिना भूपो दम्भितो गर्भरूपवत् ।
अविचारितकर्त्तारो विमुह्यन्ति पदे पदे ॥ ९३ ॥
विधेर्विलसितं हन्त ! विचाराणामगोचरे ।
सुघटं यो विघटयेदघटं घटयेदपि ॥ ९४ ॥
विमृश्यैवं महामात्यः सशल्य इव दुःखितः ।
विलासमण्डपासीनं राजानं प्राणमत्तदा ॥ ९५ ॥
नत्वोपविष्टः सचिवस्तद् वृत्तं वक्तुमुद्यतम् ।
देव ! सर्वं मयाऽज्ञायि मा वादीरित्यवारयत् ॥ ९६ ॥
हरिश्चन्द्रस्ततः प्राह सधीरं नीरदध्वनिः ।
मा विषीद विदग्धोऽसि सत्त्वं यन्मानिनां धनम् ॥९७॥
सत्त्वमेकमिदं मा गात् सर्वमन्यद्भविष्यति ।
सति कन्दे न सन्देहो वल्याः पल्लवसम्पदाम् ॥९८॥
कण्ठपीठी कुठारेण बाध्यतामस्तु बन्धनम् ।
न तु जातु प्रतिज्ञातमर्थमुज्झन्ति सात्त्विकाः ॥ ९९ ॥
इति राजवचः श्रुत्वा वसुभूतिर्धियां निधिः ।
हृदये चिन्तयांचक्रे सत्त्वमत्र विजृम्भते ॥ ३०० ॥
सविनेयो मुनिः सोऽथ समागात्कृतशब्दवत् ।
अयाचत महीपालं स्वर्णलक्षमलक्ष्यधीः ॥ १ ॥
भाण्डागारिकमादिश्य कोशतः कोशतो मुनेः ।
आनाययत् क्षणादक्षः स्वर्णलक्षं क्षितीश्वरः ॥ २ ॥

मुनिरूचे ततः कोपभ्रूकुटीभङ्गभीषणः ।
चिकीर्षुरनृणं स्वं मद्वित्तेनापि विवक्ष्यसि? ॥ ३ ॥
व्रजामो वयमन्यत्र दृष्टं सत्त्वं तवाधुना ।
यावद्रकाश्च वीक्ष्यन्ते निःशूकाश्च गृहे गृहे ॥ ४ ॥
अथोवाच महीभर्त्ता विलम्बध्वं गुणानघाः! ।
यावदप्यन्यतः स्वर्णमानयामि कलान्तरैः ॥ ५ ॥
वणिजो भूभुजामीशः समाकार्य समादिशन् ।
ददत स्वर्णलक्षं मे दास्येऽहं वृद्धिसंयुतम् ॥ ६ ॥
मुनिना दिव्यशक्त्या ते हरिश्चन्द्रे खिलीकृताः ।
तत्यजुस्ते तदादेशं नतमस्तककैतवात् ॥ ७ ॥
विलोक्य क्ष्मापतिर्दध्यौ किं करोमि प्रयामि क्क्म्? ।
आनयेऽहं कथं स्वर्ण मरुदेशे यथा जलम्? ॥ ८ ॥
ततः कुलपतिः कोपकम्पमानाधरोऽवदत् ।
पाप्मन्! कियन्तमद्यापि विलम्बं मे विधास्यसि ॥९॥
वसुभूतिस्ततः प्राह महर्षे! हर्षवर्षक! ।
हरिश्चन्द्रसमः क्वापि दृष्टः किं सात्त्विकाग्रणीः? ॥१०॥
अथाङ्गारमुखोऽवादीत्सोपहासममुं प्रति ।
दृष्टस्त्वत्तो न वाचालो हरिश्चन्द्राच्च वञ्चकः ॥ ११ ॥
अरे रे! कर्मचाण्डाल! किमेभिर्भाषितैस्तव? ।
रुष्टो हि रूपकात् पादवन्दनैः किमु तुष्यति? ॥ १२ ॥
अदत्तेऽस्मिन् दुराचार! किमु वाञ्छसि जीवितम्? ।
तव श्लोकस्य लोकस्य क्षय एष उपागतः ॥ १३ ॥
अथावादीन्नृपः साधो! कुतस्त्वत्तः कुलक्षयः? ।
नहि पीयूषपानेन मृत्युः कस्यापि जायते ॥ १४ ॥
जघान पार्ष्णिना भूप मुनी राजा ननाम तम् ।
कोपिनां क्षमिणामाद्यं संजातौ तौ निदर्शनम् ॥ १५ ॥

ऊचेऽङ्गारमुखः कोपाद्विप्लावयसि किं मुनिम् ? ।
नायं हास्यपदं मूढ ! पत्नीभ्रातेव ते गुरुः ॥ १६ ॥
इत्याकर्ण्य वचः कर्णद्वयतप्तत्रपुप्रभम् ।
वसुभूतिरुवाचेदं मा वादीरिति राजनि ॥ १७ ॥
राजंस्त्वमेकमेवैनं वाचालं वारयाऽन्यथा ।
एतस्य प्रकटं शिक्षां कर्त्तास्मीत्यवदन्मुनिः ॥ १८ ॥
कुन्तलो वसुभूतिश्च प्रोचतुर्द्वावपि स्फुटम् ।
यावद्ददाति ते स्वर्णं तावदावां गृहाण भोः ! ॥ १९ ॥
अरे ! जीर्णबिरालाभ्यां भवद्भ्यां किं प्रयोजनम् ? ।
इत्युक्तवति सत्यास्मिन् राजा कुन्तलमादिशत् ॥ २० ॥
सहितां रोहिताश्वेन देवीमाकारय द्रुतम् ।
विक्रयाय सवत्सां गामिवावक्रयवर्त्मनि ॥ २१ ॥
प्रतिपद्येदृशं दुःखी कुन्तलः श्लथकुन्तलः ।
तामादाय समायातः सपुत्रां नृपपर्षदि ॥ २२ ॥
मुनिमानम्य राजाऽऽह गृहाणाभरणादिकम् ।
तपस्व्युवाच ते केयं दक्षता दानकर्मणि ? ॥ २३ ॥
नेपथ्यं मामकीनं यन्ममैव तद्वितीर्यते ।
स्वसुः पुष्पाणि बध्यन्ते स्वसुरेव हि सत्यगीः ! ॥ २४ ॥
अथाङ्गारमुखोऽवादीत् स्वामिन्निमां न वेत्सि किम् ? ।
कपटाम्भोधिचन्द्रस्य हरिश्चन्द्रस्य वल्लभाम् ॥ २५ ॥
अथोचे कुन्तलः कोपादाबद्धभृकुटीत्रयः ।
अरे! पतिव्रतां कान्तां वेत्सि नो सत्त्वशालिनः ? ॥२६॥
मुनिवेषधरा यूयं प्रत्यक्षा राक्षसा इव ।
मद्यमत्ता इवोन्मत्ता वाचाला बालका इव ॥ २७ ॥
ततः कुलपतिः कोपात्कमण्डलुजलेन तम् ।
आच्छोट्य कुन्तलं चक्रे जम्बुकं क्षणमात्रतः ॥ २८ ॥

कुन्तलो जम्बुको भूत्वा शब्दं कुर्वन् बहिर्ययौ ।
'कोपं महर्षे! मा कार्षीर्नत्वेदमवदन्नृपः ॥ २९ ॥
मुनिना विहितं दूरे पादेनाहत्य भूपतिम् ।
विलोक्य रोहिताश्वोऽथ रुरोद करुणस्वरैः ॥ ३० ॥
मां गृहाण मुने! तातं मा मा ताडय निर्दयम् ।
इति श्रुत्वा शिशोर्वाक्यमृषिस्तुष्टो मनस्यभूत् ॥ ३१ ॥
क्रोधोत्तालं मुनिः प्राह सुतारां प्रति निर्घृणः ।
रे! त्वया शिक्षितो बालो जानाति कथमीदृशम्? ॥३२॥
हरिश्चन्द्रोऽभ्यधादित्थं महर्षे! ब्रह्मसेवधे! ।
मासमेकं प्रतीक्षस्व तुभ्यं दास्यामि काञ्चनम् ॥ ३३ ॥
स मुनिः स्माह किं भिक्षां याचित्वाऽथ नृपोऽवदत् ।
ऐक्ष्वाकवोऽपि किं भिक्षां याचन्ते मानिनो ननु? ॥३४॥
कुतस्तर्हीति तेनोक्ते भूपः प्राह कृतास्मितः ।
कृत्वा स्वं परदास्येऽपि तुभ्यं दास्ये यथोचितम् ॥३५॥
भवत्वेवं महीपाल! मम मुञ्च वसुन्धराम् ।
नैक्ष्वाकवस्त्यजन्त्येव सन्धां प्राणक्षयादपि ॥ ३६ ॥
विमृश्योचे नृपः सुभ्रु! गच्छान्तःपुरमञ्जसा ।
नायं सोढा शिशुर्मार्गखेदं मृदुशरीरकः ॥ ३७ ॥
सावष्टम्भं सुतारोचे यद्भाव्यं तद्भविष्यति ।
आयास्यामि त्वया साकं छायेवातुहिनांशुना ॥ ३८ ॥
क्व यातासि सुतारे! त्वं मुनिना समुदीरितम्? ।
साऽभ्यधादार्यपुत्रेण गन्ता, पत्यनुगाः स्त्रियः ॥ ३९ ॥
ममाधीनां हरिश्चन्द्रश्चेन्नेष्यति तदद्भुतम् ।
पारीन्द्रवक्त्रगामेणीं किं गृह्णन्ति मदद्विपाः? ॥ ४० ॥
वसुभूतिरुवाचेदं प्रज्वलन् क्रोधवह्निना ।
अरे! तापस! नो वेत्सि लोकमार्गं पुलिन्दवत् ॥ ४१ ॥

परायत्ताः क्वचिन्न स्युर्ललनाः पतिदेवताः ।
इतिस्मृतिस्मृतौ मूर्ख! कथं तापसपांशनः ? ॥ ४२ ॥
वसुभूतिस्ततस्तेन शपित्वा कीरकीकृतः ।
वचो हि बन्धनायैव निष्प्रस्तावमुदीरितम् । ४३ ॥
रण्डे! संत्यज नेपथ्यं याहीति मुनिनोदिते ।
सुतारा मुमुचे सद्यः किरीटादि शरीरतः ॥ ४४ ॥
मुनीन्द्राविधवामात्रचिह्नं मे मुञ्च किञ्चन ।
श्रुत्वेदं सपरीहासमवदन्निष्ठुरो मुनिः ॥ ४५ ॥
चण्डि! वैशिक एवास्ति दुर्भगाया विभूषणम् ।
सबाष्पं सा ततः सर्वं नेपथ्यं तत्पुरोऽमुचत् ॥ ४६ ॥
ततः पुत्रकलत्राभ्यां धरित्रीधवपुङ्गवः ।
अरण्यान्या इव स्वस्या नगर्या निर्ययौ तदा ॥ ४७ ॥
अनुरागाल्लुठद्बाष्पमनुयान्तं पुरीजनम् ।
अभाषिष्टेति भूपालः प्रीतिपेशलया गिरा ॥ ४८ ॥
चिरं परिचयात् क्रोधादज्ञानाद्वा प्रलोभतः ।
राज्यश्रीप्रणयोन्मादादपराद्धा यतस्ततः ॥ ४९ ॥
तत्तत् क्षाम्यन्तु मे सर्वं यद्यदागो मया कृतम् ।
श्रुत्वेदमरुदन् पौरा मृतप्रियजना इव ॥ ५० ॥
स्मरन्तः स्वामिनः कामं गुणानेणाङ्कनिर्मलान् ।
नगरीं नागरा जग्मुर्देहेन मनसा नहि ॥ ५१ ॥
किञ्चिन्मार्गमतिक्रान्ता परिश्रान्ता सुलोचना ।
कियदद्यापि गन्तव्यमित्यपृच्छद् महीपतिम् ॥ ५२ ॥
उवाच क्ष्मापतिर्देवि! किं ताम्यसि न पश्यसि ? ।
इमां वाराणसीं श्रान्तनेत्रप्रान्थप्रपाप्रभाम् ॥ ५३ ॥
वहन्ती नन्दनं देवि! यदि खिन्नाऽसि दूरतः ।
अनुगङ्गमिमं चारु चम्पकं द्रुममाश्रय ॥ ५४ ॥

देव्या तथाकृते राजा स्वकरेण निजक्रमात् ।
दर्भाङ्कुरान्समाकर्षदयःकीलकसन्निभान् ॥ ५५ ॥
कुर्वती पादरुधिरैरिन्द्रगोपाङ्कितां धराम् ।
मन्दमन्दरवा देवी न्यग्मुखी रोदिति स्म सा ॥ ५६ ॥
रोहिताश्व उवाचेदं यदा पद्भ्यां महीमहम् ।
अचलं तात ! मे पादौ विद्धौ दारुणकण्टकैः ॥ ५७ ॥
राजा सकरुणं प्राह कतरस्ते सुत ! क्रमः ।
विद्धो यस्मादयःशल्यकल्पं कण्टकमाहरे ॥ ५८ ॥
कण्टकं कण्टकेनैव तत्क्रमाभ्यां हरत्यसौ ।
अग्निरेवाग्निदग्धस्य भेषजं हि निशम्यते ॥ ५९ ॥
रोहिताश्वस्ततः प्राह तात ! तात ! क्षुधार्दितः ।
अथोचे पूर्ववद्राजा देहि क्षुभाय मोदकम् ॥ ६० ॥
देवी सुतारा श्रुत्वेदमन्तर्दाहकरं वचः ।
किमिदं भाषसे स्वामिन् ! स्वप्नदृष्टसमं हहा ? ॥ ६१ ॥
रोहिताश्वः पुनः प्रोचे मातरस्मि क्षुधार्दितः ।
तारस्वरं रुरोदासौ बलं नान्यद् मृगीदृशाम् ॥ ६२ ॥
सर्वलक्षणपूर्णस्य भरतान्वयजन्मिनः ।
अवस्था केयमायाता हन्त ! रोरशिशोरिव ? ॥ ६३ ॥
निदध्यौ भूपतिः सास्रं केयं कालस्थितिर्मम ? ।
यदस्य गर्भरूपस्य कल्यवर्त्तेऽप्यशक्तिता ॥ ६४ ॥
आस्तां विनोदयाम्येनं विनोदैः कौतुकप्रियम् ।
पश्यैतां स्वर्धुनीं पुत्र ! कलहंससमाकुलाम् ॥ ६५ ॥
इति विप्लावयत्यस्मिन् रोहिताश्वं कुतूहलैः ।
अकस्मादाययौ काऽपि सपाथेया कुटुम्बिनी ॥ ६६ ॥
पृच्छन्ती नगरीमार्गं भूपमेषा व्यचारयत् ।
नृपलक्षणभाजोऽस्याऽवस्थेयं कथमीदृशी ? ॥ ६७ ॥

कुतस्त्योऽसि कुतश्चागास्तयेति व्याहृते सति ।
अनाकर्ण्यैव तद्वाक्यं मौन्यभूद्भूमिनायकः ॥ ६८ ॥
अयाचितं स्वपाथेयं वृद्धाऽदात् नृपसूनवे ।
अयाचितं दीयते यत्तद्दानं श्रेयसे खलु ॥ ६९ ॥
गतखेदाऽसि चेद्देवि ! तदोत्तिष्ठ पुरीं प्रति ।
अथाग्रे गौरिव पथा प्रवृत्ता साऽवदद् नृपम् ॥ ७० ॥
राज्यलक्ष्मीपरिभ्रंशाल्लज्जते न किमु प्रियः ? ।
वैरिपुर्यां कथमस्यामार्यपुत्रः प्रवेक्ष्यति ? ॥ ७१ ॥
सावष्टम्भं बभाषेऽथ का लज्जा सत्त्वशालिनाम् ? ।
आपदः सम्पदायन्ते प्रतिज्ञातार्थकारिणाम् ॥ ७२ ॥
प्रभवद् वार्यते केन कृतं कर्म शुभाशुभम् ? ।
तन्माहात्म्याद्दशाऽस्माकं यद्येषा किं परे द्विषः ? ॥७३॥
प्रचचाल ततः क्ष्मापः पुरीं वाराणसीं प्रति ।
इतो देव्यवदद्देव ! समासन्नोऽवधिर्मुनेः ॥ ७४ ॥
मां विक्रीय गृहाणाशु काञ्चनं किञ्चनाधुना ।
अथ पुत्रोऽब्रवीत्तात ! विक्रेयोऽहं नहि त्वया ॥ ७५ ॥
मातर्वारय तातं मे विक्रीणन्तं चतुष्पथे ।
रुदत्याह सुताराऽमु वत्स ! भूपो भविष्यसि ॥७६॥
मा रोदीर्भद्र ! मा रोदीस्त्वां विक्रेता न कश्चन ।
मत्समीपे निषीदाशु तुभ्यं दास्यामि मोदकम् ॥ ७७ ॥
सा निदध्यौ हहा ! दैवं भवे भवशतानि मे ।
शैलूष इव रूपाणि प्रपञ्चयति नाटके ॥ ७८ ॥
विक्रेतुमथ रथ्यायां गतोऽसौ सपरिच्छदः ।
व्यसनं सत्त्वहेम्नो हि कषपट्टो निगद्यते ॥ ७९ ॥
वित्तेऽवधार्य भूमीशस्तृणान्याधाय मस्तके ।
पुत्रस्य स्वकलत्रस्य तस्थौ साश्रुविलोचनः ॥ ८० ॥

क्व सा शिरसि कोटीरकोटी रविशतायिता ।
क्वायं पूलकविन्यासो निर्णाशः सर्वसम्पदाम् ? ॥८१॥
ध्यात्वेति व्युत्सृजाम्येनां साङ्गजां शिविवेश्मनि ।
यद्भाव्यं भवतात्तन्मे ध्यात्वेदमवदन्नृपः ॥ ८२ ॥
याहि देवि ! पितुर्धाम समादाय स्तनन्धयम् ।
यथातथाऽप्यहं हेम दास्येऽवश्यं तपस्विने ॥ ८३ ॥
साक्षेपमाचचक्षे सा न युक्तं भवतोदितम् ।
पतिकार्यविधायिन्यो निशम्यन्ते पतिव्रताः ॥ ८४ ॥
इतश्च ब्राह्मणः कोऽपि भृतकक्रयकाम्यया ।
समया पृथ्वीनाथमागात् प्रतिजनं भ्रमन् ॥ ८५ ॥
विलोक्य भूपमादाय मस्तकं शस्तलक्षणम् ।
ऊचे कस्त्वं कथं देहं भृतकीयसि रङ्कवत् ? ॥ ८६ ॥
कृतमौनं शुचा भूपं विलोक्य ब्राह्मणः स च ।
सुतारां तां लुलत्तारां स निनिन्द विधेर्विधिम् ॥८७॥
सलक्षणं सुतं दृष्ट्वा तदाग्रेऽचिन्तयद् द्विजः ।
त्रीण्यमूनि न सामान्यान्यत्र विश्वत्रयेऽपि हि ॥ ८८ ॥
किमस्या मूल्यमित्युक्ते ब्राह्मणेन मुहुर्मुहुः ? ।
मन्दगीरवदद् भूमानुचितं यद्वदस्व तत् ॥ ८९ ॥
अस्या मूल्ये सहस्राणि तुभ्यं पञ्च ददामि भोः ! ।
गदतीति द्विजे मौनी समजायत भूपतिः ॥ ९० ॥
अनिषिद्धं मतं कार्यमिति ध्यात्वा नृपाञ्चले
तावद्बबन्ध गाङ्गेयमहो ! विधिविडम्बना ॥ ९१ ॥
तां गामिवाग्रतः कृत्वा ब्राह्मणश्चलितः पथि .
लग्नः सुतोऽञ्चलेऽमुष्यास्तारतारस्वरं रुदन् ॥ ९२ ॥
रुदन्त तं सुतारोचे तिष्ठ त्वं पितुरन्तिके ।
आनेतुं मोदकान् हट्टे गच्छन्त्यस्मि गुणानघ ? ॥ ९३ ॥

अत्यजत्यञ्चले तस्मिन् बोधितेऽपि सुतारया ।
किं किङ्करि ! विलम्बोऽयामित्यक्रुध्यत्तरां द्विजः ? ॥९४॥
यान्तीं सुतारां स्नेहेन यावन्मुञ्चति नार्भकः ।
तावत्तेन पदाग्राभ्यां निहत्य भुवि पातितः ॥ ९५ ॥
सास्रं विलोक्य भूपालो लुठन्तं भुवि नन्दनम् ।
मुमूर्छ लब्धसंज्ञोऽसौ चिन्तयामास चेतसि ॥ ९६ ॥
इन्द्रस्याप्यङ्कलाल्योऽयं रक्षितोऽप्यङ्गरक्षकैः ।
उपयाचितसंप्राप्तः कृतोत्तारणमङ्गलः ॥ ९७ ॥
अनेकदेवताशेषाशेखरोत्तममस्तकः ।
अयं विप्रेण पादेन पात्यते रङ्कवद्भुवि ॥९८॥ (युग्मम्)
अथोवाच द्विजं राजा नायं तिष्ठेदिमां विना ।
एषोऽपि हि भवद्गेहे कर्म किञ्चित्करिष्यति ॥ ९९ ॥
रोषाद्बभाषे विप्रोऽस्याः कर्मविघ्नकरं शिशुम् ।
न गृह्णामि मुधाऽप्येनं किं पुनः स्वर्णदानतः ? ॥४००॥
सबाष्पं पट्टदेव्यूचे तात ! पुत्रं विना मम ।
भत्रिता हृदयं द्वेधा पक्वेर्वारुफलं यथा ॥ १ ॥
मम प्रसादमाधाय गृहाणेमं महाग्रहात् ।
अर्थिनां प्रार्थनां सन्तो नान्यथा कुर्वते यतः ॥ २ ॥
श्रुत्वेदं ब्राह्मणो दत्त्वा सहस्रं काञ्चनस्य च ।
ताभ्यां सार्द्धमगाद्धाम ब्राह्मणो हर्षपूरितः ॥ ३ ॥
दुःखधार्यमिदं वित्तं यद्यागच्छत्यसौ मुनिः ।
समीचीनं, तदाऽऽयासीच्चिन्तितोपनतोऽथ सः ॥ ४ ॥
सशिष्यमागतं वीक्ष्य तमृषिं स्माह भूपतिः ।
ऋषे ! गृहाण हेमेदं खेदं मनसि मा कृथाः ॥ ५ ॥
क्रोधान्धः स मुनिः प्राह ग्रहीष्येऽल्पं न काञ्चनम् ।
अ[illegible]चेऽङ्गारवक्त्रोऽमुं चन्द्रशेखरमर्थय ॥ ६ ॥

पाणिना विधृतं सख्या अपास्य मणिदर्पणम् ।
कौक्षेयकेषु धौतेषु धारिणी मुखमैक्षत ॥ ११ ॥
एणनाभिमपास्योच्चैर्विलासमकरीकृते ।
दन्तावलमदं देवी प्रग्रहीतुं प्रचक्रमे ॥ १२ ॥
तस्यां गर्भप्रभावेन दोहदा हृत्प्रमोददाः ।
पर्यपूर्यन्त भूपेन लतायां मधुना यथा ॥ १३ ॥
क्रियमाणेषु सर्वत्र शान्तिकेषु महर्षिभिः ।
रक्षाभूतिषु धारिण्या बध्यमानासु दोर्युगे ॥ १४ ॥
घटीतात्पर्ययुक्तेषु निविष्टेषु द्विजेष्वपि ।
सूतिकर्मप्रवीणासु तल्लीनासु पुरन्ध्रिषु ॥ १५ ॥
परिपूर्णेषु मासेषु सार्धाष्टमदिनेष्वपि ।
असूत धारिणी पुत्रं राजनीतिर्यथा धनम् ॥ १६ ॥
(त्रिभिर्विशेषकम्)
सर्वातिशायिशोभाऽऽढ्यं तदानन्दकृतं शुभम् ।
मङ्गल्यदीपैरखिलैः सूतिवेश्म तदा बभौ ॥ १७ ॥
यथाविधि व्यतिक्रान्ते षष्ठीजागरणोत्सवे ।
मानयित्वा निजं ज्ञातिमित्रवर्गमनुद्धतः ॥ १८ ॥
गुरुलोकं समभ्यर्च्य मोचयित्वाऽरिबन्दिनः ।
दशमेऽह्नि बलोऽस्याख्यां महाबल इति व्यधात् ॥१९॥
स्वाङ्गैरिव तदाकारैस्तदा जातैः स्तनन्धयैः ।
अन्वीयमानः सततं बलसूनुर्व्यवर्धत ॥ २० ॥
पञ्चस्वितेषु वर्षेषु क्षीरकण्ठो महाबलः ।
पपाठ सकला विद्याः पूर्वाधीता इवाऽञ्जसा ॥२१॥
कृतज्ञो विनयी धीरः परनारीसहोदरः ।
भविष्यत्तीर्थकृन्नामजीवानां लक्षणं त्विदम् ॥ २२ ॥
सम्यग्दर्शनलाभस्य विरहेऽप्येष शुद्धधीः ।
अयत्नमपि किं जात्यरत्नं रत्नैः समं परैः ? ॥ २३ ॥

सारस्वतमिवोद्दामकामविभ्रमवाङ्मये ।
कामिनीमदजीवातुर्यौवनं समुपागतः ॥ २४ ॥
कमलश्रीप्रभृतिकाः कन्यकाः काश्यपीभुजा ।
शतानि पञ्चैकदिने कुमारः पर्यणाय्यत ॥ २५ ॥
( युग्मम् )
तस्याऽऽसन् बालमित्राण्यचलो धरणपूरणौ ।
वसुर्वैश्रवणश्चाभिश्चन्द्र इत्यभिधानतः ॥ २६ ॥
षड्भिर्मित्रैरमीभिः स वर्षक्षोणीधरैरिव ।
अधिकाधिकलक्ष्मीकैर्जम्बूद्वीप इवाऽद्युतत् ॥ २७ ॥
कदाचित् खेलयामास गजानैरावतायितान् ।
शक्रवद् विबुधैः सार्कं तच्चित्रं यद् बलाङ्गजः ॥२८॥
कदाचिदुद्यानगतो वृतो मित्रैर्गुणैरिव ।
चिक्रीड विविधैः क्रीडाचक्रैर्वक्रेतराशयः ॥ २९ ॥
कदाचिदुच्चैःश्रवसः सोदरान् भूगतानिव ।
लातपातस्फुरद्धौर्यवर्यान् सोऽश्वानवाहयत् ॥ ३० ॥
कदाचिच्चित्रकाव्यानां रहस्यानि व्यचारयत् ।
एकस्थानधियाऽऽसीनैरसैः सर्वैरिव स्थितैः ॥३१॥
न सीदति यथा धर्मो नाऽर्थो याति क्षयं यथा ।
यथा न तरलायन्ते बाह्याभ्यन्तरवैरिणः ॥ ३२ ॥
यथा न स्थानविन्यस्तः प्रकृत्योघो विरज्यते ।
संसाराशेषसर्वस्वमन्वभूद् भूपभूस्तथा ॥३३॥(युग्मम्)
एवं संसारकल्पद्रोर्बुभुजे विषयावलीम् ।
भाविनस्तीर्थकृज्जीवा भावदेवा इवाऽवनौ ॥३४ ॥
अन्येद्युर्बलबोधाय पुनारत्नेन्दुसंयमी ।
इन्द्रकुब्जे महोद्याने स्थितवान् शमतानिधिः ॥ ३५ ॥
प्रत्येकबुद्धं निर्ग्रन्थं श्रुत्वोद्यानसमागतम् ।
भवे संजातवैराग्य इति दध्यौ बलो नृपः ॥ ३६ ॥

अलं मे पुत्रमित्रादिसुखैः क्षणविनश्वरैः ।
अलं मे संपदा कुम्भिकर्णतालविलोलया ॥ ३७ ॥
अलं मे भववासेन पाशेनेवाऽन्तरात्मनः ।
ध्यात्वेति सुतमाहूय मन्त्रिणश्चाभ्यधादिदम् ॥ ३८ ॥
वयमत्रैव राजानो यूयमन्वयमान्त्रिणः ।
अतो राज्यधुराभारो मयि युष्मास्ववास्थितः ॥ ३९ ॥
मयेयं साधिना पृथ्वी भवद्भिः कृतसन्निधैः ।
सुत्रना सौरभेयी यत् तद् गोपालविशेषणम् ॥४०॥
यद् भवन्तो मयैश्वर्यात् खेदिताः शुभकर्मणि ।
यत्तु न्यायेतरं चक्रे भूमिपीठे मदान्धयतः॥ ४१ ॥
चालिता जययात्रायै चलता ये निरागसः ।
उन्मूलिता महीपाला वात्ययेव महाद्रुमाः ॥४२॥
विधाय भस्मसाद् ग्रामान् यल्लोका निर्धनीकृताः ।
नश्यद्भीरुकरक्रोडाद् यच्च बाला वियोजिताः ॥४३॥
तदघं क्षालयिष्यामि मलक्लिन्नमिवाऽम्बरम् ।
गृहीत्वा प्रभुपादान्ते संयमं यमिनां मतम् ॥ ४४ ॥
सुते न्यस्यामि राज्यस्य जरसा जर्जरो भरम् ।
प्रदोषकाले पूषेव निजं तेजो हविर्भुजि ॥ ४५ ॥
अमुष्मिन् कवचहरे मयीव नृपसंसदि ।
वर्तितव्यं महाभागाः ! युष्माभिर्मम शिक्षया ॥ ४६ ॥
अथेत्थं मन्त्रिणोऽप्यूचुः स्वामिन्! जातो विरागवान् ।
अन्यथा कथमासन्नमोक्षस्येव वचस्तव? ॥ ४७ ॥
यः श्रेयसि प्रवृत्तानां निषेधो मोहतो भवेत् ।
स शालीनूषरक्षेत्रेष्वारोपयति वप्रतः ॥ ४८ ॥
तवापि पूर्वजा राजन्! वार्धके मुनिवृत्तयः ।
साम्प्रत साम्प्रतं तत् ते कृतज्ञत्वं प्रसर्पति ॥ ४९ ॥

इदं राज्यं कुमारेऽस्मिन् यत् त्वया विनिवेश्यते ।
विचार्यं तत्र किञ्चिद् नाऽस्माकमेष भक्तानिव ॥५०॥
पितुश्च सचिवानां च गिरं श्रुत्वा महाबलः ।
प्रोवाच तातचरणा अप्रसादाः कथं मम? ॥ ५१ ॥
अथोचे जगतीपालो मत्पुत्रोऽसि विवेक्यसि ।
गिरो निराक्रियन्ते मे किमज्ञेनेव तत् त्वया? ॥५२॥
ततः पितृगिरः श्रुत्वा महाबलकुमारराट् ।
देवादेशः प्रमाणं मे रात्रिस्वप्नोपदेशवत् ॥ ५३ ॥
असौ निवेशयामास कुमारं संमदोद्धुरः ।
अभिषेकासने शक्रपर्यङ्क इव तीर्थपम् ॥ ५४ ॥
मङ्गल्याऽऽतोद्यमालासु वाद्यमानासु सर्वतः ।
कुमारः सिषिचे मूर्ध्नि भूभुजा तीर्थवारिभिः ॥५५॥
अथ भूमीभुजोऽन्येऽपि सौवर्णकलशैर्नृपम् ।
तमभ्यषिञ्चन् तीर्थेशबिम्बमिव प्रतिष्ठितम् ॥ ५६ ॥
अथोदितं द्वितीयेन्दुमिव नम्रशिरोधराः ।
प्राणमन् नवमुर्वीशमखिला अपि नागराः ॥ ५७ ॥
सदशानि मनोज्ञानि वासांसि श्रीबलाऽऽज्ञया ।
च्युतानीवेन्दुकिरणैः पर्यधाद् नूतनो नृपः ॥ ५८ ॥
चन्दनैश्चन्द्रकान्ताश्मस्त्यानबिन्दूदकैरिव ।
तस्याङ्गरागं सर्वाङ्गं विदधुर्वारयोषितः ॥ ५९ ॥
भूषणैर्भूषितस्तैस्तैर्मुक्तामाणिक्यसंभवैः ।
नवो राजा रराजाऽसौ कल्पद्रुः पल्लवैरिव ॥ ६० ॥
माणिक्यभासुरं रेजे मुकुटं तस्य मूर्धनि ।
उदयाद्रितटे टीकमानं बिम्बं रवेरिव ॥ ६१ ॥
श्रीबलो धारयामास [1]छत्रं मूर्ध्नि निवेशितम् ।
क्षीरसागरडिण्डीरपिण्डैरिव विनिर्मितम् ॥ ६२ ॥

---

1 एवमित्यपि ।

चामरैर्वारिरामाणामवीज्यत कृतादरैः ।
नवसङ्गकृतोल्लासै राज्यलक्ष्मीहसैरिव ॥ ६३ ॥
विशाले बलभूपालस्तद्भाले लटभभ्रुवि ।
तिलकं रचयामास राज्यश्रीन्यासमण्डलम् ॥ ६४ ॥
ततः श्रीबलभूपालः पालिताऽखिलभूतलः ।
एवं शिक्षां ददौ तस्य नीतिशास्त्रविशारदः ॥ ६५ ॥
वारांनिधिजलोत्पत्तेरिव नीचत्वगामिनी ।
नैकत्रस्थायिनी वेला संक्रान्तव्यसनादिव ॥ ६६ ॥
उद्दाममददात्रीयं सहोत्पन्नद्विपादिव ।
लक्ष्मीर्देवी दुराराध्या वत्स ! राधापतेरपि ॥ ६७ ॥
एतस्या रक्षणे वत्स ! यामिक इव विक्रमः ।
जागरूकस्त्वया कार्यः मदत्तन्यायवृत्तिमान् ॥ ६८ ॥
नरो विक्रमवान् वत्स ! सत्त्वेन परिभूष्यते ।
तदेव यत्नतो रक्ष्यं स्वामिदत्तप्रसादवत् ॥ ६९ ॥
ससत्त्वेनाऽपि नाऽऽधेयं प्रचण्डकरताण्डवम् ।
पश्य चण्डकरं लोको न दृशाऽपि विलोकते ॥७०॥
प्रचण्डकरचातुर्ये जायते व्यसनोदयः ।
तस्माद् भ्रश्यति संसारेऽरघट्टीयो वृषो यथा ॥७१॥
सप्तभिर्व्यसनैः सप्तनरकाह्वायकैरिव ।
अन्तरङ्गारिषड्वर्ग उज्जागर्ति नरेश्वरः ॥ ७२ ॥
तदाधीनः पुमान् वत्स ! रज्यते मदनार्थयोः ।
तावपि स्त्रीमृषामूलौ तयोरेषाऽस्त्यवस्थितिः ॥ ७३ ॥
दोषोदयकरी सूरकराणामप्यगोचरी ।
क्षणं रक्ता विरक्ता च नारी सन्ध्येव राजते ॥७४॥
मृषावादात् क्षयं यान्ति प्रतिष्ठाः प्रत्ययाः किल ।
नदीपूरादिव ग्रामाः कोपादिव सुवासनाः ॥ ७५ ॥
इति विनयविनम्रं शिक्षयित्वा नरेन्द्रं

नवमभिनवभङ्ग्या तात्त्विकप्रेमवृत्त्या ।
बलनृपतिरुदारं मोहतां मोक्तुकामः
सुगुरुचरणसेवालालसोऽगाद् वनान्तः॥५७६॥

इत्याचार्यश्रीविनयचन्द्रविरचिते श्रीमदाचार्यप्रद्युम्नशोधिते श्री-
मल्लिस्वामिचरिते विनयाङ्के महाकाव्ये प्रत्येकबुद्धश्रीरत्न-
चन्द्रसत्यहरिश्चन्द्रनिदर्शनगर्भित श्रीबलनृपतिबोध-
बन्धुर श्रीमहाबलराज्याभिषेकोत्सवव्यावर्णनो
नाम प्रथम. सर्ग ॥



अर्हम्

# अथ द्वितीयः सर्गः ।



अथ प्रहृष्टसर्वाङ्गः कृतस्नानादिमङ्गलः ।
सहस्रवाह्यां शिबिकामारुरोह बलो नृपः ॥ १ ॥
ददानो विधिवद् दानं भावशुद्ध्या विशुद्धधीः ।
उपेत्योपवनं तस्या उत्ततार भवादिव ॥ २ ॥
उज्झाञ्चकार निःशेषं नेपथ्यादि स्वमोहवत् ।
श्रीरत्नचन्द्रपादाब्जं ववन्दे मोदमेदुरः ॥ ३ ॥
सामायिकमहामन्त्रं सत्रं निर्वाणसंपदाम् ।
राजर्षिर्गुरुवक्त्रेणोच्चचार प्रकटाक्षरम् ॥ ४ ॥
विविधाभिग्रहग्राही निगृहीतकुवासनः ।
अनगारः शमागारो निर्निदानतपःपरः ॥ ५ ॥
विधिवत् पालयित्वाऽथ सुचिरं संयमं यमी ।
जित्वा कर्माणि राजर्षिर्लेभे निर्वाणसंपदम् ॥ ६ ॥
(युग्मम् )

महाबलनरेन्द्रेण सिंहस्वप्नेन सूचितः ।
कमलश्रीमहादेव्यामुदपादि शरीरजः ॥ ७ ॥
भविष्यद्बलभद्रत्वादिति ध्यात्वेव भूभुजा ।
बलभद्राभिधानेनाऽऽहूतः प्रेमकिरा गिरा ॥ ८ ॥
अन्यदा बहिरुद्याने चञ्चच्चम्पकचारुणि ।
वरधर्माभिधः सूरिर्भगवान् समवासरत् ॥ ९ ॥
तदाऽऽगमनमङ्गल्यमाकर्ण्याऽऽरामपालकात् ।
यथेच्छं पीतपीयूषगण्डूष इव सोऽहृषत् ॥ १० ॥
तं नमस्कर्तुमुर्वीशश्चचालाऽचलमानसः ।
पिदधानो वैरच्छत्रैर्दिवं हंसगणैरिव ॥ ११ ॥
दन्तावलैर्बलोद्दामैरभ्रमूवल्लभायितैः ।
तुरङ्गैश्चापि मार्तण्डरथादपहृतैरिव ॥ १२ ॥
रथैः श्रोत्रपथाध्वन्यचारुचीत्कारबन्धुरैः ।
अनन्तैर्भक्तसामन्तैः समन्तात् परिवारितः ॥ १३ ॥
भूचरस्वर्वधूभ्रान्तिप्रदवारपुरन्ध्रिभिः ।
चामरै रत्नखचितैर्वीज्यमानः पदे पदे ॥ १४ ॥
बन्दिभोगावलीपाठस्पर्धाप्रसृमरैरिव ।
नादैर्मङ्गलतूर्याणां पिदधन् रोदसीतलम् ॥ १५ ॥
धर्मातन्त्रैर्वृतो मित्रैः षड्भिर्लक्ष्मीविकस्वरैः ।
पदातिभिश्च पारीन्द्रप्रौढविक्रमविश्रुतैः ॥ १६ ॥
गजेन्द्रस्कन्धमारूढः प्रौढप्रसृतभावनः ।
तदुद्यानमथ प्राप नन्दनं वासवो यथा ॥ १७ ॥
( सप्तभिः कुलकम् )
दूरादेवाऽवनीनाथः करिस्कन्धाद् मदादिव ।
उत्तीर्य राजचिह्नानि पश्चाऽमुञ्चत् समाहितः ॥ १८ ॥

१ नवच्छत्रैरिति पाठान्तरम् ।

क्रोधाऽन्धकारमार्तण्डं मानाऽचलपविभ्रमम् ।
मायावल्लीतुषाराभं लोभाऽम्भोधिघटोद्भवम् ॥१९॥
आरामं साम्यवल्लीनामभिरामं महाव्रतैः ।
आत्मारामं महासत्त्वं मुक्तरामं विरागतः ॥ २० ॥
लब्धिरत्नाकरं श्रीमज्जिनधर्ममिवाऽङ्गिनम् ।
वरधर्माख्यमाचार्यमद्राक्षीत् क्षितिनायकः ॥ २१ ॥
( त्रिभिर्विशेषकम् )

अथ प्रदक्षिणीकृत्य मुनिनाथं जिनेन्द्रवत् ।
पुलकच्छद्मना बिभ्रद् भक्तिं मूर्तां ननाम तम् ॥२२॥
कांश्चित् पद्मासनाऽऽसीनान् कांश्चिद् वज्रासनस्थितान् ।
कांश्चिद् वीरासनस्थांश्च कांश्चन बर्हणाश्रितान् ॥२३॥
कांश्चिद् भद्रासनासीनान् कांश्चिद् दण्डासनाश्रितान् ।
कायोत्सर्गस्थितान् कांश्चिद् कांश्चिद् हंसासनाश्रितान् ॥
कांश्चन शीलाङ्गरथपरावर्तनतत्परान् ।
कांश्चिदक्षैर्विनिक्षिप्तैर्भङ्गान् गणयतो भृशम् ॥२५॥
कालानुष्ठाननिष्ठांस्तांस्तन्वानान् बहुशोऽपि कान् ।
सिद्धान्तवाचिकाः कांश्चित् कुर्वाणान् परया मुदा ॥२६॥
पात्रलेपपरान् कांश्चित् कांश्चिद् मौनमुपागतान् ।
शैक्षान् शिक्षयतः कांश्चित् कांश्चन पठतः पदः ॥२७॥
कांश्चित् कर्मप्रकृत्यादिविचारग्रन्थनिर्णयम् ।
कुर्वाणांश्चूर्णिभाष्यादेः पदव्याख्याप्रकाशनैः ॥२८॥
कांश्चित् प्रकरणान्युच्चैर्नूतनानि प्रकुर्वतः ।
वन्द्यान् ववन्दे निर्ग्रन्थांस्त्रिविधं काश्यपीपतिः ॥२९॥
(अष्टभिः कुलकम्)

अथोपेत्य वनं सूरिं प्रणम्य प्रमदान्वितः ।
मित्रैः साकमुपाविक्षत् चक्रे च विनयाञ्जलिम् ॥३०॥

१ मूर्ध्नेत्यपि ।

यस्तार्क्ष्यपक्षैः पक्षालीचिकीर्मङ्क्षु स्वसायके ।
दिग्दन्तिदन्तैः प्रेयस्याः सत्कङ्कणचिकीर्नरः ॥११६॥
सिंहस्य केशरैर्लाक्षारसदिग्धैरिवारुणैः ।
वेणीबन्धचिकीर्यश्च स मे पितृसपत्नति ॥११७॥
( युग्मम् )
दुर्नयस्य फलं सद्यो दर्शयामि रणाङ्गणे ।
मद्विक्रमकथाः सभ्याः ! वीक्षन्तां पौनरुक्त्यतः॥११८॥
अथ कर्ममहीपालः प्रज्वलन् क्रोधवह्निना ।
कुवासनाभिधां बाढं जैत्रढक्कामवीवदत् ॥ ११९ ॥
तस्या नादं समाकर्ण्य शौर्यद्रुमघनाघनम् ।
कामाद्या मण्डलाधीशाः सर्वे संनहनं व्यधुः ॥१२०॥
आहारभयसंज्ञाश्च चतस्रो यानकाहलाः ।
चतुर्दिक्षु जयायेव ताडिताः कर्मभूभुजा ॥१२१॥
कदाग्रहमयास्तत्र निःस्वानाः सस्वनुस्तराम् ।
पञ्चेन्द्रियविकाराश्च पञ्च तूर्याण्यपि स्फुटम् ॥१२२॥
अथ कर्ममहीपालः कृतप्रस्थानमङ्गलः ।
आरुरोहाभिमानाख्यं नागं नगमिवोन्नतम् ॥१२३॥
अभव्यैर्मण्डलाधीशैश्चलत्कर्मगुणैरिव ।
दूरभव्यैस्तथा वर्गपत्तिभिः परिवारितः ॥ १२४ ॥
प्रभञ्जन इवोद्दामो नस्खलत्पौरुषोत्तरः ।
ददौ योजनमानेन प्रयाणं कर्मभूपतिः ॥१२५॥
इत्थं प्रयाणकं कुर्वन् सर्वगः कर्मभूपतिः ।
ग्रन्थिभेदाभिधे द्वीपे कृतवासो व्यराजत ॥१२६॥
मिश्रनामा महादूतः प्रेरितः कर्मभूभुजा ।
सम्यक्त्वमन्त्रिणो गेहमभ्यगाच्चित्तवद् द्रुतम् ॥१२७॥
स्वामिन् ! कर्ममहीपालो मन्मुखेन तवाग्रतः ।
ईदृशं कथयामासाऽवधार्य तन्मयोदितम् ॥ १२८ ॥

भव्यसार्थान्वितो भव्यकुमारो यत्त्वया धृतः ।
तत् प्रसुप्तो मृगाधीशो हतो हन्त! चपेटया ॥ १२९ ॥
एतावताऽपि नो नष्टं किमप्यस्ति महीपते! ।
गत्वा क्षमय निःशेषं नतिग्राह्मा हि साधवः ॥ १३० ॥
इति ब्रुवाणं तं दूतं श्रुत्वा चारित्रभूपतिः ।
सहास्यमवदत् पाथःपूर्णपाथोदनिःस्वनः ॥ १३१ ॥
त्वन्नाथनगरीलोकैः सदागमविमोचितैः ।
मदीयं नगरं भद्र! वसदस्ति निरन्तरम् ॥ १३२ ॥
अमुमर्थं तव स्वामी जानन्नपि निजे हृदि ।
कथमद्योद्यतो जज्ञे विग्रहाय समं मया ? ॥ १३३ ॥
अथवा विग्रहं मत्वा सर्वोऽपि परमण्डले ।
प्रवेशं कुरुते धीमान् कीर्तिह्रासोऽन्यथा भवेत् ॥१३४॥
न न्यूनं तव नाथेन तोलनीयं ममाधुना ।
इत्युक्त्वा व्यसृजद् दूतं ततश्चारित्रभूपतिः ॥ १३५ ॥
अथ प्रभावनां जैत्रढक्कां चारित्रभूपतिः ।
तत्क्षणात् ताडयामास वैरिगर्वगिरेः पविः ॥ १३६ ॥
शमसंवेगनिर्वेदप्रमुखास्तस्य भूपतेः ।
सर्वाभिसारप्रयता बभूवुर्मण्डलेश्वराः ॥ १३७ ॥
ज्ञानमौनक्रियाशीलसंपदो यानकाहलाः ।
समताड्यन्त भव्येन श्रवणप्रमदप्रदाः ॥ १३८ ॥
अथ चारु मुहूर्त्तेऽह्नि कृतप्रस्थानमङ्गलः ।
आरुरोह व्रतक्ष्माभृत् संयमाभिधकुञ्जरम् ॥ १३९ ॥
जैनधर्माभिधो बन्दी भावनातुरगीस्थितः ।
एवं वचोऽगदत् काममाशीर्वादपुरस्सरम् ॥ १४० ॥
जय चारित्रभूपाल ! प्रलीनाशेषकल्मष! ।
जय भव्यजनारामवसन्तसमयायित ! ॥ १४१ ॥

१ -वर्ग- इति च पाठ ।

जय त्रैलोक्यमाणिक्य ! जय साम्यमहानिधे ! ।
जय दुर्जयदर्पोग्रकन्दर्पपर्वनाशन ! ॥ १४२ ॥
अहिंसा ध्यानयोगश्च रागादीनां विनिर्जयः ।
साधर्मिकानुरागश्च सारमेतत् तवाऽऽगमे ॥ १४३ ॥
अर्हन् देवो गुरुः साधुस्तत्त्वं तीर्थकरोदितम् ।
इति यस्य स्फुरत्यन्तः संसारोऽस्य करोति किम्?॥१४४॥
इत्याद्यैर्वचनैर्धीरैः पूरयन् रोदसीतलम् ।
चारित्रभूपतेरग्रे प्रासरद् बन्दिसुन्दरः ॥ १४५ ॥
शुक्लध्याननरो दध्रे मूर्ध्नि च्छत्रं समुज्ज्वलम् ।
केवलज्ञाननामाऽस्य लोकालोकप्रकाशकम् ॥ १४६ ॥
आरोहकः समत्वाख्यः कुम्भिकुम्भे व्यवस्थितः ।
अन्येऽपि बलिनो योधाः सन्तोषशमसंज्ञकाः ॥१४७॥
प्रयाणकशतैर्मिश्रकोट्टदुर्गसमीपगः ।
बभूव व्रतभूपालो विहितावाससंहतिः ॥ १४८ ॥
शमस्य मार्दवस्याऽप्यार्जवसंतोषयोरपि ।
रणपट्टा अबध्यन्त श्रीमच्चारित्रभूभुजा ॥ १४९ ॥
क्रोधाहङ्कारयोर्मायालोभयोरपि तत्क्षणम् ।
कर्मक्षोणीभुजा भालेऽबध्यन्त रणपट्टकाः ॥ १५० ॥
अथ सैन्यद्वयं तत्र ढुढौके रणरङ्गतः ।
म्रियन्ते सुभटा यत्र साभिज्ञानपुरस्सरम् ॥ १५१ ॥
रणतूर्यैर्वाद्यमानैर्बन्दिकोलाहलैस्तथा ।
वीराणां सिंहनादैश्च शब्दाद्वैतमभूत्तदा ॥ १५२ ॥
शरच्छन्नपतद्दण्डैरुच्छलद्भिर्मुहुर्मुहुः ।
तदा जज्ञे सितच्छत्रैः शतचन्द्रं नभस्तलम् ॥१५३॥
रणकृत्तशिरोभिश्च हुङ्काररवभीषणैः ।
परिव्याप्तं नभो भाति वाचालैरिव राहुभिः ॥१५४॥

१ ग्रहघस्मर इति च पाठ ।

नास्त्यात्मा नास्ति देवोऽपि नास्ति काचन निर्वृतिः ।
नास्ति पुण्यं तथा पापं किन्तु भूतमयं जगत् ॥१५५॥
एकस्मिन् दृषदि न्यस्य पादद्वन्द्वमुपासकैः ।
अभ्यर्च्यते शिला त्वन्या शवमण्डनलीलया ॥१५६॥
किं तया विहितं पापं यस्या उपरि संस्थितम् ।
स्थाप्यन्ते चरणा अन्याः पूज्यास्तत्किं कृतं शुभम् ११५७
यद् बुद्ध्यते न तत्त्वं तद् यत्तत्वं तन्न बुध्यते ।
अतत्त्वलोलुपो लोको धिग्मूर्खैर्विप्रतार्यते ॥ १५८ ॥
इत्थं वचनवीथीभिर्भल्लीभिरिव ताडिताः ।
द्रव्यश्राद्धा अभव्यैस्तैः क्षणादेव विनिर्जिताः ॥१५९॥
( चतुर्भिः कलापकम् )
अत्र चारित्रभूपालं प्रणम्य परमार्हताः ।
अभव्यैस्तैः समं योद्धुं प्रवृत्ता रणरङ्गिणः ॥ १६० ॥
यदुच्यते भवद्भिश्च नास्तीति वचनं भृशम् ।
अस्तीत्युपेक्षया तच्च घटाकोटिमुपैति भोः ! ॥ १६१ ॥
चरणस्थापनं भक्तिपूजनं यच्छिलास्वलम् ।
तत्प्रतिष्ठाफलं नाऽऽभिः पुण्यापुण्यमुपार्जितम् ॥१६२॥
इत्थं वाक्यैः सर्वलोहमयैरस्त्रैरिवोच्चकैः ।
पलायाञ्चक्रिरे वेगादभव्यास्ताडितास्ततः ॥ १६३ ॥
साकं संचारिभी राजपुत्रैः क्रमागतैरिव ।
सात्त्विकैरनुभावैश्च शान्तैः प्रहरणैरिव ॥ १६४ ॥
लीलाविलासविच्छित्तिबिब्बोकादिमविभ्रमैः ।
इत्याद्यैः सहजैर्युक्ता रागवार्द्धिहिमांशुभिः ॥१६५॥
मण्डलाधिपकन्दर्पनिदेशाद् विषया भटाः ।
स्थायिभिर्मूर्ततेजोभिरिव योद्धुं ढुढौकिरे ॥१६६॥
( त्रिभिर्विशेषकम् )
तेषां दर्शनतः श्रीमद्व्रतराट्पक्षवर्तिनः ।

द्रव्यतो यतयो नेशुः किंकर्तव्यविमोहिताः ॥१६७॥
स्वबलं भग्नमुद्वीक्ष्य बलात्कर्ममहीभुजः ।
अशिक्षतेति निर्ग्रन्थान् श्रीमच्चारित्रभूपतिः ॥ १६८ ॥
यूयं धन्या महासत्त्वा आजन्मब्रह्मचारिणः ।
यथाख्यातव्रतास्तीर्णघोरसंसारसागराः ॥ १६९ ॥
युष्मदीयं व्रतं भद्राः ! पालितं सफलं तदा ।
यदाऽमून् विषयान् घोरान् जेतारो ब्रह्मविक्रमैः॥१७०॥
अन्यथा विषयैरेभिर्ब्रह्मचर्यमहानिधिः ।
अवश्यं गृह्यते सर्वो भवतां जीवतामपि ॥१७१॥
अमुष्मिन् दुर्ग्रहे दुर्गे निर्जिते विषयाभिधे ।
भवादृशैर्निजं गोत्रमद्यैवाऽलं विभूष्यते ॥ १७२ ॥
एषामपि पतिः कामः प्रकामबलदुर्धरः ।
ब्रह्माद्यास्त्रिदशा येन लीलयैव वशीकृताः ॥ १७३ ॥
एतज्जयो विधातव्यः शुचिब्रह्मनिषेवणैः ।
वसतिस्त्रैणवार्तादिनवगुप्तिविशेषितैः ॥ १७४ ॥
इत्युपबृंह्य भूपालो विजितेन्द्रियसंज्ञकम् ।
ताम्बूलं प्रददौ तेषां स्वहस्तेन प्रसादवत् ॥ १७५ ॥
अथ चारित्रभूपेन समादिष्टाः समन्ततः ।
सर्वाङ्गमलसन्नाहा ब्रह्मगुप्त्यस्त्रभासुराः ॥ १७६ ॥
निरीहतातुरङ्गस्था निशातशमसेल्लकाः ।
योद्धुं ताभिः समं विष्वग् ढौकन्ते स्म प्रहर्षिताः॥१७७॥
(युग्मम्)

तेषां दर्शनमात्रेण प्रणेशुर्विषया भटाः ।
उदये तेजसां भर्तुः किमु खेलन्ति कौशिकाः ?॥१७८॥
शमः कोपमथो मानं मृदुता रणपट्टभृत् ।
मायामार्जववीरेशो लोभं तोषस्ततोऽजयत् ॥ १७९ ॥
अथ कर्ममहीपालः सार्कं चारित्रभूभुजा ।

योद्धुं प्रवृत्तेऽत्यन्तं बन्धसत्ताऽऽदिवर्मभृत् ॥१८०॥
मतिश्रुताऽवधिमनःकेवलावरणैः समम् ।
ज्ञानावरणकर्माऽथाऽचलत् कर्मद्विपानुगम् ॥ १८१ ॥
चक्षुरचक्षुरवधिकेवलदर्शनावृतिः ।
आद्या निद्रा निद्रानिद्रा प्रचला च तृतीयका ॥१८२॥
प्रचलाप्रचला स्त्यानर्धिरेवं नवभिस्ततः ।
दर्शनावरणं कर्म पार्ष्णिभागेऽभवत्तराम् ॥ १८३ ॥
सातासातभिदाभ्यां तु वेदनीयं तदग्रतः ।
तिर्यग्नारकनृस्वर्गिभेदादायुश्चतुर्विधम् ॥ १८४ ॥
गतिजातितनूपाङ्गबन्धनादिविशेषतः ।
त्र्युत्तरशतेन नाम संनह्य प्रगुणं स्थितम् ॥ १८५ ॥
उच्चैर्नीचैर्द्विधा भिन्नं गोत्रं तस्य पुरस्सरम् ।
अन्तरायो दानलाभवीर्यभोगोपभोगयुक् ॥ १८६ ॥
कषायैर्नोकषायैश्च योधैरिव महाबलैः ।
रणकामी भवस्वामी रणक्षेत्रममण्डयत् ॥ १८७ ॥
ततो व्रतमहीपालः सत्क्रियाकवचोत्तरः ।
अवर्षद् धर्मचापेन देशनानिर्मितैः खगैः ॥ १८८ ॥
पात्रस्यानुपघातेनाऽनिह्नवेन गुरोरपि ।
जिगाय ज्ञानावरणदर्शनावरणे नृपः ॥ १८९ ॥
जिनेन्द्रसिद्धचैत्यौघसंघस्य द्वेषवर्जनैः ।
अनन्तदुःखसंभारं सोऽजयद् दृष्टिमोहनम् ॥१९०॥
तीव्रक्रोधपरीहारैर्भवभ्रमणवारणैः ।
चारित्रमोहं चारित्रभूपालो जितवांस्तदा ॥ १९१ ॥
महारम्भपरित्यागैस्तीव्ररागविवर्जनैः ।
व्रतेशो नरकायुष्कं समूलमुदपाटयत् ॥ १९२ ॥
सन्मार्गदेशकत्वेन तिर्यगायुस्ततः परम् ।
विजयेन कषायाणां मनुष्यायुरथाऽजयत् ॥ १९३ ॥

वृद्धिमायाति सद्धर्मः स्तोकोऽपि वटबीजवत् ।
परं कृपणवत् कोऽपि न ग्रन्थफलमश्नुते ॥६०८॥
निसर्गरुचिमुख्याश्च कथ्यन्ते दशधा श्रुते ।
तारतम्यविभागेन सर्वे सम्यक्त्वधारिणः ॥६०९॥
तथाहि—
द्रव्यक्षेत्रादिभावा ये जिनैः ख्यातास्तथैव यः ।
श्रद्धत्ते स्वयमेवैतान् स निसर्गरुचिः स्मृतः ॥६१०॥
यः परेणोपदिष्टांस्तु च्छद्मस्थेन जिनेन वा ।
तानेव मन्यते भावानुपदेशरुचिः स वै ॥६११॥
रागो द्वेषश्च मोहश्च यस्याऽज्ञानं क्षयं गतम् ।
तस्याज्ञायां रुचिं कुर्वन्निहाज्ञारुचिरिष्यते ॥६१२॥
अधीयानः श्रुतं तेन सम्यक्त्वमवगाहते ।
अङ्गाऽनङ्गप्रविष्टेन यः स सूत्ररुचिः स्मृतः ॥६१३॥
स बीजरुचिरासाद्य पदमेकमनेकधा ।
योऽध्यापयति सम्यक्त्वे तैलबिन्दुमिवोदके ॥६१४॥
श्रीसर्वज्ञागमो येन दृष्टः स्पष्टार्थतोऽखिलः ।
आगमज्ञैरभिगमरुचिरेषोऽभिधीयते ॥५१५॥
द्रव्याणां निखिला भावाः प्रमाणैरखिलैर्नयैः ।
उपलम्भं गता यस्य स विस्ताररुचिर्मतः ॥५१६॥
ज्ञानदर्शनचारित्रतपःसमितिगुप्तिषु ।
यः क्रियासु रतो नित्यं स विज्ञेयः क्रियारुचिः ॥६१७॥
आज्ञाप्रवचने जैने कुदृष्टावनभिग्रहः ।
यः स्याद् भद्रकभावेन तं संक्षेपरुचिं विदुः ॥६१८॥
यो धर्मं श्रुतचारित्राऽस्तिकायविषयं खलु ।
श्रद्दधाति जिनाख्यातं स धर्मरुचिरिष्यते ॥६१९॥
इत्येवं सर्वभेदानां मानसं मूलकारणम् ।

१ बन्धन धनफल च ।

विततच्छाद्यकाकीर्णं मालाकारनिकेतवत् ॥६३१॥
दिव्योरुशिखरं प्राप्तसद्रेखं सुरशैलवत् ।
रामसैन्यमिव व्यक्तं सुग्रीवामलसारकम् ॥६३२॥
धनदागारवत् स्फारद्रव्याढ्यकलशाश्रितम् ।
आयशास्त्रमिवाऽभिज्ञैर्वर्णनीयगुरुध्वजम् ॥६३३॥
अखण्डमण्डपच्छायं सुविशालबलानकम् ।
प्रतिबिम्बचलच्चित्रं जगतीपरिवेष्टितम् ॥६३४॥
सुवर्णभित्तिविच्छित्तिसद्रत्नस्तम्भशोभितम् ।
स्फुरन्मणिमयोत्तानपट्टसोपानतोरणम् ॥६३५॥
वै राज्यकुलसम्भूतं शुद्धनागरजातिकम् ।
सर्वाङ्गसुन्दरं विश्वकर्मणेव स्वयं कृतम् ॥६३६॥
यशः स्वमिव विस्तीर्णं स्वमानसमिवोन्नतम् ।
प्रत्यक्षीभूतमात्मीयपुण्यराशिमिवोज्ज्वलम् ॥६३७॥
चञ्चच्चूडामणीकल्पं श्रीवासनगरश्रियः ।
जिनेन्द्रभवनं चारु कारयामास भूपतिः ॥६३८॥

( त्रयोदशभिः कुलकम् )

कन्दमानन्दवल्लीनां बीजं सद्धर्मभूरुहः ।
कर्पूरपिण्डं नेत्राणां मुक्तापुण्ड्रं शिवश्रियः ॥६३९॥
हारतारककुन्देन्दुक्षीरनीररुचामिव ।
जनितसारमादाय विश्वानन्दाय वेधसा ॥६४०॥
तत्रात्मानमिव स्वच्छस्फटिकोपलनिर्मितम् ।
नाभेयबिम्बं विधिना प्रतिष्ठाप्य न्यवीविशत् ॥६४१॥

( त्रिभिर्विशेषकम् )

कृत्वाऽस्य विधिना स्नात्रं कुम्भैर्गन्धाम्बुपूरितैः ।
उच्छलद्दिव्यवादित्रनिर्घोषापूरिताम्बरम् ॥६४२॥

---

१ प्रकटसुग्रीवनिर्मलबलमपि । २ आयभवनस्थो गुरुर्यथा वर्ण्यते तद्वत् ।
३ रचना । ४ मुकुटदेश्यम् ।

विलेपनं च कर्पूरमिश्रसच्चन्दनद्रवैः ।
त्रिजगद्भूषणस्यापि भक्त्याऽऽरोप्य विभूषणम् ॥६४३॥
पाटला-मल्लिका-जाती-केतकी-चम्पकादिभिः ।
अभ्यर्च्य कुसुमैः कृष्णाऽगरुधूपमुदक्षिपत् ॥६४४॥
( विशेषकम् )
भूमिः स्नात्रजलैरार्द्रा धूपधूमाश्रितं नभः ।
वादित्रं गर्जिताभासं भूषणश्रीस्तडिन्निभा ॥६४५॥
पञ्चवर्णप्रसूनश्रीः सुरचापसमप्रभा ।
तदा शंस्याय[1] लोकानां मेघाऽऽगम इवाभवत् ॥ ६४६ ॥
( युग्मम् )
ततः कृत्वोत्तरासङ्गं शुद्धदेशस्थितः पुरः ।
न्यस्तजानुयुगो भूमौ त्रिः प्रणम्य कृताञ्जलिः ॥ ६४७ ॥
चिरं निर्वर्ण्य सद्रूपाऽतिशयं परमेशितुः ।
कृतद्रव्यस्तवो भावस्तवमेवं प्रचक्रमे ॥ ६४८ ॥
जय त्रिभुवनाधीश ! श्रीयुगादिजिनेश्वर ! ।
नम्रामरशिरोरत्नदीपनीराजितक्रम ! ॥ ६४९ ॥
अज्ञानतिमिरं हत्वा नवभानुरिव प्रभो ! ।
प्रकाशितजगद्विद्याव्यवहार ! नमोऽस्तु ते ॥ ६५० ॥
निष्कषायतया चेतःपटे शुभ्रगुणे तव ।
रागो लगतु मा किंतु तेनाऽरञ्जि कथं जगत् ? ॥ ६५१ ॥
सद्गन्धशीतलस्वच्छो नत्वा पादौ तव स्तवम् ।
कृत्वा श्रुत्वा च नाथ ! स्यादक्षाणां युगपत् सुखम् ॥६५२॥
त्रिलोकीसुभगं वीक्ष्य त्वां चलाया अपि प्रभो ! ।
स्तम्भस्वेदार्द्रताभावो जायते कस्य नो दृशः ? ॥६५३॥
शमार्द्र ! सुकृताऽऽराम ! भवभ्रान्तिभवं मम ।
त्वत्पादपादपच्छाया तापं निर्वापयेत् चिरात् ॥ ६५४ ॥

१ मङ्गलाय धान्याय च ।

तच्चित्रं यन्निरालम्बं चिरं भ्रान्तं भवार्णवे ।
त्वां चालम्ब्य मनो मेऽद्य शमनीरे ममज्ज यत् ॥६५५॥
धर्मकोशाद् धनं दत्ते सेवकेभ्यः प्रभुर्भवान् ।
प्रसन्नः समतावस्तु कस्मैचन पुनर्निजम् ॥ ६५६ ॥
इति स्तुत्वा जगन्नाथमुत्थाय पुलकाञ्चितः ।
आनन्दजलपूर्णाक्षो विज्ञप्तिं कृतवानिमाम् ॥ ६५७ ॥
तथा मम जगन्नाथ ! प्रसीद नतवत्सल ! ।
यथा क्षणमपि स्वामिन्नैवोत्तरासि चेतसः ॥ ६५८ ॥
सर्वोऽपि वदति श्राद्धो यत् त्वं मे नाथ जीवितम् ।
नाहं तु जीवितं येन चलं मे त्वं तु निश्चलः ॥ ६५९ ॥
न कुले न बले रूपे न च न श्रीषु ते विभोः ।
यत् किंचिद् वीतरागत्वं तत्र लीनं मनो मम ॥ ६६० ॥
नानानामानि संकल्प्य विवदन्तां विचक्षणाः ।
मन्दमेधास्त्वहं नाथ ! नीरागत्वे तव स्थितः ॥६६१॥
विकल्पकल्पनालोलकल्लोलैर्नाथ ! रक्ष मे ।
धूयमानं मनःपोतं यत् तरामि भवाम्बुधिम् ॥६६२॥
वपुः शस्तं प्रसन्ना दृग् जन्तुरक्षाकरं वचः ।
अतस्त्वयि कथं नाथ ! सतां न रमते मनः ? ॥६६३॥
भ्रमन्तु भावाः प्रस्तावादितरे तारका इव ।
सर्वज्ञ ! तव तत्त्वाद्रौ ध्रुवीयति मनस्तु मे ॥६६४॥
अलं परिग्रहै रम्यैरपि क्लेशकरैः प्रभो ! ।
सदानन्दमयं देहि भावदेव ! प्रियं पदम् ॥६६५॥
इति कृत्यपरो नित्यं निर्वाह्य बहुवासरान् ।
वार्धकं प्राप तारुण्यवनीदहनपावकम् ॥६६६॥
पालितस्यातियत्नेन लालितस्य महासुखैः ।
स्वदेहस्यापि वैगुण्यं भृशं वीक्ष्य विषादितः ॥६६७॥
विहाय तृणवद् राज्यं समस्तविरतिव्रतम् ।

गृहीत्वा पालयित्वा च पर्यन्तेऽनशनक्रमात् ॥६६८॥
देहमौदारिकं त्यक्त्वा ललिताङ्गो दिवं गतः ।
ततश्च्युत्वा समुत्पद्य विदेहे सिद्धिमेष्यति ॥६६९॥
( विशेषकम् )
ज्ञात्वा धर्मजयादेवमैहिकामुष्मिकं फलम् ।
सर्वदुःखापनोदाय धर्मे कार्यः सदोद्यमः ॥६७०॥
मुनेर्वाक्यमिति श्रुत्वाऽबुध्यन्त बहवो जनाः ।
नियमाऽभिग्रहादीनि स्वस्वभाग्याऽनुमानतः ॥६७१॥
रोहणादिव रत्नानि तस्मादादाय सद्गुरोः ।
भक्त्या कृतनमस्कारा ययुः सर्वे यथास्पदम् ॥६७२॥
उज्ज्वले सद्गुणे स्वच्छे पटे रङ्ग इव स्थिरः ।
निविष्टो मानसे धर्मो मरुभूतेर्गुरूदितः ॥६७३॥
प्रकृत्या लघुकर्माऽसौ विशेषेणोपदेशतः ।
विषयेभ्यो विरक्तात्मा धर्मकृत्यपरायणः ॥६७४॥
दाक्ष्य-दाक्षिण्य-सौजन्य-सत्य-शौच-दयादिभिः ।
कनिष्ठोऽपि गुणैर्ज्येष्ठो मरुभूतिरभूत् तदा ॥६७५॥
मिथ्यात्वकठिनत्वेन ज्येष्ठोऽपि कमठः पुनः ।
तथैवाऽभिन्नहृदयो मुद्गशैल इव स्थितः ॥६७६॥
वेधसा मलिनात्माऽसौ कषोपल इव ध्रुवम् ।
मरुभूतेर्गुणस्वर्णरेखोद्द्योताय निर्मितः ॥६७७॥
यथा केतकपत्राणामेकत्रोत्पन्नवासिनाम् ।
वर्णगन्धादिना भेदो महानित्थं नृणां गुणैः ॥६७८॥
तथा-
प्रदीप-सर्षपौ श्लाघ्यौ लघू अपि गुणोज्ज्वलौ ।
महान्तावपि न श्रेष्ठौ प्रदीपन-बिभीतकौ ॥६७९॥
वसुन्धरा पुनर्भार्या यतिना मरुभूतिना ।

१ विषविशेष ।

स्वप्नेऽप्यवीक्षिता बाढं जज्ञे मदनविह्वला ॥६८०॥
अथ दौरात्म्यदोषेण दुर्जेयत्वाद् मनोभुवः ।
कमठस्य भृशं तस्यां सविकारं मनोऽजनि ॥ ६८१ ॥
ततस्तेन कुलाचारविरुद्धवचनोक्तिभिः ।
अनिच्छन्ती बहिर्वृत्त्या मानसैक्याद् वशीकृता ॥ ६८२ ॥
निरङ्कुशतया लोकद्वयदोषाऽनपेक्षया ।
अनाचारपरौ जातौ कामान्धौ तौ रहोऽन्वहम् ॥ ६८३ ॥
तज्ज्ञात्वा वरुणा जातविततेर्ष्यारुणेक्षणा ।
गत्वा न्यवेदयत् सर्वं महसा मरुभूतये ॥६८४॥
श्रुत्वा तत् तादृशं सोऽपि ग्रामान्तरगमच्छलात् ।
आपृच्छ्य कमठं गत्वा कियद्भूमिं न्यवर्तत ॥६८५॥
श्रान्तः कार्पटिकीभूयागत्यासौ कमठं मृदु ।
आश्रयं निशि वासाय ययाचे सोऽप्यचिन्तयत् ॥६८६॥
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥६८७॥
किञ्च–
तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नो छिद्यन्ते कदाचन ॥ ६८८ ॥
ध्यात्वेति कमठस्तस्य गृहकोणमदर्शयत् ।
व्याजनिद्रागतस्तत्र मरुभूतिरपि स्थितः ॥६८९॥
कुपितश्च भृशं दृष्ट्वा दुश्चरित्रं तयोरथ ।
जायापराभवो येन तिरश्चामपि दुस्सहः ॥६९०॥
भवितव्यनियोगेन दीर्घदृश्वाऽपि दीर्घया ।
अनवेक्ष्याऽऽयतिं दृष्ट्या कथयामास भूभुजे ॥६९१॥
राज्ञः तत्कथनात् तेजोनिधेः प्रकुपितं मनः ।
पित्तं पित्तात्मनः सद्यस्तैलपक्वाऽशनादिव ॥ ६९२ ॥
स राजा धर्मिणां सोमो यमस्त्वन्यायवर्तिनाम् ।

वरुणः करुणाब्धीनामर्थिनां धनदः सदा ॥ ६९३ ॥
नृणामन्यायलेशोऽपि केशो नेत्र इवाऽमले ।
मार्गप्रकाशके तस्मिन् न रतिं कुरुते भृशम् ॥६९४॥
दण्डपाशिकमाकार्य कार्यमन्यदचिन्तयन् ।
आदिदेश विशांमीशो[1] द्रुतं कमठनिग्रहे ॥६९५॥
स तस्य भवने गत्वा यमदूत इव स्वयम् ।
रुद्ध्वा बद्ध्वा च कमठं हठादारोप्य रासभे ॥ ६९६ ॥
शिखाभिः सप्तभिः श्वभ्र[2]वर्णिकाभिरिवाऽन्वितम् ।
उपरिष्टाद् वृतस्थूलैकातपत्राभशूर्पकम् ॥६९७॥
मस्तके कलितं स्थूलबिल्वैः पापफलैरिव ।
शरावैः कण्ठविन्यस्तवरमालमिवापदा ॥६९८॥
पुरतो वाद्यमानोच्चैर्डिण्डिमोड्डामरस्वरैः ।
आह्वयन्तमिवाशेषमीक्षकं बालकव्रजम् ॥ ६९९ ॥
भ्रमयित्वा पुरि मध्ये दर्शयित्वा विडम्बनाम् ।
अवध्यमिति जीवन्तं निष्काश्य मुमुचे बहिः ॥ ७०० ॥
( पञ्चभिः कुलकम् )
पुरस्कृतोऽपि तत्रासीत् स पुरस्कारवर्जितः ।
सदैव कमठोऽप्येवमभूद[3]कमठस्तथा ॥७०१॥
सर्वथा विपरीतात्मा संवृत्तः कर्मदोषतः ।
सत्यमात्माऽपि नाऽऽत्मीयः प्रतिकूले विधौ भवेत् ॥७०२॥
स्वस्वस्थानं गते राजपूरुषप्रमुखे जने ।
मन्युभारभरेणेव नीचैःकृतशिरोऽधरः ॥ ७०३ ॥
दुःखातिपातजाताऽश्रुपूर्णाक्षियुगलच्छलात् ।
स्वजनस्नेहसौख्यानां यच्छन्निव जलाञ्जलिम् ॥ ७०४ ॥
भाग्यसूर्याऽस्तविस्तीर्णतमःश्यामीकृताननः ।

---

१ नरेश्वर. । २ श्वभ्र नरकम् ।
३ अक दु खम्, तस्य मठ. स्थानम्, अकमठ. ।

भवान्तरमिवायातं धनस्वजनवर्जितम् ॥७०५॥
पश्यन्नात्मानमेकाकी कमठस्तत्र कानने ।
शरण्यरहितो दीनो मनस्येवमचिन्तयत् ॥७०६॥
( कलापकम् )
अहो ! सहोदरादेवं शतसंख्येषु बन्धुषु ।
दानाद्यावर्जिताऽभीष्टसहायेषु सहस्रशः ॥७०७॥
संचितेषु चिरं भूरिवित्तलक्षेषु सत्स्वपि ।
वैरिणामपि दुर्दर्शा दशा मेऽजनि कीदृशी ॥७०८॥
अथवा मन्दभाग्यस्य स्तोकमात्रमिदं मम ।
भवतु प्राप्तकालीनं कुर्वे तावदिहाऽधुना ॥७०९॥
( विशेषकम् )
भृशं रोषेण पूर्णोऽपि प्रतिकर्तुमपारयन् ।
भ्रमन्नितस्ततस्तत्र स ययौ तापसाश्रमम् ॥७१०॥
निवेद्य दुःखमात्मीयं शिवतापससंनिधौ ।
गृहीत्वा तापसीं दीक्षां तप्यते स्म गिरौ तपः ॥७११॥
इतश्च मरुभूतिस्तं कमठस्यातिदारुणम् ।
वृत्तान्तं वीक्ष्य कुत्रापि रतिं न लभतेतराम् ॥७१२॥
कोटरान्तःप्रविष्टेन पावकेनेव पादपः ।
दह्यमानोऽनिशं पश्चात्तापेन मनसोऽन्तरे ॥७१३॥
निन्दत्यात्मानमेवं च धिगिदं यन्मयेदृशम् ।
ज्येष्ठेऽपि बान्धवेऽनिष्टमसमीक्ष्य कृताकृतम् ॥७१४॥
( युग्मम् )
यथा स्वच्छतया वस्तु दर्पणे प्रतिबिम्ब्यते ।
शुद्धवृत्ते तथाचित्ते परदुःखं महात्मनः ॥७१५॥
महात्मा परपीडां चेद् दैवतः कुरुते तदा ।
प्रायश्चित्तसमेन स्वं पश्चात्तापेन शोधयेत् ॥७१६॥
ततः पृष्ट्वा महीनाथं वार्यमाणोऽपि तेन सः ।

मरुभूतिः क्षमयितुं जगाम कमठं वने ॥ ७१७ ॥
पतित्वा पादयोस्तस्य नीचैः स गद्गदस्वरम् ।
क्षन्तव्यं दुष्कृतं भ्रातर्ममाऽज्ञस्येत्यभाषत ॥ ७१८ ॥
प्रणामाऽनुनयात् तस्य कमठस्तीव्रमत्सरः ।
तप्ततैलं जलक्षेपादिवान्तर्ज्वलितो भृशम् ॥ ७१९ ॥
समुत्पाट्य शिलामेकां नमतस्तस्य मस्तके ।
मुमुचे सहसा कोपाद् दष्टोष्ठः पाटलेक्षणः ॥ ७२० ॥
पुनरादाय देहस्योपरि क्षिप्त्वा च तां शिलाम् ।
निजेन तपसा सार्द्धं कमठस्तमचूर्णयत् ॥ ७२१ ॥
तत्प्रहारार्तिजातार्तध्यानो मृत्वाऽभवत् करी ।
स विन्ध्यपर्वते भद्रजातिजो यूथनायकः ॥ ७२२ ॥
स्थूलोपलसदृक्कुम्भो गम्भीरमुखकन्दरः ।
युक्तो जनोर्ध्वसंचारदण्डकाकारशुण्डया ॥ ७२३ ॥
पङ्किलीकृतभूभागः प्रोद्दाममदनिर्झरैः ।
तद्गन्धलुब्धभृङ्गालीकीचकध्वनिबन्धुरः ॥ ७२४ ॥
गण्डशैलसमैर्विष्वक् कलभैः परिवेष्टितः ।
गुरुपादाऽन्वितोऽत्युच्चैर्विन्ध्याद्रिरिव जङ्गमः ॥ ७२५ ॥
( कलापकम् )
कोपान्धा वरुणा साऽपि कालधर्ममुपेयुषी ।
तस्यैव यूथनाथस्य वल्लभाऽभूत् करेणुका ॥ ७२६ ॥
गिरिनद्यादिषु स्वैरं तया सह विशेषतः ।
अखण्डसुखसम्भोगश्चिक्रीड स गजाग्रणीः ॥ ७२७ ॥
इतश्च पोतनपतेररविन्दमहीभुजः ।
भुञ्जतोऽनुपमं सौख्यं शरत्कालः प्रवृत्तवान् ॥ ७२८ ॥
उपरिस्थरविव्याजसुवर्णकलशान्वितम् ।
सिताभ्रपटलं छत्रायते यत्र नभोङ्गणे ॥ ७२९ ॥
सरोगृहेषु स्फटिकोत्तानपट्टाऽमलप्रभे ।

सलिले पद्मिनीखण्डं धत्ते सिंहासनश्रियम् ॥ ७३० ॥
विकासिकाशपुष्पाणि दधन्ते चामरोपमाम् ।
ढक्कानिनादसंवादि मत्तगोवृषनर्दितम् ॥ ७३१ ॥
इत्येवं राज्यचिह्नैर्यो गोपस्त्रीगीतमङ्गलः ।
शस्यसम्पादनाल्लोके राजेवर्तुषु राजते ॥ ७३२ ॥
तत्रान्येद्युररविन्दनृपः सौधोपरिस्थितः ।
रममाणः परस्त्रीभिः सहातिरसनिर्भरम् ॥ ७३३ ॥
अपश्यत् सहसा व्योमव्यापिनं गर्जितोर्जितम् ।
नवोदयं वारिधरं शक्रचापतडिद्वरम् ॥ ७३४ ॥
क्वचित् कज्जलरोलम्बतमालदलपेशलम् ।
क्वापि स्फटिकशङ्खेन्दुहिमानीपिण्डपाण्डुरम् ॥ ७३५ ॥
क्वापि हिङ्गुलगुञ्जार्द्धजपाविद्रुमपाटलम् ।
हरिद्राभङ्गनारङ्गहरितालच्छवि क्वचित् ॥ ७३६ ॥
क्वचिच्च शुकपिच्छेन्द्रनीलकाचसमप्रभम् ।
नयनाक्षेपकं पञ्चवर्णं निर्वर्ण्यमुन्मुखैः ॥ ७३७ ॥

( कुलकम् )

अहो ! रम्यत्वमस्येति पार्थिवे वदति क्षणात् ।
अभाग्याद् घनवन्मेघः स वाताद् विलयं गतः ॥ ७३८ ॥
तं दृष्ट्वा निजदेहादावपि तेन सदृक्षताम् ।
विभाव्य हृदि सञ्जातवैराग्यादित्युवाच सः ॥ ७३९ ॥
अहो ! चित्रमहो ! चित्रं यत् तादृशमपि क्षणात् ।
घनवृन्दं विदद्रे तद् वातक्षिप्तार्कतूलवत् ॥ ७४० ॥
मन्ये यथाऽभ्रपटलमिदमग्रे व्यशीर्यत ।
तथाऽन्यदपि संसारे सर्वं क्षणविनश्वरम् ॥ ७४१ ॥
यतः—
विद्युदुद्द्योतवद् लक्ष्मीरिष्टानां सङ्गमाः पुनः ।
मार्गस्थतरुविश्रान्तसार्थसंयोगसन्निभाः ॥ ७४२ ॥

रमणीयं कियत्कालं तारुण्यं शक्रचापवत् ।
प्रियाणामपि निर्वाहे स्नेहरङ्गः पतङ्गवत् ॥ ७४३ ॥
प्रचलज्जलसंक्रान्तचन्द्रबिम्बवदग्रहे ।
नारी मनसि कश्चेतःप्रतिबन्धः सतां भवेत् ? ॥ ७४४ ॥
आपातमधुराः सर्वे विषयाः प्रान्तदारुणाः ।
भवे किञ्चिद् न पश्यामि सारं रम्भान्तरे इव ॥ ७४५ ॥
क्षणदृष्टविनष्टत्वात् स्वप्नः सर्वमिदं भुवि ।
एको भवति सुप्तानां द्वितीयो जाग्रतां पुनः ॥ ७४६ ॥
तथा चोक्तम्-
प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ।
आमकुम्भ इवाम्भःस्थो विशीर्णः स विभाव्यते ॥ ७४७ ॥
आसन्नतरतामेति मृत्युर्जन्तोर्दिने दिने ।
आघातनीयमानस्य वध्यस्येव पदे पदे ॥ ७४८ ॥
आयुर्नासाग्रसञ्चारिनिःश्वासोच्छ्वासकैतवात् ।
अत्यन्तगमनायेव सदाऽभ्यासे कृतोद्यमम् ॥ ७४९ ॥
दूरेऽस्तु लोपवत् सर्वापहारी मृत्युरङ्गिनाम् ।
जरैवादेशवद् रूपं हृत्वाऽऽद्यं कुरुतेऽन्यथा ॥ ७५० ॥
विधत्ते वार्द्धकं मृत्योरग्रसैन्यमिवोत्कटम् ।
विडम्ब्य विविधं जन्तून् जीवतोऽपि मृतानिव ॥ ७५१ ॥
सञ्जातदन्तपातत्वादिव तेजश्च्युतं वपुः ।
दृष्टिकर्णबलध्वंसादिव शून्यं मनोऽभवत् ॥ ७५२ ॥
स्वरक्षतिर्गतेर्भङ्गः सङ्कोचः पाणिपादयोः ।
कम्पश्चासन्नकीनाशकारणोत्थभयादिव ॥ ७५३ ॥
वार्द्धकाऽनलदग्धस्य सारयौवनवस्तुनः ।
दृश्यते देहगेहेषु भस्मेव पलितच्छलात् ॥ ७५४ ॥
अशौचेऽपि चेद् देहे मलिनस्यात्मनो रतिः ।
मातङ्गस्येव मातङ्गसङ्गतिः किं न तुष्टये ? ॥ ७५५ ॥

एभ्यो जातश्चिरात् तावत् ते गताः स्वसमानऽपि ।
पश्यन् मृत्युहृतानेष चित्रं जन्तुरनाकुलः ॥ ७५६ ॥
स्थित्वापि सुचिरं भोगा गमिष्यन्ति न संशयः ।
तस्मादेते स्वयं त्यक्ताः कुर्युः शमसुखं महत् ॥ ७५७ ॥
महर्घ्यं प्राप्य सद्देहं पण्यगेहं नरोऽत्र यः ।
तल्लालनपरः स्वार्थं नार्जयेत् तस्य का गतिः ? ॥ ७५८ ॥
इति राजा विवेकाख्यमन्त्रनीरेण मोहजे ।
अन्तरङ्गदृशोर्बन्धे ध्वस्तेऽपश्यद् यथास्थितम् ॥ ७५९ ॥
इत्थं तं विरक्तात्मानं नृपं ज्ञात्वा व्रतोन्मुखम् ।
सदुःखमित्यभाषिष्ट रुदन्नन्तःपुरीजनः ॥ ७६० ॥
तव राज्यपरित्यागवार्त्तयाऽशनितुल्यया ।
हृदयं यावदस्माकं शतखण्डं न भिद्यते ॥ ७६१ ॥
तावत्प्रसीद मुञ्चेममाग्रहं जीवितेश्वर ! ।
क्व तपः कर्कशं क्वेदं सुकुमारं वपुस्तव ? ॥ ७६२ ॥
( युग्मम् )
किं जातिकुसुमे वह्निः क्षिप्यते किं महाकरी ।
मृणाले बध्यते किं वा रम्भा क्रकचमर्हति ? ॥ ७६३ ॥
त्यागः शौर्यमुभावेतावनन्यसदृशौ गुणौ ।
त्वयि प्रव्रजिते नाथ ! पदं कुत्र करिष्यतः ॥ ७६४ ॥
विजयश्रीवरस्वामिंस्त्वया पालितपोषिताः ।
लप्स्यन्तेऽमूः कुतोऽन्यस्मात् पितृमातृसुखं प्रजाः ॥७६५॥
तद्देव ! सर्वथाऽप्यऽस्माद् रक्ष रक्ष भयङ्करात् ।
अकाले कालग्रसनात् कुरु राज्यं चिरं प्रिय ! ॥ ७६६ ॥
इत्येवं प्रबलस्नेहनिर्भरा निजवल्लभाः ।
संबोधयितुमारब्धो दक्षः सप्रणयं नृपः ॥ ७६७ ॥
हे ! प्रियाः ! कस्य नाभीष्टः प्रिययोगो न कः श्रियम् ? ।
ईहते किंतु मत्तेभकर्णलोलं हि जीवितम् ॥ ७६८ ॥

पीडयेद् न जरा यावद् व्याधिर्यावद् न बाधते ।
मृत्युर्धावति नो यावद् तावत् धर्मो विधीयते ॥ ७६९ ॥
अनलज्वलदावाससंकाशभववासतः ।
निःसरन्तं निजं कान्तं कथं रक्षत वल्लभाः ! ॥ ७७० ॥
इति संबोधनीरेण तासां मानसकोद्रवान् ।
उत्तार्य मदनं शुद्धीचकार नरपुङ्गवः ॥ ७७१ ॥
निष्कषायात्मनः शुद्धपटस्येव महात्मनः ।
तस्य रक्तिरभूद् रागकारणैर्न घनैरपि ॥ ७७२ ॥
किं चोच्यते-
द्वाविमौ बन्धमोक्षार्थौ ममेति न ममेति च ।
ममेति मूलं दुःखस्य न ममेति च निर्वृतेः ॥ ७७३ ॥
मार्जारभक्षिते दुःखं यादृशं गृहकुर्कुटे ।
न तादृग् ममतात्यक्ते कलविङ्के[1] च मूषिके ॥ ७७४ ॥
चिन्तयन्ते बुधाः पूर्वं मध्यमा दोषदर्शनात् ।
विकारदर्शनेनाऽपि येनैवं ते नराधमाः ॥ ७७५ ॥
पलाशं पादपस्यापि विरागं जायते क्रमात् ।
सचेतनोऽपि यो नैवं स काष्ठादपि बालिशः ॥ ७७६ ॥
संवेगरङ्गतस्तस्य क्षयोपशममीयतुः ।
ज्ञानावरण-चारित्रमोहनीये महीभुजः ॥ ७७७ ॥
सद्यो जातावधेर्यस्य महेन्द्रं स्वपदे सुतम् ।
समन्तभद्राचार्यस्य पार्श्वे जग्राह स व्रतम् ॥ ७७८ ॥
गुरोरनुज्ञयैकाकिविहारमतिमाधरः ।
विजहाराऽरविन्दर्षिर्गन्तुं मुक्तिपुरीमिव ॥ ७७९ ॥
निर्ममो निरहङ्कारः शान्तात्मा त्यक्तगौरवः ।
समः सर्वेषु भूतेषु तुल्यधीः काञ्चनाश्मनोः ॥ ७८० ॥
उद्देसे[2] वसतौ ग्रामे पुरे चापि न कुत्रचित् ।

---
१ चटके । २ गिर्जने ।

अभूद् विहरतस्तस्य प्रतिबन्धो महात्मनः ॥ ७८१ ॥
तनुमूषा[1]गतं चित्तशुल्वं[2] शमरसेन सः ।
कल्याणा[3]य क्षमौषध्या तपस्तापादमेलयत् ॥ ७८२ ॥
त्रिविधाभिग्रही नित्यमचालीदथ सोऽन्यदा ।
सागरदत्तसार्थेशसार्थेनाष्टापदं प्रति ॥ ७८३ ॥
मुनिं सागरदत्तस्तं पप्रच्छ क नु यास्यथ ? ।
स ऊचे वन्दितुं देवान् यास्यामोऽष्टापदाऽचले ॥ ७८४ ॥
सार्थेशः पुनरप्राक्षीत्के देवास्तत्र पर्वते ? ।
कारिताः केन कति ते फल तद्वन्दने च किम् ? ॥७८५॥
आसन्नभव्यं तं ज्ञात्वाऽरविन्दमुनिराख्यत ।
अर्हन्तो भद्र ! सत्याख्या देवा देवगुणान्विताः ॥७८६॥
केऽर्हन्तस्ते वीतरागाः सर्वज्ञाः शक्रपूजिताः ? ।
धर्मदेशनया विश्वविश्वस्योत्तारकाश्च ये ॥ ७८७ ॥
ऋषभस्त्वादिमस्त्वेषामिक्ष्वाकुकुलसम्भवः ।
आसीत् तीर्थकरस्तस्य सुतो भरतचक्रभृत् ॥ ७८८ ॥
आदिनाथस्य निर्वाणं गतस्याऽष्टापदाचले ।
चक्री च दिव्यमुत्तुङ्गं तत्र चैत्यमकारयत् ॥ ७८९ ॥
तस्मिंश्च वृषभादीनां चतुर्विंशतिमर्हताम् ।
प्रतिमाः स्वस्वमानेनास्थापयद् रत्ननिर्मिताः ॥ ७९० ॥
तद्वन्दनाफलं मुख्यं मोक्षोऽन्यच्चाऽऽनुषङ्गिकम् ।
नरेन्द्रस्वर्गसाम्राज्यपदलाभादिकं पुनः ॥ ७९१ ॥
पूजयन्ति च तान् भूरिभाग्या एव नरा भुवि ।
यतस्तत्पूजनाद् न स्युराधिदुर्गतिदुर्धियः ॥ ७९२ ॥
जिनानां बिम्बमप्यर्कप्रतिबिम्बमिव ध्रुवम् ।
चित्तादर्शे स्थितं स्वच्छे हरत्यन्तस्तमो नृणाम् ॥ ७९३ ॥
था— अनित्ये क्लेशदे नास्था महतां बाह्यभूषणे ।

१ सुवर्णावर्तनी पात्री मूषा । २ ताम्रम् । ३ सुवर्णायाऽपि ।

संग्राह्यं विदुषा सारनेपथ्यमिदमान्तरम् ॥ ७९४ ॥
जिनाज्ञाभूषणं मूर्ध्नो ललाटस्याऽञ्जलिर्गुरोः ।
सच्छ्रुतं कर्णयोः सत्यं जिह्वायाः स्वच्छता हृदः ॥ ७९५॥
पादयुग्मस्य सत्तीर्थं प्रति चङ्क्रमणक्रमः ।
जिनेन्द्रपूजनं दानं निर्विकल्पं करस्य च ॥ ७९६ ॥
विकल्पेन पुनर्देवार्चनं दानं करोति यः ।
स स्वं हारयते पुण्यमत्रोदाहरणे शृणु ॥ ७९७ ॥
तथाहि- वणिजौ क्वापि पुरेऽमण्डयतामुभौ ।
नन्दको भद्रकाख्यश्च नैकश्येनाऽऽपणद्वयम् ॥ ७९८ ॥
भद्रकः प्रातरुत्थाय नित्यं याति निजाऽऽपणे ।
नन्दको देवपूजार्थं पुनर्याति जिनालये ॥ ७९९ ॥
भद्रकश्चिन्तयत्येवमहो ! धन्योऽत्र नन्दकः ।
त्यक्ताऽन्यकृत्यो यः प्रातर्जिनेन्द्रं नित्यमर्चति ॥ ८०० ॥
अहं तु निर्धनः पापी धनोपार्जनलालसः ।
अत्राऽऽगत्य मुखं प्रेक्षे पामराणां दिनोदये ॥ ८०१ ॥
धिग् धिग् मे जीवितं गोत्रमिति ध्यानजलेन सः ।
मलं क्षालयति स्वीयं पुण्यबीजं च सिञ्चति ॥ ८०२ ॥
चिन्तयन् नन्दकस्त्वेवं मम देवार्चनक्षणे ।
भद्रको निस्सपत्नोऽयं धनं बह्वर्जयिष्यति ॥ ८०३ ॥
अभिग्रहगृहीतोऽहं किं करोम्यधुना पुनः ।
देवार्चायाः फलं दूरे सद्यो हानिर्धनस्य तु ॥ ८०४ ॥
कुविकल्पैरिमैरेष कृतं हारितवान् निजम् ।
एकतानमनोभिस्तत् कार्यं देवार्चनं बुधैः ॥ ८०५ ॥
तथैकत्र पुरे धन्यो वणिक्पुत्रो निजापणे ।
उपविष्टो मुनिं भिक्षामटन्तं वीक्ष्य हृष्टवान् ॥ ८०६ ॥
आकार्य च घृतं दातुमुद्यतस्तस्य भाजने ।
अखण्डधारया यच्छन्नुच्चैर्गतिमुपार्जयत् ॥ ८०७ ॥

प्रवर्धमानतत्पुण्यविघाताशङ्कया मुनिः ।
यावद् न विरतस्तावद् दातुरेवं मनस्यभूत् ॥ ८०८ ॥
अहो ! किमियतैकाकी घृतेनैष करिष्यति ? ।
यन्नाद्यापि विरमतीत्यपतत् परिणामतः ॥ ८०९ ॥
ततो येन क्रमेणैष देवलोकानुपार्जयत् ।
तेनैव निपतंस्तेन ज्ञानिना मुनिनोदितः ॥ ८१० ॥
इयदूर्ध्वमहो ! गत्वा मा पत मुग्ध ! मा पत ।
स ऊचे नन्विहास्म्येष किमसंबद्धमुच्यते ? ॥८११॥
अथर्षिः कथयामास श्रद्धादानस्य सत्फलम् ।
महाद्भुतकरं सद्यो विकल्पस्य च दूषणम् ॥ ८१२ ॥
निर्विकल्पमतो दानं देयं सात्त्विकमुत्तमैः ।
लोकेऽपि शकुनः स्वप्नो विकल्पादुच्यतेऽफलः ॥८१३॥
अनेन भूषणेनात्मा सुभगंभावुको भवन् ।
स्पृहणीयतमः सिद्धिवध्वा अपि भवेद् ध्रुवम् ॥८१४॥
इत्यादिविविधां धर्मशिक्षां शृण्वन् निरन्तरम् ।
अरविन्दस्य राजर्षेर्वदनात् सार्थनायकः ॥ ८१५ ॥
मन्वानो गुरुसंयोगं कल्पद्रुप्राप्तिसंनिभम् ।
मिथ्यात्वं सर्वथा त्यक्त्वा श्रावकत्वं प्रपन्नवान् ॥८१६॥
नित्यं सागरदत्तोऽथ गच्छन् मार्गे क्रमेण ताम् ।
अटवीं प्राप यत्रास्ते मरुभूतिः करीश्वरः ॥ ८१७ ॥
कदलीगर्भसंकाशमृदुकल्लोलबाहुभिः ।
सुप्रसन्नतया गन्तूनालिङ्गितुमिवोद्यतम् ॥ ८१८ ॥
वातनम्रैर्भ्रमद्भृङ्गाऽऽरावहृद्याम्बुजाननैः ।
आकारयदिवानम्य पान्थानातिथ्यहेतवे ॥ ८१९ ॥
हंस-सारस-हारीत-चक्र-कादम्बकादिभिः ।
शब्दायमानैर्नानेव गीयमानगुणोत्करम् ॥ ८२० ॥

१ पान्थान् ।

अतिस्निग्धतया निर्यत्तुषारकणिकामिषात् ।
अर्थितापहृतिप्रीत्या मुक्तहर्षाश्रुकैरिव ॥ ८२१ ॥
मिलितोन्नतविस्तीर्णैः पुष्पपत्रफलान्वितैः ।
विचित्रवृक्षैः परितः परीतं[1] स्वजनैरिव ॥ ८२२ ॥
परागैरिव कार्पूरैर्मुक्तानामिव चूर्णिभिः ।
द्रव्यैरिव हिमानीनां[2] सुधांशोरिव रश्मिभिः ॥ ८२३ ॥
मुनीनामिव चेतोभिर्निर्मितं मन्यते जनैः ।
यदत्यच्छत्वशैत्येन तत्रास्त्येकं महासरः ॥ ८२४ ॥
( सप्तभिः कुलकम् )
तस्यान्ते सुजनस्येव विश्वस्तः सार्थ आवसत् ।
जनः प्रववृते नीरेन्धनान्नपचनादिषु ॥ ८२५ ॥
तदा च मरुभूतीभः करिणीभिः समावृतः ।
एत्य तत्र सरस्यम्भः पपौ मेघ इवाऽर्णवे ॥ ८२६ ॥
पयःपूर्णकरोत्क्षेपं करिणीभिः समं चिरम् ।
तत्र रन्त्वा स निर्यातः पालिमध्यारुरोह च ॥ ८२७ ॥
दिशोऽवलोकयंस्तत्रापश्यत् तं सार्थमोषितम्[3] ।
कृतान्त इव चाधावत् कोपात् ताम्रमुखेक्षणः ॥ ८२८ ॥
कुण्डलीकृतशुण्डाको निष्कम्पश्रवणद्वयः ।
पूरिताशः स गर्जाभिर्नाशयामास सार्थिकान् ॥ ८२९ ॥
नरनार्यो वाहनानि करभादीनि चाऽभितः ।
पलायांचक्रिरे जीवग्राहं सर्वो जिजीविषुः ॥ ८३० ॥
पर्यस्यच्छकटं त्रुट्यत्पटगेहं रटज्जनम् ।
आरटत्करभं तत्र तदासीदतिभीषणम् ॥ ८३१ ॥
ज्ञात्वाऽवधेर्बोधिकालं करिणः तस्य संमुखम् ।
भगवानरविन्दोऽपि कायोत्सर्गं ददौ स्थिरः ॥ ८३२ ॥
दूरतो धावितः क्रोधादिभः पार्श्वगतोऽस्य तु ।

१ युक्तम् । २ महतां हिमानाम् । ३ ओषित स्थितम् ।

प्रशान्तमत्सरो जज्ञे तत्तपःश्रीप्रभावतः ॥ ८३३ ॥
सद्यश्च जातसंवेगाऽनुकम्पः स्थिरदेहभृत् ।
तस्थौ मुनेः पुरस्तस्य स शैक्ष इव नूतनः ॥ ८३४ ॥
मुनिस्तस्योपकाराय कायोत्सर्गमपारयत् ।
शान्तगम्भीरया वाचा तं बोधयितुमब्रवीत् ॥ ८३५ ॥
भो भोः ! स्मरसि किं न त्वं मरुभूतिभवं निजम् ? ।
किं न प्रत्यभिजानासि मामरविन्दभूपतिम् ॥ ८३६ ॥
तद्भवे प्रतिपन्नं किं व्यस्मार्षीर्धर्ममार्हतम् ? ।
स्मर सर्वं विमुञ्चेमं मोहं श्वापदजातिजम् ॥ ८३७ ॥
गिरं पीयूषदेशीयां मुनेस्तस्य मतङ्गजः ।
पपौ निश्चलविस्तारिकर्णपर्णपुटेन सः ॥ ८३८ ॥
अथोहापोहतो जातिस्मरणं प्राप्य तत्क्षणात् ।
अत्यन्तोल्लासिहर्षाश्रुसलिलप्लुतलोचनः ॥ ८३९ ॥
भूत्वाऽवनतकायाग्रः करेण चरणौ स्पृशन् ।
शिरसा तं नमश्चक्रे संविग्नात्मा मुनिं गजः ॥ ८४० ॥
भूयोऽपि तं मुनिः स्माह भवेऽस्मिन्नाटकोपमे ।
प्राणी नट इवाप्नोति रूपान्यत्वं क्षणे क्षणे ॥ ८४१ ॥
तथाहि क तदा धीमांस्तत्वज्ञः श्रावको द्विजः ।
जातिस्वभावमूढात्मा केदानीं त्वमसि द्विपः ? ॥ ८४२ ॥
किंवाऽथ बहुनोक्तेन[1] कार्यसारो भव द्रुतम् ।
कषायविषयासङ्गं विमुच्य करिपुंगव ! ॥ ८४३ ॥
नाऽसि सर्वविरत्यर्हस्तद् द्वादशव्रतात्मकः ।
भूयः श्रावकधर्मोऽस्तु प्राग्जन्माङ्गीकृतस्तव ॥ ८४४ ॥
इत्यादि गदितं धर्मरहस्यं मुनिनाऽखिलम् ।
श्रद्धानसहितः सोऽनुमेने हस्ताग्रसंज्ञया ॥ ८४५ ॥
वरुणा करिणीभूता सापि तत्रैव तस्थुषी ।

---

१ खेदेनेत्यपि ।

तदैव जातिस्मरणमुपलेभे गजेन्द्रवत् ॥ ८४६ ॥
भूयोऽप्याख्यज्जिनधर्मं तस्यर्षिः स्थैर्यहेतवे ।
ययौ च श्रावकीभूय मुनिं नत्वा स कुञ्जरः ॥ ८४७ ॥
मिलितः सर्वलोकोऽपि पुनस्तद्बोधविस्मितः ।
कोऽपि दीक्षामुपादत्ते कोऽप्यभूत् श्रावकस्ततः ॥८४८॥
तदा सागरदत्तोऽपि जिनधर्मे दृढाशयः ।
विशिष्टश्रावको जज्ञे सुरैरप्यविकम्पितः ॥ ८४९ ॥
अष्टापदाद्रौ गत्वा च सोऽरविन्दमहामुनिः ।
अवन्दताऽर्हतः सर्वान् विहरंश्चान्यतो ययौ ॥ ८५० ॥
कुञ्जरश्रावकः सोऽपि भूत्वा भावयतिः स्वयम् ।
ईर्यादिनिरतोऽचारीत् कुर्वन् षष्ठादिकं तपः ॥ ८५१ ॥
सूर्यतप्ताम्भसः पाता शुष्कपत्रादिपारणः ।
स करी करिणीकेलिविमुखोऽस्थाद् विरक्तधीः ॥८५२॥
इति दध्यौ च धन्यास्ते मर्त्यत्वे प्रव्रजन्ति ये ।
पात्रदानमिवाऽर्थस्य मर्त्यत्वस्य फलं व्रतम् ॥ ८५३ ॥
द्रविणं तद्धनेनेव[1] मर्त्यत्वं धिग् मया तदा ।
अहार्यनात्तदीक्षेण किं करोम्यधुना पशुः? ॥ ८५४ ॥
तिर्यक्त्वेऽपि शरीरस्य गुरुत्वेनास्य पापिना ।
अभवं बहुजीवानां क्षयकारी भयङ्करः ॥ ८५५ ॥
येन तेन वनाहारेणैष कुक्षिः प्रपूर्यते ।
तज्जीवममतां देहे त्यक्त्वा धर्मपरो भव ॥ ८५६ ॥
भावयन् भावनामेवं गुर्वाज्ञास्थिरमानसः ।
स कालं गमयन्नस्थात् सुस्थितः सुखदुःखयोः ॥८५७॥
इतश्च कमठो शान्तो मरुभूतिवधादपि ।
अभाष्यमाणो गुरुणा गर्ह्यमाणोऽन्यतापसैः ॥ ८५८ ॥
विशेषेणार्त्तध्यानस्थो मृत्वाऽभूत् कुर्कुटोरगः ।

---

१ कृपणेनेव ।

अटव्यां दर्शनेनाऽपि सर्वसत्त्वभयंकरः ॥ ८५९ ॥
दंष्ट्र्या पक्षविक्षेपैर्नखैश्चञ्चुपुटेन च ।
जातपक्षो यम इव संहरन् प्राणिनोऽखिलान् ॥ ८६० ॥
सरस्युष्णांशुसंतप्तं स पिबन् प्रासुकं पयः ।
ददृशे मरुभूतीभस्तेन बम्भ्रमताऽन्यदा ॥ ८६१ ॥
पङ्के मग्नस्तदा दैवात् तपःक्षामतनुत्वतः ।
निर्गन्तुमक्षमः कुम्भे स दष्टः कुर्कुटाहिना ॥ ८६२ ॥
तद्विषप्रसरैर्ज्ञात्वाऽवसानं स मतङ्गजः ।
चक्रे चतुर्विधाहारप्रत्याख्यानं समाहितः ॥ ८६३ ॥
तत्क्षणोल्लासिवीर्यश्च विमृश्यन् मुनिभाषितम् ।
सस्मारैकमनाः पञ्चपरमेष्ठिनमस्कृतिम् ॥ ८६४ ॥
व्यभावयच्च रे ! जीव ! मरणे ध्रुवभाविनि ।
धर्मध्यानक्षणः सोऽयं महाभाग्येन लभ्यते ॥ ८६५ ॥
परो निमित्तमात्रं स्यात् स्वकर्मैवाऽपराध्यति ।
प्रद्वेषं मा स्म तत् कार्षीरस्मिन् कुर्कुटपन्नगे ॥ ८६६ ॥
इत्थं शमसुधातृप्तो धर्मध्यानी विपद्य सः ।
सहस्रारे सप्तदशसागरायुः सुरोऽभवत् ॥ ८६७ ॥
विमानेऽन्तर्मुहूर्त्तेनोत्थाय दूष्ययुगान्तरात् ।
आसीनं तरुणनराकारं सर्वाङ्गभूषितम् ॥ ८६८ ॥
रत्नकुण्डलकोटीरतारहारादिभूषणाः ।
सहसा सुरसुन्दर्यः सहर्षमिदमूचिरे ॥ ८६९ ॥
( युग्मम् )

जय, नन्द, चिरं भद्र ! प्रीणय स्वदृशानुगान् ।
अद्यास्माकमनाथानां नाथत्वं यत् त्वमासदः ॥८७०॥
अद्य पुण्याहमद्यैव मङ्गलं प्रीतिरद्य च ।
अद्यैव वसतिस्वर्गो नाथ ! यत् त्वमिहागमः ॥ ८७१ ॥
देवादेशय यत् कृत्यं किंकरा वयमास्महे ।

इयं च श्रीस्त्वदायत्ता यद्विभाति कुरुष्व तत् ॥ ८७२ ॥
ततः स विहितस्नानः कल्पपुस्तकवाचनः ।
सिद्धालयस्थप्रतिमाः स्तुत्वाऽऽस्थानीमशिश्रियत् ॥८७३॥
देवदेवीगणैरेवं विहिते मङ्गलक्रमे ।
संगीताऽमृतमग्नात्मा दिव्यभोगानभुक्त सः ॥८७४॥
वरुणा करिणी साऽपि तपस्तेपे सुदुस्तपम् ।
तथा यथा विपद्याभूद् देवी कल्पे द्वितीयके ॥८७५॥
स कोऽपि देवो नैवाभूदीशाने यन्मनस्तया ।
न ह्यहारि मनोहारि रूपलावण्यसंपदा ॥ ८७६ ॥
देवे क्वापि मनश्चक्रे न मनागपि सा पुनः ।
गजेन्द्रजीवदेवस्य संगमध्यानतत्परा ॥ ८७७ ॥
गजेन्द्रजीवदेवोऽपि यस्यामत्यनुरागवान् ।
रक्तां तां चावधेर्ज्ञात्वा सहस्रारमुपानयत् ॥८७८॥
चक्रे स देवो देवीं तामन्तःपुरशिरोमणिम् ।
पूर्वजन्माभिसंबद्धः स्नेहो हि बलवत्तरः ॥ ८७९ ॥
नन्दीश्वरे शाश्वतार्हत्प्रतिमानां महार्चनैः ।
संगीतेन पुरस्तासां मुनीनां पर्युपासनैः ॥ ८८० ॥
कदाचिन्नन्दनोद्यानदीर्घिकाजलकेलिभिः ।
कदाचिद् गीतवादित्रनित्योत्सवमहारसैः ॥ ८८१ ॥
स्वच्छन्दक्रीडया तत्र सुखं वैषयिकं परम् ।
भुञ्जानोऽगमयत्कालं स गजेन्द्रसुरो दिवि ॥ ८८२ ॥
कालेन कियता सोऽपि कुर्कुटाहिर्विपन्नवान् ।
नारकोऽभूत् सप्तदशार्णवायुः पञ्चमावनौ ॥ ८८३ ॥
पञ्चमावनियोग्याश्च वेदना विविधाः सदा ।
सोऽन्वभूत् कमठजीवो विश्रान्ति नाप जातुचित् ॥८८४॥
दानादिपान् निखिलजन्तुगुरुः प्रधान-

१ दानादयः पादा यस्य स ।

ध्यानद्वयीदशनवानुरुकीर्त्तिशुण्डः ।
पार्श्वः करी शमवनैकविहारभावो
गीर्दानतः शमयताज्जगतीरजांसि ॥ ८८५ ॥

इति श्रीकालिकाचार्यसंतानीयश्रीभावदेवसूरिविरचिते श्रीपार्श्वनाथ-चरित्रे महाकाव्येऽष्टसर्गे भावाङ्के श्रीपार्श्वनाथप्रथम-द्वितीय-तृतीयभववर्णनो नाम प्रथमः सर्गः ।

---

अर्हम्

# अथ द्वितीयः सर्गः ।

अथ पूर्वविदेहेषु सुकच्छे विजये गिरौ ।
वैताढ्येऽस्ति धनैराढ्या तिलका नामतः पुरी ॥ १ ॥
उत्तुङ्गचङ्गधवलप्रासादच्छद्मनाऽनिशम् ।
पुरीप्रभुतया यस्या यशोराशिरिवोच्छ्रितः ॥ २ ॥
सर्वदाऽनेकविद्याभिर्यत्र विद्याधरा नराः ।
आश्लिष्टा अपि मुच्यन्ते नैव क्षणमपि श्रिया ॥ ३ ॥
मुखैश्चन्द्रमसं, नेत्रैः कमलं, कोकिलं स्वरैः ।
गमनै राजहंसं च जिग्युर्यत्राऽबला अपि ॥ ४ ॥
तत्र विद्युद्गतिर्नाम राजा विद्याधरेश्वरः ।
बभूव स्वयशोदुग्धक्षालिताशेषदिग्मुखः ॥ ५ ॥
नम्रखेचरकोटीरमाणिक्यमकरी सदा ।
यस्य पादनखश्रेणिप्रभाजालजलेऽवसत् ॥ ६ ॥
निजाचारेण लोकानां मानसानि हरन्नपि ।
न्यायनिष्ठ इति ख्यातिमवाप खेचरेषु यः ॥ ७ ॥
रूपलावण्यसौभाग्यैः तिलकत्वेन योषिताम् ।
अभूत् सार्थाभिधा तस्य दयिता तिलकावली ॥ ८ ॥

भुञ्जानस्य तया सार्धं तस्य वैषयिकं सुखम् ।
कियानपि ययौ कालो विद्युद्गतिमहीपतेः ॥ ९ ॥
इतश्च सोऽष्टमात् कल्पाद् गजजीवः परिच्युतः ।
देव्याः श्रीतिलकावल्या उदरे समवातरत् ॥ १० ॥
सा काले सुषुवे सूनुमनूननरलक्षणम् ।
पित्रा च किरणवेग इति नामाऽस्य निर्ममे ॥ ११ ॥
स्त्रीभिर्लाल्यमानः सन् व्यवर्धिष्ट क्रमेण सः ।
विद्याकल्पनिधिश्चाभूदारुरोह च यौवनम् ॥ १२ ॥
सर्वलक्षणसंपूर्णं दधानोऽप्यङ्गमुज्ज्वलम् ।
यत्रासौ हरिणाक्षीभिरनङ्ग इव दृश्यते ॥ १३ ॥
विद्युद्गतिरथो एनं महासामन्तवंशजाम् ।
पद्मावतीं राजपुत्रीं महर्ध्या पर्यणाययत् ॥ १४ ॥
परत्रहितसद्धर्मक्रियावसरमात्मनः ।
ज्ञात्वा दत्त्वा च पुत्रस्य राज्यं राजेत्यभाषत ॥ १५ ॥
भोः ! प्रधाना यतः स्वामी चक्षुश्च भवतामयम् ।
अर्पितः किरणवेगो द्रष्टव्योऽहमिवानिशम् ॥ १६ ॥
स्वप्नेऽप्याज्ञा न लङ्घ्याऽस्य प्रतिकूलकृतोऽपि हि ।
विकारः कुलवध्वेव दर्शनीयो न जातुचित् ॥ १७ ॥
त्वयाप्येष महाराज ! राजलोको मयेव भोः ! ।
अनुवर्त्योऽपराधेऽपि भाव्यं बाह्यरुषैव हि ॥ १८ ॥
हृदयान्तः पुनः पितृशिशुन्यायेन सुन्दरम् ।
चिन्तनीयं, न मर्यादा लङ्घनीया समुद्रवत् ॥ १९ ॥
कार्यो ज्ञानवयोवृद्धविदग्धैः सह सङ्गमः ।
द्यूतादिव्यसनं वार्यं कृत्यः षट्शत्रुनिग्रहः ॥ २० ॥
आराम इव लोकोऽयं पालनीयः प्रयत्नतः ।
येनाप्नोषि यशःपुष्पं सौख्यपुण्यमयं फलम् ॥ २१ ॥

तथा—
गुणेष्वनादरं वत्स ! भूरिश्रीरपि मा कृथाः ।
संपूर्णोऽपि घटः कूपे गुणच्छेदात् पतत्यधः ॥ २२ ॥
स्वाम्यमात्यश्च राष्ट्रं च दुर्गः कोशो बलं सुहृत् ।
राज्यं सप्ताङ्गमप्येतत् सद्गुणैरेव धार्यते ॥ २३ ॥
मा जात ! संपदामग्रमारूढोऽस्मीति विश्वसीः ।
दूरारोहपरिभ्रंशविनिपातः सुदुःसहः ॥ २४ ॥
किञ्च—
[1]कुलजस्यापि ते वत्स ! भूयो भूयः प्रचक्ष्यते ।
येनेदं यौवनं नव्यं दावपावकसंनिभम् ॥ २५ ॥
दग्ध्वा गुणवनं तच्च वि[2]स्रसातः प्रशाम्यति ।
धन्यास्ते तु शमाम्भोभिः प्रागेव शमयन्ति ये ॥ २६ ॥
निःस्वानामपि तारुण्यं विकाराय भवत्यलम् ।
विद्यारूपबलैश्वर्योद्धतानां किं नु कथ्यते ? ॥२७॥
यौवनस्यावतारे हि बाल्येनैव सह व्रजेत् ।
स्नेहो गुरुजने, वाञ्छा वक्षसा सह वर्धते ॥२८॥
वयसेव सहारोहत्यहो ! प्रीतिर्नवा नवा ।
बलेनैव सह स्फीतिं मदो याति दिने दिने ॥२९॥
दोर्द्वयेन सह स्थूलभावमापद्यते मतिः ।
मध्येनैव सहात्यन्तकृशतां भजति श्रुतम् ॥ ३० ॥
हृदयं च सहोरुभ्यां दुर्नयैरुपचीयते ।
मोहो मालिन्यहेतुश्चोज्जृम्भते श्मश्रुणा सह ॥ ३१ ॥
आकारमनुवर्तन्ते विकारा अपि पुत्रक ! ।
तदिदं यौवनारण्यं कोऽपि क्षेमेण लङ्घयेत् ॥ ३२ ॥
नरकान्तं तदा राज्यं यदि राजा न धार्मिकः ।
धार्मिके तु परं तस्मिन् सौख्यमत्र परत्र च ॥ ३३ ॥

---

१ सुकुलस्येत्यपि । २ वार्धक्यात् ।

अनुशिष्टिं विधायैवं क्षमयित्वाऽखिलं जनम् ।
श्रुतसागरगुर्वन्तेऽग्रहीद् विद्युद्गतिर्व्रतम् ॥ ३४ ॥
राजाथ किरणवेगः पैत्रिकीं राज्यसम्पदम् ।
अगृध्नुः पालयामास नीतिशास्त्रानुसारतः ॥ ३५ ॥
अनासक्तमनाः सौख्यं सिषेवे विषयोद्भवम् ।
इत्यर्थकामौ तस्याऽऽस्तां धर्मायैव महात्मनः ॥ ३६ ॥
पद्मावतीकुक्षिभवः तस्यापि तनयोऽभवत् ।
नामतः किरणतेजास्तेजसामेकमास्पदम् ॥ ३७ ॥
क्रमाच्च कवचहरः सिद्धविद्यश्च सोऽभवत् ।
मूर्तिः किरणवेगस्य द्वितीयेव महामनाः ॥ ३८ ॥
अन्यदा बहिरुद्याने तत्रैत्य समवासरत् ।
मुनिः सुरगुरुर्नाम नाम्नैव ध्वस्तकल्मषः ॥ ३९ ॥
गत्वा किरणवेगस्तं नमश्चक्रेऽतिभक्तितः ।
पुरीलोकश्च सर्वोऽपि मुनिं वन्दितुमागमत् ॥ ४० ॥
ततो राज्ञो जनस्याऽपि यथास्थानं निषेदुषः ।
अनुग्रहाय विदधे स साधुर्धर्मदेशनाम् ॥ ४१ ॥
आसाद्यते भवाम्भोधौ भ्रमद्भिः यत् कथञ्चन ।
मूढैः तत् प्राप्य मानुष्यं हा ! रत्नमिव हार्यते ॥ ४२ ॥
नराणां कीटकानां च दैवदत्ताऽशनायुषाम् ।
आर्तध्यानकृतोऽभेदो यदि धर्मं न कुर्वते ॥ ४३ ॥
नरके पातनायैव विषयाः सेविताश्चिरम् ।
सेव्यो मोक्षफलस्तस्माद् धर्मः सर्वज्ञभाषितः ॥४४॥
स च द्वेधा भवेदत्र गृहस्थ-यतिभेदतः ।
अणुव्रतानि मुख्यानि गृहिणां पञ्च तद् यथा ॥४५॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्याऽपरिग्रहौ ।
धर्मस्त्वाख्यमयि सर्वज्ञैरेष पञ्चव्रतात्मकः ॥ ४६ ॥

तत्र—
अहिंसा नाम यल्लोके स्वस्वभावप्रवर्तिनाम् ।
जीवितव्यैकसाराणां प्राणिनां प्राणरक्षणम् ॥ ४७ ॥
जीवितव्यं ददानेन दत्तं त्रिभुवनं ततः ।
हरता तत् तु सर्वस्वं हृतं शून्यीकृतं जगत् ॥ ४८ ॥
ग्रन्थातरेऽप्युक्तम्—
सर्वे वेदा न तत् कुर्युः सर्वे[1] यज्ञाश्च भारत ! ।
सर्वतीर्थाभिषेकाश्च, यत् कुर्यात् प्राणिनां दया ॥४९॥
कृमिकीटपतङ्गेषु तृणवृक्षादिकेष्वपि ।
दयां सर्वत्र कुर्वीत यथात्मनि तथा परे ॥ ५० ॥
स्वयं रक्षति यो जीवान् रक्षयत्यपरानपि ।
इहापि सोऽद्भुतामृद्धिमेति भीमकुमारवत् ॥ ५१ ॥
तथाहि—
पुरमस्त्यत्र कमलपुरं यद् भूमिपल्वले[2] ।
श्रिया नित्यकृतावासं विकाशि कमलायते ॥ ५२ ॥
तत्र प्रजापतिर्न्यायस्रष्टाऽऽसीद् हरिवाहनः ।
तत्प्रिया मालती नाम मालतीव गुणोज्ज्वला ॥५३॥
साऽन्यदा सिंहमङ्कस्थं स्वप्ने दृष्ट्वा न्यवेदयत् ।
राज्ञः, राजापि सानन्दं निशम्याऽभिननन्द तम् ॥५४॥
अथ प्रभातकृत्यानि कृत्वाऽऽस्थानगतो नृपः ।
द्विजमाकारयामास स्वप्नशास्त्रविशारदम् ॥ ५५ ॥
तत्र दत्तासनासीनं तं पप्रच्छ नृपो ननु ।
पूर्वं कथय मे तावत् कस्य स्वप्नस्य किं फलम् ? ॥५६॥
द्विजः प्राह शृणु स्वामिन् ! दृष्टचिन्तितवर्जितः ।
स्वच्छदेहैश्च यो दृष्टः स स्वप्नः फलदोऽखिलः ॥५७॥
आरोहो गो-वृषे वृक्ष-शैल-प्रासाद-हस्तिषु ।

१ सर्वदानानि चैव हि, एवमपि । २ भूमिसरसि ।

रोदनाऽगम्यगमने स्वप्ने मृत्युश्च शस्यते ॥ ५८ ॥
वस्त्रा-ऽन्न-फल-ताम्बूल-पुष्प-दीप-दधि-ध्वजाः ।
सद्रत्न-चामर-च्छत्र-मन्त्रा लब्धा धनप्रदाः ॥ ५९ ॥
आसनं शयनं यानं शरीरं वाहनं गृहम् ।
यो ज्वलद्वीक्ष्य जागर्त्ति तस्य लक्ष्मीः समन्ततः ॥६०॥
चन्द्रग्रासेऽम्बुधेः पाने निजान्त्रैर्वेष्टिते पुरे ।
राज्यलाभः सरो-नद्योस्तरणे च शुभोदयः ॥६१॥
देवस्य दर्शनं धन्यमर्चनं च विशेषतः ।
आज्यलाभः पयःपानं श्रिये चार्केन्दुदर्शनम् ॥ ६२ ॥
तैलकुङ्कुमलिप्तं स्वं गीतनृत्यपरं तथा ।
हसन्तं वीक्ष्य दुःखाय श्वापदोपद्रवो भिये ॥ ६३ ॥
शय्या-द्वारा-र्गलाभङ्गे भार्याया जायते मृतिः ।
अङ्गच्छेदे पुनर्दृष्टे पितृमातृसुतव्ययः ॥ ६४ ॥
रक्तकृष्णाम्बरभृता स्त्रिया श्लिष्टस्य रुग् मृतिः ।
शुक्लमाल्यांशुकभृता पुनः श्रीः सर्वतोमुखी ॥ ६५ ॥
निगडे पाशबन्धे च प्रतिष्ठा स्यात् सुतोऽथवा ।
गुरुदेवपितृक्ष्मापैरादिष्टं यत् तथैव तत् ॥ ६६ ॥
शस्तं शुक्लं शुभं सर्वं निन्द्यं कृष्णं त्वशोभनम् ।
इत्यादि बहुधा देव ! स्वप्नशास्त्रे निगद्यते ॥ ६७ ॥
पुनः पप्रच्छ भूपालो राज्ञ्या स्वप्नेऽद्य वीक्षितः ।
प्रशान्तः सिंह उत्सङ्गे किं फलं तस्य भो द्विज ! ? ॥६८॥
सोऽवदद् देव ! सत्पुत्रलाभाय स्त्रीभिरीक्षिताः ।
स्वप्ने कलश-सूर्ये-न्दु-गज-सिंह-महावृषाः ॥ ६९ ॥
ततो भूपोऽतिसंतुष्टः संमान्य व्यसृजद् द्विजम् ।
आशंसाऽपि सुपुत्रस्य कस्य नोल्लासयेद् मनः ? ॥ ७० ॥
अथ स्वसमये राज्ञ्याः प्राज्यतेजाः सुतोऽजनि ।
पूर्वक्रमागतं भीम इति नामाऽस्य निर्ममे ॥ ७१ ॥

तस्य क्रमेण वर्धिष्णोः सुतो बुद्धिलमन्त्रिणः ।
अभूत् तुल्यवया मित्रं मन्त्री च मतिसागरः ॥ ७२ ॥
अन्यदा स्नेहतो भीमः प्रातर्यातो नृपान्तिकम् ।
प्रणमन् भूभुजालिङ्ग्य निजोत्सङ्गे निवेशितः ॥ ७३ ॥
अथोचितासनासीनः स्वाङ्के पादयुगं पितुः ।
कृत्वा संवाहयंस्तस्य शासनं यावदिच्छति ॥ ७४ ॥
तावदारामिकेणैत्य विज्ञप्तं देव! दिव्यवाक् ।
अभिनन्दमुनीन्द्रोऽद्य चम्पकोद्यानमागतः ॥ ७५ ॥
तत् श्रुत्वा हर्षरोमाञ्चैरसंमादिव भूषणम् ।
स्वाङ्गादुत्तार्य मुकुटवर्जं तस्मै ददौ नृपः ॥ ७६ ॥
कुमार-मन्त्रि-सामन्तसहितो वन्दितुं नृपः ।
गतो गुर्वन्तिके पञ्चविधाभिगमपूर्वकम् ॥ ७७ ॥
सचित्ताचित्तयोस्त्यागात्यागौ तद्दर्शनेऽञ्जलिः ।
चित्तैक्यमुत्तरासङ्गोऽभिगमः पञ्चधा गुरोः ॥ ७८ ॥
तत्रार्कवत् तपस्तेजोदीप्तं तापहरं पुनः ।
सोमवच्छीतलं किन्तु वक्रतामलवर्जितम् ॥ ७९ ॥
ज्ञानादिगुणरत्नाढ्यं गम्भीरं च समुद्रवत् ।
न तु क्षारत्वदोषेण जडत्वेन च दूषितम् ॥ ८० ॥
गुरुं दृष्ट्वा भृशं तुष्यन्नवन्दत नरेश्वरः ।
धर्मलाभाशिषं सोऽपि ददौ दुरितहारिणीम् ॥ ८१ ॥
( विशेषकम् )

नासन्ने नातिदूरे च निविष्टो नृपतिः पुरः ।
सूरिणापि समारेभे विशुद्धा धर्मदेशना ॥ ८२ ॥
अहो! कोऽपि यथा कूर्मो वसन्निर्गाधपल्वले[1] ।
वातोत्सारितशेवालावकाशेनेन्दुमैक्षत ॥ ८३ ॥
वातेनैव पुनस्तत्राऽवकाशे नीलिपूरिते ।

---

१ अतलस्पृशि सरसि ।

कूर्मस्येन्दुर्दुरापोऽभूद् मनुष्यत्वं तथाङ्गिनः ॥ ८४ ॥
प्राप्यते हि प्रयत्नाद् यदनुत्तरसुरैरपि ।
तदिदं प्राप्य मानुष्यं यतितव्यं शिवाऽध्वनि ॥ ८५ ॥
स च द्वेधास्ति तत्रैक ऋजुर्वक्रोऽपरः पुनः ।
ऋजुमार्गो यतेर्धर्मः तेनाशु शिवमाप्यते ॥ ८६ ॥
रागद्वेषाभिधौ तत्र सिंहव्याघ्रौ तु तिष्ठतः ।
क्रोधनामा महादावो मानो विषमपर्वतः ॥ ८७ ॥
मायागुपिलवंशाली लोभो गर्तोऽतिविस्तृतः ।
विषया विषवृक्षाश्च धूर्ताः पाखण्डिकादयः ॥ ८८ ॥
वेतालाश्च पुनर्घोरा द्वाविंशतिपरीषहाः ।
सावधानैरविश्रान्तैर्गन्तव्यं तत्र सर्वदा ॥ ८९ ॥
ततो यद्यस्ति ते शक्तिरेताञ्जेतुं तदाश्रय ।
ऋजुमार्गं यतः श्रेष्ठं यतिधर्मात् परं न हि ॥ ९० ॥
अन्यथा वक्रमार्गोऽस्ति गृहिधर्मापराभिधः ।
चिरात् तेनाप्यते सिद्धिः किन्त्वेष न हि दुर्गमः ॥ ९१ ॥
ततो भालतलन्यस्तकरपङ्कजकुड्मलः ।
नत्वा विज्ञपयामास गुरुं गुरुमुदा नृपः ॥ ९२ ॥
नाद्यापि यतिधर्मेऽहं समर्थः सुप्रभो ! ततः ।
प्रसद्य गृहिधर्मो मे दीयतां यदि योग्यता ॥ ९३ ॥
गुरुणा गृहिधर्मोऽथ भूभुजेऽणुव्रतादिकः ।
दत्तः सम्यक्त्वमूलस्तं नृपः सम्यक् प्रपन्नवान् ॥ ९४ ॥
जातश्रद्धः कुमारोऽपि तं प्रपित्सुर्विशेषतः ।
प्रसादितः स योग्यत्वाद् गुरुणैव हितैषिणा ॥ ९५ ॥
प्रवृत्त्याख्य-निवृत्त्याख्यनियमौ यस्य सुक्रमौ ।
सत्सङ्गः कटिरास्तिक्यमुदरं हृद्विवेचनम् ॥ ९६ ॥
भुजौ शमदमौ पृष्ठं पश्चात्तापो गलं क्षमा ।

१-वंहितेक्षणात्, इत्यपि ।

साम्यसौम्येऽक्षिणी नासा सन्तोषो विनयो मुखम् ॥९७॥
प्रिय-सत्ये श्रुती भालं सम्यक्त्वं वासना शिरः ।
तदाज्ञा चारुधम्मिलः प्रबोधः श्मश्रु सुन्दरम् ॥ ९८ ॥
इत्यङ्गैस्त्रिषु लोकेषु धर्मनामा प्रतिष्ठितः ।
योऽयं राजास्ति तस्यान्तरात्मा जीवदयाभिधः ॥ ९९ ॥
( कलापकम् )
कुमार ! तदियं कार्या विशेषेण त्वयाऽधुना ।
ततो हृष्टः समित्रोऽपि भीमः सम्यक्त्वमाश्रयत् ॥१००॥
तथा निरपराधानां जीवानां वधकर्मणि ।
यावज्जीवं निवृत्तिं च मृगयादौ तु सर्वथा ॥ १०१ ॥
ततो हृष्टेन गुरुणा भीमो नववयस्त्वतः ।
प्रतिपन्नव्रतस्थैर्यं कर्तुं प्रत्युपबृंहितः ॥ १०२ ॥
अहो ! धन्यतमः कोऽन्यः कुमार ! भवता समः ।
नवे वयसि यस्यैवं पुराणवयसो मतिः ॥ १०३ ॥
यत उच्यते–
पूर्वं मनः ततः कायं सतामालिङ्गते जरा ।
असतां च पुनः कायं कालेनापि न मानसम् ॥ १०४ ॥
रम्यो द्राक्षेव कोऽप्यन्तरिन्द्रवारणवत् परः ।
बहिः संपूर्णभाग्यस्तु द्विधापि सहकारवत् ॥ १०५ ॥
गतापराधजीवानामपि हिंसानिषेधतः ।
कथ्यते ह्युत्तमा लेश्या तत्रोदाहरणं शृणु ॥ १०६ ॥
तथाहि–
वैरिग्रामविघाताय केऽपि षट् पुरुषाः पुरा ।
चलिताः समुदायेन तेष्वेक इदमब्रवीत् ॥ १०७ ॥
सर्वं हन्तव्यमेवात्र द्विपदं वा चतुष्पदम् ।
अन्यः प्राह मनुष्याणां वधोऽस्तु पशुभिः किमु ? ॥१०८॥
तृतीयः प्राह हन्तव्या नरा एव न हि स्त्रियः ।

तुर्येणाऽभाणि हन्यन्तां पुरुषेष्वपि सायुधाः ॥ १०९ ॥
पञ्चमोऽप्याह ये घ्नन्ति ते वध्याः सायुधेष्वपि ।
षष्ठस्त्वाह विना शत्रून् घातः कार्यो न कस्यचित् ॥११०॥
इति भिन्नं मनस्तेषामभूल्लेश्याविशेषतः ।
ताः कृष्ण-नील-कापोत-तेजः-पद्म-सिताभिधाः ॥१११॥
तदेवं तारतम्येन विशुद्धपरिणामतः ।
येन सर्वे रिपुभ्योऽन्ये रक्षिताः सोऽपि सत्तमः ॥११२॥
किञ्च,
उत्तमा लघुकर्माणः स्तोकादप्युपदेशतः ।
कुप्रवृत्तेर्निवर्तन्ते नलधर्मो यथा नृपः ॥ ११३ ॥
कोऽयं कथमयं बुद्धो नलधर्मनृपः प्रभो ! ? ।
इति पृष्टे कुमारेण गुरुः प्राह निशम्यताम् ॥ ११४ ॥
विजयाख्ये पुरे पूर्वं नलधर्माभिधोऽभवत् ।
राजा राजेव यः पूर्णकलया प्रिययाऽन्वितः ॥११५॥
तस्याऽऽसीत् तिलको मन्त्री मन्त्रिणां तिलकोपमः ।
बुद्ध्या लोकस्य राज्ञश्च रञ्जयामास यो मनः ॥११६॥
अन्यदा मृगयार्थं सोऽश्वारूढः प्रस्थितो नृपः ।
गतोऽरण्यं क्रमात् तत्र प्रसृतं सर्वतो बलम् ॥११७॥
स्वयं तु मन्त्रिणा सार्धं यावदग्रतरं व्रजेत् ।
तावदेकं मृगं दीर्घदृढशृङ्गं ददर्श सः ॥ ११८ ॥
चापमारोप्य बाणेन तं जिघांसुं मृगोऽब्रवीत् ।
क्षत्रस्य युज्यते किं ने यन्मां बाणेन विध्यसि ? ॥११९॥
नो क्षत्रशब्दस्याऽर्थं त्वं जानासि यदहो ! क्षतात् ? ।
त्रायन्ते सकलं लोकं कथ्यन्ते क्षत्रियास्ततः ॥१२०॥
कुलद्वयविशुद्धा ये क्षत्रियाः सत्त्वशालिनः ।
नैव तेऽपगताऽस्त्रस्य प्रहरन्ति रिपोरपि ॥ १२१ ॥

पुनर्निरपराधानां पशूनां तृणमश्नताम् ।
प्रहरन्ति गतास्त्राणां ये तेषां क्षत्रता कुतः ? ॥ १२२ ॥
वैरिणोऽपि हि मुच्यन्ते प्राणान्ते तृणभक्षणात् ।
तृणाहाराः सदैवैते हन्यन्ते पशवः कथम् ? ॥ १२३ ॥
चुक्रितास्तव किं कोशेऽन्तःपुरे नगरेऽपि वा ?।
दीनानशरणानेवं यदस्मान् हंसि भूपते ! ॥ १२४ ॥
अत उच्यते–
मीन-रङ्कु-सतां नीर-तृण-सन्तोषवर्तिनाम् ।
धीवरा लुब्धकाः क्षुद्रा हा ! निष्कारणवैरिणः ॥ १२५ ॥
इति श्रुत्वा नृपोऽमात्यमुवाच महदद्भुतम् ।
मर्त्यवाचा प्रजल्पन्ति निर्भयाः पशवोऽपि यत् ॥१२६॥
मन्त्रिणा भणितं देव ! देवोऽयं दानवोऽथवा ।
केनापि हेतुना क्लृप्तमृगवेषोऽवतीर्णवान् ॥ १२७ ॥
तद् गच्छ त्वरितं मुञ्च वाजिनं मुक्तकं करात् ।
प्रेक्षस्व किं करोत्येष ततो भूपस्तथाऽकरोत् ॥ १२८ ॥
उच्चोच्चझम्पया याति मृगो राजाऽपि पृष्ठतः ।
तावद् दूरे वनस्यान्तः प्रेक्षते मुनिपुङ्गवम् ॥१२९॥
प्रलम्बभुजमुत्तप्तस्वर्णवर्णं सुदर्शनम् ।
द्विधापि जितकन्दर्पं देहेन मनसापि च ॥१३०॥
निरुद्धवचनं मुक्तचेष्टमेकाग्रमानसम् ।
नासाग्रन्यस्तदृष्टिं च ध्यायन्तं ब्रह्म किञ्चन ॥ १३१ ॥
( त्रिभिर्विशेषकम् )
ततोऽवोचद् मृगो भो भोः ! नमतेमं महामुनिम् ।
अवन्देतां च तं वाहादुत्तीर्य नृप-मन्त्रिणौ ॥१३२॥
निविष्टौ तत्र तौ यावत् तावत् सैन्यमपि क्षणात् ।
अन्वगाद् मुनिरप्याख्यद् ध्यानान्ते धर्मदेशनाम् ॥१३३॥

१ समाप्ता इति तत्त्वम् । २ क्षेप्यशस्त्रम् ।

मूर्त्या वचःपरिमलेनापि चम्पकपुष्पवत् ।
तस्यातिशायिना भूपो विस्मितः पृष्टवानिदम् ॥१३४॥
सर्वोत्तमं कुलं नाथ ! ज्ञातं मूर्त्यैव ते मया ।
ईदृग्वयसि वैराग्यकारणं किन्तु कथ्यताम् ? ॥१३५॥
मुनिरूचे महाभाग ! चातुर्गतिकदुःखदः ।
कारणं भव एवात्र विशेषस्तु निशम्यताम् ॥१३६॥
अस्ति सिद्धपुरं नाम नगरं तत्र पार्थिवः ।
भुवनसार इत्याख्यस्तस्यामात्यो महामतिः ॥१३७॥
अन्यदा दाक्षिणात्यानां चङ्गसंगीतकारिणाम् ।
आययौ समुदायोऽदात् स तस्यावसरं नृपः ॥ १३८ ॥
समतालमृदङ्गाद्यातोद्यनादमनोहरम् ।
तालच्छन्दानुगारब्धनर्तकीनृत्यबन्धुरम् ॥१३९॥
समश्रुतिगतैः शुद्धस्वरैरालापसुन्दरैः ।
गीतध्वनिसुधासारैः पूरितश्रुतिकोटरम् ॥१४०॥
आरब्धं प्रेक्षणीयं तैर्वारनारीभिरावृतः ।
आस्थानस्थो नृपो द्रष्टुं लयलीनः प्रवृत्तवान् ॥१४१॥
अथो व्यज्ञपयद् वेत्री प्रभोऽष्टाङ्गनिमित्तवित् ।
बटुरस्त्यागतो देवं दिदृक्षुर्मुच्यतां न वा ॥१४२॥
नृपतिः प्राह मा मुञ्च को ह्यस्यावसरोऽधुना ?।
सति प्रेक्षाक्षणेऽत्रैवं देवानामपि दुर्लभे ॥१४३॥
मन्त्र्यूचे मैवमाचक्ष्व यत् प्रेक्षाकौतुकं विभो ! ।
सुलभं दुर्लभोऽष्टाङ्गनिमित्तज्ञः पुनः पुमान् ॥१४४॥
ततो राज्ञः समादेशाद् मुक्तोऽसौ वेत्रिणा बटुः ।
आगतः पुस्तिकाहस्तः श्वेतवस्त्रः सदाकृतिः ॥१४५॥
मन्त्रोच्चारणपूर्वं च नरेन्द्राय सिताक्षतान् ।
अर्पयित्वापसृत्यासौ यथास्थानमुपाविशत् ॥१४६॥
गीतसूत्रसमाप्तौ च स राज्ञा भाषितो यथा ।

कुशलं भो निमित्तज्ञ ! बटुर्दीनमथाब्रवीत् ॥१४७॥
कुशलं तादृशं देव ! यादृग् वक्तुं न शक्यते ।
क्षुभितेनोदितं राज्ञा किमभ्रं भोः ! पतिष्यति ? ॥१४८॥
स प्राह सत्यमेवेदं यत् त्वया गदितं विभो ! ।
निमित्तेन मया ज्ञातं मा कोपं कुरु भूपते ! ॥१४९॥
सशङ्केन ततो राज्ञा भणितं पुनरादरात् ।
निःशङ्कं ब्रूहि यज् ज्ञातं त्वया ज्ञानेन सुन्दर ! ॥१५०॥
सोऽप्याह देव ! किं तेनाशिवेन कथितेन यत् ।
निरोद्धुं शक्यते नैव तथापि तव कथ्यते ॥१५१॥
मुहूर्तानन्तरं धाराधरोऽद्य धरिणीतले ।
मुसलाकारधाराभिर्वर्षिष्यति तथा कथम् ? ॥१५२॥
यथा ह्यकलितस्थूलस्थलप्रासादमन्दिरम् ।
सर्वमेकार्णवाकारं पुरमेतद् भविष्यति ॥१५३॥
( युग्मम् )
ब्रुवाणस्यैव तस्यैवं भ्रान्त्वाऽभूदुत्तरोऽनिलः ।
कच्चोल[1]मुखमात्रं च मेघखण्डं समुन्नतम् ॥१५४॥
बटुः पटुरथ ब्रूते प्रेक्ष्यतामभ्रकं जनाः ! ।
उत्तरस्यामिदं व्योम सर्वं प्रच्छादयिष्यति ॥१५५॥
व्योम गन्तुमिवाऽऽस्थानलोकः सर्वोऽप्युदैक्षत ।
अभ्रखण्डं तु तं रोद्धुमिव प्रसृतमम्बरे ॥१५६॥
तस्य स्तनितनादेन भीतेव कुरुते मही ।
प्रतिशब्दमिषाद् बुम्बारवं गिरिगुहामुखैः ॥१५७॥
उद्दण्डाश्च तडिद्दण्डाः स्फुरन्ति स्म घनान्तरे ।
जिह्वा कालमुखस्येव चञ्चला ग्रसितुं महीम् ॥१५८॥
नृपप्रभृतिलोकानां पश्यतां भीतिविस्मितम् ।
घनो मुसलधाराभिरारेभे वर्षितुं ततः ॥१५९॥

---

१ कच्चोल- पात्रविशेष- ।

क्षणेनैव पयःपूरे प्लावनायोद्यते भुवः ।
पुरःक्षोभोऽजनि, क्ष्मापः प्रलयं तममन्यत ॥ १६० ॥
अथाऽऽगाद् नीरमास्थानं ततः सप्तमभूतले ।
आरुरोह नृपः सार्धं मन्त्रिणा बटुनापि च ॥ १६१ ॥
तत्र पौरजनाक्रन्दं शृण्वानो विविधं नृपः ।
यावदस्ति जलं प्राप्तं तावत् सप्तमभूमिकाम् ॥ १६२ ॥
तद् वीक्ष्य नृपतिः प्राह पश्य मन्त्रीश ! कीदृशम् ।
आगादकृतधर्माणामस्माकमतिसङ्कटम् ॥ १६३ ॥
न कृतं सुकृतं क्षीणमायुर्वीक्ष्याधुना पदम् ।
तुङ्गशृङ्गपताकेव हृदयं मम वेपते ॥ १६४ ॥
श्रावकं कुलमाप्यापि विषयासक्तचेतसा ।
जिनेन्द्रधर्मो नो चक्रे हारितं जन्म हा ! मया ॥ १६५ ॥
स्नुहीवृक्षेण कल्पद्रुर्ग्राव्णा चिन्तामणिः पुनः ।
वैडूर्यं काचखण्डेन मया मूढेन हारितम् ॥ १६६ ॥
किं कुर्वे कं स्मराम्येवं सङ्कटे पतितोऽधुना ।
इत्थं प्रलपतो नीरं राज्ञो निकटमागतम् ॥ १६७ ॥
ततो हृदि नमस्कारं यावच्चिन्तयते नृपः ।
तावत् संमुखमायान्तं पोतमेकं प्रपश्यति ॥ १६८ ॥
सप्तमे भूतले लग्नं तं दृष्ट्वा सचिवोऽब्रवीत् ।
नाथेह रुह्यतां कोऽपि सुरस्ते ढौकयत्यमुम् ॥ १६९ ॥
तत्रारोढुं नृपः सौधाद् यावदुत्क्षिपति क्रमम् ।
तावन्नो वारि नो मेघो न पोतो न च गर्जितम् ॥१७०॥
स्वच्छावस्थं तथैव स्वं पश्यति स्वपुरे नृपः ।
सर्वं च मुदितं लोकं गीतनृत्योत्सवादिभिः ॥ १७१ ॥
अहो ! किमिदमाश्चर्यं दैवज्ञ ! वद भूभुजा ? ।
इति पृष्टे बटुः प्राह दैवज्ञो न भवाम्यहम् ॥ १७२ ॥
इन्द्रजालमिदं देव ! पुरस्ते दर्शितं मया ।

ततस्तोषाद्बहु द्रव्यं दत्त्वा राज्ञा व्यसर्जि सः ॥ १७३ ॥
राज्ञीं मन्त्रिजनानेवं विरक्तो नृपतिर्जगौ ।
इन्द्रजालमहो ! दृष्टं, तैरूचे त्वत्प्रसादतः ॥ १७४ ॥
नृपोऽवोचदिदं यादृगिन्द्रजालविजृम्भितम् ।
तादृशं रूपतारुण्यस्नेहायुर्विभवादिकम् ॥ १७५ ॥
तथाहि—
येऽनङ्गतुल्यरूपेण कामिनीनयनोत्सवाः ।
कुष्ठरोगदवप्लुष्टाः शक्यन्ते ते न वीक्षितुम् ॥ १७६ ॥
कृतास्तारुण्यचैत्रेण ये स्फुरन्नवपल्लवाः ।
शटत्पत्रद्रुमायन्ते जरसा फाल्गुनेन ते ॥ १७७ ॥
नखमांससमा प्रीतिर्जाता येषां परस्परम् ।
तेऽप्येकत्रानवस्थाना दृष्टा दीपान्धकारवत् ॥ १७८ ॥
आयुः सच्छिद्रकुम्भस्थजलवद् गलनात्मकम् ।
श्रीस्तु वातस्फुरद्दीपकलिकेव चलाचला ॥ १७९ ॥
इत्यनित्ये जगद्वृत्ते नात्मा मे रज्यतेऽधुना ।
मोक्षाय पूर्वजाचीर्णं चरिष्यामि यतिव्रतम् ॥ १८० ॥
इत्युक्त्वा स्वपदे न्यस्य कुमारं हरिविक्रमम् ।
दत्त्वा धर्मे धनं जातः श्रमणः सोऽहमेव तु ॥ १८१ ॥
स्ववृत्तं यद्यपि स्वेन कथ्यमानं लघुत्वकृत् ।
तथापि नृपतेर्युष्मादृशां स्याद् गुणकारणम् ॥ १८२ ॥
इति श्रुत्वा बहून्मीलन्मना नलनृपोऽब्रवीत् ।
महासत्त्व ! त्रुटन्त्येवं बन्धनानि भवादृशाम् ॥ १८३ ॥
मादृशां तु महामोहशृङ्खलाबद्धचेतसाम् ।
कषायारातिरुद्धानां मोक्षवार्ताऽपि दुर्लभा ॥ १८४ ॥
मन्ये प्राच्यभवे पुण्यं पापं चाऽलं मयाऽर्जितम् ।
यत्ते पादयुगं दृष्टं यन्न शक्नोमि सेवितुम् ॥ १८५ ॥
तदेवं यस्य धर्मस्य योग्यताऽस्ति मम प्रभो ! ।

आदेशो दीयतां तत्र ततो मुनिपतिर्जगौ ॥ १८६ ॥
अर्हन् देवो गुरुः साधुः श्रद्धानं च जिनागमे ।
शङ्कादिदोषनिर्मुक्तं सम्यक्त्वमिति पालय ॥ १८७ ॥
ततोऽसौ मन्त्रिणा सार्धं तत्प्रपद्य पुनर्मुनिम् ।
पप्रच्छ भगवन्! कोऽयं मृगो मे शुभकारणम् ॥ १८८ ॥
मुनिराख्यदयं प्राच्यभवे विप्रोऽभवत् तव ।
मित्रमज्ञानतपसा मृत्वा यक्ष इहाजनि ॥ १८९ ॥
प्राप्तो भद्रकभावं च नित्यमास्माकदर्शनात् ।
तत्त्वां पूर्वभवप्रीत्या मृगो भूत्वेत्यबोधयत् ॥ १९० ॥
प्रत्यक्षीभूय यक्षोऽपि प्रहृष्यन्नित्यभाषत ।
मयापि तव पादान्ते प्रभो! सम्यक्त्वमादृतम् ॥१९१॥
शिक्षामन्यामपि प्राप्य मुनीन्द्राद् धर्मगोचराम् ।
नत्वा यक्षो निजस्थानं ययौ नलनृपोऽपि हि ॥१९२॥
अथ राजा विधाप्यार्हद्बिम्बं तस्यार्चनं सदा ।
कुर्वन् प्रभावनां धर्मे स महाश्रावकोऽजनि ॥१९३॥
प्रतिपद्य परिव्रज्यां प्रान्ते चानशनक्रमात् ।
सर्वार्थमगमत् तस्मादिहैवागत्य सेत्स्यति ॥१९४॥
इति श्रुत्वा नलाख्यानं भीमसेन! त्वया स्वयम् ।
प्रतिपन्नव्रते भाव्यं दृढेनान्योऽपि बोध्यताम् ॥१९५॥
भीमोऽप्याह तवादेशः प्रमाणं मे मुनीश्वर! ।
धन्योऽहं यस्य मे पूज्यैर्विशिष्टोऽनुग्रहः कृतः ॥१९६॥
क्रोधव्याघ्रे मानशैले मायावंशालिसंकुले ।
लोभगर्ते भवारण्ये यद्येकः सार्थपो गुरुः ॥१९७॥
अथ नत्वा मुनिं पर्षद् निजस्थानं गताऽखिला ।
भीमोऽपि कुरुते धर्मं देवपूजादिना सुखी ॥१९८॥
अन्यदा निजधामस्थं कुमारं मित्रसंयुतम् ।

१ त्वत्पदोपान्ते, एवमपि ।

एकः कापालिकोऽभ्यागात् प्रतीहारनिवेदितः ॥१९९॥
आशीर्वादवचःपूर्वमुपविश्य नृपाङ्गजम् ।
याचित्वैकान्तमित्याह पाखण्डी प्रणयान्वितम् ॥२००॥
भुवनक्षोभिनी नाम वरविद्यास्ति भीम ! मे ।
तस्या द्वादश वर्षाणि पूर्वसेवा कृता मया ॥ २०१ ॥
अधुनोत्तरसेवां तु गत्वा प्रेतवनान्तरे ।
एष्यत्कृष्णचतुर्दश्यां चिकीर्षुरहमस्मि भोः ! ॥२०२॥
अतस्त्वं चेद् महासत्त्व ! भवस्युत्तरसाधकः ।
तदा सिध्यति मे विद्या तत् श्रुत्वोवाच राजसूः ॥२०३॥
असारेण शरीरेण यद्यनेन विनाशिना ।
गुणः कस्यापि कोऽपि स्यात्तन्नु किं नार्जितं मया ?॥२०४॥
प्रतिपद्येति भीमेन विसृष्टः सोऽब्रवीदिदम् ।
कुमार ! दशभिर्घस्रैरायास्यति चतुर्दशी ॥ २०५ ॥
तावन्त्यहानि ते पार्श्वे स्थास्येऽथ नृपजन्मना ।
अनुज्ञातः, स्थितस्तत्र स कुर्वन् भोजनं सह ॥ २०६ ॥
ततो मन्त्रिसुतोऽवादीत् पाखण्डी किमिह प्रभो ! ? ।
कुमारः प्राह कार्येण पुनर्मन्त्रिसुतोऽब्रवीत् ॥ २०७ ॥
कार्यं किममुनाऽऽलापोऽप्यनेन सह नोचितः ।
कुसंसर्गेण माऽऽत्मीये सत्सम्यक्त्वे मलं कुरु ॥ २०८ ॥
किंच दुर्जनसंसर्गो मधुरोऽपि मुखे सखे ! ।
निर्वाहे मारयत्येव कालकूट इव ध्रुवम् ॥ २०९ ॥
कुमारः प्राह सत्यं भोः ! किंतु दाक्षिण्यतो मया ।
प्रतिपन्नमिदं तेन श्रेयान् निर्वाह एव मे ॥ २१० ॥
अथवा—
किं करोति कुसंसर्गो निजधर्मदृढात्मनः ? ।
सर्पशीर्षोषितः किं न हरतेऽहिविषं मणिः ?॥ २११ ॥
पुनर्मन्त्रिसुतः प्राह दृष्टान्तोऽयं न किंचन ।

यज्जीवो भावुकं द्रव्यं मणिः पुनरभावुकम् ॥ २१२ ॥
तेनातिभणितोऽप्येवं भीमो नामुश्चदाग्रहम् ।
क्रमेण च समायाता सैव कृष्णचतुर्दशी ॥ २१३ ॥
तस्यां कपालिना सार्धं वीरवेषधरो निशि ।
सखड्गश्चलितो भीमः श्मशानं प्रति निर्भयः ॥ २१४ ॥
आलिख्य मण्डलं तत्राऽर्चित्वा कामपि देवताम् ।
कुमारस्य शिखाबन्धं पाखण्डी कर्तुमुद्यतः ॥ २१५ ॥
तावद्भीमो जगौ भद्र ! मा शङ्किष्ठा यतो मम ।
सत्त्वमेव शिखाबन्धः प्रकृतं क्रियतां त्वया ॥ २१६ ॥
आकृष्टासिलसज्जिह्वाभीमो भीमस्तदन्तिके ।
पञ्चानन इवात्युग्रः साहसैकरसः स्थितः ॥ २१७ ॥
शिखाबन्धच्छलं व्यर्थं जातमस्य ततः शिरः ।
पराक्रमेण मे ग्राह्यमिति निश्चित्य चेतसि ॥ २१८ ॥
कर्तनीभृत्करो रूपं कृत्वा व्योमसमं निजम् ।
कूपाकारश्रवश्छिद्रो विकटं गर्जति स्म सः ॥ २१९ ॥
ततश्च प्रलयाम्भोदगर्जितादिव दारुणः ।
विश्वक्षोभः क्षणं जज्ञे संभ्रान्तसुरदानवः ॥ २२० ॥
भीमस्तच्चेष्टितं दृष्ट्वा यमजिह्वानिभं करे ।
कृपाणं कम्पयामास निष्प्रकम्पः क्रुधं दधत् ॥ २२१ ॥
प्राह कापालिको रे ! रे ! बाल ! गृह्णामि ते शिरः ।
स्वयं चेदर्पयस्येतत् स्यास्तदन्यभवे सुखी ॥ २२२ ॥
भीमेनाऽभाणि चण्डाल ! रे ! कुपाखण्ड ! मायिक ! ।
हत्वा मृत्युमिवाद्य त्वां करोमि सुखिनं जनम् ॥ २२३ ॥
शस्त्रीघातस्ततस्तेन मुक्तस्तं नृपनन्दनः ।
स्खलयित्वाऽसिनोत्प्लुत्य तत्स्कन्धमधिरूढवान् ॥२२४॥

---

1 भवस्यन्य, एतदपि ।

तं गजेन्द्रमिवारूढो नखतीक्ष्णः कृशोदरः ।
करवाललसज्जिह्वो भीमः सिंह इवाऽशुभत् ॥ २२५ ॥
दध्यौ च मारयाम्येनं किंत्वेष च्छद्मनापि मे ।
सेवां चक्रे तथा जीवन् यदि धर्मेऽपि रज्यति ॥२२६॥
ध्यायन्निति कुमारेन्द्रः कथञ्चिदपि लाघवात् ।
धृत्वा चरणयोः कापालिकेनोच्छालितोऽम्बरे ॥२२७॥
स पतन् यक्षिणीदेव्या दैवयोगादवाप्यत ।
करयोः संपुटीकृत्य नीतश्च निजमन्दिरे ॥ २२८ ॥
उत्तुङ्गचङ्गविस्तीर्णे पुण्यराशाविवोज्ज्वले ।
तत्र भीमः स्वमैक्षिष्ट दिव्यसिंहासनस्थितम् ॥२२९॥
सार्धत्रिभङ्गघटितमिव रूपं दधत्यथ ।
प्राञ्जलिः पुरतो भूत्वा यक्षिणी वदति स्म सा ॥२३०॥
अयं विन्ध्याचलो भद्र ! ममेदं वैक्रियं गृहम् ।
क्रीडार्थं निवसाम्यत्र कमलाक्षाऽस्मि यक्षिणी ॥२३१॥
निजदेवपरीवारवृता स्वैरमिहानिशम् ।
तिष्ठाम्यद्य पुनः शैलमष्टापदमहं गता ॥२३२॥
ततो वलन्त्या दृष्टोऽसि प्रक्षिप्तस्त्वं नभोऽङ्गणे ।
कापालिकेन तस्माच्च पतन् यत्नाद्धृतो मया ॥२३३॥
अधुना मारदुर्वारशरघातनिपीडिता ।
शरणं त्वां प्रपन्नास्मि रक्ष मां पुरुषोत्तम ! ॥ २३४ ॥
परिवारो मदीयोऽयं सर्वोऽपि तव किङ्करः ।
भविता तद्विधायाऽत्र प्रसादं, संगृहाण माम् ॥ २३५ ॥
यक्षिण्यास्तद्वचः श्रुत्वा हसित्वेषद् नृपाङ्गजः ।
बभाण यदहो ! काचित् परा काष्ठा मनोभुवः ॥ २३६ ॥
दूरेऽस्तु मादृशस्तावदबुधो भूमिगोचरः ? ।
इत्थं विबुधलोकोऽपि मदनेन विडम्ब्यते ॥ २३७ ॥
अनेनाभिद्रुता जीवाः कृत्याकृत्यं हिताहितम् ।

न जानन्ति न शृण्वन्ति नेक्षन्तेऽप्ययशोमपीम् ॥ २३८ ॥
मोहान्धानां सुखायन्ते विषया दुःखदा अपि ।
लोहं धत्तूरितानां हि कथं न कनकायते ? ॥ २३९ ॥
तद्विभाव्येति कन्दर्पदर्पसर्पविषापहम् ।
महागारुडमन्त्राभं जिनमेव हृदि स्मर ॥ २४० ॥
तुष्टाऽथ यक्षिणी प्राह चित्रं मन्त्राक्षरादिव ।
त्वद्वाक्याद् मम तत्तादृक् गतं मोहविषं क्षणात् ॥ २४१ ॥
ममैव किमिदं भाग्यं किंवा ते सिद्धिरीदृशी ? ।
भाल-पिण्ड-वचो-हस्तसिद्धयः स्युर्यतः सताम् ॥ २४२ ॥
तन्मम त्वत्प्रसादेनान्यभवेऽपि न दुर्लभः ।
सर्वदुःखक्षयो मोक्षो विषयाऽपास्तचेतसः ॥ २४३ ॥
इत्थं तत्त्वोपदेशेन पूज्यस्तावत्त्वमत्र मे ।
यस्तु पूज्यस्तवाप्येष जिनो मे शरणं सदा ॥ २४४ ॥
संलापं यावदित्येवं कमलाक्षा करोति सा ।
भीमेन शुश्रुवे तावत् कुतोऽपि मधुरध्वनिः ॥ २४५ ॥
पृष्टं च सुन्दरि ! ध्वानः श्रूयते कस्य साऽब्रवीत् ? ।
सन्त्यत्र मुनयो विन्ध्ये चतुर्मासीमुपोषिताः ॥ २४६ ॥
तेऽधुना कुर्वते धन्या स्वाध्यायं कृत्यतत्पराः ।
ततो भीमोऽवदत् सोऽयमनभ्रा वृष्टिरद्य मे ॥ २४७ ॥
यदेवंविधसाधूनामचिन्त्योऽत्र समागमः ।
रात्रिशेषं ततस्तत्र गत्वा निर्गमयाम्यहम् ॥ २४८ ॥
इत्युदित्वा स यक्षिण्या दर्शिताध्वा ततोऽगमत् ।
कृतनानागमाभ्यासा यत्र सन्ति तपोधनाः ॥ २४९ ॥
पुनः सपरिवाराऽहं मुनीनेष्यामि वन्दितुम् ।
इत्युक्त्वा साऽप्यगाद्धाम स्मरन्ती भीमशासनम् ॥२५०॥
भीमसेनकुमारोऽपि धर्मध्यानसमाहितान् ।
मुनींस्तत्र गुरुं चाऽपि दृष्ट्वा हृष्टानचिन्तयत् ॥ २५१ ॥

अहो ! भूपालसत्कार-भोगाभावेऽप्यबन्धनात् ।
साधूनां सिन्धुराणां च वनवासे महासुखम् ॥ २५२ ॥
धन्या धर्मधनैश्वर्यगर्जितोऽर्जितवृत्तयः ।
इमे यैर्दर्पदुष्प्रेक्षा धनिनो नावलोकिताः ॥ २५३ ॥
यतः—भक्ते द्वेषो जडे प्रीतिः प्रवृत्तिर्गुरुलङ्घने ।
मुखे कटुकता नित्यं धनिनां ज्वरिणामिव ॥ २५४ ॥
भीमोऽनुमोदनामेवं कुर्वन् गत्वान्तिके गुरुम् ।
अवन्दत महाभक्त्या शेषसाधूनपि क्रमात् ॥ २५५ ॥
लब्धाशीर्यावदस्त्येष शृण्वन् धर्मं तदन्तिके ।
गगनात् तावदायान्तीं ददर्शैकां महाभुजाम् ॥ २५६ ॥
कालदण्ड इवाकस्मात् कोऽयमित्याकुलं जनैः ? ।
वीक्षिता सा कुमारस्य सन्निधौ सहसाऽपतत् ॥ २५७ ॥
किं करिष्यत्यसावेवं ध्यायन् भीमोऽपि धीरधीः ।
प्रेक्षते तावदेतस्य खड्गमादाय साऽचलत् ॥ २५८ ॥
दीर्घा कृष्णा च कस्येयं भुजा याति क्व चेति सः ? ।
कुमारः कौतुकं द्रष्टुं द्रागुत्प्लुत्यारुरोह ताम् ॥ २५९ ॥
उत्पत्य गगनं तस्यां व्रजन्त्यां स नृपात्मजः ।
रराज कालियव्यालपृष्ठारूढ इवाच्युतः ॥ २६० ॥
तथा पोतपतिर्भिन्नपोतः फलकमाश्रितः ।
दुस्तरं गगनाम्भोधिं तितीर्षुरिव सोऽरुचत् ॥ २६१ ॥
गच्छंश्च नभसाऽनेकनदी-कानन-पर्वतान् ।
प्रेक्षमाणो भुवि प्राप कालिकाभवनं क्रमात् ॥ २६२ ॥
नानाऽस्थिमयभित्तिस्थनृमुण्डकपिशीर्षकम् ।
कङ्कालकल्पितद्वारं दन्तिदन्तोरुतोरणम् ॥ २६३ ॥
केशपाशपताकाढ्यं लम्बिताऽसितचामरम् ।
व्याघ्रकृत्तिकृतोल्लोचं रुधिरारुणभूतलम् ॥ २६४ ॥
( आदि विशेषकम् )

तस्य मध्ये च भीमेन मुण्डमालास्त्रधारिणी ।
क्रूराक्षी महिषारूढा कालिकामूर्तिरीक्षिता ॥ २६५ ॥
पुरस्तस्याश्च पाखण्डी स एवं ददृशे शठः ।
वामहस्तेन केशेषु बिभ्राणः सुन्दरं नरम् ॥ २६६ ॥
आरूढस्त्वागतो यस्यां भुजायां नृपनन्दनः ।
कापालिकस्य तस्यैव सापि वामेतरा भुजा ॥ २६७ ॥
करात्तपुरुषस्यायं पापात्मा किं करिष्यति ? ।
प्रच्छन्नीभूय तद्वीक्षे पश्चात् कुर्वे यथोचितम् ॥ २६८ ॥
इति संचिन्त्य तस्यासौ भुजादुत्तीर्य सत्वरम् ।
तस्यैव पृष्ठदेशेऽस्थाद् निभृतीभूय राजसूः ॥ २६९ ॥
( युग्मम् )

भीमस्य खड्गमादाय भुजा यावत् समागता ।
ततः कापालिको वामकरात्तं नरमब्रवीत् ॥ २७० ॥
रे ! वराक ! स्मराऽभीष्टदेवतामाशु यत्तव ।
शिरोऽनेनासिना छित्त्वा पूजयिष्यामि देवताम् ॥२७१॥
स प्राह त्रिजगज्जीवबान्धवो जिनपुंगवः ।
सर्वावस्थास्वपि ध्येयः शरणं मेऽस्तु सम्प्रति ॥ २७२ ॥
तथा यस्तत्पदाम्भोजभृङ्गः स्वामी क्रमागतः ।
परार्थव्यसनी यश्च यस्याहं जीविताधिकः ॥ २७३ ॥
कापालिकस्य विश्वस्तो यश्च वारयतोऽपि मे ।
गतस्तेन समं क्वापि यो ममास्ति सदा हृदि ॥ २७४ ॥
स एव सुगृहीताह्वो हरिवाहननन्दनः ।
भीमनामा कुमारेन्द्रः स्मृतः कुरु यथेप्सितम् ॥ २७५ ॥
( त्रिभिर्विशेषकम् )

पाखण्डी प्राह रे ! पूर्वमयं लक्षणवानिति ।
देवीपूजार्थमारब्धा मया तस्य शिरश्छिदा ॥ २७६ ॥

अथ नंष्ट्वा गतः क्वापि मत्करात् तदिहाधुना ।
त्वमानीतोऽसि, तत्तेन निःसत्त्वेन स्मृतेन किम् ? ॥२७७॥
किञ्च रे ! स तव स्वामी देव्या मे कथितः पुरः ।
विन्ध्याचलगुहासन्नश्वेतभिक्ष्वन्तिके स्थितः ॥ २७८ ॥
तस्य सल्लक्षणत्वेन खड्गोऽप्येष मया हृतः ।
ततः कथमिहागत्य स हि त्वां मूर्ख ! रक्षिता ? ॥२७९॥
भीमः श्रुत्वा तदालापं दुःखा-ऽमर्षातिपूरितः ।
दध्यौ मे मन्त्रिणं पापो विडम्बयति हा कथम् ? ॥२८०॥
हक्कित्वा चाह रे ! पाप ! सोऽहं सर्वेषु जन्तुषु ।
सौम्योऽपि भीम एवाऽद्य त्वयि संहारकारणात् ॥२८१॥
ततोऽसौ मन्त्रिणं मुक्त्वा वलितो भीमसम्मुखम् ।
भीमेनापि लुलित्वाऽऽशु पद्भ्यां धृत्वा स पातितः॥२८२॥
धृत्वा केशेषु दत्त्वाऽङ्घ्रिं हृदि कृत्वा करे त्वसिम् ।
भीमो भीमोऽभवद् यावत् तावद् देव्याऽऽकुलाऽवदत्२८३
मा भो मा मारयस्वैनं कुमार ! मम वत्सलम् ।
नृशीर्षकमलैर्नित्यं यः करोति मदीप्सितम् ॥ २८४ ॥
अनेन शिरसा यावदष्टोत्तरशिरःशते ।
पूर्णेऽस्य किल सेत्स्यामि प्रत्यक्षीभूय सम्प्रति ॥ २८५ ॥
तावत् त्वमागतो वत्स ! पौरुषेण तवाऽमुना ।
तुष्टाऽस्मि यदभीष्टं ते प्रार्थयस्व तदद्य माम् ॥ २८६ ॥
यतः—
अस्थिष्वर्थाः सुखं मांसे त्वचि भोगाः स्त्रियोऽक्षिषु ।
गतौ यानं स्वरे चाज्ञा सर्वं सत्त्वे प्रतिष्ठितम् ॥ २८७ ॥
ततो भीमोऽवदद् देवि ! यदि तुष्टाऽसि मे प्रियम् ।
दत्से तच्चित्त-वाक्-कायैर्जीवहिंसा परित्यज ॥ २८८ ॥
सिद्धिः कष्टमयी सर्वा रौद्रहोमादिकर्मभिः ।
सदा सुखमयी सिद्धिः पुनर्धर्मेण, नान्यथा ॥ २८९ ॥

धर्मस्य च दया बीजं युज्यते तत्त्वाप्यसौ ।
तपः शीलविहीनायाः कोऽन्यधर्मो भवेत्तव ? ॥ २९० ॥
ये कार्येणापि निघ्नन्ति जीवानां तेऽपि पापिनः ।
ये तु कार्यं विना त्वेवं तेषां पापं किमुच्यते ? ॥२९१॥
किं ते कावलिकाहारविकलाया महामिषैः ।
बीभत्सैस्तज्जिनादिष्टं दयाधर्मं सदा श्रय ? ॥२९२॥
शुद्धधर्मे च लीनानां सांनिध्यं कुरु सर्वदा ।
सुनरत्वं सुदेवत्वं प्राप्य येनाऽऽशु सिध्यसि ॥२९३॥
ततस्तद्वाक्यसंबुद्धा दध्यौ देवी सुलज्जिता ।
अस्याहो ! मानुषत्वेऽपि मतिः कीदृग् महामतेः ॥२९४॥
अद्यप्रभृति सर्वोऽपि जीवराशिः स्वजीववत् ।
रक्षितव्यो मयेत्युक्त्वा कालिकाऽभूददर्शना ॥२९५॥
अथ लब्धक्षणो भीमं ननाम मतिसागरः ।
सोऽप्यश्रुजलपूर्णाक्षो मित्रमालिङ्ग्य पृष्टवान् ॥२९६॥
अनेन पापिना तत्त्वं जानन्नपि कथं भवान् ।
प्रापितो दारुणावस्थामिमां सज्जनशेखर ! ॥ २९७ ॥
मन्त्री प्राह प्रभो ! रात्रिप्रथमप्रहरे तव ।
वासौकसि प्रिया याता तावत्त्वां तत्र नैक्षत ॥ २९८ ॥
ततः संभ्रान्तया पृष्टा यामिकास्तेऽपि सर्वतः ।
निरीक्ष्य त्वामपश्यन्तो गत्वा राज्ञे न्यवेदयन् ॥ २९९ ॥
केनाऽप्यपहृतो वत्सो निःसंशयमिति ब्रुवन् ।
नृपः सिंहासनात् सद्यः पपात गतचेतनः ॥ ३०० ॥
मुमूर्छ मातृवर्गोऽपि मालतीप्रमुखोऽखिलः ।
श्रीखण्डरससंसिक्तः कथमप्याऽऽप चेतनाम् ॥ ३०१ ॥
ततो विलपितुं लग्ना राजा राज्यश्च मन्त्रिणः ।
एका मध्यवयास्तावन्नायिका सहसाऽऽययौ ॥ ३०२ ॥
तयाऽऽदिष्टं नृपोत्तिष्ठ मम पूजां कुरु द्रुतम् ।

आगता तव पुत्रार्त्या येनाहं कुलदेवता ॥ ३०३ ॥
नीतः पाखण्डिना स्वस्योत्तरसाधककैतवात् ।
शिरो ग्रहीतुं पुत्रस्ते यक्षिणी तं ततोऽनयत् ॥ ३०४ ॥
इत्यादि कथयित्वाऽन्ते सुतः कतिपयैर्दिनैः ।
तवैष्यति महर्द्ध्येति नृपस्याऽऽख्याय सा गता ॥ ३०५ ॥
इदं च वचनं तस्याः संवादयितुमुत्सुकः ।
अन्वेष्टुं शकुनान् प्रातः पुराद् बहिरहं गतः ॥ ३०६ ॥
तित्तिरीतोरणे तावत् सहसा चक्रतुः स्वरम् ।
वामे गत्वा शुनः शीर्षमस्प्राक्षीद् दक्षिणाऽंह्रिणा ॥ ३०७ ॥
दक्षिणाद् वाममायातो वायसो मधुरं रसन् ।
चाषेण दर्शनं दत्तं मयूरेणाऽप्यनृत्यत ॥ ३०८ ॥
दुर्गाऽपि पार्थिवं कृत्वा वामे चिलिचिलिस्वरम् ।
ताराभक्ष्यमुखी भेजे क्षीरवृक्षं प्रियान्विता ॥ ३०९ ॥
इत्यादिशकुनान् भावस्थानचेष्टागतिस्वरैः ।
प्रशान्तान् वीक्ष्य संतुष्टो यावच्चलितुमुद्यतः ॥ ३१० ॥
तावद्देत्याऽम्बरादेष उत्क्षिप्य मामिहाऽऽनयत् ।
दृष्टश्च पुण्ययोगेन मया त्वमधुना विभो ! ॥ ३११ ॥
तत्त्वादित्यपकार्येष तत्संप्रत्यनुगृह्यताम् ।
धर्मोपदेशदानेन ततः कापालिकोऽब्रवीत् ॥ ३१२ ॥
कालिकां प्रत्यहो ! मन्त्रिन् ! स्वधर्मं दिशताऽमुना ।
ममोपदिष्ट एवाऽयं शरणं तत् स मेऽधुना ॥ ३१३ ॥
किञ्च,
मित्र ! त्वच्चरितं वन्देऽपकारेऽप्युपकारिणः ।
गुणमाणिक्यरत्नाद्रेः कुमारस्य तु किं स्तुवे ? ॥ ३१४ ॥
यावदेवं प्रजल्पन्ति ते तावदुदिते रवौ ।
महानेकः करी तत्राऽऽगात् सप्ताङ्गप्रतिष्ठितः ॥ ३१५ ॥
कुमारं स करे कृत्वा निजपृष्ठे समन्त्रिणम् ।

संस्थाप्य कालिकाचैत्यादुत्पपात नभस्तलम् ॥ ३१६ ॥
कुमारो विस्मितोऽवादीदहो ! मित्राऽत्र भूतले ।
किमीदृग् दृश्यते हस्तिरत्नं किं चेत् समुत्पतेत् ?॥ ३१७ ॥
मन्त्री सर्वज्ञवचनभावितात्मा ततोऽब्रवीत् ।
संविधानं कुमारेन्द्र ! तन्न यन्न भवे भवेत् ॥ ३१८ ॥
किन्तु कोऽपि भवत्पुण्यप्रेरितोऽयं सुरः स्फुटम् ।
तद् यातु तत्र यत्रापि सर्वतः सुन्दरं हि नः ॥ ३१९ ॥
क्षणेन स करी व्योम्नोऽवतीर्यैकत्र पत्तने ।
उद्वसे गोपुरद्वारे तौ विमुच्य गतः क्वचित् ॥ ३२० ॥
कुमारो मन्त्रिणं मुक्त्वा बहिरेवाथ कौतुकात् ।
एकाकी नगरस्यान्तः प्रविवेश सुनिर्भयः । ॥ ३२१ ॥
ऋद्धिपूर्णांश्च शून्यांश्च पश्यन् हट्टगृहानसौ ।
तत्रैकं सिंहमद्राक्षीद् मुखात्तनरपुंगवम् ॥ ३२२ ॥
तद् दृष्ट्वा सकृपो नूनं दैवतं किञ्चिदित्यसौ ।
ध्यात्वा सविनयं प्राह सिंहेमं मुञ्च पूरुषम् ॥ ३२३ ॥
उन्मील्य चक्षुषी भीमं दृष्ट्वा सिंहोऽपि तं नरम् ।
निजपादान्तरे क्षिप्त्वा जातशङ्क इवाऽब्रवीत् ॥ ३२४ ॥
अहो ! सत्पुरुषोत्तंस ! मया भक्ष्यमिदं चिरात् ।
आसादितं क्षुधार्तेन मुञ्चामि तदिदं कथम् ? ॥ ३२५ ॥
कुमारः प्राह नन्वेतद् वैक्रियं रूपमुद्वहन् ।
सुरस्त्वं कोऽपि, देवाश्च कवलाहारिणो न हि ॥ ३२६ ॥
किञ्च,
विबुधस्यापि ते हिंसामबुधस्येव कुर्वतः ।
यदि नाम न शङ्काऽभूत् तदा लज्जापि किं नहि? ॥३२७॥
अथवा ते यदि स्वेच्छा मानुषामिषभक्षणे ।
तदाहं स्वाङ्गतो मांसान्यर्पये तानि भक्षय ॥ ३२८ ॥

सिंहोऽप्याख्यदिदं सत्यं किन्तु प्राच्यभवे मम ।
तथाऽनेन कृतं दुःखं यथा वक्तुं न पार्यते ॥ ३२९ ॥
अतो भवशतेऽप्येनं घ्नतः कोपो न याति मे ।
कृताश्च विविधाः पीडा मारयिष्यामि संप्रति ॥ ३३० ॥
कुमारः प्राह चेत् कोपोऽपकारिणि तदा कथम् ।
कोपे एव न ते कोपः सुखसर्वस्वहारिणि ? ॥ ३३१ ॥
अतो दीनमिमं मुञ्च कुरु धर्मं दयामयम् ।
येन पाप विनिर्धूय मोक्षमन्यभवे व्रजेः ॥ ३३२ ॥
इत्यादियुक्तिभिर्बाढं बोधितोऽपि यदा हरिः ।
न मुञ्चति नरं तावच्चिन्तयामास राजसूः ॥ ३३३ ॥
कोपाविष्टस्य दुष्टस्य कोऽपि स्वान्त्वेन नो गुणः ।
ज्वरितस्य जलेनेव केवलं ताडनोचिता ॥ ३३४ ॥
ततः प्रेर्य बलात् सिंहं नरमादाय स स्वके ।
पृष्ठे चिक्षेप सिंहोऽपि मुखं व्यादाय धावितः ॥ ३३५ ॥
भीमेन स खुरे धृत्वोपरि भ्रमयितुं यदा ।
स्वस्यारेभे तदा सूक्ष्मीभूयाऽपेयाय[1] तत्करात् ॥ ३३६ ॥
अदृश्योऽसौ स्थितस्तत्र कुमारगुणरञ्जितः ।
करे नरस्य भीमोऽपि लग्नो राजकुलेऽविशत् ॥ ३३७ ॥
मन्दुरा-हस्तिशाला-न्तःपुराणि करणानि[2] च ।
शून्यानि परितः पश्यन् विस्मयस्फारितेक्षणः ॥ ३३८ ॥
विचित्ररूपकोल्लोचे चित्रभित्तिविराजिते ।
आरुरोह शनैर्भीमस्तले[3] सौधस्य सप्तमे ॥ ३३९ ॥

( युग्मम् )

भीमस्य स्वागतं तत्र स्तम्भस्थाः शालभञ्जिकाः ।
योजयित्वा करावुच्चारयामासुर्मृदुस्वरम् ॥ ३४० ॥
अवतीर्योर्ध्वतश्चैताः सुवर्णमयमासनम् ।

१ अपेत । २ स्थानानि । ३ मुले, इत्यपि ।

ददुः सगौरवं भीमो निविष्टस्तत्र विस्मितः ॥ ३४१ ॥
क्षणेन स्नानसामग्र्यामागतायां नभस्तलात् ।
अभाणि दारुपुत्रीभिर्मज्जनं क्रियतां विभो ! ॥ ३४२ ॥
भीमः प्राह वयस्योऽस्ति बहिर्मे मतिसागरः ।
आकारयत तं, ताभिः सोऽप्यानीतः क्षणादपि ॥ ३४३ ॥
समित्रः कारितो भीमः स्नानं दिव्यं च भोजनम् ।
स्थापितो वरपल्यङ्के यावदस्ति स विस्मितः ॥ ३४४ ॥
तावदेव कुतोऽप्येत्य स्फुरत्कान्तिः सुरः पुरः ।
प्रोचे भीम ! वरं ब्रूहि तुष्टोऽस्मि तव साहसात् ॥३४५॥
भीमः प्रोवाच तुष्टश्चेत् ततः कथय को भवान् ।
किमिदं पत्तनं किंच शून्यं देवस्ततोऽब्रवीत् ? ॥ ३४६ ॥
इदं हेमपुरं नाम पुरं हेमरथो नृपः ।
पुरोधास्तस्य चण्डाख्यो द्विष्टः सर्वजने पुनः ॥ ३४७ ॥
एषोऽपि नृपतिः क्रूरः प्रकृत्या कर्णदुर्बलः ।
शङ्कयाऽप्यपराधस्य कुरुते दण्डमुल्बणम् ॥ ३४८ ॥
अथ केनापि चण्डस्य द्वेष्यत्वादसहिष्णुना ।
अलिकं कथितं राज्ञो यन्मातङ्ग्यैष विप्लुतः ॥ ३४९ ॥
याचन्नपि महादि[1]व्यमविचार्यैव भूभुजा ।
वेष्टयित्वा सणैश्चण्डो ज्वालितस्तैलसेकिमैः ॥ ३५० ॥
सोऽकामनिर्जराभावाद् मृत्वा सर्वगिलाभिधः ।
राक्षसोऽभूत्, स चाहं तु स्मृत्वा वैरमिहागतः ॥ ३५१ ॥
तिरोहितः समग्रोऽपि पुरलोको मया तथा ।
सिंहरूपं विकुर्व्यैष स गृहीतो नरेश्वरः ॥ ३५२ ॥
करुणा-पौरुष-प्रज्ञाप्रकर्षोदधिना त्वया ।
इमं मोचयता चक्रे चमत्कारो म[2]हान् मम ॥ ३५३ ॥
अदृश्येन ततः सर्वोऽप्युपचारः कृतो मया ।

---

१ अग्निपातादिना शुद्धिप्रदर्शनं दिव्यम् । २ महात्मना, एवमपि ।

भक्त्या च दिव्यशक्त्या च भवतो मज्जनादिकः ॥ ३५४ ॥
तथा तवानुवृत्त्यैष लोकः प्रकटितो मया ।
भीमेनालोकितं यावत् तावद् दृष्टोऽखिलो जनः ॥३५५॥
अत्रान्तरे कुमारेण स्तूयमानः सुरा-ऽसुरैः ।
आगच्छन् ददृशे व्योम्ना श्रीचारणमुनीश्वरः ॥ ३५६ ॥
स्थितः पद्मासने देवनिर्मिते स पुरो बहिः ।
भीम ऊचे राक्षसेन्द्र ! ममायं गुरुरागतः ॥३५७॥
अस्य पादाम्बुजं दृष्ट्वा करिष्ये सफलं भवम् ।
स्वस्येति भणितो रक्षोराजः प्रियममन्यत ॥ ३५८ ॥
यत उच्यते—
देवताप्रणिधानेन गुरूणां वन्दनेन च ।
न तिष्ठति चिरं पापं छिद्रहस्ते यथोदकम् ॥३५९॥
ततः कुमारो मन्त्री च रक्षो हेमरथस्तथा ।
ययुः सर्वेऽपि कल्याणीभक्तयो मुनिसन्निधौ ॥ ३६० ॥
मुनिस्तैः प्रणतस्तोषाद् भूतलन्यस्तमस्तकैः ।
सुधासिक्तैरिवागत्य सर्वपौरजनैरपि ॥ ३६१ ॥
मुनिनाऽथ समारब्धा देशना यदहो ! जनाः ! ।
कषाया इह चत्वारश्चतुर्गतिनिबन्धनम् ॥ ३६२ ॥
तेषु क्रोधो विशेषेण दारुणो यः कृशानुवत् ।
सर्वं दहति जीवानामगणंश्च[1] निजेतरम् ॥ ३६३ ॥
अहो ! जडत्वं जन्तूनामन्यस्थानस्थितोऽपि यः ।
संतापं कुरुते क्रोधाङ्गारः, स हृदि धार्यते ॥ ३६४ ॥
परं प्रति विघाताय साहाय्यमिव देहिनः ।
कुर्वंस्तमेव हन्त्युच्चैरहो ! कोपस्य कैतवम् ॥३६५॥
अत उच्यते—
स एव सात्त्विको विद्वान् स तपस्वी जितेन्द्रियः ।

१ अगणयन्, इत्यर्थः ।

येनाशु क्षान्तिखड्गेन क्रोधशत्रुर्निपातितः ॥ ३६६ ॥
रसो लवणतुल्यो न न विज्ञानसमः सुहृत् ।
धर्मतुल्यो निधिर्नास्ति न क्रोधसदृशो रिपुः ॥ ३६७ ॥
क्रोधघर्माभिभूतस्य केनापि सह संहतिः ।
सुखायते न जीवस्य तज्ज्ञेयोऽसौ महाग्रहः ॥ ३६८ ॥
इत्यादिमुनिवाक्येन बुद्धः सर्वगिलोऽवदत् ।
अकृत्याचरणान्नाथ ! निवृत्तोऽद्य प्रभृत्यहम् ॥ ३६९ ॥
कुमारस्यानुभावेन कोपः पुरजने मया ।
निर्जितस्त्वत्प्रभावेणाऽधुना हेमरथे पुनः । ॥३७०॥
मुनिराहोदितः क्रोधविपाकस्त्वत्कृते मया ।
अन्यथा मोहभेदेषु मिथ्यात्वमतिभीषणम् ॥ ३७१ ॥
एवंवाचि मुनौ गर्जस्तत्रायातो महागजः ।
क्षुभिता परिषत् तस्य दर्शने सहसाऽभवत् ॥ ३७२ ॥
भीमो धीरयितु तां तु सान्त्वयामास तं गजम् ।
सोऽपि शान्तमनाः साधुं ववन्दे त्रिःप्रदक्षिणम् ॥ ३७३ ।
संहृत्य हस्तिरूप च प्रत्यक्षो यक्ष एव सः ।
चलकुण्डलभूषाढ्यो बभूव कृतविस्मयः ॥ ३७४ ॥
सोऽभाणि मुनिना किं भोः ! प्रति पुत्रं निजं भवान् ।
अनुसृत्यागतो हेमरथं भूत्वा करीश्वरः ॥ ३७५ ॥
अयं पूर्वमिहानीतः स्वपौत्रं रक्षितुं त्वया ।
भीमः साम्प्रतमेतं तु स्वं पुरं नेतुमिच्छसि ॥ ३७६ ॥
यक्षेण भणितं नाथ ! सत्यमेवं यतो मम ।
एष हेमरथो नप्ता बभूवान् प्राच्यजन्मनि ॥ ३७७ ॥
किञ्च,
मयाङ्गीकृत्य सम्यक्त्वं कुसंसर्गेण दूषितम् ।
तेनाहं व्यन्तरो जातस्तदाऽऽरोपय मे पुनः ॥ ३७८ ॥
नरेन्द्रादिभिरप्येवं प्रार्थिते मुनिपुंगवः ।

यक्ष-रक्षो-नृपादीनां सम्यक्त्वं विधिना व्यधात् ॥ ३७९ ॥
भीमेन तु कुपाखण्डिसंसर्गात् शुद्धिरर्थिता ।
तस्य सा मुनिना[1] दत्ता तुष्टाः सर्वेऽपि तेऽभवन् ॥३८०॥
अथ मोहरिपुं नत्वा राक्षसेन्द्रादिभिः सह ।
कुमारो नृपतेर्हेमरथस्य भवनं ययौ ॥ ३८१ ॥
श्रीमान् हेमरथोऽप्येनं सामन्ता-ऽमात्यसंयुतः ।
प्रणिपत्य कुमारेन्द्रं कृतज्ञात्मा व्यजिज्ञपत् ॥ ३८२ ॥
देव ! यज्जीव्यते यच्च भुज्यन्ते राज्यसंपदः ।
यदेष पुरलोकश्चाऽशनपानमनोहरः ॥ ३८३ ॥
यच्च दुर्लभसम्पच्च रत्नलाभोऽयमद्भुतः ।
कुमार ! जगतीसार ! माहात्म्यं तत्तवाऽखिलम् ॥३८४॥
तदेष भवदादेशकारी नित्यं जनस्त्वया ।
प्रेर्यो यथोचिते कार्येऽनुगृहीतो यथा भवेत् ॥ ३८५ ॥
कुमारः प्राह भो राजन् ! कस्य केन कृतं भवेत् ? ।
जन्म मृत्युः सुखं दुःखं सर्वं स्यात् स्वस्वकर्मतः ॥३८६॥
व्यापारस्त्वेष युष्माकं सर्वेषां कुलजन्मनाम् ।
प्रमादो नैव कर्तव्यो जिनधर्मे सुदुर्लभे ॥ ३८७ ॥
साधर्मिकेषु वात्सल्यं जिनधर्मप्रभावना ।
तथा निरपराधानां जीवानां वधवर्जनम् ॥ ३८८ ॥
अन्येष्वपि यथाशक्यं निवृत्तिः पापकर्मसु ।
इदं कार्यं सदा येन नैव दुःखं पुनर्भवेत् ॥ ३८९ ॥
तैरभाणि कुमारेन्द्र ! दिनानीह कियन्त्यपि ।
स्थीयतां जिनधर्मे स्याद् यथाऽस्माकं प्रवीणता ॥ ३९० ॥
इति श्रुत्वा पुनर्दत्ते कुमारो यावदुत्तरम् ।
तावदुड्डामरो व्योम्नि जातो डमरकध्वनिः ॥ ३९१ ॥
संभ्रान्तनृप-लोकानां पश्यतामेव च क्षणात् ।

१ मुनिमित्यर्थः ।

सा विंशतिभुजा प्राप्ता काली कापालिकान्विता ॥३९२॥
कुमारमभिवन्द्यासावुपविष्टा तदन्तिके ।
उवाच नृप-लोकानां तन्वतां भय-विस्मयम् ॥ ३९३ ॥
अहो ! भीम ! तदा तेऽत्राऽऽनीयमानस्य हस्तिना ।
मयेत्यवधिना ज्ञातं कुमारे यदसौ हितः ॥ ३९४ ॥
अथ तत्र तथैवाऽस्थामहं स्थानेऽधुना पुनः ।
तव माता पिता पौरलोकश्चातीवदुःखितः ॥ ३९५ ॥
रुदन् निरन्तरं सौम्य ! स्मारं स्मारं गुणांस्तव ।
किञ्चित्कार्यवशात्तत्र गतया बोधिता मया ॥ ३९६ ॥
विहिता च पुरस्तेषां प्रतिज्ञा यदिह ध्रुवम् ।
भीमो दिनद्वयस्यान्तरानेतव्यो मया ननु ॥ ३९७ ॥
कथितं च यथा भीमकुमारेण बहुर्जनः ।
धर्मेऽस्थापि, तथा भूयान् मार्यमाणोऽपि रक्षितः ॥३९८ ॥
अस्ति हेमपुरे सार्धं मतिसागरमन्त्रिणा ।
कुमारः कुशली तन्मा हर्षस्थाने विषद्यताम् ॥ ३९९ ॥
इति श्रुत्वोत्सुकीभूय भीमो यावत् प्रतिष्ठते ।
भेरी-पटह-भम्भानां तावदुच्छलितो रवः ॥ ४०० ॥
ततोऽनेकविमानानां विमाने मध्यगे स्थिता ।
तारहाराञ्चितोरस्का कुण्डलोल्लसितानना ॥ ४०१ ॥
गगने देवता दृष्टा तेजःप्रसरभासुरा ।
ततः किमिदमित्याख्यद् राक्षसः सहसोत्थितः ॥ ४०२ ॥
यक्षोऽपि गर्जितं कुर्वन् करे धृत्वोरुमुद्गरम् ।
उत्तस्थौ कालिकाऽकर्षत् करालां कर्तरीं करे ॥ ४०३ ॥
असंभ्रान्तं कुमारस्तु यावत्तिष्ठति संमुखः ।
जय नन्देति जल्पन्तस्तावद् देवाः समाययुः ॥ ४०४ ॥
आख्यान्ति च कुमारस्य पुरः सरभसा इव ।
यक्षिण्याः कमलाख्यायाः समागमनमुच्चकैः ॥ ४०५ ॥

ततो झगिति सा मुक्त्वा विमानं हसितानना ।
भीमं नत्वा निविश्याग्रे विज्ञा विज्ञापयत्यदः ॥ ४०६ ॥
सम्यक्त्वं भद्र ! दत्त्वा मे विन्ध्याचलगुहासदाम् ।
मुनीनां त्वं तदा पार्श्वे स्थितोऽहं च गता प्रगे ॥४०७॥
ततो युष्मत्प्रसादेन मया सपरिवारया ।
वन्दित्वा तान् मुनीन् भक्त्या स्वजन्म सफलीकृतम् ॥४०८॥
तत्र यूयं तु नो दृष्टाः पृष्टाश्च मुनयो न तैः ।
उत्तरं दत्तमित्यार्त्या प्रयुक्तो मयकाऽवधिः ॥ ४०९ ॥
दृष्टा यूयमिह स्नानं कार्यमाणास्तदुत्सुकाः ।
चलिताऽस्मि परं किञ्चिद् बृहत्कार्याद् विलम्बिता ॥४१०॥
सुविमानं विकुर्व्याथ यक्षेन्द्रो भीममब्रवीत् ।
अस्मिन्नारुह्यतां शीघ्रं गन्तव्यं यत् पितुः पुरे ॥ ४११ ॥
अथोत्थाय नृपं हेमरथं संबोध्य राजसूः ।
तं विमानं समारुह्य प्रतस्थे मन्त्रिसंयुतः ॥ ४१२ ॥
देवास्तस्य पुरो गीतं नृत्यं कुञ्जरगर्जितम् ।
हयहेषां च कुर्वन्तो वल्गन्तश्च प्रतस्थिरे ॥ ४१३ ॥
महता तूर्यनादेन पूर्यमाणे नभोऽङ्गणे ।
कुमारः प्राप कमलपुरस्यासन्नकाननम् ॥ ४१४ ॥
तत्रस्थे जिनचैत्येऽसौ रक्षो-यक्षादिभिः सह ।
वन्दित्वा विधिना देवानथ स्तोतुं प्रचक्रमे ॥ ४१५ ॥
मुनीन्द्रहृदयानन्दकन्दकन्दलनाम्बुद ! ।
विकल्पकल्पनापेतं वीतरागत्वमेव मे ॥ ४१६ ॥
पुण्यभाजितयाऽऽत्मीये जिन ! ध्यायन्ति ये हृदि ।
ध्यातारोऽपि परं ध्येया भुवनस्यापि ते मताः ॥ ४१७ ॥
तैस्तैर्भुवनविख्यातैश्चरितैरिन्दुसुन्दरैः ।
जिन ! ध्वस्ततमस्तोम ! त्वमेव परमं पदम् ॥ ४१८ ॥
सत्पथप्रतिपन्थित्वान्न्यवधीर्देव ! यः पुरा ।

ज्ञानैकसम्पदे रूपातीत ! तस्मै नमोऽस्तु ते ॥ ४१९ ॥
निर्वापयसि संसारमरुस्थलपथस्थितम् ।
दृष्टोऽप्याकस्मिकाम्भोदसोदरः परमेश्वर ! ॥ ४२० ॥
ध्यातो येन जिनेश ! त्वं विकाशिकमलानन ! ।
तस्य विश्वोत्तमानन्तसौख्यलक्ष्मीनिधे ! प्रभो ! ॥४२१॥
गुणैरेव त्वया देव ! शरच्चन्द्रप्रभासितैः ।
अन्तर्वैरिगणो वीरधर्ममर्मविदा मुदा ॥ ४२२ ॥
नयद्वयभुजा पीनगात्रकाङ्गा जनैः सुगा ।
सौम्य ! त्वदागमाख्याऽसौ निश्रेणिः सिद्धिधामनि ॥४२३॥
गुप्तकर्मक्रियं भव्य भावदेव-मुनिस्तुत ! ।
क्षीणकर्मक्रियं नाथ ! देहि सर्वज्ञ ! मे पदम् ॥ ४२४ ॥
इति चित्रगुणं चित्रस्तोत्रेण जगतां पतिम् ।
स्तुत्वा कुमारो देवेभ्यः समहस्तमदापयत् ॥ ४२५ ॥
भेरी-शम्बूक-ढक्काभिर्मृदङ्ग—पटहादिभिः ।
आतोद्यैर्वाद्यमानैर्निर्घोष उच्छलितो भृशम् ॥ ४२६ ॥
तमाकर्ण्य निजास्थाने स्थितो राड् हरिवाहनः ।
पप्रच्छ मन्त्रिणः कोऽद्याकस्मिकोऽयं महाध्वनिः ? ॥४२७॥
तद् यावच्चिन्तयेद् मन्त्रिजनस्तावद् नराधिपम् ।
काननाधिकृतोऽभ्येत्य नरो वर्धापयत्यदः ॥ ४२८ ॥
देव ! देववनाद्दानवनेसुरपरिच्छदः ।
भीमः समागतस्तत्रारब्धश्चैत्यमहोत्सवः ॥ ४२९ ॥
नृपस्तस्याङ्गसंलग्नं दत्त्वाऽऽभरणमुद्धसन् ।
प्रतीहारं समादिश्य पुरशोभामकारयत् ॥ ४३० ॥
महद्धर्या स स्वयं दूरादागतं सुतमभ्यगात् ।
उल्लसन् वलितं कृष्णपक्षादिन्दुमिवाम्बुधिः ॥ ४३१ ॥
आगच्छन् भूभुजं दृष्ट्वा पथि भीमो विमानतः ।
अवतीर्य पितुर्मातुश्चरणौ प्रणमन्नतः ॥ ४३२ ॥

औचित्यमन्यलोकानामपि कृत्वा पितुर्गिरा ।
भीमो गजेन्द्रमारूढः पश्चादारोप्य मान्त्रिणम् ॥ ४३३ ॥
समं पित्रा गतः सौधं मङ्गलैः स परश्शतैः ।
अशेषमङ्गलावासो यतो धर्मः श्रितोऽमुना ॥ ४३४ ॥
भोजनानन्तरं पृष्टो भीमस्य मतिसागरः ।
चरित्रं यद्यथावृत्तमाचख्यौ भूभुजः पुरः ॥ ४३५ ॥
बह्वी राजसुताः पुत्रः स पित्रा परिणायितः ।
निजराज्येऽभिषिक्तश्च जिनदीक्षाऽऽददे स्वयम् ॥ ४३६ ॥
ततो भीमनरेन्द्रोऽपि जिनधर्मप्रभावकः ।
प्रान्ते प्राप्तपरिव्रज्यो जगाम परमं पदम् ॥ ४३७ ॥
स्वयं प्राणिवधादेवं विनिवृत्तः परानपि ।
निवर्त्य परमां सिद्धिमाप लोकद्वयेऽपि सः ॥ ४३८ ॥
वचोऽपि हिंसाविषयं महानर्थविधायकम् ।
अत्र मातृ-सुतौ चन्द्रा-सर्गाह्वानौ निदर्शनम् ॥ ४३९ ॥
तथाहि—
अस्त्यत्र भरतक्षेत्रे वर्धनागपुरं पुरम् ।
सद्दडो नाम कोऽप्येकस्तत्रासीत् कुलपुत्रकः ॥ ४४० ॥
तस्य चन्द्राभिधा पत्नी सुतः सर्गस्त्रयोऽप्यमी ।
अभाग्यवशतोऽभूवन् दारिद्र्यकुलमन्दिरम् ॥ ४४१ ॥
विपन्ने सद्दडे चन्द्रा तुन्दार्थं परवेश्मसु ।
कुरुते कर्म, सर्गोऽपि वनादानयतीन्धनम् ॥४४२ ॥
पूर्णश्रेष्ठिगृहेऽन्येद्युर्जामातरि समागते ।
जलमानेतुमाहूता चन्द्रा पुत्रे वनं गते ॥ ४४३ ॥
सोऽपि पुत्रार्थमारोप्य भोजनं शिक्यकेऽद्भुतम् ।
ययौ कटिकया द्वारं पिधायेभ्यगृहं मुदा ॥ ४४४ ॥
चित्रं केऽपि प्रभुत्वेऽपि प्रतिबध्नन्ति नो मनः ।
परप्रेष्यत्वमप्याप्य बाढं हृष्यन्ति केचन ॥ ४४५ ॥

वेलायामागतः सर्गो मुक्तं मुद्गेन्धनं ततः ।
अप्रेक्ष्य जननीं क्षुत्तृट्पीडया कुपितो भृशम् ॥ ४४६ ॥
जलमानीय चन्द्राऽपि व्यग्रत्वादिभ्यमानुषैः ।
दीना न केनाप्यकृतसारा स्वगृहमागता ॥ ४४७ ॥
त्वां दृष्ट्वा त्वं कथं पापे ! शूलायां तत्र रोपिता ।
स्थिता यदियतीं वेलां सर्ग इत्याह निष्ठुरम् ? ॥ ४४८ ॥
तत् श्रुत्वा साऽपि तापेन सहसोवाच किं करौ ।
छिन्नौ ते शिक्यकादन्नमुत्तार्य बुभुजे न यत् ? ॥ ४४९ ॥
इत्युक्तिप्रत्ययं बद्धमुभाभ्यां कर्म दारुणम् ।
कालेन सुगुरोर्योगात् श्रावकत्वमवापि च ॥ ४५० ॥
प्रवर्धमानसंवेगाद् यतिव्रतमपि क्रमात् ।
गृहीत्वा विधिनाऽऽराध्य सुरलोकं गतावुभौ ॥ ४५१ ॥
ततश्च्युत्वा सर्गजीवस्तामलिप्त्यां धनेशितुः ।
जातः कुमारदेवस्याऽरुणदेवाभिधः सुतः ॥ ४५२ ॥
चन्द्राजीवः पुनश्च्युत्वा समभूत् पाटलापुरे ।
जसादित्यमहेभ्यस्य देविणी नाम पुत्रिका ॥ ४५३ ॥
सा दत्ताऽरुणदेवस्य किन्त्वनिष्पन्न एव सः ।
विवाहेऽगाद् वणिज्यायै कटाहे जलवर्त्मना ॥ ४५४ ॥
ततो व्यावर्तमानस्य दैवाद् यानमभज्यत ।
महेश्वराख्यमित्रेण स तीर्त्वाऽब्धितटं गतः ॥ ४५५ ॥
ततो गच्छन् क्रमेणासौ पाटलापुरमागतः ।
ईश्वरेणोदितं मित्र ! श्वशुरस्थानमत्र ते ॥ ४५६ ॥
तत्तत्र गम्यते, सोऽपि प्राह नैवंविधस्य मे ।
श्वशुरान्तेऽर्हति गन्तुमीश्वरः पुनरब्रवीत् ॥ ४५७ ॥
तत्तिष्ठ बहिरेव त्वं पुरान्तर्याम्यहं पुनः ।
आनेतुं भोजनं तेनाऽनुज्ञातः स तथाऽकरोत् ॥ ४५८ ॥
अरुणस्तु श्रमात्तत्र विश्रान्तो मिलितेऽक्षिणी ।

तदा चारुण-देविण्योः कर्मोदीर्णं वचस्कृतम् ॥ ४५९ ॥
गतायाः क्रीडनोद्यानं देविण्याः कटकद्वयम् ।
गाढाविति करौ छित्त्वा दस्युना जगृहे रहः ॥ ४६० ॥
कूजितं वनपालिन्या ततश्चौरानुसारतः ।
दृष्ट्वा पलायमानं तं धाविता दण्डपाशिकाः ॥ ४६१ ॥
क्षीणशक्तिरथो पूर्वं दृष्टं जीर्णसुरालयम् ।
प्रविष्टो यत्र सुप्तोऽस्त्यरुणदेवः सुनिर्भरम् ॥ ४६२ ॥
अयमेवाधुनोपाय इति ध्यात्वा स तस्करः ।
तत्पार्श्वे कटकौ मुक्त्वा शस्त्री च शिखरेऽविशत् ॥ ४६३ ॥
उत्थितोऽरुणदेवोऽथ निरीक्ष्य कटकद्वयम् ।
दत्तं देव्येति संतोषाद् गृहीत्वाऽगोपयत् कटौ ॥ ४६४ ॥
छुरिकां पुनरादाय किमेतदिति चिन्तयन् ।
यावदस्त्यरुणस्तावदागता दण्डपाशिकाः ॥ ४६५ ॥
संक्षुब्धः सन् स तैरुक्तो रेऽधुना कुत्र यास्यसि ? ।
इत्युक्त्वा ताडयत्स्वेषु पपात कटकद्वयी ॥ ४६६ ॥
ततो बद्ध्वाऽर्पितो राज्ञो वृत्तान्तश्च निवेदितः ।
नृपादेशाच्च शूलायां भिन्नो नीत्वा बहिः स तैः ॥ ४६७ ॥
अत्रान्तरे भोज्यपाणिस्तत्रागादीश्वरः पुरात् ।
अदृष्ट्वारुणदेवं च पप्रच्छारामपालकान् ॥ ४६८ ॥
अहो ! एवंविधः कोऽपि दृष्टो देवकुलादितः ।
गच्छन् कुत्रापि युष्माभिस्तैरूचे कोऽपि नेक्षितः ? ॥ ४६९ ॥
किन्त्वेकः कोऽपि चौरोऽत्र धृत्वा व्यापादितोऽधुना ।
गतश्चेत् कौतुकात् तत्र न जानीमस्तदा वयम् ॥ ४७० ॥
ततो व्याकुलितो यावद् वध्यस्थानं गतो द्रुतम् ।
अरुणं दारुणावस्थं शूलायां तावदैक्षत ॥ ४७१ ॥
हा ! श्रेष्ठिपुत्र ! हा ! मित्र ! किं तवासीदिति ब्रुवन् ।
आरार्टिं भीषणां मुक्त्वा मूर्छितो न्यपतत् क्षितौ ॥ ४७२ ॥

सकौतुकोदयं तत्राश्वास्य प्रेक्षार्थकैर्जनैः ।
आर्य ! श्रेष्ठिसुतः कोऽयमिति पृष्टः स्खलन् जगौ ? ॥४७३॥
किं कथ्यतेऽधुना हन्त ! न्यवर्तत कथानकम् ।
असौ कुमारदेवस्य ताम्रलिप्तीनिधेः सुतः ॥ ४७४ ॥
एतन्नगरवास्तव्यजसादित्यसुतापतिः ।
यानभङ्गवशादित्थमद्यैवाऽत्र समागतः ॥ ४७५ ॥
इत्याद्यशेषवृत्तान्तं निवेद्यात्मानमीश्वरः ।
शिलया हन्तुमारब्धो धृतश्च प्रेक्षकैर्जनैः ॥ ४७६ ॥
इमं व्यतिकरं श्रुत्वा जसादित्यो निजाङ्गजाम् ।
आदाय देविणीमागादरुणं तं तथैक्षत ॥ ४७७ ॥
ततस्तं प्रत्यभिज्ञाय धिक् पापं मामिति ब्रुवन् ।
मूर्च्छितः सह देविण्याऽऽश्वासितश्च स बन्धुभिः ॥४७८॥
शूलिकान्तः समाकर्ण्याऽरुणदेवं स पूर्जनात् ।
काष्ठान्ययाचत श्रुत्वा तद् नृपो द्रुतमागतः ॥ ४७९ ॥
अब्रवीच्च जसादित्य ! दैवमत्रापराध्यति ।
नाहं तु यन्ममाऽप्येवं सहसाकारिताऽभवत् ॥ ४८० ॥
तदाग्रहमिमं मुञ्च हृदि कर्मस्थितिं स्मर ।
अन्यथा चिन्तितं कार्यं कर्मणा क्रियतेऽन्यथा ॥ ४८१ ॥
अत्रान्तरे चतुर्ज्ञानी मुनिर्नाम्नाऽमरेश्वरः ।
ज्ञात्वा तत्रायया बोधोपकारं बहुदेहिनाम् ॥ ४८२ ॥
तत्प्रभावाच्च सर्वेषां गलिताः शोकशङ्कवः ।
शान्तो देवोऽर्च्य इत्यस्माज्जाता धर्मश्रुतौ मतिः ॥४८३॥
देवैर्गन्धाम्बुसंसिक्तभून्यस्तस्वर्णपङ्कजे ।
उपविश्य महात्माऽसौ धर्ममाख्यातुमुद्यतः ॥ ४८४ ॥
मुञ्चताऽहो ! मोहनिद्रां जाग्रत ज्ञानजागरैः ।
त्यजत प्राणिघाताद्यं लात क्षान्त्यादिकान् गुणान् ॥४८५॥
प्रमादमुज्झत द्विष्टं प्रमादादल्पतोऽपि यत् ।

बध्यते दारुणं कर्म देविन्य-रुणदेववत् ॥ ४८६ ॥
नृपमुख्यैरथो पृष्टं शिष्टं च मुनिनाऽखिलम् ।
तच्चरित्रं, ततः पर्षद् महासंवेगमागमत् ॥ ४८७ ॥
देविन्य-रुणदेवौ तु जातजातिस्मृती मुनिम् ।
अयाचतामनशनं धर्मध्यानैकमानसौ ॥ ४८८ ॥
मुनिराह महाभागाविदं वां युज्यतेऽधुना ।
ततो नृपादिसांमत्यात् ताभ्यामनशनं कृतम् ॥ ४८९ ॥
विज्ञप्तं भूभुजा नाथ ! दुष्कृतादियतोऽपि चेत् ।
भवेदेवंविधावस्था मादृशां का गतिस्ततः ? ॥ ४९० ॥
मुनिरूचेऽमुना भूम्ना तिर्यग्-नरकसंभवः ।
अतः शत्रु-विषाऽ-ग्निभ्यः प्रमादो ह्यधिकः स्मृतः ॥४९१॥
राजाह क उपायः स्याद् दुःखस्यास्य निवारणे ? ।
मुनिराह प्रमादस्य रोधनं संयमेन यत् ॥ ४९२ ॥
राज्ञाऽभाणि किमेताभ्यां ह्यप्रमादो न सेवितः ? ।
प्रचुरेण प्रमादेन नियतं दुर्गतिर्भवेत् ॥ ४९३ ॥
अप्रमादस्यातिशयात् सर्वदुःखक्षयो ध्रुवम् ।
किञ्चाभ्यामप्रमादेन क्षपितं भूरि कर्म भोः ! ॥४९४ ॥
शेषः कर्मांश एवाऽयं मुक्तो धन्याविमौ ततः ।
इयानेवानयोः क्लेशः शुभधीः कथमन्यथा ? ॥ ४९५ ॥
प्रतिबुद्धस्ततो राजा जशादित्येश्वरान्वितः ।
दीक्षां जग्राह चौरोऽपि तज्ज्ञात्वाऽनुततापः सः ॥ ४९६ ॥
आगत्य च सनिर्वेदं निवेद्य निजदुष्कृतम् ।
अयाचत मुनेः पार्श्वात् संन्यासं मुनिरप्यदात् ॥ ४९७ ॥
आत्तपञ्चनमस्कारो निन्दित्वात्मानमुच्चकैः ।
तस्करोऽरुणदेवश्च देविणी च दिवं ययुः ॥ ४९८ ॥
तदेवं वचनस्याऽपि हिंस्रस्य फलमीदृशम् ।
विज्ञायाऽऽक्रोशदानाद्यं वर्जनीयं प्रयत्नतः ॥ ४९९ ॥

आस्तां वचन-कायाभ्यां हिंसा जीवव्यथाकरी ।
चिन्तिता मनसाऽप्येषा नृणां नरकदायिनी ॥ ५०० ॥
यथा कोऽपि पुरा रङ्क उद्यानवनयात्रया ।
गते लोके पुरासन्नवैभारगिरिसन्निधौ ॥ ५०१ ॥
भिक्षामलभमानः सन्निजदुष्कर्मदोषतः ।
हृदि चिन्तितवानेवमज्ञानाऽऽहितदुर्मतिः ॥ ५०२ ॥
अहो ! कोऽपि न मे भिक्षां भक्ष्यभोज्येषु सत्स्वपि ।
ददाति, तदिमं सर्वं हनिष्यामीति कोपतः ॥ ५०३ ॥
रौद्रध्यानवशं यातो द्रुतमारुह्य पर्वतम् ।
एकं महोपलं मूलाच्चालयामास निर्दयम् ॥ ५०४ ॥
तेनाधः पतता लोकः समस्तोऽपि प्रनष्टवान् ।
स पुनश्चूर्णितो मृत्वा द्रमको नरकं गतः ॥ ५०५ ॥
आख्यातमित्यहिंसायां द्वितीयेऽपि व्रतेऽधुना ।
आख्यानं वसुराजस्य कथ्यमानं निशम्यताम् ॥५०६ ॥
अस्ति शुक्तिमती नाम नगरी नगरीषु या ।
शुक्तिमत्याख्यया नद्या मुक्तावल्येव राजते ॥ ५०७ ॥
अभूत् तस्यां स्वतेजोभिर्ध्वस्तवैरितमोभरः ।
चूडामणिसमः श्रीमानभिचन्द्रो नरेश्वरः ॥ ५०८ ॥
अजायत सुतस्तस्य वसुनामा महामतिः ।
बालकालादपि प्रायो यस्य सत्यव्रते रतिः ॥ ५०८ ॥
पुरुषेषु नयौदार्यविनयप्रमुखैर्गुणैः ।
वसुत्वं दधता येन चक्रे सार्था वसुन्धरा ॥ ५१० ॥
तत्र क्षीरकदम्बाख्यः सर्वशास्त्रविशारदः ।
उपाध्यायोऽस्ति तस्याऽपि सुतः पर्वतकाभिधः ॥५११॥
वसुः पर्वतकश्चैव तथान्यो नारदस्त्रयः ।
पार्श्वे क्षीरकदम्बस्य पठन्त्येते दिवानिशम् ॥ ५१२ ॥
मत्तद्विरदसंकाशे यौवनेऽनर्थकारिणि ।

पुरुषस्याधिरूढस्य न शास्त्रादन्यदङ्कुशम् ॥ ५१३ ॥
भास्वता स्वकरौघेन यद्वदुद्घाटितेऽम्बुजे ।
नासिकाप्यायको गन्धः प्रसरत्येव सर्वतः ॥ ५१ ॥
तथा शास्त्रेण गुरुणा नृणामुद्बोधिते हृदि ।
परमानन्दजनकं तत्त्वमुन्मीलति स्वयम् ॥ ५१५ ॥
बुद्ध्वेति तानुपाध्यायोऽप्यध्यापयति सादरम् ।
गुरोर्मातृ-पितृभ्यां च कोऽन्योऽस्ति भुवने हितः ?॥५१६॥
रजन्यामन्यदा तेषां पठतां सौधमूर्धनि ।
जाग्रत्येव गुरौ निद्रा क्षणं श्रमवशादभूत् ॥ ५१७ ॥
तदा च गगने यान्तौ चारणश्रमणावुभौ ।
तान् निरूप्य विदित्वैवं परस्परमवोचताम् ॥ ५१८ ॥
एषामेकतमः स्वर्गं गमिष्यत्यपरौ पुनः ।
नरकं यास्यतस्तच्चाऽश्रौषीत्क्षीरकदम्बकः ॥ ५१९ ॥
तच्छ्रुत्वा सहसा जातविषादम्लानमानसः ।
अचिन्तयदुपाध्यायो दुःश्रवं धिगिदं वचः ॥ ५२० ॥
मय्यप्यध्यापके शिष्यौ नरकं यास्यतो हहा ! ।
न चालीकमिदं येन केनापि ज्ञानिनोदितम् ॥ ५२१ ॥
एभ्यः को यास्यति स्वर्गं नरकं कौ च यास्यतः ? ।
जिज्ञासुरित्यसौ शिष्यांस्त्रीनप्याऽऽकारयत्समम् ॥५२२॥
यावत्तूर्णं समर्प्यैषामेकैकं पिष्टकुर्कुटम् ।
स ऊचेऽमी तत्र वध्या यत्र कोऽपि न पश्यति ॥५२३॥
वसु-पर्वतकौ तत्र गत्वा शून्यप्रदेशयोः ।
शुभां गतिमिवात्मीयां जघ्नतुः पिष्टकुर्कुटौ ॥ ५२४ ॥
महात्मा नारदाख्यस्तु व्रजित्वा नगराद् बहिः ।
स्थित्वा च विजने देशे दिशः प्रेक्ष्येत्यवर्णयत् ॥ ५२५ ॥
गुरुपादैरिदं तावदादिष्टं वत्स ! यत्त्वया ।
वध्योऽयं कुर्कुटस्तत्र यत्र कोऽपि न पश्यति ॥५२६॥

असौ पश्यत्यहं पश्याम्यमी पश्यन्ति खेचराः ।
लोकपालाश्च पश्यन्ति पश्यन्ति ज्ञानिनोऽपि च ॥५२७॥
नास्त्येवं स्थानमपि तद्यत्र कोऽपि न पश्यति ।
तात्पर्यं तद्गुरुगिरां न वध्यः खलु कुर्कुटः ॥५२८॥
गुरुपादा दयावन्तः सदा हिंसापराङ्मुखाः ।
अस्मत्प्रज्ञां परिज्ञातुमेतद् नियतमादिशन् ॥ ५२९ ॥
विमृश्यैवमहत्वैव कुर्कुटं स समाययौ ।
कुर्कुटाऽहनने हेतुं गुरोर्व्यज्ञपयच्च तम् ॥ ५३० ॥
स्वर्गं यास्यत्यसौ तावदिति निश्चित्य सस्वजे ।
गुरुणा नारदः स्नेहात् साधु साध्विति भाषिणा ॥५३१॥
अभीष्टः सुकृती युक्तं सतां धर्ममयं हि ते ।
संविभागमिवादातुं तस्य कुर्वन्ति गौरवम् ॥ ५३२ ॥
महतां काऽपि नापेक्षा परकीये स्वकेऽपि वा ।
यत्रैव गुणमीक्षन्ते तत्त्वतस्तत्र ते रताः ॥ ५३३ ॥
वसु-पर्वतकौ पश्चादागत्यैवं शशंसतुः ।
निहतौ कुर्कुटौ तत्र यत्र कोऽपि न पश्यति ॥ ५३४ ॥
अपश्यतं युवामादावपश्यन् खेचरादयः ।
कथं हतौ कुर्कुटौ रे ! पापावित्यशपद् गुरुः ? ॥ ५३५ ॥
इत्थं च निर्णयं ज्ञात्वा महोद्वेगाकुलो हृदि ।
इति दध्यावुपाध्यायो ज्ञातव्यं धिगिदं मम ॥ ५३६ ॥
आदर्शो दर्शितोऽन्धस्य मन्त्रितं बधिराग्रतः ।
अरण्ये रुदितं चक्रे रोपितं कमलं स्थले ॥ ५३७ ॥
वर्षितं चोषरक्षेत्रे एतावन्ति दिनानि यत् ।
अनयोः पाठनायासो मयाऽकारि निरर्थकः ॥ ५३८ ॥
तच्छ्रुतं यातु पातालं तच्चातुर्यं विलीयताम् ।
ते विशन्तु गुणा वह्नौ येषु सत्स्वप्यधोगतिः ॥ ५३९ ॥
तज्जलं यत् तृषां छिन्द्यात्तदन्नं यत्क्षुधापहम् ।

बन्धुर्गो धारयत्यार्त स पुत्रो यत्र निर्वृतिः ॥ ५४० ॥
तदधीतं श्रुतं येन नैवात्मा नरके पतेत् ।
क्लेशायासकरं शेषं सर्वमेव विडम्बना ॥ ५४१ ॥
यदर्थमयमारम्भस्तयोरेवंविधा गतिः ।
तद्ध्रुवकृते कृत्यं हारयामि ध्रुवं कथम् ? ॥ ५४२ ॥
गुरूपदेशो हि यथापात्रं परिणमेदिह ।
स्थानभेदेन मेघाम्भो मुक्ता-लवणतां व्रजेत् ॥ ५४३ ॥
प्रियः पर्वतकः पुत्रः पुत्रादप्यधिको वसुः ।
नरकं यास्यतस्तस्माद् गृहवासेन किं मम ? ॥ ५४४ ॥
निर्वेदादित्युपाध्यायः प्रव्रज्यामग्रहीत्तदा ।
तत्पदं पर्वतोऽध्यास्त व्याख्याक्षणविचक्षणः ॥ ५४५ ॥
गुरुप्रसादतो भूत्वा सर्वशास्त्रविशारदः ।
नारदः शारदाम्भोदशुद्धधीः स्वां भुवं ययौ ॥ ५४६ ॥
नृपचन्द्रोऽभिचन्द्रोऽपि जग्राह समये व्रतम् ।
ततो वसुरभूद् राजा वासुदेवसमः श्रिया ॥ ५४७ ॥
सत्यवादीति स प्राप प्रसिद्धिं पृथिवीतले ।
तां प्रसिद्धिमपि त्रातुं सत्यमेव जगाद सः ॥ ५४८ ॥
यः प्राप यादृशीं ख्यातिमशुभामथवा शुभाम् ।
तदाश्लिष्ट इव प्रायस्तल्लेश्यः स भवेत् सदा ॥ ५४९ ॥
अथैकदा मृगयुणा मृगाय मृगयाजुषा ।
चिक्षिपे विशिखो विन्ध्यनितम्बे सोऽन्तराऽस्खलत् ॥२५०॥
बाणस्खलनहेतुं स ज्ञातुं तत्र ययौ ततः ।
आकाशस्फटिकशिलामज्ञासीत् पाणिना स्पृशन् ॥ ५५१ ॥
स दध्याविति मन्येऽस्यां संक्रान्तः परतश्चरन् ।
भूमिच्छायेव शीतांशौ ददृशे हरिणो मया ॥ ५५२ ॥
पाणिस्पर्श विना नैषा सर्वथाऽप्युपलक्ष्यते ।
अवश्यं तदियं योग्या वसोर्वसुमतीपतेः ॥ ५५३ ॥

रहो व्यज्ञपयद् राज्ञे गत्वा तां मृगयुः शिलाम् ।
हृष्टो राजाऽपि जग्राह ददौ चास्मै महद्धनम् ॥ ५५४ ॥
स तया घटयामास च्छन्नं स्वासनवेदिकाम् ।
तच्छिल्पिनोऽघातयच्च नात्मीयाः कस्यचिद् नृपाः ॥५५५॥
तस्यां सिंहासनं वेदौ नरेन्द्रस्य निवेशितम् ।
सत्यप्रभावादाकाशस्थितमित्यबुधज्जनः ॥ ५५६ ॥
सत्याद्धि तुष्टाः सान्निध्यमस्य कुर्वन्ति देवताः ।
एवमूर्जस्विनी तस्य प्रसिद्धिर्व्यानशे दिशः ॥ ५५७ ॥
तया प्रसिद्ध्या राजानो भीतास्तस्य वशं ययुः ।
सत्या वा यदि वा मिथ्या प्रसिद्धिर्जयिनी नृणाम् ॥५५८॥
आगाच्च नारदोऽन्येद्युस्ततश्चैक्षिष्ट पर्वतम् ।
व्याख्यानयन्तमृग्वेदं[1] शिष्याणां शेमुषीजुषाम् ॥ ५५९ ॥
अजैर्यष्टव्यमित्यस्मिन् मेषैरित्युपदेशकम् ।
बभाषे नारदो भ्रातर्भ्रान्त्या किमिदमुच्यते ? ॥ ५६० ॥
त्रिवार्षिकाणि धान्यानि न हि जायन्त इत्यजाः ।
व्याख्याता गुरुणाऽस्माकं व्यस्मार्षीः केन हेतुना ?॥५६१॥
ततः पर्वतकोऽवादीदिदं तातेन नोदितम् ।
उदिताः किन्त्वजा मेषास्तथैवोक्ता निघण्टुषु ॥ ५६२ ॥
जगाद नारदोऽप्येवं शब्दानामर्थकल्पना ।
मुख्या गौणी च तत्रेह गौणीं गुरुरचीकथत् ॥ ५६३ ॥
गुरुर्धर्मोपदेष्टैव श्रुतिर्धर्मात्मिकैव च ।
द्वयमप्यन्यथा कुर्वन् मित्र ! मा पापमर्जय ॥ ५६४ ॥
साक्षेपं पर्वतोऽजल्पदजान् मेषान् गुरुर्जगौ ।
गुरूपदिष्टशब्दार्थोल्लङ्घनाद् धर्ममर्जसि ? ॥ ५६५ ॥
मिथ्याभिमानवाचो हि न स्युर्दण्डभया नृणाम् ।
स्वपक्षस्थापने तेन जिह्वाच्छेदः पणोऽस्तु नः ॥ ५६६ ॥

---

१ व्याख्यानं कुर्वन्तम् ।

प्रमाणमुभयोरत्र सहाध्यायी वसुर्नृपः ।
नारदः प्रतिपेदे तन्न क्षोभः सत्यभाषिणाम् ॥ ५६७ ॥
रहः पर्वतमूचेऽम्बा गृहकर्मरताऽप्यहम् ।
अजास्त्रिवार्षिकं धान्यमित्यश्रौषं भवत्पितुः ॥ ५६८ ॥
जिह्वाच्छेदं पणेऽकार्षीर्यद् दर्पात् तदसांप्रतम् ।
अविमृश्य विधातारो भवन्ति विपदां पदम् ॥ ५६९ ॥
अवदत् पर्वतोऽप्येवं कृतं तावदिदं मया ।
यथा तथाकृतस्याऽस्य करणं नहि विद्यते ॥ ५७० ॥
जीवः कण्टकमारूढः कृत्याऽकृत्यं न चेतयेत् ।
अतः प्रशस्तभावेऽसौ स्थापनीयः सदा बुधैः ॥ ५७१ ॥
साऽथ पर्वतकाऽपायपीडया हृदि शल्यिता[1] ।
वसुराजमुपेयाय पुत्रार्थे क्रियते न किम् ? ॥ ५७२ ॥
दृष्टः क्षीरकदम्बोऽद्य यदम्ब ! भवतीक्षिता[2] ।
किं करोमि प्रयच्छामि किञ्चेत्यभिदधे वसुः ? ॥ ५७३ ॥
साऽवादीद् दीयतां पुत्र ! भिक्षा मह्यं महीपते ! ।
धनधान्यैः किमन्यैर्मे विना पुत्रेण पुत्रक ! ॥ ५७४ ॥
वसुराह स्म मे मातः ! पाल्यः पूज्यश्च पर्वतः ।
गुरुवद् गुरुपुत्रेऽपि वर्तितव्यमिति श्रुतेः ॥ ५७५ ॥
कस्याद्य पत्रमुत्क्षिप्तं कालेनाऽकालरोषिणा ।
को जिघांसुर्भ्रातरं मे ब्रूहि मातः ! किमातुरा ? ॥ ५७६ ॥
अजव्याख्यानवृत्तान्तं स्वपुत्रस्य पणं च तम् ।
त्वं प्रमाणीकृतश्चासीत्याख्यायाऽर्थयते स्म सा ॥ ५७७ ॥
कुर्वाणो रक्षणं भ्रातुरजान् मेषानुदीरयेः ।
प्राणैरप्युपकुर्वन्ति महान्तः किं पुनर्गिरा ? ॥ ५७८ ॥
अवोचत वसुर्मातर्मिथ्या वच्मि वचः कथम् ? ।
प्राणात्ययेऽपि शंसन्ति नाऽसत्यं सत्यभाषिणः ॥ ५७९ ॥

---

१ शल्य सजात यस्या सा । २ त्वमीक्षितेति रहस्यम् ।

अन्यदप्यभिधातव्यं नाऽसत्यं पापभीरुणा ।
गुरुवागन्यथाकारे कूटसाक्ष्ये च का कथा ? ॥ ५८० ॥
बहु कुरु गुरोः पुत्रं यद्वा सत्यव्रताग्रहम् ।
तथा सरोषमित्युक्तस्तद्वचोऽमंस्त पार्थिवः ॥ ५८१ ॥
ततः प्रमुदिता क्षीरकदम्बगृहिणी ययौ ।
आजग्मतुश्च विद्वांसौ तत्र नारद-पर्वतौ ॥ ५८२ ॥
सभायाममिलन् सभ्या माध्यस्थ्यगुणशालिनः ।
वादिनोः सदसद्वादक्षीरनीरसितच्छदाः ॥ ५८३ ॥
आकाशस्फटिकशिलावेदिसिंहासनं वसुः ।
सभापतिरलंचक्रे नभस्तलमिवोडुपः ॥ ५८४ ॥
ततो निजनिजव्याख्यापक्षं नारद-पर्वतौ ।
कथयामासतू राज्ञि सत्यं ब्रूहीति भाषिणौ ॥ ५८५ ॥
विप्रवृद्धैः स ऊचेऽथ विवादस्त्वयि तिष्ठते ।
प्रमाणमनयोः साक्षी त्वं रोदस्योरिवार्यमा ॥ ५८६ ॥
घटप्रभृतिदिव्यानि वर्तन्ते देव ! सत्यतः ।
सत्याद्वर्षति पर्जन्यः सत्यात्तुष्यन्ति देवताः ॥ ५८७ ॥
देव ! त्वं सत्यवादीति विख्यातो भुवनत्रये ।
सत्यमेव स्थिरं लोके सर्वमन्यद् विनश्वरम् ॥ ५८८ ॥
त्वयैव सत्ये लोकोऽयं स्थाप्यते पृथिवीपते ! ।
त्वामिहार्थे किमु ब्रूमो ब्रूहि सत्यव्रतोचितम् ? ॥५८९॥
अदृष्टाः सिद्धगन्धर्वा राज्याधिष्ठातृदेवताः ।
लोकपालाश्च शृण्वन्ति वद सत्यं नरेश्वर ! ॥ ५९० ॥
यद्युदेति रविः प्रत्यङ् मेरुश्चापि प्रकम्पते ।
तथाऽप्यसत्यं भाषन्ते नैव सत्यधना नराः ॥५९१ ॥
वचोऽश्रुत्वैव तत् सत्यप्रसिद्धिं स्वां निरस्य च ।
अजान् मेषान् गुरुर्व्याख्यदिति साक्ष्यं वसुर्व्यधात् ॥५९२॥
असत्यवचसा तस्य क्रुद्धास्तत्रैव देवताः ।

दलयामासुराकाशस्फटिकासनवेदिकाम् ॥ ५९३ ॥
वसुर्वसुमतीनाथस्ततो वसुमतीतले ।
पपात सद्यो नरकपातं प्रस्तावयन्निव ॥ ५९४ ॥
कूटसाक्ष्यप्रदातुस्ते श्वपचस्येव को मुखम् ।
पश्येदिति वसुं निन्दन् नारदः स्वास्पदं ययौ ? ॥५९५॥
उच्चारूढैर्नरैरात्मा रक्षणीयोऽतियत्नतः ।
दूरारोहपरिभ्रंशविनिपातः सुदुःसहः ॥ ५९६ ॥
देवताभिरसत्योक्तिकुपिताभिर्निपातितः ।
जगाम नरकं घोरं नरनाथो वसुस्ततः ॥ ५९७ ॥
यो यः सूनुरुपाविक्षद् राज्ये तस्याऽपराधिनः ।
प्रजघ्नुर्देवतास्तं तं यावदष्टौ निपातिताः ॥ ५९८ ॥
इति ज्ञात्वा महाघोरमसत्यवचसः फलम् ।
स्वप्नेऽप्युक्तस्य कूटस्य प्रायश्चित्तयति प्रधीः ॥ ५९९ ॥
जलं गलनवस्त्रेण विवेकेन गुणव्रजः ।
सद्दानेन गृहारम्भो वचः सत्येन शुध्यति ॥ ६०० ॥
अस्ति बाह्येषु हेमाद्यमङ्गोपाङ्गेषु भूषणम् ।
नराणामन्तरङ्गाया जिह्वायाः सत्यमेव च ॥ ६०१ ॥
सत्योपयाचितत्वेन पूज्यन्ते देवता अपि ।
देवतेव मनुष्योऽपि ध्रुवं सत्येन वीक्ष्यते ॥ ६०२ ॥
दूरेऽस्तु कूटसाक्ष्यादि सदप्यपरघातकम् ।
फल्गु वाक्यं परीवादं सत्यवादी विवर्जयेत् ॥ ६०३ ॥
तत्सत्यमपि नो सत्यं यत्परस्योपतापकम् ।
असत्यमपि तत्सत्यं यत्परस्योपकारकम् ॥ ६०४ ॥
परस्यालीकमारोप्यं हास्येनाऽपि न पण्डितैः ।
हर्षेण भक्षितं किं न मारणाय विषं भवेत् ? ॥ ६०५ ॥
दोषं खालमिवान्यस्य चालयंस्तेन लिप्यते ।
तज्ज्ञात्वा चतुरस्तेन मार्गे रुद्धमुखो व्रजेत् ॥ ६०६ ॥

धर्माऽसत्यं विशेषेण वर्जनीयं विचक्षणैः ।
[1]सामकः कायजो दोषः सर्वगो वाचिकः पुनः ॥ ६०७
साधूनां सद्वदान्यानां सतीना सत्यवादिनाम् ।
महिमानमिव द्रष्टुं रविरायाति नित्यशः ॥ ६०८ ॥
तृतीयाऽणुव्रतं ज्ञेयं चौर्यवर्जनलक्षणम् ।
पालितं श्रेयसे यत्स्यादत्राऽमुत्राऽपि देहिनाम् ॥ ६०९ ॥
यस्याऽर्थे निजदेहोऽपि महाकष्टे नियोज्यते ।
क्षिप्यन्ते संशये प्राणा जनैः प्रियतमा अपि ॥ ६१० ॥
तत्परस्य धनं येन निस्त्रिंशमतिना हृतम् ।
मृतेरप्यधिका तस्य तेन जीवन्मृतिः कृता ॥ ६११ ॥
आस्तां परभवेऽत्रापि चौर्योपप्लुतचेतसः ।
नित्यं छलेक्षिणः क्वापि शाकिन्या इव नो धृतिः ॥६१२॥
परस्यादत्तं नादत्ते सुधीस्तृणमपि क्वचित् ।
स्पृष्टोऽङ्गुल्याऽपि मातङ्गः किं न मालिन्यकारकः ?॥६१३॥
वैर वैश्वानर व्याधि वाद-व्यसनलक्षणाः ।
महानर्थाय जायन्ते वकाराः पञ्च वर्धिताः ॥ ६१४ ॥
तपस्यपि कृते प्रायः पापं चौर्यकृतं नृणाम् ।
अभुक्तं क्षीयते नैव दृष्टान्तोऽत्र महाबलः ॥ ६१५ ॥
नगरे-श्रीपुराभिख्ये पार्थिवो मानमर्दनः ।
यथार्थनामधेयोऽभूच्छत्रूणां मानमर्दनः ॥ ६१६ ॥
बली महाबलो नाम तत्रैव कुलपुत्रकः ।
पितृभ्यां पाठितः किञ्चिदुच्छन्नस्वजनः क्रमात् ॥६१७॥
निरङ्कुशतया स्वैरं भ्रमन् दुष्कर्मदोषतः ।
द्यूतव्यसनसञ्जातचौर्यवृत्तिरतोऽभवत् ॥ ६१८ ॥
सोऽन्यदा निशि चौर्याय दत्ताख्यधनिनो गृहे ।
गतो जालान्तरेणाऽसौ गृहमध्यमलोकत ॥ ६१९ ॥

---

१ समान ।

तावद्विशोपकैकस्याऽमेलतो लेख्यके कलिम् ।
कुर्वन्तं दत्तमद्राक्षीत् तनयेन समं भृशम् ॥ ६२० ॥
सुदक्षत्वादसौ चौरो व्यचारयदिदं हृदि ।
स्तोकव्यतिकरे स्वार्थभ्रंशकं धिगिमं हहा ! ॥ ६२१ ॥
प्रभूतार्जितवित्तेन विनीतेन सुतेन यः ।
एवं निशाभरे निद्राविमुखः कुरुते कलिम् ॥ ६२२ ॥
तस्य वित्तं हरिष्ये चेद् विदीर्णहृदयस्तदा ।
सद्यो विपत्स्यते तस्माद्यास्याम्यन्यत्र कुत्रचित् ॥६२३॥
गतश्च कामसेनाया वेश्याया भवनं ततः ।
दस्युर्ददर्श तां रूपनिर्जिताऽनङ्गवल्लभाम् ॥ ६२४ ॥
स्वयं स्नानाङ्गरागाद्यं कस्याऽप्यत्यन्तकुष्ठिनः ।
नानोपचारं परमं दैवतस्येव कुर्वतीम् ॥६२५॥ ( युग्मम् )
अचिन्तयच्च नैतस्या अपि मे कल्प्यते धनम् ।
वीक्षते धनलोभेन स्मरवत् कुष्ठिनोऽपि या ॥ ६२६ ॥
परिभ्रमन् पुनर्विप्रगृहेऽथागाद् महाबलः ।
पर्यङ्के शयितं तं चाद्राक्षीत् स्वप्रिययाऽन्वितम् ॥६२७॥
इतश्चोपरिसंस्थेन मूत्रिते तत्करे खुना ।
स्वस्तीति कथयित्वाऽसौ स संभ्रान्तः समुत्थितः ॥६२८॥
चौरेण चिन्तितं लोभः स्वप्नेऽप्येतस्य विद्यते ।
एतावांस्तद् मया कार्यं चौर्यं नैवात्र निश्चितम् ॥६२९॥
किमन्यैरपि न क्षुद्रैर्मुषितैः पामरैर्जनैः ।
सर्वार्थसाधकं राजसौधमेव प्रयाम्यतः ॥ ६३० ॥
इत्येकमानसो गत्वा तत्र खात्रं प्रपात्य च ।
वासवेश्मप्रविष्टोऽसौ तत्र पार्थिवमैक्षत ॥ ६३१ ॥
पल्यङ्कस्थं समं राज्ञ्या शयानं सुखनिद्रया ।
तं दृष्ट्वा मुदितोऽत्यन्तं चौरश्चिन्तितवानिदम् ॥ ६३२ ॥
अहो ! मे भाग्यसंपत्तिर्यदयं सर्वकामदः ।

चिन्तामणिरिवैकान्ते चटितो भूपतिः करे ॥ ६३३ ॥
जिघृक्षुस्तत्करं यावदीक्षतेऽसावितस्ततः ।
तावत्कपाटच्छिद्रेण विशन्तं सर्पमैक्षत ॥ ६३४ ॥
अरेऽत्र किमयं कर्ता विस्मयादिति स क्षणम् ।
निलीय दीपच्छायायां तस्थौ साहसिकाग्रणीः ? ॥६३५॥
सर्पोऽपि वासवेश्मान्तर्गत्वा शय्याबहिःस्थितम् ।
करं राज्ञ्याः प्रसुप्तायाः दष्ट्वा व्याघुट्य निर्ययौ ॥ ६३६॥
तं दृष्ट्वा कौतुकाक्षेपविस्मृतात्मा स तस्करः ।
निःशब्दं द्वारमुद्घाट्य सहसैव तमन्वगात् ॥ ६३७ ॥
सौधादधः समुत्तीर्य समभूमिं गतः फणी ।
स रूपं बिभरांचक्रे महाकायवृषस्य तु ॥ ६३८ ॥
नर्दंश्च स वृषो वृद्धं प्रतोलीद्वारयामिकम् ।
दण्डमुत्पाट्य धावन्तमभिहत्य न्यपातयत् ॥ ६३९ ॥
चौरोऽथ निबिडं पुच्छे गृहीत्वा पृच्छति स्म तम् ।
कस्त्वं भोः ! किमिहायातः किमिदानीं करिष्यसि?॥६४०॥
मर्त्यवाचाऽथ सोऽवोचत् किंकरोऽहं यमस्य भोः ।
राज्ञीप्राहरिकौ हन्तुं तस्यादेशादिहाऽऽगमम् ॥ ६४१ ॥
श्वस्तने तु दिने नव्यराजप्रासादशृङ्गतः ।
सूत्रधारवरस्तुङ्गात् पतित्वा मृत्युमेष्यति ॥ ६४२ ॥
चौरोऽप्याह स्म यद्येतत् तदा कथय संप्रति ।
भविष्यति कथं मृत्युः कुतो वा मम सुन्दर ! ? ॥६४३॥
स ऊचे भद्र मा प्राक्षीः पश्चात्तापकरं वचः ।
निर्बन्धेन पुनः पृष्टो वृषोऽवोचदहो ! शृणु ॥ ६४४ ॥
पुरेऽत्र राजमार्गस्थो वटवृक्षोऽस्ति यो महान् ।
उद्बद्धस्तस्य शाखायां मृत्युमासादयिष्यसि ॥ ६४५ ॥
तच्छ्रुत्वाऽत्यन्तभीतेन तेन मुक्तो वृषः क्षणात् ।
तिरोऽभूत् स पुनः कोऽपि तत्तत्कर्मेरितो सुरः ॥ ६४६ ॥

स द्वितीयदिने सूत्रधारस्य मरणं तथा।
दृष्ट्वाऽभूद् भाविपञ्चत्वभयव्याकुलितो भृशम् ॥ ६४७ ॥
यत उक्तम्—
मस्तकस्थायिनं मृत्युं यदि पश्येदयं जनः।
आहारोऽपि न रोचेत किमुताऽकृत्यकारिता ? ॥ ६४८ ॥
दूरं यास्याम्यतः शाखामिमां पश्यामि नो यथा।
करिष्ये च तपस्तीव्रं सर्वानर्थनिवारकम् ॥ ६४९ ॥
इति निश्चित्य स क्वापि ग्रामे दूरतरे ययौ।
तदासन्नवने दीक्षां जगृहे तापसान्तिके ॥ ६५० ॥
विपन्ने च गुरौ देवायतने देवपूजनम्।
कुर्वन् मठस्थितस्तीव्रमज्ञानं कुरुते तपः ॥ ६५१ ॥
इतश्च श्रीपुरे राजभवनाद् रत्नपेटिकाम्।
गृहीत्वा तस्करः कोऽपि रात्रौ धृष्टः प्रनष्टवान् ॥ ६५२ ॥
स राजपुरुषैः पृष्ठे प्रेर्यमाणो भयद्रुतः।
विवेशोपवने तत्र यत्राऽऽस्ते दस्युतापसः ॥ ६५३ ॥
मुक्त्वा तस्यान्तिके पेटां चौरो दूरं पलायितः।
तां वीक्ष्य तापसः प्रातर्जजल्प मुदिताननः ॥ ६५४ ॥
अहो ! दैवेन मे तोषाद् दत्ता रत्नकरण्डिका।
तपःप्रभावादथवा किं न संपद्यते नृणाम् ? ॥ ६५५ ॥
इति यावत् करेणैतां विषकन्यामिव स्पृशेत्।
तावत् स वेष्टितोऽत्युग्रैरभितो राजपूरुषैः ॥ ६५६ ॥
अरे ! तापसवेषेण मुषितं श्रीपुरं पुरा।
मुमूर्षुरधुना मूर्ख ! ढौकितो राजवस्तुनि ॥ ६५७ ॥
इत्युक्त्वा यष्टि-मुष्ट्याद्यैर्हत्वा बद्ध्वा च ते दृढम्।
पुरः कृत्वा च तं तुष्टाः श्रीपुरं प्रत्यचालयन् ॥ ६५८ ॥
तद्वीक्ष्य तापसो दध्यौ यत्तेन कथितं तदा।
तदेतदुपतस्थे मां व्यक्तमेवं पपाठ च ॥ ६५९ ॥

रक्ष्यते नैव भूपालैर्न देवैर्न च दानवैः ।
नीयते वटशाखायां कर्मणाऽसौ महाबलः ॥ ६६० ॥
अरे ! लपसि किन्त्वेवं गलात्त इव बर्करः ।
इत्युक्तः स तलारक्षैः पापठीति तदेव हि ॥ ६६१ ॥
ततो नीत्वाऽथ तै राज्ञः सोऽर्पितो वस्तुना समम् ।
राजाऽपि संशयापन्नमानसस्तमभाषत ॥ ६६२ ॥
अहो ! सौम्यं वपुर्वेषः प्रशस्यो दृगनुद्धता ।
क्रूरं च चौर्यकर्मेदं सर्वमीक्षे तवाऽघटम्[1] ॥ ६६३ ॥
ऊचे महाबलः स्वामिन्नघटं सर्वमावयोः ।
दैवस्य तु विचित्रस्य न किञ्चिदिह दुर्घटम् ॥ ६६४ ॥
रक्ष्यते तपसा नैव न देवैर्नच दानवैः ।
नीयते वटशाखायां कर्मणाऽसौ महाबलः ॥ ६६५ ॥
अहो ! कोऽसौ वटस्तस्य का शाखा को महाबलः ? ।
राज्ञेत्युक्तः स भूयोऽपि पठति स्म तदेव हि ॥ ६६६ ॥
सगर्भं तद्वचो ज्ञात्वा महादक्षो नरेश्वरः ।
उन्मोच्य बन्धादभयं दत्त्वा पप्रच्छ तं पुनः ॥ ६६७ ॥
उन्मीलज्जीवितव्याऽऽशः स भूपाय यथातथम् ।
खात्रपाता-ऽहिदंशाद्यं वृत्तान्तं सर्वमाख्यत ॥ ६६८ ॥
तच्छ्रुत्वा सर्पदष्टात्मदयितास्मृतिजन्मना ।
रुषाऽरुणदृशाऽऽकाशे लक्ष्यं बद्ध्वा नृपोऽवदत् ॥ ६६९ ॥
अरे रे दैव ! निस्त्रिंश ! बालस्त्रीवृद्धघातक !
कृत्याऽकृत्यविशेषाऽज्ञ ! चौरवच्छिद्रवीक्षक ! ॥ ६७० ॥
अजानतस्तदा मे चेदपजह्रे प्रिया त्वया ।
अनयैव तया शौर्यवृत्त्या मा गर्वमुद्वहेः ॥ ६७१ ॥
अस्मिन् महाबले वाक्यं निजं तदधुना यदि ।
सत्यापयिष्यसे तर्हि ज्ञास्ये त्वां सुभटं वरम् ॥ ६७२ ॥

१ अघटमानम् ।

इत्युदित्वा महीपालो ग्रासवासादिदानतः ।
स्वपुत्रमिव तं तुष्टः पुष्टं चक्रे महाबलम् ॥ ६७३ ॥
तर्जयामास दैवं हि रे हताश ! विधे ! तव ।
निधाय मस्तके पादं क्रीडत्येप महाबलः ॥ ६७४ ॥
दृष्टयाऽपि तया सोऽथ हृदि शल्यायमानया ।
शाखयोद्वेजितोऽत्यन्तमिति राज्ञो व्यजिज्ञपत् ॥ ६७५ ॥
यदि तुष्टोऽसि मे देव ! दूरं देशं तदादिश ।
यत्र पश्यामि नो शाखामिमां दृष्टिविषोरगीम् ॥ ६७६ ॥
त्वमेवं वत्स ! मा भैषीर्दैवोऽपि तव किङ्करः ।
मद्भुजापञ्जरस्थस्य शाखाऽसौ किं करिष्यति ? ॥ ६७७ ॥
निःशङ्कमानसो भोगान् भुङ्क्ष्व सर्वोत्तमानिति ।
धीरयामास तं राजा मन्वानो निर्जितं विधिम् ॥ ६७८ ॥
सोऽन्यदा कृतशृङ्गारः स्वर्णशृङ्खलकादिभिः ।
अश्वारूढः समं राज्ञा राजपाटिकया व्रजन् ॥ ६७९ ॥
प्रियया कार्यमुद्दिश्य व्याघुट्याऽऽकारितो गृहे ।
क्षणं स्थित्वाऽनु राजानं प्रचचाल पुनर्जवात् ॥ ६८० ॥
गतस्तस्य वटस्याधः शङ्कया वेगवत्तरम् ।
यियासुस्ताडयामास निर्दयं कशया हयम् ॥ ६८१ ॥
सहसोल्ललिते तस्मिन् महाबलगले स्थितम् ।
स्वर्णशृङ्खलकं पश्चाद्भागे गत्वा समुच्छलत् ॥ ६८२ ॥
तस्यैव वटवृक्षस्य शाखायास्तीक्ष्णकण्टके ।
स्थितं विलग्य वेगाच्चाऽधस्तादश्वो गतोऽग्रतः ॥ ६८३ ॥
( युग्मम् )
महाबलो गतबलः स्मृत्वा श्लोकं तमादिमम् ।
यावत्पठत्यसौ तावद् मृतः कण्ठग्रहार्दितः ॥ ६८४ ॥
द्रुतं लोकैरधस्तस्योच्चारितस्य कृतोऽखिलः ।
प्रतीकारो वृथा जज्ञ उपदेशो यथा जडे ॥ ६८५ ॥

श्रुत्वा तत्तादृशं तस्यावसानं कर्णशूलकृत् ।
व्यावृत्यागत्य तं दृष्ट्वा विललाप भृशं नृपः ॥ ६८६ ॥
हा वत्स ! किमिदं जातं यदाम्र इव पुष्पितः ? ।
दैवदावानलेनैवमकस्माज्ज्वालितो भवान् ॥ ६८७ ॥
किं मया वट एवाऽयं मूलादुन्मूलितो न हि ।
तस्यैव च्छेदिता शाखा पूर्वमेवाऽथवा न किम् ? ॥६८८॥
कथयन्नपि किं वा न स्थापितोऽन्यपुरे भवान् ? ।
सर्वथा मम दैवेन मतिभ्रंशः कृतो ध्रुवम् ॥ ६८९ ॥
दीपिकेव मतिस्तावद् द्योतते हृदयाङ्गणे ।
नृणां यावन्न दुष्कर्ममयी वात्या विजृम्भिता ॥ ६९० ॥
मयि सत्यपि रक्षार्थं नाथे सबलवाहने ।
अनाथस्येव कष्टं च दशा तेऽजनि कीदृशी ? ॥ ६९१ ॥
किञ्चेदं मम नाथत्वं का वा रक्षा मया भवेत् ।
मृत्योः परवशे लोके कथं मिथ्याभिमानिता ? ॥ ६९२ ॥
आपद् व्यापादिता नैव जरा नो जर्जरीकृता ।
न मृत्युर्निहतो जीव ! गर्वं कुर्वन् न लज्जसे ? ॥ ६९३॥
अहं कर्ता च हर्ताऽहं सगुणोऽहमहं धनी ।
कोऽहमीत्येव तावत् त्वं जीव ! नो वेत्सि तत्त्वतः । ६९४॥
न केवलं कलत्रं मे पुत्रो वाऽयं त्वया हृतः ।
मानं मे मर्दयन्नेवं विधे ! नामाऽप्यपाहतम् ॥ ६९५ ॥
विधिः को वाऽथ किं दैवं कः कृतान्तोऽथवा जने ? ।
जीवैर्नामान्तरेणेदं निजं कर्मैव भुज्यते ॥ ६९६ ॥
तस्मात्तदेव रे ! जीव ! शुभं कर्म समाचरेः ।
इत्थं येनापमानस्ते कदापि न पुनर्भवेत् ॥ ६९७॥
संबोधाऽभिमुखं नाथमित्थं ज्ञात्वाऽथ मन्त्रिणः ।
महाबलस्य संस्कारं श्रीखण्डाद्यैरकारयन् ॥ ६९८ ॥
तद्दिनाच्च शुचा कृत्यचिन्तया चार्दितो नृपः ।

न स प्रकारः कोऽप्यस्ति येन सा भवितव्यता ।
छायेव निजकायस्य लङ्घ्यते हन्त ! जन्तुभिः ॥७१२॥
देहपुष्टिं मनस्तुष्टिं परां वृद्धिं यशः-श्रियोः ।
कुर्वन्नपि करोषि त्वं न तद् येन सुखी भवेः ॥ ७१३ ॥
आस्तामितरदोषेव महालज्जा मनस्विनाम् ।
पुनर्जन्मपुनर्मृत्युमालया यन्नियन्त्रणम् ॥ ७१४ ॥
तस्मादार्तिबदर्येदं रम्भास्तम्भनिभं मनः ।
अज्ञानपवनं जित्वा धृष्यमाणं निवारय ॥ ७१५ ॥
अस्तु वस्त्वखिलं चित्तप्रतिबन्धस्तु दुःखदः ।
संबद्धेऽपि नखे मांसालग्ने नो वेदना त्रुटौ ॥ ७१६ ॥
वृद्धिस्तु बीजाद् रागस्य परे तु सहकारिणः ।
मनसो नयनस्येव गते रागे सुखं भवेत् ॥ ७१७ ॥
पञ्चादिनप्राघुणकान् प्राणान् विज्ञाय तत्कृते ।
को रागः कश्च विद्वेषः को निजो वाऽथ कः परः ? ॥७१८॥
अरण्यरुदितप्रायैर्दैवोपालम्भनैः किमु ।
विकल्पकल्पनैः किं वाम्भोधिगाहनसंनिभैः ? ॥७१९॥
आत्मतत्त्वं निरीक्षस्व किं तीता-ऽऽगामिशोचनैः ? ।
क्रमारूढवद् दूरं पश्यतां जायते भ्रमः ॥ ७२० ॥
इत्यसौ गुरुणा भूपः संबोध्य पटुवाचया ।
नीत्वा मध्यस्थमार्गेण प्रापितः पदमव्ययम् ॥ ७२१ ॥
इति श्रुत्वा विभाव्याऽथ महाबलकथानकम् ।
सदा भाव्यं परद्रव्यपरिहारपरायणैः ॥ ७२२ ॥
उक्तं च—
आत्मवत् परभूतानि परद्रव्याणि लोष्ठवत् ।
मातृवत् परदारांश्च यः पश्यति स पश्यति ॥ ७२३ ॥
तुर्यं ब्रह्मव्रतं नाम परमब्रह्मकारणम् ।
शौचानां परमं शौचं तपसां परं च तपः ॥ ७२४ ॥

एकरात्रमपि प्रायेणाऽजिह्मब्रह्मचारिणः ।
पुराणमतिभिः पुण्यमुन्यते विगतोपमम् ॥ ७२५ ॥
ब्रह्मव्रतरता ये च विरता वाऽन्ययोषितः ।
महातेजस्विनस्ते स्युर्वन्द्या दिविषदामपि ॥ ७२६ ॥
परित्यक्तान्यकान्तानां नराणामथ योषिताम् ।
विधिरप्यनुकूलाय दृष्टान्तोऽत्र निशम्यताम् ॥ ७२७ ॥
अङ्गदेशधराख्यातमास्ते धारापुरं पुरम् ।
तत्रासीत् सुन्दराह्वानराजा प्रकृतिसुन्दरः ॥ ७२८ ॥
एकैव दयिता तस्य भाग्यसौभाग्यभूरभूत् ।
सतीजनशिरोरत्नं नाम्ना मदनवल्लभा ॥ ७२९ ॥
तत्कुक्षिसरसीहंसौ वंशौ स्वकुलश्रियः ।
कीर्तिपाल-महीपालाभिधौ जातावुभौ सुतौ ॥ ७३० ॥
न्यायधर्मैकनिष्ठस्य राज्ञो हृदि विशेषतः ।
परनारीषु सोदर्यव्रतं दृढमवस्थितम् ॥ ७३१ ॥
तच्च लोकं च सत्त्वैकनिधेः पालयतो भृशम् ।
सुस्वामिलाभप्रीत्येव कीर्तिरुल्ललिता दिवि ॥ ७३२ ॥
अन्यदा वासवेश्मस्थं तमभ्येत्य निशाभरे ।
विषण्णवदना मन्दं जगाद कुलदेवता ॥ ७३३ ॥
अहो ! राजन्नवस्था ते विषमा भविताऽधुना ।
तत्राऽशक्यप्रतीकारो मयाऽपि, किमु मानवैः ? ॥ ७३४ ॥
स्वप्रभावेण किन्त्वस्यास्त्वदीयवचनादहम् ।
तव नव्यं वयो यावत् कुर्वे कालविलम्बनम् ॥ ७३५ ॥
तच्छ्रुत्वा तां नृपो नत्वा हृदि व्याकुलितः क्षणम् ।
स्वभावधीरतादत्तावष्टम्भ इदमब्रवीत् ॥ ७३६ ॥
अर्जितं देवि ! जीवेन यत्पुरा कर्म दुष्कृतम् ।
तदेव भुञ्जतस्तस्य क्रियतेऽन्यैः किमन्तरा ? ॥ ७३७ ॥
पटबन्धकवज्जीवः कर्म बध्नात्यनेकधा ।

केवलं वायको दैवः शालापतिरिवानुगः ॥ ७३८ ॥
बलादेवात्मजत्वेन सकाशात् पितुरात्मनः ।
दुष्कर्माऽपि सुकर्मेव गृह्णीते भोगमायुषः ॥ ७३९ ॥
वृद्धभावेऽपि मे देवि ! दुर्दशा भाविनी यदि ।
अधुनैव तदेषाऽस्तु सज्जोऽस्मि न विलम्ब्यताम् ॥७४०॥
इत्युक्त्वा देवता स्थानं जगाम निजमुन्मनाः ।
नृपोऽपि सहसा सौख्यप्रतिबन्धमपाकृत ॥ ७४१ ॥
आपत्ति-मृत्यु-शत्रूणामवश्यंभाविनां भटैः ।
संमुखैरेव गन्तव्यं नश्यतां हीनसत्त्वता ॥ ७४२ ॥
सती प्रेमवती भार्या भक्तौ मुग्धमुखौ सुतौ ।
कुटुम्बमिदमात्मैव तत्तेन सह याम्यहम् ॥ ७४३ ॥
निश्चित्येदममात्याय कथयामास, यत् त्वया ।
प्रवृत्तिर्मम नो कार्या राज्यं वाह्यं यथाविधि ॥ ७४४ ॥
देशान्तरमितो यास्ये कियत्कालमहं पुनः ।
ज्ञापितोदन्तया राज्ञ्या समं पुत्रद्वयेन च ॥ ७४५ ॥
भाव्यवस्थोचितं वेषमथ कृत्वा नराधिपः ।
विहाय तृणवत् सर्वमेकचित्तो विनिर्ययौ ॥ ७४६ ॥
शम्बलार्थं च संगोप्याऽङ्गुलीयं यत् सहाऽऽहृतम् ।
हृतं तदपि चौरेण सुप्तस्याऽस्य श्रमात् पथि ॥ ७४७॥
स गच्छन् सततं मार्गे स्वयं गाढोऽपि पौरुषात् ।
कातरामबलात्वेन देवीं तु प्रतिपालयन् ॥ ७४८ ॥
क्षुधा-तृष्णासमक्रान्तौ भक्त-नीरादिढौकनात् ।
रुदन्तौ वारयन् पुत्रौ बोधयंश्च पदे पदे ॥ ७४९ ॥
एकयैव दिशा गुर्वीमुर्वीमुल्लङ्घ्य स क्रमात् ।
दिनैः कतिपयैः प्राप पुरं पृथ्वीपुराभिधम् ॥७५०॥
(विशेषकम्)

तत्र वप्रबहिर्भागे श्रीसारश्रेष्ठिवाटके ।
श्रेष्ठिना कृपया दत्ते स्थितिमात्रेऽवसद् नृपः ॥७५१॥
अनभिज्ञः स्वयं कर्मकरणे लघुकौ सुतौ ।
राज्ञी तु स्त्रीस्वभावेन कुशला गृहकर्मणि ॥ ७५२ ॥
प्रातिवेश्मिकगेहेषु गोमयोत्सारणादिकम् ।
कर्म निर्माय सर्वेषां निर्वाहयति भोजनम् ॥ ७५३ ॥
साधुत्वेन सुशीलेन तयोः सुवचनेन च ।
स्वल्पेऽपि विहिते कार्ये जनाः सुबहु कुर्वते ॥ ७५४ ॥
स्थानभ्रंशाद् नीचसंगात् खण्डनाद् घर्षणादपि ।
अपरित्यक्तसौरभ्यं वन्द्यते चन्दनं जनैः ॥ ७५५ ॥
चीवरं जीर्णमुत्तीर्णं भोजनं रूक्षशीतलम् ।
गौरवेण जनादाप्तं बभूव प्रीतये तयोः ॥ ७५६ ॥
यतः—
किं कृतं विधिना यावत् सतां शीलमखण्डितम् ।
गतं तत्तु यदा कालं संपद्यपि विपत्तयः ? ॥ ७५७ ॥
दूरदेशान्तरायातस्तत्स्थानाद् नातिदूरतः ।
वाणिज्यकारिणां सार्थो महानावासितोऽन्यदा ॥ ७५८ ॥
तस्मिन् घृत-कणिक्कादि सुलभं, दुर्लभाः पुनः ।
कर्मकाराः, ततः स्वीयपुत्रपुष्टिविधित्सया ॥ ७५९ ॥
राज्ञी कर्मकरीभावं करोति विनयान्विता ।
प्राज्यभोज्यादिना चिन्तां तेऽपि तुष्टाः प्रकुर्वते ॥७६०॥
अन्येद्युः सोमदेवाख्यसार्थेशस्य दृशोः पथि ।
पतिताऽन्तर्विकाराय निर्विकाराऽप्यजायत ॥ ७६१ ॥
रूपे ग्रस्तेऽपि दौःस्थ्येन तस्या लावण्यमुज्ज्वलम् ।
स्पष्टं बकुलमालायाः शुष्काया अपि सौरभम् ॥ ७६२ ॥
ततः सा तेन शैथिल्यं गाढं च निजमानसैः ।
स्वगृहस्वामिनीभावे भणिता कुपिता भृशम् ॥ ७६३ ॥

गतरागा सरागेऽपि मलिनेऽप्यमलाऽभवत् ।
तस्य चित्ते स्थिताऽप्येषा सत्याः शक्तिर्महाद्भुता ॥७६४॥
अथ तस्याः स्वभावं तं विदित्वा सार्थनायकः ।
दुष्टोऽप्यन्तर्बहिर्हृत्त्या क्षमयामास सादरम् ॥ ७६५ ॥
सार्थेशकथनात् तस्य स्त्रीभिर्विश्वासिताऽधिकम् ।
तत्रायाति सदा राज्ञी कर्म कर्तुं यथास्थिति ॥ ७६६ ॥
अथ प्रयाणदिवसे मध्याह्नसमये पुनः ।
विशेषकार्यमुद्दिश्य संकेतितवधूजनैः ॥ ७६७ ॥
आकार्याऽलीककृत्येन दिनशेषं विलम्बितम् ।
तां प्रगृह्य स्वसार्थेन प्रतस्थे स्वपुरोपरि ॥ ७६८॥
( युग्मम् )
गच्छता विविधोपायैः क्षोभ्यमाणाऽपि तेन सा ।
ध्यायन्ती स्वपतिं चित्ते मौनमेव समाश्रयत् ॥ ७६९ ॥
दृशैव क्रूरया तस्याः स पापाहितदुर्मतिः ।
न शशाक व्यलीकाय तत्रैवं यान्ति वासराः ॥७७०॥
इतश्च,
मध्यागतायामद्यापि किमेषा मद्विरोधिनी ? ।
अत्र स्थितवती तीव्रमत्सराद् नृपवल्लभाम् ॥७७१॥
निष्कास्य दूरतः स्वैरं विजृम्भितमवस्थया ।
गृहे राज्ञो गृहं येनारण्याभं गृहिणीं विना ॥७७२॥
( युग्मम् )
अवस्थासंगमादेकमन्यद् राज्ञीविनिर्गमात् ।
पुटपाकसमं दुःखं तदा जातं महीपतेः ॥७७३॥
सहिष्ये सर्वमप्येतत्कठोरहृदयोऽस्म्यहम् ।
राज्ञी च मद्वियोगार्ता भविष्यति कथं हहा ! ? ॥ ७७४ ॥
एतदप्यस्तु रे दैव ! पूर्यन्तां ते मनोरथाः ।
इति दैवमुपालभ्य संबोध्यात्मानमात्मना ॥ ७७५ ॥

यावत् किंकृत्यतामूढो निविष्टोऽस्ति नृपः प्रगे ।
तावत्तत्र समायातः श्रीसारः श्रेष्ठिपुङ्गवः ॥७७६॥
( विशेषकम् )
स्ववाटकमनुष्याणां तप्तिं कुर्वस्तमैक्षत ।
ऊचे चाद्य कथं भद्र ! सचिन्त इव लक्ष्यसे ? ॥ ७७७ ॥
लज्जाशोकभराक्रान्तः स यावन्नोत्तरं ददौ ।
तावज् ज्ञात्वा यथावृत्तमाख्यायि प्रातिवेश्मिकैः ॥७७८॥
श्रेष्ठ्युवाच महाभाग ! कर्तव्या नाऽधृतिस्त्वया ।
भोजनाच्छादनाद्य ते करिष्येऽहमतः परम् ॥ ७७९ ॥
मयाऽत्र कारिते चैत्ये त्रिकालं देवमर्चय ।
पुत्रौ च वाटिकापुष्पाण्यवचित्योपनेष्यतः ॥ ७८० ॥
प्रतिपद्य तथा कर्तुमारेभे ससुतो नृपः ।
पटहं वादयेद् दैवो यथा नृत्येत् तथा कृती ॥७८१॥
अनभिज्ञोऽप्यसौ दक्षस्तथाऽभूत्तत्र कर्मणि ।
श्रीसारस्य यथा बाढं रञ्जयामास मानसम् ॥ ७८२ ॥
यथा लक्ष्म्या विदग्धत्वं विभ्रमं यौवनश्रिया ।
प्रेष्यभावं तथा जीवः शिक्ष्यते दुरवस्थया ॥ ७८३ ॥
अपरेद्युर्गतः श्रेष्ठी यावद्वाटीं निरीक्षितुम् ।
तावत्तदेकदेशस्थौ बद्धलक्ष्यौ च पक्षिषु ॥ ७८४ ॥
धनुष्किकाशरव्यग्रकरावाखेटचापलम् ।
कुर्वन्तौ सहसाऽद्राक्षीदुभावपि कुमारकौ ॥ ७८५ ॥
( युग्मम् )
पापकर्मेक्षणाज्जातकोपाटोपारुणेक्षणः ।
तौ भृशं ताडयामास बभञ्ज च धनुःशरान् ॥ ७८६ ॥
बहिः कृत्वा च गत्वा च बभाषे तत्पितुः पुरः ।
क्षणमप्यत्र न स्थेयं त्वया यस्येदृशौ सुतौ ॥ ७८७ ॥
साक्षेपमिति कृत्वाऽस्मिन् निजं धाम गते नृपः ।

आगच्छन्तौ सुतावश्रुमुखावैक्षत दुःखितः ॥ ७८८ ॥
न्यवारयच्च मा वत्सौ ! रुदितं किं करोम्यहम् ? ।
दोषः कस्याऽपि नान्यस्य स्वकर्मैवाऽपराध्यति ॥७८९ ॥
संवृत्य बहिराकारं, कृतं तनयबोधनम् ।
अन्तस्तु दुःखसंघट्टः कोऽप्यवाच्यस्तदाऽभवत् ॥ ७९० ॥
कस्याग्रे कथ्यते हन्त ! श्रेष्ठी तत्तादृशोऽपि यत् ।
इत्थमेकपदेनैव पुत्रौ मे निरकाशयत् ॥ ७९१ ॥
प्रतिकूले विभौ किंवा सुधाऽपि हि विषायते ।
रज्जुः सर्पीभवेदाखुबिलं पातालतां व्रजेत् । ॥ ७९२ ॥
तमायते प्रकाशोऽपि गोष्पदं सागरायते ।
सत्यं कूटायते मित्रं शत्रुत्वेन निवर्तते ॥ ७९३ ॥
यद्भावि तद्भवत्येव विचिन्त्यैषोऽचलत्ततः ।
पुरस्कृत्य सुतौ शून्यमुखोऽन्यनगरं प्रति ॥ ७९४ ॥
( कलापकम् )

क्वापि कन्दफलाहारैः क्वाऽपि भैक्ष्यान्नभोजनैः ।
भिक्षामप्यलभमानो निन्द्यमानश्च कुत्रचित् ॥ ७९५ ॥
प्रायः स्वं शोचयन् सिञ्चन् यथालब्धेन नन्दनौ ।
अनवस्थं परिभ्राम्यन् शयानो देश्यवेश्मसु ॥ ७९६ ॥
इति कष्टेन महता बहुमुल्लङ्घ्य सोऽवनीम् ।
प्रापदेकामरण्यानीं यमस्याऽपि भयङ्कराम् ॥ ७९७ ॥
स्वैरिणीव बहुधवा मत्तेव मदनान्विका ।
बाणा ऽसनाढ्या सेनेव लङ्केव सपलाशका ॥ ७९८ ॥
अगण्यमत्तमातङ्गसङ्गमा म्लेच्छभूरिव ।

१ तम इव आचरति । २ धवा वृक्षविशेषा, स्वामिनश्च । ३ मदना धत्तूरा. कामश्च । ४ बाणा-ऽसनौ चित्रक-जीरकवृक्षौ, धनूंषि च । ५ पलाशका राक्षसा पलाशाश्च । ६ मातङ्गा हस्तिनश्चाण्डालाश्च ।

वैरिधाटीव दुर्दश्याऽनेकरक्ताक्षभीषणा ॥ ७९९ ॥
किंवाऽथ बहुना बालविधवस्त्रीव या सदा ।
विविधश्वापदावासस्तथा शबरसंभृता ॥ ८०० ॥
( त्रिभिर्विशेषकम् )
कथञ्चित्तामपि क्रान्त्वा यावदग्रे व्रजत्यसौ ।
आजगाम नदी तावद् दुस्तराऽऽपदिवापरा ॥ ८०१ ॥
अस्यां न स्यात्समुत्तारः कथमेवं वितर्कयन् ।
लब्धोपायः सुतं स्कन्धे कृत्वोत्तार्य परे तटे ॥ ८०२ ॥
मुमोचैकं द्वितीयं त्वानेतुं भूयोऽविशद् नदीम् ।
अन्तराले गतस्तावदतिपूरेण पातितः ॥ ८०३ ॥
कुर्वन्नितस्ततो बाहू प्राप्तकाष्ठैकखण्डकः ।
पञ्चरात्रेण तत्तीरमाससाद विषादभाक् ॥ ८०४ ॥
दध्यौ चेति हताशस्य ही विपाकः कथं विधेः ।
क्व तन्मे मुदित राज्यं क्वैषाऽनर्थपरम्परा ? ॥ ८०५ ॥
राज्यभ्रंशेऽपि चेद्दैव ! कृतं कान्तावियोजनम् ।
ततः किं जीवितः, किंवा ज्ञातं पुत्रार्तिमीक्षितुम् ?॥८०६॥
ध्रुवं दुष्कृतिनां दैवो दत्ते दुःखाय जीवितम् ।
कृमिरागकृता देशे मत्स्यानामिव पोषणम् ८०७ ॥
अथवा,
कस्य वक्तव्यता नास्ति सोपायं को न जीवति ।
व्यसनं केन न प्राप्तं कस्य सौख्यं निरन्तरम् ?॥ ८०८ ॥
मृत्यावपि कृतेऽवश्यं निजपापं विशेषतः ।
भवान्तरेऽपि भोक्तव्यं तस्मादत्रैव भुज्यते ॥ ८०९ ॥
किञ्च,
अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैन्यमत्राऽतिरिच्यते ॥ ८१० ॥

१ रक्ताक्षा महिषा, लोहितनेत्रा म्लेच्छाश्च ।

स निर्वापितसन्ताप इति सूक्तसुधारसैः ।
स्वसंवेद्येन योगीव स्वं चकार दृढं मनः ॥ ८११ ॥
लब्ध्वा परपदो दीनो हीनत्वं नैव मुञ्चति ।
शिरश्छेदेऽपि धीरस्तु वीरत्वं नैव मुञ्चति ? ॥८१२॥
तथा,
न तानि फलसंपत्तौ तुङ्गानि विगते फले ।
शिखराणि महाद्रूणां मनांसि च मनस्विनाम् ॥ ८१३ ॥
ततो गत्वा तदासन्नग्रामे कस्याऽपि वेश्मनि ।
कौटुम्बिकस्य भिक्षार्थं प्रविष्टस्तेन वीक्षितः ॥ ८१४ ॥
संभाषितश्च कस्त्वं भोः ! क्षत्रियोऽहमिति ब्रुवन् ।
गृहकर्मकरत्वेऽसौ पृष्टो भूयः कुटुम्बिना ?॥ ८१५ ॥
आमेति कथयंस्तत्र कर्मकृत्ये नियोजितः ।
सुन्दरो भक्तवस्त्रादिसाराकरणपूर्वकम् ॥ ८१६ ॥
विनीतत्वेन तस्याऽथ घृतभक्तादिलाभतः ।
बहुलोपचयात् कान्तिः प्रत्यावृत्ता तनौ क्रमात् ॥ ८१७ ॥
कौटुम्बिकप्रियाऽन्येद्युस्तं वीक्ष्य मदनातुरा ।
असतीजनयोग्यानि वचांसि बहुधाऽभ्यधात् ॥ ८१८ ॥
तच्छ्रुत्वा चकितो राजाऽचिन्तयद् ध्रुवमत्र मे ।
विधिः सुस्थानमानाद्यं शीलभङ्गाय निर्ममे ॥ ८१९ ॥
अरे दैव ! त्वदायत्तं कामं वित्तादि गच्छतु ।
ममायत्तं पुनर्वृत्तं हर्तुं कस्याऽस्ति योग्यता ? ॥ ८२० ॥
यत्किञ्चिदुत्तरं दत्त्वा ज्ञात्वा तस्या महाग्रहम् ।
विरुद्धा भूः परित्यज्येति कृत्वा निर्ययौ ततः ॥ ८२१ ॥
यतः,
ये न स्खलन्ति ते दक्षाः कृष्णकेशतमोभरे ।
वार्धके तु सदोद्द्योतः शिरःस्थपलितेन्दुना ॥ ८२२ ॥
स्वजनस्वर्णशाकानामापत्तापच्छिदास्वपि ।

दधतामन्तरौज्ज्वल्य सकारो धुरि शोभते ॥ ८२३ ॥
गच्छन् स्वल्पदिनैरेवं सुन्दरः श्रीपुराऽभिधम् ।
पुरं प्राप्य तदासन्नोपवनाम्रतरोरधः ॥ ८२४ ॥
स्वजनस्येव तस्यैव कृताहारोऽमलैः फलैः ।
विशश्राम श्रमायातनिद्रालब्धसुखः क्षणम् ॥ ८२५ ॥
तदा तत्र पुरे राज्ञि विपन्ने पुत्रवर्जिते ।
हस्त्यश्वचामरच्छत्रकुम्भाख्यमधिवासितम् ॥ ८२६ ॥
पञ्चशब्दनिनादेन राजलोकपुरस्कृतम् ।
भ्रमत् तत्राययौ दिव्यपञ्चकं यत्र सुन्दरः ॥ ८२७ ॥
( युग्मम् )
शीलेन सुन्दरं शीघ्रमुपविष्टं विलोक्य तम् ।
हयेन हेषितं हस्तिपतिना बृंहितं कृतम् ॥ ८२८ ॥
दुरितक्षालनायेवाऽपतत् कुम्भाम्बु मस्तके ।
उपरिष्टात् स्थितं छत्रं लुलितं चामरद्वयम् ॥८२९॥
स करीन्द्रमथाऽऽरुह्य दिव्यवेषधरो निशि ।
मन्त्र्यादिभिर्नतो नीत्या प्रविष्टः पुरमुत्सवैः ॥ ८३० ॥
विधिना कुर्वतो राज्यं तस्य भाग्यप्रभावतः ।
ययुः सर्वेऽपि सामन्ता अनम्रा अपि नम्रताम् ॥ ८३१ ॥
निपत्य पादयोः किन्तु प्रधानैर्भणितोऽप्यसौ ।
निजप्रियतमादुःखाद् न मेने दारसंग्रहम् ॥ ८३२ ॥
वरं कारागृहे क्षिप्तो वरं देशान्तरभ्रमी ।
वरं नरकसंचारी न द्विभार्यः पुनः पुमान् ॥ ८३३ ॥
अभोजनो गृहाद् याति नाप्नोत्यम्बुच्छटामपि ।
अक्षालितपदः शेते भार्याद्वययुतो नरः ॥ ८३४ ॥
अथाऽन्योन्यं वियुक्तौ तौ कुमारावत्यवस्थया ।
बहु भ्रान्त्वा क्रमात्तत्राऽऽगत्याऽऽरक्षान्तिके स्थितौ ॥८३५
अन्यदा दैवभोगेन सोमदेवोऽपि सार्थपः ।

वणिज्यार्थं पुरे तस्मिन्नागत्याऽऽवासितो बहिः ॥८३६॥
गृहीत्वोपायनं श्रेष्ठं गत्वा च नृपसन्निधौ ।
ययाचे निजसार्थस्य रक्षार्थं निशि यामिकान् ॥ ८३७ ॥
राज्ञाऽऽदिष्टस्तलारक्षः प्रेषयंस्तानथाऽन्यदा ।
तावुभौ भ्रातरौ प्रैषीदेकस्यां दिशि रक्षितुम् ॥ ८३८ ॥
तयोस्तत्रस्थयो रात्रिविनोदाय कनीयसा ।
ज्येष्ठः पृष्टः कथां तेन स्वमेवाऽऽख्यायि वृत्तकम् ॥ ८३९॥
तत्र कर्मकरी मध्यस्थिता सार्थे सहागता ।
प्रायेण जाग्रती दुःखात् तत्तदासन्नभावतः ॥ ८४० ॥
श्रुत्वा समूलपर्यन्तं राज्ञी मदनवल्लभा ।
उद्भिद्यत्स्नेहशोकाभ्यां विह्वलीभूतमानसा ॥ ८४१ ॥
चिरान्मे मन्दभाग्याया हा ! वत्सौ मिलितौ युवाम् ।
इत्यागत्य तयोः कण्ठग्रहं कृत्वाऽरुदत्तराम् ॥ ८४२ ॥
( त्रिभिर्विशेषकम् )

तज् ज्ञात्वा कुपितः सार्थपतिश्चेटैर्हठेन ताम् ।
दूरमुत्सार्य तौ धृत्वा भूपतेः प्रातरार्पयत् ॥ ८४३ ॥
सोपालम्भमवादीच्च देवाऽऽरक्षेण सुन्दरौ ।
यामिकौ प्रहितावस्मन्मर्त्यधूर्तत्वकारिणौ ॥ ८४४ ॥
नृपोऽवोचत्तलारक्षं काविमौ सोऽप्यचीकथत् ? ।
देव ! जानामि नो सम्यक् कियत्कालादिहागतौ ॥८४५॥
निरीक्षमाणस्तौ सम्यगुपलक्ष्य सुतौ नृपः ।
दुःखात्त्रातुमिवात्मानं रोमाञ्चकवचं दधौ ॥ ८४६ ॥
तथाऽपि गुरुगाम्भीर्याद् विधायाकारगोपनम् ।
अवोचदिति साक्षेपं युवाभ्यां किमु रे ! कृतम् ? ॥८४७॥
आप्रष्टुमिव तौ दुःखभयेनाऽऽलिङ्गितौ ततः ।
सत्यमाभाणकं जातं यतो रक्षस्ततो भयम् ॥ ८४८ ॥

तयोर्ज्येष्ठोऽवदद् देव ! रात्रावद्य मया लघोः ।
सोदरस्य पुरः ख्यातं स्वचरित्रकथानकम् ॥ ८४७ ॥
तच्छ्रुत्वा काऽपि सार्थस्त्री द्रुतमागत्य सन्निधौ ।
युवां पुत्रौ ममेत्युक्त्वाऽस्मत्कण्ठलगिताऽरुदत् ॥ ८४८ ॥
सार्थेश ! वद भोः ! सत्यं कैषा किंवा करोति ते ? ।
पृष्टे राज्ञेति सोऽवादीद् देव ! पृथ्वीपुरान्मया ॥ ८४९ ॥
आनीता सत्यमेवैतद्गृहे कर्म करोति मे ।
कुलं तु विमलं तस्याः सतीत्वेनाऽनुमीयते ॥ ८५० ॥
( युग्मम् )
ततः प्रैषीन्नरानेषा संबोध्यानीयतामिह ।
बलात्कारस्तु नो कार्यः शिक्षयित्वेति भूपतिः ॥८५१॥
तेऽपि गत्वा वलित्वा च शशंसुर्देव ! नैति सा ।
केवलं क्वाऽपि नैष्यामीत्युदित्वाऽभूदधोमुखी ॥ ८५२ ॥
अथ सद्यः स्वयं राजा राजपाटीमिषाद् बहिः ।
गत्वा व्याघुट्य सार्थान्तः सार्थेशावासमागतः ॥ ८५३ ॥
भद्रासनोपविष्टस्य तस्य दृग्गोचरं गता ।
राज्ञी तत्रैकदेशस्था कुचेलाऽतीवदुर्बला ॥ ८५४ ॥
असंस्कृतवपुर्दीना तद्दिने तु विशेषतः ।
अपास्ताऽशेषकर्तव्या पुत्रग्रहमहार्तितः ॥ ८५५ ॥
( युग्मम् )
चिरात् तत्तादृशावस्थां दृष्ट्वा मदनवल्लभाम् ।
लज्जया यदि नाक्रन्दं चकार धरणीधवः ॥ ८५६ ॥
उवाच मदने ! देवि ! किं मां त्वं नोपलक्षसे ।
इत्युक्ता प्रत्यभिज्ञाय स्वपतिं सहसैव सा ? ॥ ८५७ ॥
हर्षौ-त्सुक्य-त्रपा-जाड्य-वितर्कादिरसैर्भृशम् ।
संकीर्णमानसा तस्थौ पत्युः पादार्पितेक्षणा ॥ ८५८ ॥
निपत्य पादयोः सोमदेवोऽप्यमलमानसः ।

क्षमयामास तां भीतो गर्हयन् निजदुष्कृतम् ॥ ८५९ ॥
ययाचे चाऽभयं देवीं साऽप्यनल्पस्वभावतः ।
तत्तस्मै दापयामास कुपितादपि भूपतेः ॥ ८६० ॥
अथ राजा विधाप्यैनां चारुनेपथ्यभूषिताम् ।
पुरो न्यस्य करिस्कन्धारूढस्तूर्यमहारवैः ॥ ८६१ ॥
राजचिह्नाञ्चितो नव्यपरिणीत इवोच्चकैः ।
वीक्ष्यमाणः पुरस्त्रीभिरगाद्धवलमन्दिरम् ॥ ८६२ ॥
( युग्मम् )
कीर्तिपाल-महीपालावप्याकार्य सुतावुभौ ।
सस्नेहं दृढमालिङ्ग्य चकार विषयाधिपौ ॥ ८६३ ॥
मिलितानां चिरात्तेषामेकत्र स्वस्थचेतसाम् ।
आत्मीयाऽऽत्मीयवृत्तान्तप्रश्नाख्यानविधायिनाम् ॥८६४॥
अनुभूतमहादुःखादसंख्यं यदभूत् सुखम् ।
तत्त एव स्म जानन्ति केवली वा न चाऽपरः ॥ ८६५ ॥
प्राचीनदुष्कृतेनैव वियुक्तमखिलं पुनः ।
शीलसत्त्वप्रभावेण मिलितं च कुटुम्बकम् ॥ ८६६ ॥
इतश्च—
न्यस्य सिंहासने स्वामिपादुके तत्तदाज्ञया ।
मन्त्री धारापुरे राज्यं तथैव निरवाहयत् ॥ ८६७ ॥
ज्ञात्वाऽथ नाथवृत्तान्तं सुबुद्धिः श्रीपुराभिधे ।
पुरे समर्प्य विज्ञप्तिं प्राहिणोद् निजपूरुषम् ॥ ८६८ ॥
निर्विलम्बमसौ गत्वा तत्र वेत्रिनिवेदितः ।
नृपमानम्य विज्ञप्तिं मुमोच पादयोः पुरः ॥ ८६९ ॥
तामुद्वेष्ट्य नृपादेशाद् निदेशकरणोद्यतः ।
प्रकाशं वाचयामास सुविद्वानङ्गलेखकः ॥ ८७० ॥
यद्यथा—
स्वस्तिश्रीश्रीपुराभिख्ये पुरे भाग्यैकवेश्मनः ।

प्रतापाक्रान्तविक्रान्तप्रत्यार्थिपृथिवीभुजः ॥ ८७१ ॥
दिक्कन्याश्रवणोत्तंसीकृतकीर्तिसरोरुहः ।
महाराजाधिराजस्य श्रीसुन्दरमहाप्रभोः ॥ ८७२ ॥
चरणाम्भोरुहौ धारापुरादादेशकारकः ।
सुबुद्धिः सादरोत्कण्ठं नत्वा विज्ञपयत्यदः ॥ ८७३ ॥
( विशेषकम् )
स्वामिपादद्वयीरेणुकणेन मयकाऽपि यत् ।
यथादेशेन निर्व्यूढं प्रभावः प्राभवो हि सः ॥ ८७४ ॥
चकोर इव चन्द्रस्य रथाङ्ग इव भास्वतः ।
चातको जलदस्येव वसन्तस्येव कोकिलः ॥ ८७५ ॥
उत्कण्ठितः समस्तोऽपि जनो देवस्य दर्शनम् ।
वाञ्छत्यत्र प्रसद्येतः शीघ्रं पादोऽत्रधार्यताम् ॥ ८७६ ॥
( युग्मम् )
इत्याकर्ण्य स्वलोकस्य रक्तिं भक्तिं च मन्त्रिणः ।
चिरात् स्मृत्वा नृपः प्रीतोऽकथयत्साधु साधु भोः!॥८७७॥
बुद्धिः सिद्धिः परा भक्तिर्येषामेषा गुणत्रयी ।
त एव सेवका राज्ञः, कलत्रमितरे पुनः ॥ ८७८ ॥
अथ ज्येष्ठसुतं तत्र स्थापयित्वा निजे पदे ।
राजवर्गं समादिश्य पौरानापृच्छ्य सादरम् ॥ ८७९ ॥
सकलत्रसुतो भूरिपरिवारसमन्वितः ।
प्रयाणैरनवच्छिन्नैर्ययौ धारापुरं नृपः ॥ ८८० ॥
प्रवेशाद्युत्सवं तत्र मन्त्रिसामन्तनागराः ।
कृत्वा निवेद्य सर्वस्वं मुदितास्तं सिषेविरे ॥ ८८१ ॥
अन्येद्युर्बहिरुद्याने ज्ञानिनं मुनिमागतम् ।
श्रुत्वा गत्वा च नत्वा च स्वं प्राच्यं कर्म पृष्टवान् ॥८८२॥
मुनिर्ज्ञानाद् विदित्वोचे महाभाग ! पुरा भवे ।
इभ्यो बभूव चम्पायां शङ्खाख्यः श्रीश्च तत्प्रिया ॥ ८८३ ॥

तद्युतः सततं चक्रे स चैत्येषु जिनार्चनम् ।
तारुण्ये त्वागते दैवाद्धर्मे ध्वस्ता मतिर्भृशम् ॥ ८८४ ॥
विपद्याऽथ तयोर्जीवावजायेतां युवां क्रमात् ।
तेनादौ राज्यमासाद्य पश्चाज्जातौ सुदुःखितौ ॥ ८८५ ॥
निजबुद्ध्याऽपि यच्छीलं युवाभ्यां पालितं ततः ।
भूयोऽप्यासादितं राज्यं सौख्यमत्रैव जन्मनि ॥ ८८६ ॥
ततः संवेगरङ्गेन तरङ्गितमना नृपः ।
धर्मकृत्यं पुनः श्रुत्वा गृहीत्वाऽणुव्रतानि च ॥ ८८७ ॥
कारयामास सर्वज्ञभवनानि जिनेश्वरान् ।
स्थापयित्वाऽर्चयामास विधिना तत्र भक्तितः ॥ ८८८ ॥
(युग्मम्)
दयार्द्रचित्तः सत्यात्मा परवित्तपराङ्मुखः ।
शुद्धशीलः सुसंतोषः परोपकृतिकर्मठः ॥ ८८९ ॥
पालयित्वा समं राज्या गृहिव्रतमखण्डितम् ।
अवसाने शुभध्यानं कृत्वा भव्यो दिवं ययौ ॥८९०॥
ब्रह्मव्रतस्य माहात्म्यमित्थं ते वर्णितं मया ।
परिग्रहप्रमाणोत्थसंतोषस्य प्ररूप्यते ॥ ८९१ ॥
अस्त्यत्र भरते विश्वविख्याता मथुरा पुरी ।
सरसीव सदा योच्चैः राजहंसनिवासभूः ॥ ८९२ ॥
तस्यां निवसति श्रेष्ठी धनसार इति श्रुतः ।
षट्षष्टिद्रव्यकोटीनामाधिपत्यं प्रपालयन् ॥ ८९३ ॥
निखाते व्यवहारे च देशान्तर्वणिज्यया ।
सन्ति द्वाविंशतिस्तस्य प्रत्येकं धनकोटयः ॥ ८९४ ॥
अतृप्तस्य तथाऽप्यस्य क्काऽपि नैवोपयुज्यते ।
वित्तलेशोऽपि दीनादौ बिन्दुः क्षाराम्बुधेरिव ॥८९५॥
दृष्टेऽर्थिनि दृशो रोगः शिरोऽर्तिर्गृहमागते ।
याचमाने पुनर्दाहो हृदये तस्य जायते ॥ ८९६ ॥

दृष्ट्वा तु स्तोकमप्यस्मै ददानं गृहमानुषम्।
निमील्य सहसा नेत्रे मूर्च्छितः पतति क्षितौ ॥ ८९७ ॥
स प्रातिवेश्मिकादीनामपि दानं न वीक्षते।
वार्तयाऽपि हि दानस्य दूरादेव पलायते ॥ ८९८ ॥
देवादिधर्मकार्येषु केनाऽपि भणितो भृशम्।
स दन्तशकटं बध्वा निश्चेष्टीभूय तिष्ठति ॥ ८९९ ॥
किंवाऽथ बहुना गेहान्निर्गते तत्र दीयते।
अपि कर्मकृतां वृत्तिर्गृहमर्त्याश्च भुञ्जते ॥ ९०० ॥
महामूढो न वेत्तीदं ममार्थ्येवोपकारकः।
य एकगुणमादाय दत्तेऽमुत्र सहस्रशः ॥ ९०१ ॥
प्रतिकूलो विधिस्तावत्तेषां ये निर्धनीकृताः।
प्रतिकूलमतस्त्वेषु सतोऽर्थान् ददते न ये ॥ ९०२ ॥
विद्ययैव मदो येषां दारिद्र्यं विभवेऽप्यहो !।
तेषां दैवहतानां हि सलिलादग्निरुत्थितः ॥ ९०३ ॥
धने ह्यसति दारिद्र्यदोष एव हि केवलः।
महान् कार्पण्यदोषस्तु सति यस्मिन्नयच्छतः ॥ ९०४ ॥
दानशब्दादुदारेण गृहीते प्रथमाक्षरे।
कृपणैः स्पर्धयेवाऽस्य न इत्येवाऽक्षरं कृतम् ॥ ९०५ ॥
कृपणत्वेन तस्यैवमपशब्दस्तथा जने।
प्रससार यथा कोऽपि नामाऽप्युच्चरतेऽस्य न ॥ ९०६ ॥
कियत्यपि गते काले खनित्वा भुवमेकदा।
संभालयत्यसौ यावद् निधिमेकं रहःस्थितः ॥९०७॥
अपश्यत्तावदङ्गारानेव तत्र न चाऽपरम्।
शङ्कितोऽथ निधीनन्यानपि सर्वानलोकयत् ॥ ९०८ ॥
(युग्मम्)

तत्राऽपि मत्कोटका-ऽहि-वृश्चिकादीनि वीक्ष्य सः।
हृदयं ताडयित्वोच्चैर्यावदस्ति सुदुःखितः ॥ ९०९ ॥

तावत्तस्याम्बुनौयानभङ्गादि कथितं नरैः ।
गले शोकाम्बुमग्नस्य शिलाबन्ध इवाऽभवत् ॥ ९१० ॥

यतः—

अधः स्वं सारमाधाय तुच्छा इव बहिःस्थिताः ।
समूलमेवोन्मूलयन्ते ते बाला बालका इव ॥ ९११ ॥
जलस्थलगतं नष्टं वणिक्पुत्रैश्च भक्षितम् ।
धनं श्रुत्वा मुहुः स्मृत्वा सर्वशून्यो भ्रमत्यसौ ॥ ९१२ ॥
अन्यदाऽचिन्तयद्यावदद्याप्युत्पाणिको जने ।
न भवामि गृहेऽद्यापि भाण्डमूल्यमवाप्यते ॥ ९१३ ॥
तावज्जलधिमार्गेण वणिज्यायै व्रजाम्यतः ।
लाभश्चेत्सुन्दरं भावि देशान्तरगमोऽन्यथा ॥ ९१४ ॥
महाकृपण इत्याख्या पुराऽप्यासादिता मया ।
अधुना निर्धनस्त्वत्र भृशं यास्यामि हास्यताम् ॥ ९१५ ॥
ततोऽमेयपरिच्छेद्य-गण्य-धार्यक्रयाणकम् ।
संगृह्य दशलक्षाणां पोतमारुह्य सत्वरम् ॥ ९१६ ॥
भृत्वा कण-कणिक्का-ऽऽज्य भोज्यतीरेन्धनैः क्षमः ।
समं सांयात्रिकैर्लोकैः प्रतस्थे मध्यमम्बुधेः ॥ ९१७॥

( युग्मम् )

कियद्दूरं गतेऽकस्माद् घनेन रुरुधे नभः ।
यमास्येनेव भीमेन कटाक्षसमविद्युता ॥ ९१८ ॥
तत्र क्षेप्तुमिवोद्दण्डवातोद्धुतोर्मिबाहुभिः ।
ग्रासपिण्डमिवाऽम्भोधिस्तं पोतमुदलालयत् ॥ ९१९ ॥
स्पर्धयेव मिथोऽत्युग्रौ गर्जतः स्म घनाम्बुधी ।
दोलते स्म प्रवहणं तत्स्थलोकहृदा समम् ॥ ९२० ॥
ततो निर्यामके मुक्तधैर्ये भूरिभयाकुलः ।
शरण्यरहितो लोकः कथं कोऽपि तदाऽभवत् ॥ ९२१ ॥

देवताः कोऽपि सस्मार कोऽपि स्वगृहमानुषान् ।
कोऽपि तस्थौ निपत्याऽधः कोऽपि झम्पामदाज्जले॥९२२॥
कोऽपि मां रक्ष रक्षेति पूत्कृत्य चिरमूर्ध्वगः ।
श्वासेनाऽऽपूर्णहृदयो मुखं व्यादाय तस्थिवान् ॥ ९२३ ॥
इत्याश्रितजनस्याऽऽर्तिकारणाज् जातपातकः ।
स नूनं सहसा पोतः शतखण्डमभज्यत ॥ ९२४ ॥
धनसारस्तु लब्धैकफलको वार्धिवीचिभिः ।
बहिः क्षिप्तो गतोऽटव्यामिति दीनमचिन्तयत् ॥ ९२५ ॥
अहो ! मम क्व तद्गेहं क्व धनं क्व परिच्छदः ।
विधिना क्वाहमानीतः पवनेनाऽर्कतूलवत् ? ॥ ९२६ ॥
धिग् मां येन धनं मोहात् प्रभूतमपि संचितम् ।
न धर्मे व्ययितं नाङ्गे परस्योपकृतौ नवा ॥ ९२७ ॥
इत्यादि भावयंस्तत्राऽपश्यदाम्रतरोस्तले ।
मुनिमेकं तदोत्पन्नकेवलज्ञानभासुरम् ॥ ९२८ ॥
तन्महिम्नाऽऽगतैर्देवैर्निर्मिते स्वर्णपङ्कजे ।
तमासीनं मुदा नत्वा धनसारोऽप्युपाविशत् ॥ ९२९ ॥
श्रुत्वा धर्ममथो लब्धाऽवसरः पृच्छति स्म सः ।
कृपणोऽहं कथं नाथ ! नष्टश्च विभवः कथम् ? ॥ ९३० ॥
केवली प्राह भो भद्र ! धातकीखण्डभारते ।
धनाढ्यगृहसंभूतावभूतां भ्रातरावुभौ ॥ ९३१ ॥
मृतेऽथ पितरि ज्येष्ठो गृहनेताऽभवत् स च ।
गम्भीरः सरलो दाता कनिष्ठः कृपणः पुनः ॥ ९३२ ॥
ततो ज्येष्ठो यदा दानं दीनादिभ्यः प्रयच्छति ।
तदाऽतीव लघुस्तत्र प्रद्वेषं वहते हृदि ॥ ९३३ ॥
वारयेच्च भृशं दानाज् ज्येष्ठस्तु विरमेद् नहि ।
प्रद्विष्टः सुतरां तस्माद् विभिन्नो लघुकः स्थितः ॥९३४॥
ज्येष्ठस्य ददतोऽपि श्रीर्वर्धते पुण्यसेवनात् ।

इतरस्त्वददानोऽपि मुच्यते सुतरां तया ॥ ९३५ ॥
अत उक्तम्—
दीयमानं हि नापैति भूय एवाऽभिवर्धते ।
कूपा-ऽऽराम गवादीनां ददतामेव संपदः ॥ ९३६ ॥
सुस्थानन्यासहृष्टेव दातारं श्रीः पुनः श्रयेत् ।
निर्गता गुप्तिभीतेव कृपणं नैति सा पुनः ॥ ९३७ ॥
मत्सरेणाऽथ सोऽलीकपैशून्यं नृपतेः पुरः ।
प्रकाश्य ग्राहयामास सर्वस्वं ज्येष्ठबान्धवात् ॥ ९३८ ॥
क्षुद्रस्याहो ! गतिः कष्टा मरुकूपादपि ध्रुवम् ।
अददानः स्वयं यत् स्वमितरानपि रक्षति ॥ ९३९ ॥
स वैराग्येण तेनाऽथ सुसाधुचरणान्तिके ।
परिव्रज्यां गृहीत्वाऽभूत् सौधर्मे प्रवरः सुरः ॥ ९४० ॥
लघुभ्राताऽपि लोकेन निन्द्यमानो निरन्तरम् ।
कृत्वा बालतपो मृत्वा चासुरेषूदपद्यत ॥ ९४१ ॥
उद्वृत्याऽसुरयोनिभ्यः स जातस्त्वमिहाऽधुना ।
च्युत्वा सौधर्मतो ज्येष्ठस्तामलिप्त्यामजायत ॥ ९४२ ॥
महेभ्यस्य सुतः काले प्रतिपन्नजिनव्रतः ।
उत्पन्नकेवलज्ञानो विहरत्यहमेव सः ॥ ९४३ ॥
दानप्रद्वेषतस्तस्मादन्तरायं यदर्जितम् ।
कर्मणोऽस्य विपाकेन कृपणत्वं तवाऽभवत् ॥ ९४४ ॥
ऋद्धिः पैशून्यतो यत्तु ज्येष्ठस्य ग्राहिता त्वया ।
तद्विपाकादिदानीं ते नष्टमेकपदे धनम् ॥ ९४५ ॥
गर्हित्वा दुष्कृतं भद्र ! तदद्यापि यथार्जितम् ।
धनं पात्रेऽभियोक्तव्यं मूर्छामत्र विमुच्य भोः ! ॥ ९४६ ॥
मलपूर्णे यथा देहे मृतिः स्पष्टा न जायते ।
तथा द्रव्यमलस्याऽप्याबन्धतो न गतिर्भवेत् ॥ ९४७ ॥

यद् ददाति यदश्नाति तदेव धनिनो धनम् ।
शेषं को वेत्ति कुत्राऽपि कस्याऽप्युपकरिष्यति ?॥ ९४८ ॥
उक्तं च—
मृत्युः शरीरगोप्तारं रक्षितारं धनं धरा ।
दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलम् ॥ ९४९ ॥
इह लोको भवेद् भुक्ते दत्ते परभवः शुभः ।
अभुक्ताऽदत्ते वित्ते नु वद कोऽत्र गुणो नृणाम् ? ॥९५०॥
धर्मादवाप्य ये लक्ष्मीं न धर्मस्योपकुर्वते ।
कृतघ्नानां परं तेषां गृह्णीते नाम को भुवि ? ॥ ९५१ ॥
पुष्पाणां निश्चिते नाशे यथा देवार्चनं फलम् ।
तथा ज्ञानधनादीनां परोपकृतिरेव हि ॥ ९५२ ॥
लक्ष्मीश्चपलनारीव कस्यापि यदि वेश्मनि ।
भूयोवितरणाऽपत्यं बन्धनाद् भजति स्थितिम् ॥ ९५३॥
नास्तीतिसतताभ्यासात् भवेत् सर्वं सदप्यसत् ।
शून्येन गुणितो येन लक्षाङ्कोऽप्येति शून्यताम् ॥ ९५४ ॥
बह्वारम्भोऽपि दानेन स्वाऽनुमानेन शुध्यति ।
न्यायपूर्वं यथा तेन बहुधापि क्रयाणकम् ॥ ९५५ ॥
प्राचीनसुकृतग्राससंभवायाः खलु श्रियः ।
गुणोऽयमेव यद्दानं पात्रायागण्यपुण्यकृत् ॥ ९५६ ॥
आस्तां पात्रगतं दानमस्मात् साधारणादपि ।
तद्भवेऽप्यद्भुतं भाग्यं कुबेरस्येव जायते ॥ ९५७ ॥
कः कुबेरः कथं चासीत्तस्य भाग्यमिहाद्भुतम् ?।
इति पृष्टो मुनिस्तेन कथयामासिवानिदम् ॥ ९५८ ॥
श्रीविशालपुरे राजा गुणाढ्योऽथ विभूतिभिः ।
कुबेर इव तत्रासीत् कुबेराख्यो धनाधिपः ॥ ९५९ ॥
श्रीदेवताऽन्यदा दिव्यरूपवेषविभूषणा ।
वासौकसि तमभ्येत्य निशि सुप्तमभाषत ॥ ९६० ॥

अहो ! जागर्षि शेषे वा तच्छ्रुत्वोत्थाय संभ्रमात् ।
देवि ! जागर्मि काऽसि त्वमित्युक्ता तेन साऽवदत् ?।। ९६१ ।।
श्रीरहं सप्त पर्यायान् यावत्तव गृहे स्थिता ।
इदानीं गन्तुकामा तु त्वामाप्रष्टुमिहागता ।। ९६२ ।।
तन्निशम्य महाशोकसङ्कुलः सोऽवदत् पुनः ।
कथं त्यजसि मां देवि ! त्वयैव सकलं जगत् ?।। ९६३ ।।
श्रीरुवाच महाभाग ! ममावस्थानकारणम् ।
भाग्यमेकं क्षयं तच्च जगाम तव याम्यतः ।। ९६४ ।।
सहसोत्पन्नबुद्धित्वादसौ हृष्टोऽभ्यधादथ ।
प्रसद्य तर्हि मे देवि ! तिष्ठ घस्रचतुष्टयम् ।। ९६५ ।।
ओमेति प्रतिपद्याऽस्यां प्रयातायां यथागतम् ।
कुबेरो द्रुतमुत्थाप्य समस्तगृहमानुषान् ।। ९६६ ।।
निखातं प्रकटं द्रव्यं स्वर्णं रूप्यं तथाऽखिलम् ।
कांस्यदूष्यादि चाकृष्याऽचीकरत् सुमहोत्करान् ।।९६७।।
प्रातरुद्घोषणापूर्वं सर्वेषामर्थिनां धनम् ।
अनाथ दुःस्थ-दीनानां स्वजनानामपीच्छताम् ।। ९६८।।
सर्वज्ञभवनादौ च धर्मकृत्ये तथाऽमुना ।
चतुर्भिर्दिवसैर्दत्तं भक्तशेषोऽभवद् यथा ।। ९६९ ।।
चतुर्थाहे मुदा जाग्रच्छयानं जीर्णमञ्चके ।
निशि श्रीदेवताऽऽगत्य विलक्षा तमभाषत ।। ९७० ।।
अहो ! जागर्षि शेषे वा यावन्नैवोत्तरं ददौ ।
तया तावदुपालब्धः स संभ्रान्त इवोत्थितः ?।। ९७१ ।।
क्षम्यतां देवि ! न ज्ञाता दिनानामियतां यतः ।
निश्चिन्तस्य धनाभावात्सुखनिद्राऽद्य मेऽभवत् ।। ९७२ ।।
किं करोमीति जल्पन्तं श्रीरूचे ननु संप्रति ।
किं कार्यं येन बद्धाऽहं गत्वर्यपि त्वया दृढम् ?।।९७३।।
कुबेरोऽप्यब्रवीद् देवि ! कुर्वे कस्याऽपि बन्धनम् ।

नान्यस्याऽपि विशेषात् ते व्रज स्थानं यथेप्सितम् ॥९७४॥
देवता प्राह भो भद्र ! स्वेच्छया गमनं कुतः ? ।
पुण्यैः परवशाया मे तानि तु त्वयि संप्रति ॥ ९७५ ॥
तेन त्वमेव मे स्थानं सोऽथ हृष्टोऽप्यवज्ञया ।
अब्रवीदिदमप्यस्तु किन्तु त्वं कथमेष्यसि ? ॥ ९७६ ॥
श्रीरवोचदुपायेन कोऽसौ भद्र ! निशम्यताम् ? ।
श्रीदेव्या भवनेऽत्रावधूतवेषेण यो भवेत् ॥ ९७७ ॥
निमन्त्र्य भोजयित्वाऽसौ मध्यापवरके त्वया ।
स्पृष्टव्यो लकुटेनांह्रौ भविता स्वर्णपूरुषः ॥ ९७८ ॥
( युग्मम् )
तथैव विधिना तेन देव्यादेशे कृते सति ।
सुवर्णपुरुषो जातः खण्डितोऽप्यक्षयो हि यः ॥ ९७९ ॥
तदा तत्रागतः पादक्षालनार्थैकनापितः ।
चलद्दृष्टितया सर्वं वृत्तान्तं तमुदैक्षत ॥ ९८० ॥
अरेऽमीषां गृहे लक्ष्मीरित्थमेव प्रजायते ।
तत्करिष्येऽहमप्येतदिति धृत्वा हृदि स्थितः ॥ ९८१ ॥
सोऽन्यदा तादृशं वीक्ष्य नरं देवकुलस्थितम् ।
निमन्त्र्य भोजयित्वांह्रौ जघान लकुटेन तम् ॥ ९८२ ॥
प्रहारेण पतन्नुच्चैः स चक्रन्द तथा नरः ।
यथा श्रुत्वा तलारक्षास्तत्राऽऽजग्मुरुदायुधाः ॥ ९८३ ॥
तद् दृष्ट्वा नापितो बद्ध्वा तैः स राज्ञो निवेदितः ।
पृष्टो राज्ञा च वृत्तान्तं सर्वमाख्यातवानसौ ॥ ९८४ ॥
कुबेरस्य गृहे देव ! यथा स्वर्णनरोऽजनि ।
मयाऽपि तादृशं चक्रे फलमन्यादृशं त्वभूत् ॥ ९८५ ॥
अथाऽऽकार्य कुबेरस्तत् पृष्टो भूपेन कौतुकात् ।
सोऽपि सर्वमिदं मूलादाचचक्षे विचक्षणः ॥ ९८६ ॥
ततो राजाऽवदत् तोषाद्धन्योऽहं यस्य मे पुरे ।

ईदृशाः सन्ति दातारः पुण्याढ्याः सत्यभाषिणः ॥९८७॥
राज्ञेति सत्कृतो बाढं मोचयित्वा च चण्डिलम्[1] ।
कुबेरः स्वगृहे गत्वा धर्मकृत्यपरोऽभवत् ॥ ९८८ ॥
ज्ञात्वा साधारणस्याऽपि दानस्य महिमामिति ।
भाव्यं यथाल्पसंतुष्टैः पात्रदानपरैर्नरैः ॥ ९८९ ॥
धनसार इति श्रुत्वा संविग्नः स्माऽऽह सुप्रभो ! ।
यद्येवं तन्ममाऽप्येतत्परिग्रहनियन्त्रणम् ॥ ९९० ॥
वित्तं यदर्जयिष्येऽंशं चतुर्थं तस्य धारयन् ।
यावज्जीवमहं शेषं प्रदास्ये धर्मकर्माणि ॥ ९९१ ॥
अनाभोगादिवर्जं च कथञ्चिज्जानता मया ।
अद्यप्रभृति न ग्राह्यो दोषः कस्याऽपि सन्नसन् ॥ ९९२ ॥
प्रपन्नस्तेन चान्योऽपि गृहिधर्मो जिनोदितः ।
जन्मान्तरापराधं च केवली क्षामितो भृशम् ॥ ९९३ ॥
अन्यत्र विहृते तस्मिन् सोऽपि श्रेष्ठी परिभ्रमन् ।
तामलिप्त्यां गतः पुर्यां वाणिज्यं कुरुते कृती ॥ ९९४ ॥
भाषितादधिकं धर्मे व्ययन् वित्तमुपार्जितम् ।
जिनपूजादिना तत्र कञ्चित्कालं निनाय सः ॥ ९९५ ॥
अन्यदा गृहमस्त्येकं व्यन्तरेणोद्वसीकृतम् ।
तत्र प्रतिमया तस्थौ धनसारः कथञ्चन ॥ ९९६ ॥
देवोऽथ कुपितो नानारूपैस्तस्याऽतिभीषणैः ।
उपसर्गं व्यधात् तावद् यावत् सूरः समुद्गतः ॥ ९९७ ॥
विकाशिकमलच्छायं शमश्रीशोभितं मुखम् ।
मेरुधीरं मनश्चाऽस्य दृष्ट्वा हृष्टः सुरोऽवदत् ॥ ९९८ ॥
धन्योऽसि त्वं महाभाग ! धन्या च जननी तव ।
यस्यैवं गृहिणोऽप्यासीद् विकारोऽन्तर्बहिर्न हि ॥ ९९९ ॥
तुष्टोऽस्मि किञ्चिद्याचस्व पुनः पुनरितीरिते ।

1 नापितम् ।

स यावन्नोत्तरं दत्ते तावद् भूयः सुरो जगौ ॥ १००० ॥
यद्यपि त्वं निरीहोऽसि तथाऽपि वचसा मम ।
मथुरां गच्छ तत्र त्वं प्राग्वद्भावी महर्धिकः ॥ १००१ ॥
इत्युक्त्वा क्षमयित्वा च जगामाऽदर्शनं सुरः ।
प्रतिमां पारयित्वा च श्रेष्ठी चिन्तितवानिदम् ॥१००२॥
धनेन मम किं तेनाऽथवा भवतु येन तम् ।
दानतः स्वस्य कार्पण्यकलङ्कं मार्जयाम्यहम् ?॥१००३॥
इति कृत्वा गतः पुर्या मथुरायां निजं गृहम् ।
यावत्तत्र निधानेषु तत्सर्वं द्रव्यमीक्षते ॥ १००४ ॥
देशान्तरं गतं चाऽपि प्रत्यायाति दिने दिने ।
जनेन भक्षितं यच्च तदप्यासादयेत् सुखात् ॥ १००५ ॥
एवं च मिलितास्तस्य षट्षष्टिरपि कोटयः ।
सद्यः फलन्ति पुण्यानि शुभभावकृतानि यत् ॥ १००६ ॥
नरं व्यात्तमुखं दृष्ट्वा लक्ष्मीर्भीतेव नश्यति ।
तत्त्यागसुभगे तोषात् प्रौढस्त्रीवाऽतिरज्यते ॥ १००७ ॥
तत्र तुङ्गं ततस्तेन कारितं जिनमन्दिरम् ।
यत्पताकाऽस्य कालुष्यं हृत्वा गङ्गेव राजते ॥ १००८ ॥
जीर्णोद्धारे च दत्तानि वित्तानि बहुशो मुदा ।
साम्यं यज्जातपुण्यस्य नाम्भोधि-नभसोरिव ॥१००९॥
संघे वात्सल्यं यच्चक्रे सर्वधर्मोपमं स्मृतम् ।
दयादानं च दीनादौ सर्वत्रौचित्यशालिना ॥१०१०॥
अन्याय-न्यायभेदेन चतुर्भङ्गी धने ततः ।
सतां सर्वोत्तमो भङ्गो न्यायार्जितस्य सद्व्ययात् ॥१०११॥
इति संतोषतो दानात् कीर्ति-धर्मौ समर्ज्य सः ।
स्थापयित्वा सुतं गेहे पर्यन्तेऽनशनं व्यधात् ॥ १०१२ ॥
शुद्ध्या विपद्य सौधर्मे विमाने चाऽरुणप्रभे ।
चतुष्पल्योपमायुष्को बभूव सुरसत्तमः ॥ १०१३ ॥

ततश्च्युत्वा विदेहाख्यक्षेत्रे सुकुलसम्पदम् ।
प्राप्य काले तपः कृत्वा मोक्षसौख्यं समेष्यति ॥१०१४॥
फलं परिग्रहस्यैवं ग्रहे मोक्षे च वर्णितम् ।
दोषरूपं गुणमयं तद् द्वयं हृदि धार्यताम् ॥ १०१५ ॥
आस्तां बाह्यगतोऽयं यत् क्लेशहेतुः परिग्रहः ।
अस्यातिलौल्यताध्यानादप्यनर्थः प्रजायते ॥ १०१६ ॥
यथा कार्पटिकः कोऽपि भिक्षासक्तुभृतं घटम् ।
विमुच्य निजपादान्ते शून्यदेवकुलेऽस्वपीत् ॥ १०१७ ॥
तत्र जाग्रदिदं दध्याविमान् विक्रीय सक्तुकान् ।
यन्मूल्येन ग्रहीष्येऽहमजां सापत्यया तया ॥ १०१८ ॥
धेनुं धेन्वा च महिषीं तयाऽपि वरवाजिनीम् ।
तस्याः किशोरकैर्दिव्यैर्बहु द्रव्यं भविष्यति ॥ १०१९ ॥
तेनाऽथ कारयिष्यामि सौधमुच्चं मनोहरम् ।
सचित्रशालिकालिन्दमत्तवारणजालकम् ॥ १०२० ॥
तत्र शय्यामनाद्यं च संस्थाप्य सदुपस्करम् ।
मेलयित्वा परीवारं निमन्त्र्य स्वजनं जनम् ॥ १०२१ ॥
सुतामुत्तमविप्रस्य परिणेष्यामि सुन्दरीम् ।
सर्वलक्षणसंपूर्णस्तस्याश्च भविता सुतः ॥ १०२२ ॥
बहुद्रव्यागमे जाते कृते वर्धापनोत्सवे ।
मनोरथशतैः सार्धं वृद्धिं यास्यति स क्रमात् ॥ ११२३ ॥
अन्यदा बहिरायातः सुतं दृष्ट्वा गृहाङ्गणे ।
रुदन्तं कुपितो भार्यामाहनिष्येऽहमंह्रिणा ॥ १०२४ ॥
इत्यावेशगतो दृष्ट्वा साक्षात्पादप्रहारतः ।
घटं भग्नं गतान् सक्तून् शुशोच स भृशं बटुः ॥ १०२५ ॥
विवेकिभिरिति ज्ञात्वा परिग्रहनियन्त्रणम् ।
कार्यं येन लघुर्जीवस्तरत्येव भवोदधिम् ॥ १०२६ ॥
एवमुक्तानि पञ्चाऽप्यणुव्रतानि निदर्शनैः ।

राजमार्गसमान्येभिः शनैर्याति शिवं गृही ॥ १०२७ ॥
स्थूलसूक्ष्मविभेदेन सर्वथा पालितानि तु ।
स्युरेतान्येव हि महाव्रतानि यतिनामिह ॥ १०२८ ॥
अमीभिः शीघ्रमासन्नमार्गतुल्यैर्यतिर्व्रजेत् ।
सिद्धिं तत्र यथाशक्ति यतितव्यं ततो बुधैः ॥ १०२९ ॥
इति तस्य मुनेर्वाचोऽवुध्यन्त बहवो जनाः ।
नियमाभिग्रहं देशविरतिं च प्रपेदिरे ॥ १०३० ॥
राजा किरणवेगस्तु विरक्तात्मा सुसात्त्विकः ।
देहार्थे विमुखीभूय परमार्थमना अभूत् ॥ १०३१ ॥
अज्ञानपटले ध्वस्ते गुरुणा शास्त्रशस्त्रतः ।
निजं राज्यं प्रधानेन व्याप्तमात्मा प्रपश्यति ॥ १०३२ ॥
तत्तद्धर्मकथाऽर्थांश्च हृदये स विभावयन् ।
क्षणमेकं महानन्दाज्जीवन्मुक्त इवाऽभवत् ॥ १०३३ ॥
( युग्मम् )
माया-शोक-भय-क्रोध-लोभ-मोह-मदाऽन्विताः ।
ये वाञ्छन्ति कथामर्थे तामसास्ते नराधमाः ॥ १०३४ ॥
ये रागग्रस्तमनसो विवेकविकला नराः ।
कथामिच्छन्ति कामस्य राजसास्ते त्रिमध्यमाः ॥१०३५॥
ये लोकद्वयसापेक्षाः किञ्चित्सत्त्वयुता नराः ।
कथामिच्छन्ति संकीर्णां ज्ञेयास्ते वरमध्यमाः ॥ १०३६ ॥
मोक्षकाङ्क्षैकतानेन चेतसाऽभिलषन्ति ये ।
शुद्धां धर्मकथामेकां सात्त्विकास्ते नरोत्तमाः ॥१०३७ ॥
तथा–
तमोवशादनैश्वर्याऽज्ञानाऽधर्मकलिक्रुधः ।
रजोवशादवैराग्यं सत्त्वाद्धर्मे मतिः स्थिरा ॥ १०३८ ॥
उत्थाय प्राञ्जलिश्चैवमुवाच खचराधिपः ।
बाढं तत्त्वोपदेशेनाऽनुगृहीतोऽहं त्वया मुने ! ॥ १०३९ ॥

निमित्तमात्रतां योऽपि धर्मे सर्वज्ञभाषिते ।
प्रतिपद्येत जीवस्य सोऽपि धर्मगुरुर्मतः ॥ १०६० ॥
भवानिव विशेषेण हेतूदाहरणैर्युतम् ।
क इदं तत्त्वमाख्याति तत् त्वं मे शरणं मुने!! ॥१०४१॥
इत्युक्त्वा भवने गत्वा कृत्यमाख्याय मन्त्रिणाम् ।
संबोध्य नन्दने राज्यभारमारोपयद् नृपः ॥ १०४२ ॥
स्वयं सुरगुरोः पार्श्वे परिव्रज्यामुपाददे ।
दुष्कर्मशस्त्रमुद्धर्तुमयस्कान्तमणिप्रभाम् ॥ १०४३ ॥
ज्ञानात्माविदितोत्सर्गाऽपवादविधिरागमात् ।
गीतार्थश्च क्रमाज्जज्ञे श्रुतस्कन्ध इवाङ्गवान् ॥१०४४॥
गुरोरनुज्ञयैकाकिविहारं प्रतिपद्य सः ।
आकाशगमनेनागात् पुष्करद्वीपमन्यदा ॥ १०४५ ॥
शाश्वतानर्हतस्तत्र नत्वा वैताढ्यसन्निधौ ।
प्रदेशे हिमशैलस्य स तस्थौ प्रतिमाधरः ॥ १०४६ ॥
तप्यमानस्तपस्तीव्रं सहमानः परीषहान् ।
साम्यमग्नमनाः कालं स तत्रागमयन्मुनिः ॥ १०४७ ॥
सोऽपि जीवः कुर्कुटाहेरुद्वृत्य नरकात् ततः ।
हेमाद्रेर्गह्वरे तस्य महाहिरुदपद्यत ॥ १०४८ ॥
दोर्दण्ड इव कालस्य जन्तून् कवलयन् बहून् ।
आहारार्थं स बभ्राम वने तस्मिन्नहर्निशम् ॥ १०४९ ॥
अन्यदा पर्यटन् सोऽहिर्निकुञ्जस्थमुदैक्षत ।
ध्यानैकतानं किरणवेगर्षिं स्तम्भवत् स्थितम् ॥१०५०॥
सद्यः प्राग्जन्मवैरेण सोऽतिकोपारुणेक्षणः ।
भोगेनावेष्टयत् साधुं चन्दनद्रुमिवाथ तम् ॥ १०५१ ॥
दंष्ट्राभिर्विषभीष्माभिर्दन्दशूको ददंश सः ।
मुनिं स्थानेषु भूयस्सु दंशेषु प्रक्षरन् विषम् ॥ १०५२ ॥
दध्यौ च स मुनिर्बाढमयं कर्मक्षयाय मे ।

सुष्ठूपकारी तेनाहिर्नापकारी मनागपि ॥ १०५३ ॥
जीवित्वाऽपि चिरं कर्म क्षयः कार्यो मया खलु ।
सोऽद्यैव विहितोऽनेन कृतकृत्योऽस्मि सर्वथा ॥ १०५४ ॥
ध्यात्वेत्यालोचनां कृत्वा क्षमयित्वाऽखिलं जगत् ।
नमस्कारं स्मरन् धर्मध्यानी सोऽनशनं व्यधात् ॥१०५५॥
मेरुवन्निष्प्रकम्पोऽस्थात् कायेन मनसाऽपि च ।
अच्युतस्थितियोग्यानां शीलमच्युतमेव तत् ॥ १०५६ ॥
मृत्वा स द्वादशे कल्पे द्वाविंशत्यर्णवस्थितिः ।
अभूज्जम्बूद्रुमावर्त्ते विमाने प्रवरः सुरः ॥ १०५७ ॥
सुखमग्नस्तदा तत्र विलसन् विविधर्द्धिभिः ।
सेव्यमानः सुरैरस्थात्स कालमतिवाहयन् ॥ १०५८ ॥
हेमाद्रिकटके भ्राम्यन् सोऽप्यहिर्दववह्निना ।
दग्धो धूमप्रभां प्राप सप्तदशार्णवस्थितिः ॥ १०५९ ॥
खण्ड्यन्ते तिलशो यत्र कुट्यन्ते वज्रमुद्गरैः ।
पच्यन्ते कुण्डकुम्भीषु च्छिद्यन्ते निशितासिभिः ॥१०६०॥
करपत्रैर्विदार्यन्ते भक्ष्यन्ते कोल-कुर्कुरैः ।
महायन्त्रेषु पीड्यन्ते पाय्यन्ते गलितं त्रपु ॥ १०६१ ॥
अयोरथेषु योज्यन्ते आस्फाल्यन्ते शिलातले ।
क्षिप्यन्ते वह्निकुण्डेषु स्थाप्यन्ते तप्तधूलिषु ॥ १०६२ ॥
क्षेत्रस्थभावजं नित्यमन्योऽन्याभ्यां कृतं च यत् ।
वेदयन्ते महादुःखं नारका गाढमत्सराः ॥ १०६३ ॥
सार्धद्विशतधन्वाङ्गस्तीव्रा नारकवेदनाः ।
स तत्रानुभवंस्तस्थौ सुखांशेनाऽप्यचुम्बितः ॥ १०६४ ॥
बीजं मोक्षतरोस्तमःप्रशमने रत्नप्रदीपो जग-
न्नेत्राणाममृतप्रपाऽतिविततश्रेयोलतामण्डपः ।
प्रत्यक्षश्च शिवैकपूर्णकलशश्चित्रं व्ययेऽप्यक्षयः

श्रेयः पार्श्वजिनस्तनोतु भवतां भावैकगम्यो विभुः ॥१०६५॥

इति श्रीकालिकाचार्यसंतानीयश्रीभावदेवसूरिविरचिते श्रीपार्श्वनाथचरित्रे महाकाव्ये भावाङ्केऽष्टसर्गे श्रीपार्श्वनाथचतुर्थ-पञ्चमभववर्णनो नाम द्वितीयः सर्ग ।

अर्हम्

# अथ तृतीयः सर्गः ।

इतश्च जम्बूद्वीपेऽस्मिन् प्रत्यग्विदेहभूषणे ।
सुगन्धे विजयेऽस्त्युच्चैः पुरी नाम्ना शुभंकरा ॥ १ ॥
कल्पद्रुमसमैर्दातृनरैर्या देवमन्दिरैः ।
अप्सरस्तुल्यनारीभिः सुमनोभिर्मनोरमा ॥ २ ॥
अमृतैः स्वच्छमधुरैर्मणिभिः स्फुरदंशुभिः ।
न्यासीकृतमिव स्वस्या पुरः सारं बिडौजसा ॥ ३ ॥
मणीमयगृहोल्लासिप्रभाजालजलाशये ।
यस्यां निशि विराजन्ते कुमुदानीव तारकाः ॥ ४ ॥
तत्राद्भुतगुणो वज्रवीर्यनामा नृपोऽभवत् ।
रञ्जयामास यो विश्वं कीर्त्या धवलयन्नपि ॥ ५ ॥
प्रतापदहनज्वालाकलापग्लपिता भृशम् ।
सौम्यतां दधिरे यस्य वने वृक्षा इवारयः ॥ ६ ॥
तस्य लक्ष्मीवती नाम प्रिया सौभाग्ययोगतः ।
समस्तयुवतीमध्ये या श्रीरिव धुरि स्थिता ॥ ७ ॥
लज्जा-विनय माधुर्यप्रमुखैर्विविधैर्गुणैः ।
शुशुभे या सदाम्भोजैः सरसीवामलाशया ॥ ८ ॥

१ इन्द्रेण ।

जीवः किरणवेगस्य च्युत्वा पूर्णायुरच्युतात् ।
देव्या अवातरत् तस्याः कुक्षितीरे मरालवत् ॥ ९ ॥
साऽसूत समये पुत्रमुत्तमस्वप्नसूचितम् ।
धरणीभूषणं विश्वदृक्चकोरसुधाकरम् ॥ १० ॥
निवृत्ते सूतके जाते वर्धापनमहोत्सवे ।
वज्रनाभ इति स्पष्टं तस्य नाम प्रतिष्ठितम् ॥ ११ ॥
आनन्देन समं पित्रोर्वर्धिष्णुः पुण्यपुद्गलैः ।
वर्त्तमानः स कौमार्ये ग्राहितः सकलाः कलाः ॥ १२ ॥
कलाकलापसम्पन्नः शशीव स न केवलम् ।
कुलव्योमोज्ज्वलं चक्रे हर्षं कुवलयेऽप्यधात् ॥ १३ ॥
स क्रमादुदयन्नेवं प्रापत्तारुण्यमुज्ज्वलम् ।
प्रबलतरुणीनेत्रविश्रान्तिबहुलद्रुमम् ॥ १४ ॥
तद्वशेन च विस्तीर्णा तस्य दृष्ट्या समं मतिः ।
विक्रमेण समं वक्षःस्थलं चोपचयं ययौ ॥ १५ ॥
कृशत्वमुदरं प्राप क्रोधलोभादिभिः सह ।
सदाचारविचारेण प्रससार भुजाबलम् ॥ १६ ॥
शस्त्रशास्त्रविनोदेन कलाकाव्यरसेन च ।
अतुच्छस्वच्छधीः क्रीडन् स न कस्य हृदि स्थितः ? ॥१७॥
अन्यदा बङ्गदेशेन्द्रश्चन्द्रकान्तो निजाङ्गजाम् ।
प्रदातुं वज्रनाभाय वज्रवीर्यमुपारुधत् ॥ १८ ॥
तामथोदवहत् कन्यां कुमारो विजयाभिधाम् ।
रूपेण जितकामत्वाद् दिव्यास्त्रमिव मान्मथम् ॥१९॥
स द्वितीयोऽप्यसावेवमद्वितीयोऽभवद् ध्रुवम् ।
बुद्धौ धर्मविधौ दाने माने च विनये नये ॥ २० ॥
अन्यदा स्वपितुर्द्विष्टस्तस्य मातुलनन्दनः ।
तत्रागत्य कुबेराख्यः कुमारस्यान्तिके स्थितः ॥ २१ ॥
नास्तिवादी स च प्रायः कुमारं धर्मसादरम् ।

वीक्ष्यावादीदहो ! मुग्ध ! किमेषा कष्टकल्पना? ॥ २२ ॥
केन त्वं विप्रलब्धोऽसि यद् धर्मात् सुगतिर्भवेत् ? ।
तदेव हि सुखं दुःखं यत् साक्षादिह दृश्यते ॥ २३ ॥
मनो-वचन-कायानां ततस्त्वं पूरयेप्सितम् ।
गुणधर्माऽबाधयेत्थं लब्धं मा हारयेः सुखम् ॥ २४ ॥
इत्यादि राजभूः श्रुत्वा दध्यौ तूष्णीरिहोत्तरम् ।
मतिभ्रंशाय संवादः कुग्रहग्रहिलैः सह ॥ २५ ॥
अस्याऽकल्याणमित्रत्व मद्धन्योरपि धिक् कथम् ? ।
तदेनं बोधयिष्यामि कुतोऽपि ज्ञानिनो मुनेः ॥ २६ ॥
अन्यदा लोकचन्द्राख्यः सूरिर्भूरिमुनिश्रितः ।
बहिस्तत्राययौ ज्ञानतपःश्रीवेणिसङ्गमः ॥ २७ ॥
तमुद्यानास्थितं श्रुत्वा कुमारः सपरिच्छदः ।
कुबेरसहितोऽगच्छदतुच्छात्माऽभिवन्दितुम् ॥ २८ ॥
विधिना शुद्धभावेन ववन्दे स मुनीश्वरम् ।
कुमारस्योपरोधेन कुबेरोऽपि ननाम तम् ॥२९॥
उपविष्टे यथास्थानं कुमारप्रमुखे जने ।
धर्मोद्यानसुधाकुल्यां प्रारेभे देशनां मुनिः ॥ ३० ॥
इह प्रकृत्या स्वच्छोऽपि जीवः कर्ममलावृतः ।
लभते विविधं दुःखं भ्राम्यन् गतिचतुष्टये ॥ ३१ ॥
तच्च कर्माष्टधा ज्ञान-दर्शनावरणे तथा ।
मोहनीयं वेद्यमायुर्नामगोत्राऽन्तरायकम् ॥ ३२ ॥
मति-श्रुताऽवधि-मनःपर्याय-केवलात्मकम् ।
ज्ञानं पञ्चविधं तस्यावरणं चापि पञ्चधा ॥ ३३ ॥
अचक्षु-श्चक्षु-रवधि-केवलं दर्शनावृति ।
निन्द्रा पञ्चेति नवधा दर्शनावरणं भवेत् ॥ ३४ ॥
कषायाः षोडशभिदास्त्रिके मिथ्यात्व-वेदयोः ।
हास्यादिषट्कं मोहः स्यादऽष्टाविंशतिनिर्मितः ॥ ३५ ॥

सुखे दुःखे द्विधा वेद्यमायुः कर्म चतुर्विधम् ।
तिर्यग् नारक-गीर्वाण-मनुष्यगतिभेदतः ॥ ३६ ॥
अप्यनेकविधं नाम शुभाशुभविभेदतः ।
द्विविधं गोत्रमप्युच्चैर्नीचैर्भेदाद् द्विधा भवेत् ॥ ३७ ॥
दान-लाभयोर्वीर्यस्य तथा भोगो-पभोगयोः ।
प्रत्यूहकरणात् पञ्चविधं कर्मान्तरायकम् ॥ ३८ ॥
प्रतिकूलतया द्वेषादन्तरायादपह्नवात् ।
ज्ञान-दर्शनयोर्जीवो बध्नात्यावरणद्वयम् ॥ ३९ ॥
अनुकम्पा-व्रतोद्योग-गुरुभक्ति-क्षमादिभिः ।
सुवेद्यं बध्यते कर्म दुःखवेद्यं तथेतरैः ॥ ४० ॥
सर्वज्ञ गुरु सङ्घादौ प्रत्यनीकतया भृशम् ।
दर्शनीयमोहनीयं स्यादनन्तभवकारकम् ॥ ४१ ॥
राग द्वेष-महामोहयुतस्तीव्रकषायभृत् ।
देश-सर्वचरित्राख्यमोहनीयस्य बन्धकः ॥ ४२ ॥
मिथ्यादृष्टिः कुशीलश्च महारम्भपरिग्रहः ।
पापः क्रूरपरीणामो नारकायुर्निबन्धकः ॥ ४३ ॥
उन्मार्गदेशको मार्गनाशको बहुमायिकः ।
शठवृत्तिः सशल्यश्च तिर्यग्योन्यायुरर्जयेत् ॥ ४४ ॥
प्रकृत्याऽल्पकषायो यः शील-संयमवर्जितः ।
दानशीलो मनुष्यायुर्गुणैर्बध्नाति मध्यमैः ॥ ४५ ॥
अकामनिर्जरा-बालतपो-ऽणुव्रत-सुव्रतैः ।
जीवो बध्नाति देवायुः सम्यग्दृष्टिश्च यो भवेत् ॥ ४६ ॥
मनो-वचन-कायेषु वक्रो गौरवलम्पटः ।
अशुभं नाम बध्नाति शुभं तदितरैः पुनः ॥ ४७ ॥
गुणैषी निर्मदो भक्तो ह्यर्हदाद्यागमप्रियः ।
उच्चैर्गोत्रं निबध्नाति नीचैस्तु तद्विपर्ययात् ॥ ४८ ॥
हिंसाद्यभिरतो मोक्ष-जिनपूजादिविघ्नकृत् ।

अर्जयत्यन्तरायाख्यं कर्माभीष्टार्थबाधकम् ॥ ४९ ॥
कोटाकोट्यः सागराणां मोहनीयस्य सप्ततिः ।
चतुर्णां ताः पुनस्त्रिंशद् विंशतिर्नाम-गोत्रयोः ॥ ५० ॥
आयुषस्तु त्रयस्त्रिंशत् सागरा एव केवलाः ।
उत्कृष्टा स्थितिरित्येवमष्टानामपि कर्मणाम् ॥ ५१ ॥
जघन्या सा तु वेद्यस्य मुहूर्ता द्वादश स्मृताः ।
नाम्नो गोत्रस्य चाष्टान्तर्मुहूर्तं शेषकर्मणाम् ॥ ५२ ॥
यथाप्रवृत्तिकरणात् कर्माण्यात्माऽखिलान्यपि ।
अस्यैककोटाकोट्यन्तःस्थितीनि कुरुते सदा ॥ ५३ ॥
अपूर्वकरणात् तेषां तदा ग्रन्थिं भिनत्त्यसौ ।
प्राप्यानिवृत्तिकरणं सम्यक्त्वं लभते ततः ॥ ५४ ॥
तेन प्राप्यामृतेनेव सचैतन्यं सुखीभवेत् ।
लब्धास्वाद इवाधत्ते जिनधर्मे मनः शनैः ॥ ५५ ॥
गृहस्थ-यतिधर्मं च प्रवृद्ध्या प्राप्नुवन्नथ ।
धौतकर्ममलस्तेन लभते परमं पदम् ॥ ५६ ॥
अतो धन्यः स सम्यक्त्वरत्नं स्फुरति यद्हृदि ।
स तु धन्यतमो यस्तदुत्तरोत्तरतां नयेत् ॥ ५७ ॥
स एव पुरुषः सार्थनामा शेषास्तु बिभ्रति ।
स्वाख्यां डित्थ-डावित्थादिशब्दा इव निरर्थिकाम् ॥ ५८ ॥
श्रुत्वा कुबेरस्तद्दर्पात् स्फुरदोष्ठपुटो जगौ ।
आचार्य ! सर्वमप्येतदसंबद्धं तवोदितम् ॥ ५९ ॥
यत्रासौ धर्मकर्मादिगुणौघः स्थाप्यते त्वया ।
तावत् स एव नास्त्यात्मा निराधारा हता गुणाः ॥ ६० ॥
यतस्तदेव सद्वस्तु यः स्यादिन्द्रियगोचरः ।
न चायमिन्द्रियग्राह्यो जीवस्तस्मान्न विद्यते ॥ ६१ ॥
तथा चोक्तम्—
समस्तवस्तुविस्तारग्राहिभिश्चक्षुरादिभिः ।

यन्न संवेद्यते तन्न विद्यते वियदब्जवत् ॥ ६२ ॥
चेतनाव्यवहारस्तु तथा देहादिसंस्थितिः ।
पृथ्व्यादिभूतसङ्घातपरिणामो हि केवलम् ॥ ६३ ॥
तस्माद्धर्मक्रिया व्यर्थमाबाधाकारिणो गुणाः ।
न च तेषां फलं साक्षादीक्ष्यते ह्यत्र किंचन ॥ ६४ ॥
किञ्च कष्टात् तपस्यादेः कथङ्कारं सुखं भवेत् ? ।
कारणैः सदृशं कार्यं फलं बीजानुगं च यत् ॥ ६५ ॥
शान्तात्मा मुनिरप्यूचे देवानांप्रिय ! यत्त्वया ।
उक्तं स्वोक्तिविरुद्धं तद् माता वन्ध्यादिवाक्यवत् ॥ ६६ ॥
यतो येन प्रमाणेन जीवाभावस्त्वयोच्यते ।
तदस्ति नास्ति वा तत्रास्तित्वं तावत्तवाऽघटम् ॥ ६७ ॥
ज्ञानरूपं प्रमाणं हि न स्यादिन्द्रियगोचरः ।
नास्तिपक्षे तु तदकिञ्चित्करं शशशृङ्गवत् ॥ ६८ ॥
किञ्च,
सन्ति रूपादयो भावा यथान्ध-बधिरादिभिः ।
अनुपलब्धा अप्येते तदन्यैरुपलम्भतः ॥ ६९ ॥
तथात्मा चर्मदृष्टीनामदृष्टोऽप्येष विद्यते ।
प्रत्यक्षत्वात् त्रिकालेऽपि परमज्ञानचक्षुषाम् ॥ ७० ॥
यत उक्तम्—
अनिन्द्रियगुणं जीवमग्राह्यं मांसचक्षुषाम् ।
सिद्धाः पश्यन्ति सर्वज्ञाः ज्ञानसिद्धाश्च साधवः ॥७१॥
यच्च पृथ्व्यादिसङ्घाताच्चेतना गदिता त्वया ।
तेषां प्रत्येकचैतन्यात् समुदायेऽपि सा भवेत् ॥ ७२ ॥
वालुकायामसत् तैलं वालुकाघाणकेऽपि न ।
अत एकेन्द्रिया जीवाः सिद्धा पृथ्व्यादयः स्फुटम् ॥७३॥
तस्माज् ज्ञानादिधर्मेभ्यो भिन्नाभिन्नविवृत्तिमान् ।
यथोक्तकर्मणः कर्त्ता भोक्ता कर्मफलस्य च ॥ ७४ ॥

चैतन्यलक्षणो जीवो मन्तव्यः सर्वथा बुधैः ।
सति तस्मिन् गुणाधारे धर्मकर्माद्यसिध्यत ॥ ७५ ॥
गत्यादिचेष्टयाऽप्येष देही देहेऽनुमीयते ।
अन्वय-व्यतिरेकाभ्यां[1] ध्वजाक्षोभेन वातवत् ॥ ७६ ॥
यथा भूमिगतं बीजमङ्कुरादनुमीयते ।
सुख-दुःखात् तथा प्राच्यधर्माऽ-धर्मविनिश्चयः ॥ ७७ ॥
तथाहि—
सचित्रशालिकारम्ये विचित्रमणिकुट्टिमे ।
दिव्योल्लोचे वसन्त्येके सौधे सद्गन्धवासिते ॥ ७८ ॥
अन्ये बिलरजःकीर्णे लताजालसमाकुले ।
दृश्यन्ते दुःस्थिताः संसत्कीलिञ्ज[2]गृहके सदा ॥ ७९ ॥
एके मृष्टान्नपक्वान्नद्राक्षापानादिभोजिनः ।
कर्पूरमिश्रताम्बूलमुखा भुञ्जन्त्यहो ! सुखम् ॥ ८० ॥
अन्ये परमुखापेक्षा बुभुक्षाक्षामकुक्षयः ।
अकाले कष्टसंप्राप्तं कदन्नं क्वापि भुञ्जते ॥ ८१ ॥
एकेऽत्युदारशृङ्गाराः सारमाल्यविलेपनाः ।
दिव्ययानपरीवाराः क्रीडन्ति स्मरमूर्त्तयः ॥ ८२ ॥
अन्ये तु दीनवदना धनस्वजनवर्जिताः ।
दुर्दशा मलदुर्गन्धा भ्रमन्ति किल नारकाः ॥ ८३ ॥
सुगीतैस्तूलिकास्वेके वीणानादमनोहरैः ।
लब्धनिद्रासुखाः प्रातः शङ्खनादेन जाग्रति ॥ ८४ ॥
शृण्वन्तो जम्बूकोलूकध्वनिमन्ये खरावनौ ।
स्वापित्वा गतनिद्राः स्युः क्षुधार्त्तशिशुकस्वरैः ॥ ८५ ॥
धर्माऽधर्मफलं वीक्ष्य साक्षादिति शुभाशुभम् ।
कष्टसाध्योऽपि कर्त्तव्यः सद्धर्मोऽनन्तशर्मणे ॥ ८६ ॥

---

१ तत्सत्त्वे तत्सत्त्वमन्वय, तदभावे तदभावो व्यतिरेक. । २ कलिञ्ज. कट ।

यच्च त्वयोदितं कष्टात् सौख्यं न स्यात्तदप्यसत् ।
कटुकादौषधादत्र किमारोग्यं न जायते ? ॥ ८७ ॥
किञ्च लोके स्फुरत्कीर्त्तिः सद्गतिन्यस्तचेतसः ।
धर्मोद्यतस्य जीवस्य स्वर्गादप्यधिकं सुखम् ॥ ८८ ॥
तथा—
येन चारु कुलं रूपं बलं ज्ञानं धनं यशः ।
आनिन्ये तस्य धर्मस्यानुपकुर्वन्नरोऽधमः ॥ ८९ ॥
उक्तं च—
नीयते येन धर्मेण लक्षसम्पत्तियोग्यताम् ।
नरः शर इवैतस्माद् विमुखः पतति क्षितौ ॥ ९० ॥
अतो धर्मकुटुम्बस्य धर्मस्थानस्य चानिशम् ।
पोषणं कुर्वता भाव्यं कृतज्ञेन मनीषिणा ॥ ९१ ॥
दया माताऽस्य सत्कर्मविनियोगः पुनः पिता ।
प्रिया श्रद्धा गुणाः पुत्रा धर्मस्येदं कुटुम्बकम् ॥ ९२ ॥
सङ्घश्चतुर्विधो बिम्बं चैत्यं चाप्यागमोऽर्हताम् ।
सप्ताप्येतानि धर्मस्य स्थानकानि विदुर्बुधाः ॥ ९३ ॥
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
अतो धर्मो न मोक्तव्यः श्रयणीया गुणाः सताम् ॥ ९४ ॥
किञ्च—
संदिग्धेऽपि परे लोके त्याज्यमेवाशुभं बुधैः ।
यदि नास्ति ततः किं स्यादस्ति चेन्नास्तिको हतः ॥९५॥
इत्थं संदेहपक्षेऽपि लौकिकैरपि कथ्यते ।
प्रमाणनिश्चिते त्वस्मिन् कथं धर्मो निषिध्यते ? ॥ ९६ ॥
गुरूणां विनतैर्भाव्यं कर्तव्या साधुसङ्गतिः ।
सविवेकं मनो धार्यं न त्याज्यं सत्त्वमुत्तमम् ॥ ९७ ॥
विनयश्च विवेकश्च सुसङ्गश्च सुसत्त्वता ।
लौकिका अप्यमी श्लाघ्या गुणा लोकोत्तरास्त्वलम् ॥९८

भूषणानीव भूषायै गुणा बाधाकरा अपि ।
कथ्यते तत्फलं साक्षाल्लोकेऽपि तव सङ्गते[1] ॥ ९९ ॥
तथाहि—
विनयादेव सौभाग्यं भाग्यं विद्यार्थसंपदः ।
लोकद्वयसुखस्याऽपि भाजनं विनयाद् नरः ॥ १०० ॥
ध्रुवं नम्रतया लोके गुरुत्वं लभते नरः ।
छन्दोवर्ण इव स्तब्धः पुनर्लघुरिति प्रथाम् ॥ १०१ ॥
यथा यथा प्रकृष्टानां पात्रं भवति संपदाम् ।
शाखीव फलभारेण नम्रः साधुस्तथा तथा ॥ १०२ ॥
सुवंशसंभवः कोटिलाभयुक्तोऽपि कोविदः ।
कोदण्ड इव नम्रत्वादात्मन्यारोपयेद् गुणः ॥ १०३ ॥
श्रूयते विनये याऽद्य विक्रमस्य कथा किल ।
लोकाग्रविनयस्याङ्गमिति सैव निगद्यते ॥ १०४ ॥
तथाहि—
भरतेऽवन्तिदेशेऽस्ति नानादेशान्तरागतैः ।
नरै रत्नैश्च रोचिष्णुरवन्ती नामतः पुरी ॥ १०५ ॥
अद्वैतविक्रमोऽप्युच्चैस्त्रिविक्रमकलां[2] दधत् ।
तत्रोदारचरित्रोऽभूद् विक्रमो नाम भूपतिः ॥ १०६ ॥
विसृष्टार्थोऽपि यः श्रीमान् शक्तियुक्तोऽपि यः क्षमी ।
दधानोऽपि सदौन्नत्यं पूज्येषु विनतो भृशम् ॥ १०७ ॥
ओजः-प्रसाद-माधुर्य-सौकुमार्यादिसद्गुणा ।
सुकवेः कवितेवास्य प्रियाऽऽसीत् कमलावती ॥ १०८ ॥
अन्यदाऽसौ निजस्थानमिन्द्रस्थानसमं नृपः ।
दृष्ट्वा प्रमुदितोऽत्यन्तं पप्रच्छेदं सभासदः ॥ १०९ ॥
अहो ! ब्रूत कला-विद्या-वस्तुविज्ञानमद्भुतम् ।
तत् किमप्यस्ति कुत्रापि यन्मे राज्ये न विद्यते ? ॥ ११० ॥

---

१ संमते, इत्यपि । २ विष्णुस्त्रिविक्रम ।

ततः प्राह कलाविज्ञः कोऽपि देशान्तरी नरः।
हर्षोत्फुल्लमुखाम्भोजः प्राप्यावसरमुच्चकैः ॥ १११ ॥
भ्रान्तोऽस्मि बहुरत्नायां पृथिव्यां सुचिरं परम्।
त्वत्समो न मया दृष्टः श्रीविद्यावेणिसङ्गमः ॥ ११२ ॥
पाताले वासुकिर्देव! दिवि शक्र उभाविमौ।
अदृष्टावपि मन्येते पृथिवीन्द्र! तव श्रिया ॥ ११३ ॥
महतामवधिः स्वामिन्! गगनं कथ्यते बुधैः।
तत्राप्येकः कलावांस्ते त्वद्रा[illegible] तु राहुत्रशः ॥ ११४ ॥
अवस्त्वेव हि तद्वस्तु निष्कला सा कला विभो!।
अज्ञानं तच्च विज्ञानं यन्निलीनं नहि त्वयि ॥ ११५ ॥
यशःसंभारसुरभिर्विक्रमाक्रान्तभूतलः।
ॐकार इव वर्णानां त्वं राज्ञां धुरि संप्रति ॥ ११६ ॥
वाचस्पतिमतिर्मन्त्री तवाज्ञाजीविता जनाः।
सहर्षप्रणताः सर्वे प्रधाना मण्डलेश्वराः ॥ ११७ ॥
सहन्ते द्विषतां वीरा न गन्धं गन्धहस्तिवत्।
अनङ्गभरभुग्नाङ्गचङ्गोऽयं कामिनीजनः ॥ ११८ ॥
अस्ति कौतुकचित्रेन्द्रजालादन्यदपि प्रभो!।
परकायप्रवेशाख्या किन्तु विद्या न विद्यते ॥ ११९ ॥
ससंभ्रमं नृपः प्राह कुत्रास्तेऽसौ वदाऽऽशु मे?।
सोऽप्याह श्रीगिरौ देव! सिद्धेश्वरनरान्तिके ॥ १२० ॥
विसृज्याथ सभां राजा राज्यकार्ये स्वमन्त्रिणम्।
न्यारोप्य नगराद् विद्याकौतुकी निशि निर्ययौ ॥ १२१ ॥
तादृग्राज्यसुखं हित्वा दुःखान्यगणयन् पथि।
नवार्थरसिकः सत्त्वसहायो यात्यसौ मुदा ॥ १२२ ॥
यतः—
नीचाः शरीरसौख्यार्थमृद्धिव्यापाय मध्यमाः।

---

१ कलावान् सोम। २ व्यापो विस्तारः।

कस्मैचिदद्भुतार्थाय यतन्ते पुनरुत्तमाः ॥ १२३ ॥
एवं च व्रजतो नित्यं मानसोत्साहरश्मिभिः ।
आकृष्ट इव यस्याऽऽशु श्रीगिरिर्निकटोऽभवत् ॥ १२४ ॥
सिद्धेश्वराभिधं विद्यासिद्धं तत्रैकदेशगम् ।
प्रसन्नास्यं नृपो दृष्ट्वा तुष्टो नत्वा ततोऽवदत् ॥ १२५ ॥
त्वन्मूर्तिदर्शनेनैव कृतार्थोऽहं मुनीश्वर ! ।
अयच्छन्नब्रुवाणोऽपि जगदाह्लादयेच्छशी ॥ १२६ ॥
अतस्तव पदाम्भोजद्वयं दुर्लभसङ्गमम् ।
संसेविष्येऽनुजानीहीत्यनिषिद्धस्तथाऽकरोत् ॥ १२७ ॥
तत्रैको ब्राह्मणोऽग्रेऽपि विद्यायै तिष्ठते चिरात् ।
तत्कृतो विनयोऽप्यस्य दुःखाय मुहुरर्थनात् ॥ १२८ ॥
बीजमुप्तं शुभक्षेत्रे स्वयमेव यथोदयेत् ।
यथाऽन्यदपि सत्कर्म दैन्यं क्लेशाय केवलम् ॥ १२९ ॥
आसनन्यास-चरणक्षालनाद्यैर्मनोऽनुगैः ।
नृपस्य विनयैर्याच्ञारहितैर्मुमुदे गुरुः ॥ १३० ॥
एकाग्रमनसा ध्याता देवाः शैलमया अपि ।
अचिरेणैव तुष्यन्ति किं पुनश्चेतनो जनः ? ॥ १३१ ॥
अब्रवीच्च महाभाग ! सदाचारेण ते मया ।
ज्ञातं कोऽपि नरोत्तंसस्त्वं देशान्तरकौतुकी ॥ १३२ ॥
विनयात् तव तुष्टोऽस्मि तत् त्वं विद्यां गृहाण मे ।
परकायप्रवेशाख्यां यद् भक्तेः स्यां यथाऽनृणः ॥ १३३ ॥
तत् श्रुत्वा विक्रमः स्वार्थशिथिलोऽग्रेतनं नरम् ।
चिरकालागतं दीनं दृष्ट्वा दध्यौ लसद्दयः ॥ १३४ ॥
अस्मिन् पुरास्थिते हन्त ! निराशे गुरुबान्धवे ।
लब्धविद्यः कथं यामि तदेतामस्य दापये ॥ १३५ ॥
बभाषे च प्रभो ! पूज्य ! सेवाहेवाकिनश्चिरात् ।

---

१ मनोगतैरित्यपि ।

अस्य विद्याप्रदानेन प्रसादो मेऽस्तु तावकः ॥ १३६ ॥
सविषादं गुरुः प्राह मा दुग्धं पाययोरगम् ।
अयोग्योऽयमपात्रे हि विद्याऽनर्थकरी भृशम् ॥ १३७ ॥
यथा कोऽपि पुरा विद्यासिद्धः सिंहास्थिदर्शनात् ।
सिंहाङ्गं सकलं कृत्वा सजीवं कर्तुमुद्यतः ॥ १३८ ॥
वारितो बन्धुना किन्तु सजीवमकरोन्मदात् ।
हतोऽसौ तेन सिंहेन त्वमप्येवं विभावय ॥ १३९ ॥
एवमुक्तोऽपि सिद्धस्य परार्थव्यसनी नृपः ।
लगित्वा पादयोर्बाढं तस्मै विद्यामदापयत् ॥ १४० ॥
गुर्वादेशोपरोधेन जगृहे च स्वयं नृपः ।
विधिश्च साधने तस्याः सिद्धेन कथितः स्फुटम् ॥१४१॥
अविसृष्टोऽपि गुरुणा द्विजोऽभूद् गन्तुमुत्सुकः ।
न तु राजा विसृष्टोऽपि गुरुवात्सल्यभारितः ॥१४२॥
यतः—
कलाकलापसंपन्ना उपकर्तुः पराङ्मुखाः ।
न भवन्ति महात्मानः सरसः शिखिनो यथा ॥१४३॥
त्वं स्वकृत्यपरो भावी धर्मध्यानपरा वयम् ।
अनिच्छन्तमपीत्युक्त्वा विससर्ज नृपं गुरुः ॥१४४॥
स्वयं विधाय विप्राच्च विधाप्य विधिसाधनम् ।
सिद्धविद्यो नृपस्तेनानुगतः स्वपुरं ययौ ॥१४५॥
द्विजायात्मीयवृत्तान्तं सौहृदेन न्यवेदयत् ।
स्वच्छत्वेन गभीरोऽपि दर्शयत्युदधिर्मणीन् ॥१४६॥
गुप्तवृत्त्या दिनं स्थित्वा बहिर्मुक्त्वा द्विजं निशि ।
निजराज्यस्थितिं द्रष्टुमेकाकी प्राविशत् पुरम् ॥१४७॥
पूर्ववद् देवहर्म्येषु सङ्गीतोत्सवनाटकैः ।
सुरम्यव्यवहाराद्यं सधर्माचारधार्मिकम् ॥१४८॥

१ त्वदीय ।

क्षुत-स्खलित-शङ्कादौ चिरं जीवतु विक्रमः ।
इत्यूचानं जनं हृष्टो वीक्षते सर्वतः पुरीम् ॥१४९॥
( युग्मम् )
तदा च नृपसौधान्तः पट्टकुञ्जरमृत्युना ।
तल्लोकमाकुलं दृष्ट्वा ययौ राजा द्विजान्तिके ॥१५०॥
उवाच मित्रं भो विद्याविलासरसिको गजे ।
प्रविश्य चरितं किञ्चिद् वीक्षे प्रासादमध्यगम् ॥१५१॥
एकान्ते मम कायस्य तत् त्वं प्राहरिको भव ।
ज्ञातस्वरूपप्रकटो भविष्यामि त्वया सह ॥१५२॥
इति स्वं तत्र मुक्त्वाङ्गं राजा गजकलेवरम् ।
प्रविवेश करीन्द्रोऽपि पूर्ववद् विलसत्यलम् ॥१५३॥
न केवलं गजो राज्ञा सजीवो विहितो निजः ।
राजवर्गोऽपि तन्मृत्युमृतः सर्वोऽपि जीवितः ॥१५४॥
प्रावर्तन्त गजेन्द्रस्य विविधा मङ्गलोत्सवाः ।
कायान्तरगतस्यापि राज्ञो भोगप्रदो विधिः ॥१५५॥
इतश्च दुर्जनात्माऽसौ तनुप्राहरिको नरः ।
विश्वासघातको मित्रद्रोही लोभादचिन्तयत् ॥१५६॥
महादारिद्र्यदग्धेन किमनेनाङ्गकेन मे ? ।
प्रविश्य विक्रमस्याङ्गे कुर्वे राज्यं निराकुलः ॥१५७॥
तथा कृत्वा स सौधान्तः प्रविष्टः कृत्रिमो नृपः ।
योग्यभूमिमजानानश्चकितोऽरण्यजीववत् ॥ १५८ ॥
ससंभ्रमागतामात्यबाहुलग्नः सदःस्थितम् ।
सिंहासनमलंचक्रे प्रणतो राजपूरुषैः ॥ १५९ ॥
करीन्द्रो जीवितो दिष्ट्या नरेन्द्रोऽपि समागतः ।
दुग्धेऽसौ शर्करापात इत्यूचानोऽमिलज्जनः ॥ १६० ॥
तेषां यथोचितालापप्रसादमभिवाञ्छताम् ।
नामकर्माद्यजानानो न करोति किमप्यसौ ॥ १६१ ॥

सहर्षमागता देव्याः प्रियसख्योऽपि तादृशम् ।
लीलाविलासलालित्यरसं नासादयन्त्यतः ॥ १६२ ॥
अमात्यः पालितप्राज्यराज्यः संभाषणं नहि ।
मानं प्रधानसामन्ता लभन्ते नापि नागराः ॥ १६३ ॥
ते तादृशं नृपं दृष्ट्वा चिन्तयन्त्येष किं सुरः ।
दैत्यो वा राजरूपेण शून्यराज्यमधिष्ठितः ?॥ १६४ ॥
नैतच्च घटते पादौ येनास्य लगतः क्षितौ ।
निमेषश्च दृशोस्तेन चित्तचालः कुतोऽप्यसौ ॥ १६५ ॥
चित्तं विरहसंतप्तं कमलावचनामृतैः ।
निर्वाप्यं चेदित्यमात्यस्तं चेव्याऽऽनाययत् ततः ॥ १६६ ॥
स कृत्रिमनृपो दध्यावहो ! मे सुमना विधिः ।
येनानीत इमां भूमिं मनसोऽपि सुदुर्लभाम् ॥ १६७ ॥
राज्ञी संभ्रान्तमुत्थाय मण्डयत्यासनादिकम् ।
दृष्ट्वा च तं पुनर्भूपं मूर्छितेव पतत्यधः ॥ १६८ ॥
उक्ता चेटीभिरुत्थाप्य किमिदं देवि ! कथ्यताम् ।
नृपोऽप्याह कथं देवि ! मूर्छाघातो मदागमे ? ॥ १६९ ॥
तद्वचःश्रवणाद् जातमहार्तिः साऽप्यचिन्तयत् ।
एष प्रिय इवेक्षेत दाहं दत्ते तु वैरिवत् ॥ १७० ॥
लब्धोपायाऽवदद् देवी देव ! यात्राक्षणे मया ।
शुभागमाय वश्चण्ड्या उपयाचितकं कृतम् ॥ १७१ ॥
यथा देवि ! प्रपूज्य त्वां वीक्षे दृष्ट्याऽपि वल्लभम् ।
तदकृत्वेक्षमाणा त्वां चण्ड्याऽहं पातिता भुवि ॥ १७२ ॥
तत्पूजासमयं देव ! कथयिष्याम्यहं स्वयम् ।
इति दत्तोत्तरो राज्ञ्या भवनाद् निर्ययौ नृपः ॥ १७३ ॥
इतश्च तं गजं मन्त्री राजपार्श्वे व्यभूषयत् ।
सुचिरादागतं येन स्वामिनं वीक्षते जनः ॥ १७४ ॥
यथा राजाऽपि नगरं दृष्ट्वा मुदितनागरम् ।

स्वस्थीभूतमनाः सर्वमालापयति पूर्ववत् ॥ १७५ ॥
अन्योऽन्यमथ जल्पन्ति हस्तिभृङ्गारकारकाः ।
अहो ! शून्य इव स्वामी देशान्तरगमादभूत् ॥ १७६ ॥
इत्याकर्ण्य स दन्तीन्द्रोऽत्याकुलश्चिन्तयत्यहो ! ।
किमिदं हा ! द्विजो राज्ये मन्मूर्त्या ललति ध्रुवम् ॥१७७॥
गुरुणा वारितेनाऽपि यद्विद्या दापिता मया ।
विप्राधमस्य तस्येदं शीघ्रमासादित फलम् ॥ १७८ ॥
अविश्वासमयीं नीतिमभ्यस्तां बाल्यतोऽस्मि यत् ।
विस्मार्य तस्य विश्वस्तस्तत् किञ्चिद् दैवतं ध्रुवम् ॥१७९॥
नीचोऽप्युच्चैर्भवेद् दैवादुच्चोऽपि हि लघुर्भवेत् ।
सैव विद्या श्रियं तस्य कुरुते हरते मम ॥ १८० ॥
कलभपरिवाराद्यं वस्तु कायानुगं भुवि ।
काये व्रजति तत्सर्वं परकीयं ममाऽभवत् ॥ १८१ ॥
यथेहाध्यक्षतो दृष्टं तथाऽमुत्राऽपि देहिनः ।
कर्मैव सहगं तेन सुकृतं कुर्वते बुधाः ॥ १८२ ॥
भवतु प्राप्तकालीनं कुर्वे तावत् पलायनम् ।
मा ममाऽस्तु तदारोहे पापस्योपरि चूलिका ॥ १८३ ॥
संप्रधार्येदमुत्कर्णो व्याकुञ्चितकरः करी ।
वेगेन गन्तुमारब्धो जज्ञे कलकलो महान् ॥ १८४ ॥
पादचारा-ऽश्ववाराद्यैर्दधावेऽनु सहस्रशः ।
अधिकाधिकगत्याऽस्य निर्विण्णैस्तु न्यवर्तत ॥ १८५ ॥
दूरारण्ये करी गत्वा श्रान्तो दध्यौ विषण्णधीः ।
क्व भूसंज्ञाभवत्कार्यं राज्यं क्वेदं पलायनम् ? ॥१८६॥
किंवा स्तोकमिदं पुंसो दुर्बुद्धेः खलसङ्गिनः ।
इति चिन्ताब्धिक्षुत्-तृष्णा-तापैराचक्रमे नृपः ॥ १८७ ॥
संप्राप्य वटवृक्षस्य च्छायां विधुरबन्धुवत् ।
स्वस्थीभूतः क्षणं तत्र नरमेकं ददर्श सः ॥ १८८ ॥

वटपादान्तरस्थं तं धनुर्गोलिकया शुकान् ।
घ्नन्तं वीक्ष्य स दुष्पूरदुर्वहाङ्गेन खेदितः ॥ १८९ ॥
दध्यौ किममुनाङ्गेन श्रेयान्द्धा हि विस्तरः ?।
तद्विशामि शुकस्याङ्गमिति राजा तथाऽकरोत् ॥ १९० ॥
( युग्मम् )
व्याधमाह शुको भद्र ! बहुकीरवधेन किम् ? ।
अवन्त्यां नय मां टङ्कसहस्रं लप्स्यसे ध्रुवम् ॥१९१॥
किन्तु मे प्रत्ययो जन्यस्तत् श्रुत्वा मुदितो नरः ।
अभयप्रत्ययं तस्योत्पाद्य जग्राह तं करे ॥ १९२ ॥
पाययित्वा जलं चूर्णि ढौकयित्वा, सुनिर्वृतम् ।
शुकं कृत्वा गतोऽवन्तीं व्याधो राजपथे स्थितः ॥१९३॥
लोको वदति किं मूल्यं, सहस्रं भाषते नरः ।
कीरं पृच्छति यल्लोकस्तत्तच्छास्त्रं पठत्यसौ ॥ १९४ ॥
याचितादधिकं मूल्यं जनो दत्ते परं नरः ।
नादत्ते कीरवाक्येन महार्घ्योऽभूत् ततोऽधिकम् ॥ १९५ ॥
चेट्योऽथ कमलावत्याः प्राप्तास्तन्मर्मकोविदः ।
कीरस्तदेकया पृष्टः पपाठ मधुराक्षरैः ॥ १९६ ॥
तवाक्षिविशिखैर्विद्धः सुभगोऽस्मीति जीवति ।
अविद्धो म्रियते तन्वि ! धनुर्विद्येयमद्भुता ॥ १९७ ॥
किञ्चित् त्वमपि भाषस्व यत् पठाम्यनु शिष्यवत् ।
तयोच गुरुरेव त्वं कस्य शिष्यत्वमर्हसि ? ॥ १९८ ॥
इति हर्षोत्सुका चेटी गत्वा देव्यै न्यवेदयत् ।
न दृष्टो न श्रुतः कीरः सुकविः स्वामिनीदृशः ॥ १९९ ।
तदीयवर्णनाऽत्यर्थतुष्टा राज्ञी व्यचिन्तयत् ।
काव्यशास्त्रविनोदाय ददौ मे प्राभृतं विधिः ॥ २०० ॥
सोत्कण्ठं चावदच्चेटीं रे ! याहि त्वरितैः पदैः ।
पुंसो यद्याचितं दत्त्वा शुकराजमिहानय ॥ २०१ ॥

चेट्या तथाकृते व्याधः कृतार्थः स्वास्पदं ययौ ।
कीरं कराम्बुजे कृत्वा नीतो देव्यन्तिके तया ॥ २०२ ॥
दृष्ट्वा संमुखमायातीं हर्षेण कमलावतीम् ।
दक्षिणं भुजमुत्क्षिप्य पपाठ मधुरं शुकः ॥ २०३ ॥
देवि ! वामभुजस्थत्वङ्कारोद्धाराय विक्रमः ।
प्रतिमानामिव क्षोणीं धत्ते दक्षिणबाहुना ॥ २०४ ॥
सा हसित्वाऽऽह कीर ! त्वमियतेदं ब्रवीषि यत् ।
धरैश्वर्यं विना नारीभारः क्रष्टुं न शक्यते ॥ २०५ ॥
साधु साधु त्वया प्रोक्ता भूरिभारकरा वयम् ।
सत्यवाक्येन को न स्यात् तुष्टो यः पण्डितो भवेत् ?॥२०६॥
लज्जयेति शुकोपज्ञां गोपयित्वात्मवर्णनाम् ।
सा स्वर्णपञ्जरे चारुनिषद्ये[1] तमधारयत् ॥ २०७ ॥
स्वयं संस्कुरुते स्थानं परिमार्जन-धूपनैः ।
सज्जम्बु-दाडिमीबीजा-ऽऽमलकानि च यच्छति ॥ २०८ ॥
अन्यान्यपि तदिष्टानि पेय-भक्ष्याण्यढौकयत् ।
तत्संलापामृतैर्नित्यमात्मानं प्रीणयत्यसौ ॥ २०९ ॥
पठ प्रश्नोत्तरं किञ्चिदिति राज्ञ्या नियोजितः ।
शुको विद्याविनोदाय पपाठ सहसैव सः ॥ २१० ॥
योगी किं ध्यायति ध्याने गुरवे क्रियते किमु ? ।
प्रतिपन्नं सतां कीदृगादौ छात्राः पठन्ति किम् ? ॥२११॥
इति पृष्टे यदा राज्ञी चिन्तयन्त्यपि सा चिरम् ।
न जानाति तदा सोऽवादीं नमः सिद्धमुत्तरम् ॥ २१२ ॥
न लगेद् नाग-नारिङ्गे निम्ब-तुम्बे पुनर्लगेत् ।
लगेत्युक्ते लगेन्नैव मा मेत्युक्ते भृशं लगेत् ॥ २१३ ॥
तत् किं मे कथ्यतामेवं भूयः पृष्टा शुकेन सा ? ।
क्षणं विमृश्य देव्याह हुं ज्ञातं ओष्ठसंपुटम् ॥ २१४ ॥

---

१ चारुर्मनोहरा निषद्या आसनं यस्मिंस्तस्मिन् ।

विहिता निर्विषा नागा देवाः शक्तिविवर्जिताः ।
निश्चेष्टाश्च यथा सिंहाः सा बालैर्ध्रियते करे ॥ २१५ ॥
केयमित्युदिते राज्ञ्या द्रुतं ज्ञात्वा शुकोऽब्रवीत् ? ।
शृणु ज्ञातं मया देवि ! सा चित्रकरलेखनी ॥ २१६ ॥
गजा येन हताः सिंहाः क्रान्ता व्याकुलिता भटाः ।
स कोलिकगृहे वीरो देवि ! बद्धो मयेक्षितः ॥ २१७ ॥
शुकोदितमिति प्रश्नं श्रुत्वा स्मृत्वा च सा जगौ ।
हसन्ती यदहो ! वीर ! ईदृशो मशकः स्फुटम् ॥ २१८ ॥
मृणालाभमहिव्यूहमञ्जनं क्षीरसन्निभम् ।
नभः कर्पूरसंकाश राज्ञ्या गूढचतुर्थके[1] ॥ २१९ ॥
इति पृष्टे शुकः प्राह करोति यशसा महान् ।
दोषोऽपि गुणतां याति विषमप्यमृतायते ॥ २२० ॥

["मित्राणि शत्रवोऽपि स्युः" इति शुकेन गूढचतुर्थके पृष्टे राज्ञी चतुर्थपदं प्राह- अनुकूले विधौ नृणाम्"]

कृपणोऽपि नृपार्घ्यः स्यादुदारस्यापि लौल्यता ।
भावाभावेन यस्यायमाख्यातोऽपि न बुध्यते ॥ २२१ ॥

[ इति राज्ञ्या पृष्टे शुकः प्राह- आकारः ]

साकारः कष्टकारी स्यात् सविकारः सतां मतः ।
सनिकारो जनाभीष्टः केवलस्तु निरर्थकः ॥ २२२॥

[ इति शुकेन पृष्टे राज्ञी प्राह- धिक्कारः ]

नक्तमादौ दिनस्यान्ते प्रदोषादपरोऽस्ति यः ।
मानसान्तर्गतोऽप्येष लक्ष्यते न कथंचन ?॥ २२३ ॥

[ इति राज्ञ्या पृष्टे शुकः प्राह- नकारः ]

लक्ष्मी-खेद-निषेधार्थ-ब्रह्म-चक्राङ्ग-शर्मणाम् ।

---

१ पादे, इति शेष. ।

के शब्दा वाचकाः, खान्तं ब्रूहि किं णान्तमिच्छसि ?॥२२४
अर्थिनां का सदा चिते का दग्धा कपिना पुरा ?।
इक्षुयष्टेः किमिच्छन्ति किंच हंसस्य सुन्दरम् ?॥ २२५ ॥
सुकवीनां वचः कीदृग् ! शुकेन विषमे कृते।
इति प्रश्ने यदा राज्ञी नाऽवदद्[1] मूढमानसा ॥ २२६ ॥
एकद्विसर्ववर्णानां परिपाटीक्रमेण सः।
शुक एवोत्तरं चक्रे ईहालङ्कारसङ्गतम्[2] ॥ २२७ ॥
हितोपदेशपरमं किञ्चित् पठ सुभाषितम्।
इति राज्ञ्याऽन्यदा पृष्टः कीरः प्राह निशम्यताम् ॥२२८॥
सुपरीक्ष्य कृतं कार्यं सुविमृश्योदितं वचः।
इन्द्रियाणि सुदान्तानि विकुर्वन्ति कदापि न ॥ २२९ ॥
चित्तमार्जवसंपन्नं वचो मधुरिमाश्चितम्।
वपुर्विनयनम्रं च न भवत्यमहात्मनाम् ॥ २३० ॥
मुहूर्तकाऽवधिः क्रोधो यथाकालावधि व्रतम्।
प्रतिपन्नं पुनर्लोके महतां जीवितावधि ॥ २३१ ॥
स्वश्लाघा परनिन्दा च मत्सरो महतां गुणे।
असंबन्धप्रलापित्वमात्मानं पातयन्त्यधः ॥ ॥ २३२ ॥
अपरद्रोहकं वाक्यं प्रसन्ना वदनद्युतिः।
मानसं श्रुतगम्भीरं नरमूर्ध्वं नयन्त्यमी ॥ २३३ ॥
यथा कोऽपि पुरा भूपः कारयामास पण्डितैः।
देशान्तरनराऽऽनीतत्रिकपालीपरीक्षणम् ॥ २३४ ॥
तत्रैकस्याऽऽहितं कर्णे सूत्रं वक्त्रेण निर्ययौ।
तस्य मूल्ये कपर्दोऽभूद् येनासौ यत् श्रुतं लपेत् ॥ २३५॥
द्वितीयस्य पुनः कर्णे क्षिप्तं कर्णेन निर्गतम्।

---

१ कमला नाऽवदत् तदा ॥ एषोऽपि पाठ । २ क्रमश उत्तराणि– ई, हा, अलम्, क, आर', सम्, कवर्गे खस्य अन्तभूतो गकार टवर्गे णस्याऽन्ते तकार, ईहा, लङ्का, रसम्, गतम्, ईहा-ऽलङ्कारसगतम्।

तस्य मूल्ये कृतं लक्षं येनासौ श्रुतविस्मृतः ॥ २३६ ॥
तृतीयस्य तु निक्षिप्तं कर्णेऽगाद् गलसंमुखम् ।
अमूल्योऽसौ यतस्तस्य तिष्ठति स्म हृदि श्रुतम् ॥ २३७ ॥
तदेवं परदोषेषु देवि ! श्रुत्वा निदर्शनम् ।
सकर्णाः के न जायन्ते गाम्भीर्यमयमानसाः ? ॥ २३८ ॥
इति शुकोक्तिरक्तात्मा प्रतिज्ञा कमलाऽकरोत् ।
जीवितं मरणं कीर ! त्वया सह मम ध्रुवम् ॥ २३९ ॥
सुधीरेतां शुकोऽप्याह मैवं वद नृपप्रिये ! ।
काहं पशुलवः कासि प्रिया विक्रमभूपतेः ? ॥ २४० ॥
किञ्च देवि ! प्रियः स्नेहात् कुरुते ते गतागतम् ।
त्वं तु तस्य कथं स्निग्धं नालापमपि यच्छसि? ॥ २४१ ॥
तत् श्रुत्वा कमला दीर्घं निःश्वस्याह शुकोत्तम ! ।
प्रियं देशान्तराऽऽयातं दृग् ब्रूते मे मनस्तु न ॥ २४२ ॥
ततोऽहं क्षुभिता दत्त्वोत्तरं भूप विसर्जये ।
त्वं तु प्रिय इव प्रीतिं कुरुषे तदिदं ब्रुवे ॥ २४३ ॥
ततो राजशुको दध्यौ महाहर्षेण पूरितः ।
परकायप्रवेशाख्या विद्या मे सफलाऽभवत् ॥ २४४ ॥
देव्याश्चित्तपरीक्षा मेऽभविष्यत् कथमन्यथा ? ।
किञ्चानेनानुभावेन भविताऽन्यदपि प्रियम् ॥ २४५ ॥
पुनः प्राह शुकं देवी तवामृतकिरा गिरा ।
तुष्टाऽतीवास्मि तत् किञ्चिद् धर्मतत्त्वं वदाधुना ॥ २४६ ॥
स ऊचे श्रूयतां देवि ! मया गुरुमुखात् श्रुतम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ २४७ ॥
नास्त्यहिंसासमो धर्मो न संतोषसमं व्रतम् ।
न सत्यसदृशं शौचं शीलतुल्यं न मण्डनम् ॥ २४८ ॥
उक्तं च—
सत्यं शौचं तपः शौचं शौचमिन्द्रियनिग्रहः ।

सर्वभूतदया शौचं जलशौचं तु पञ्चमम् ॥ २४९ ॥
स्नानं मनोमलत्यागो दानं चाभयदक्षिणा ।
ज्ञानं तत्त्वार्थसंबोधं ध्यानं निर्विषयं मनः ॥ २५० ॥
गृहेऽपि वसतां नित्यमश्नतामपि श्रद्धया ।
मनःशुद्ध्या भवेद् धर्मस्तपसाऽपि न तां विना ॥ २५१ ॥
उक्तं च—
मन एव मनुष्याणां कारणं बन्ध-मोक्षयोः ।
बन्धने विषयासङ्गि मुक्तौ निर्विषयं पुनः ॥ २५२ ॥
तथाहि—
पुरा सूरनृपः पुर्या बहिरुद्यानमागतम् ।
मुनिं सोदरमाकर्ण्य तत्रागात् सपरिच्छदः ॥ २५३ ॥
मुनिं प्रणम्य भावेन स्फुटरोमाञ्चभूषणः ।
निशम्य तन्मुखाद् धर्मं गतः स्वभवनं नृपः ॥ २५४ ॥
पट्टराज्ञ्यपि सोत्कण्ठा वन्दितुं देवरं मुनिम् ।
आपृच्छ्य नृपतिं सायं जग्राहेत्थमभिग्रहम् ॥ २५५ ॥
सोमाभिधं मुनिं प्रातर्मया सपरिवारया ।
वन्दित्वा पारयित्वा च भोक्तव्यमिति नान्यथा ॥ २५६ ।
अथाऽन्तराले नद्यस्ति पुरस्योपवनस्य च ।
निशीथे साऽथ पूरेणाऽऽगताऽगाधा[1] वहत्यलम् ॥ २५७ ।
तेनाकुलमना राज्ञी प्रभाते निजवल्लभम् ।
पप्रच्छ कथमद्याऽसौ पूर्यते मे मनोरथः ? ॥ २५८ ॥
उवाच नृपतिर्देवि ! मा कार्षीः खेदमीदृशम् ।
येनेदं सुकरं सुस्था गच्छ त्वं सपरिच्छदा ॥ २५९ ॥
अर्वाक्तीरे नदीदेवीं समाह्वानपुरस्सरम् ।
योजयित्वा करौ शुद्धमानसेदं वदेर्वचः ॥ २६० ॥
हे देवि ! नदि ! भर्त्ता मे देवरव्रतवासरात् ।

१ अगाधा गभीरा ।

आरभ्य ब्रह्मचारी चेद् मार्गं देहि तदा द्रुतम् ॥ २६१ ॥
तत् श्रुत्वा विस्मिता राज्ञी दध्यौ किमिदमीदृशम् ।
असम्बद्धं नृपो ब्रूते पञ्चमो लोकपालकः ?॥ २६२ ॥
भ्रातृव्रतदिनादूर्ध्वमस्य यत् पुत्रसन्ततिः ।
बभूव मयि तत् सर्वं विदितं मे पतिव्रतम् ॥ २६३ ॥
अथवा किं विकल्पेन निकटः प्रत्ययोऽधुना ? ।
अन्यच्च निर्विकल्पाः स्युः पतिवाक्ये पतिव्रताः॥ २६४ ॥
यतः--
सती पत्युः प्रभोः पत्तिर्गुरोः शिष्यः पितुः सुतः ।
आदेशे संशयं कुर्वन् खण्डयत्यात्मनो व्रतम् ॥ २६५ ॥
इति तुष्टा गता राज्ञी सोपस्करपरिच्छदा ।
नदीतीरे मिलल्लोके संकटीभूतभूतले ॥ २६६ ॥
तत्राहूय नदीं देवीं कृतार्चा शुद्धमानसा ।
सा भर्तृकथितां सत्यश्रावणामकृत स्फुटम् ॥ २६७ ॥
नदी च सहसा वामदक्षिणक्षिप्तवारिभिः ।
स्ताघीभूय ददौ पारं गता राज्ञी परे तटे ॥ २६८ ॥
प्रणम्य विधिना तत्र धन्यंमन्या मुनिं ततः ।
लब्धाशीर्मुनिना पृष्टा नद्युत्तारविधिं सती ॥ २६९ ॥
सर्वमाख्याय वृत्तान्तं सा प्रपच्छ मुनीश्वरम् ।
असंभाव्या कथं भर्तुर्घटते ब्रह्मचारिता ? ॥ २७० ॥
सोऽप्याह श्रूयतां भद्रे ! यदाऽहं जगृहे व्रतम् ।
तदारभ्य विरक्तात्मा व्रताकाङ्क्षी भृशं नृपः ॥ २७१ ॥
परं तादृग् न कोऽप्यासीद् राज्यधूर्धरणक्षमः ।
तेनासौ कुरुते राज्यं व्यवहारेण नो धिया ॥ २७२ ॥
उक्तं च—
परपुंसि रता नारी भर्तारमनुवर्तते ।
तथा तत्त्वरतो योगी संसारमनुगच्छति ॥ २७३ ॥

तदेवं गृहवासेऽपि पङ्केऽब्जस्येव तस्थुषः।
निर्लेपमनसो राज्ञो घटते ब्रह्मचारिता ॥ २७४ ॥
मुनिं नत्वा ततो राज्ञी वहन्ती परमां मुदम् ।
वनस्यैकतमे देशे गत्वा वासितवत्यसौ ॥ २७५ ॥
कारयित्वा रसवतीं स्वपरिच्छदहेतवे ।
पारयित्वा मुनिं पूर्णाऽभिग्रहा बुभुजे स्वयम् ॥ २७६ ॥
आप्रष्टु गतया देव्या पुनः पृष्टो मुनिः कथम् ।
नद्युत्तार्या मयेदानीं मुनिराह प्रशान्तवाक्? ॥ २७७ ॥
नदी देवी त्वया भाण्या यद्यसौ मुनिरात्रतात् ।
उपोषितश्चेरन्नित्यं तदा मार्गं प्रयच्छ मे ॥ २७८ ॥
पुनर्विस्मयमापन्ना राज्ञी नद्यास्तटं गता ।
श्रावयित्वा मुनेर्वाक्यं नदीं तीर्त्वा ययौ गृहान् ॥२७९ ॥
राज्ञो निवेद्य तत् सर्वं पप्रच्छ च कथं मुनिः ।
उपोषितः स्याद् यः स्वेन पारणं कारितो मया ? ॥२८०।
राजाख्यद् देवि ! मुग्धाऽसि धर्मतत्त्वं न विन्दसि ।
समचित्तो महात्माऽयमशनेऽनशनेऽपि वा ॥ २८१ ॥
तथा-
अकृताऽकारितं शुद्धमाहारं धर्महेतवे ।
अश्नतोऽपि मुनेर्नित्योपवासफलमुच्यते ॥ २८२ ॥
मनो मूलं वचः स्कन्धः क्रियाः शाखादिविस्तरः ।
धर्मवृक्षस्य तन्मूले दृढे सर्वं प्रजायते ॥ २८३ ॥
स्वभर्तुर्देवरस्याऽपि माहात्म्यं वीक्ष्य तादृशम् ।
अनुमोदनयैवात्मा तया राज्ञ्या पवित्रितः ॥ २८४ ॥
यदिदं गदितं धर्मतत्त्वमाख्यानसंश्रुतम् ।
मया कीरेण ते देवि ! ज्योत्स्नाधवलनं हि तत् ॥२८५॥
सतीनां यत् स्वभावेन सज्ञानं मानसं भवेत् ।
तेन कूटे स्खलत्येव प्रौढपण्डितवद् ध्रुवम् ॥ २८६ ॥

सुविचारं सगर्भं च वचः श्रुत्वा शुकादिदम् ।
राज्ञी दध्यौ न सामान्यः कोऽप्यसौ ज्ञानवानलम् ॥२८७॥
मच्चित्तस्खलनात् कूटो नृपोऽयमिदमस्य गीः ।
समाख्यानीति हृष्यन्त्या देव्या निद्रा समागमत् ॥२८८॥
अथ तत्रेक्ष्य निर्जीवं शुकात्मा गृहगोधकम् ।
विवेश वीक्षितुं राज्ञ्याः शीलवत् पालनं गिरः ॥ २८९ ॥
तावद् देवी स्वयं बुद्ध्वा शुकेन्द्रं वीक्ष्य निःस्वनम् ।
प्रबोधयितुमारब्धा मृदुभिश्चाटुभिः शतैः ॥ २९० ॥
वद किं नाद्य मे कीर ! सुधया सिंचसि श्रुती ? ।
यो मां बोधितवांस्त्वं त्वां प्रत्युताहं विबोधये ॥ २९१ ॥
विहाय निद्रामुत्तिष्ठ पठ प्राभातमङ्गलम् ।
लसज्ज्ञानप्रदीपानां सतां निद्रातमः कुतः ? ॥२९२ ॥
किं नाद्याप्युत्तरं दत्से कथं रुष्टो ममोपरि ।
आत्मरूपे त्वयि स्वप्नेऽप्यलीकं नैव चिन्तये ? ॥ २९३ ॥
इत्यादिगदितैर्यावद् बोधितोऽपि न बुध्यते ।
सम्भ्रान्ता तावदुत्थाय सा करेणाऽस्पृशच्छुकम् ॥ २९४ ॥
तथापि न श्वसित्येष देवी मूर्च्छा गता ततः ।
क्षणेन लब्धचैतन्या रुरोद प्रललाप च ॥ २९५ ॥
हा ! तवाकस्मिकं कीर ! दैवकं किमभूदिदम् ।
दुर्दैव ! वद किं दग्धस्त्वयाऽयं चन्दनोपमः ? ॥ २९६ ॥
दवोऽपि घननीरेण विध्यायति भवान् पुनः ।
न निवृत्तोऽसि कीरस्य वाक्यामृतशतैरपि ॥ २९७ ॥
हा ! हताऽहं विहङ्गेन्द्र ! त्वद्वाक्याधारजीविता ।
हा ! मृषावचनाऽभूवं क्षणं मृत्युविलम्बनात् ॥ २९८ ॥
इति मृत्युकृतोत्साहा शुकाङ्गे स्नान-लेपनम् ।
कृत्वाऽन्यदपि तत्कालोचितं सा कर्तुमुद्यता ॥ २९९ ॥
तज् ज्ञात्वा कृत्रिमनृपश्रेष्टीभ्योऽभवदाकुलः ।

हा ! हा ! निष्क्रमलं राज्यं वृथा मे भविताऽखिलम् ॥ ३०० ॥
तद् गत्वा बोधयाम्येतां निश्चित्यैवं तथाऽकरोत् ।
परं सा बुध्यते नैव ततः स पुनरब्रवीत् ॥ ३०१ ॥
किं जीवति शुके देवि ! जीवसीति प्रतिश्रुते ? ।
एवमित्युदिते भूपो दध्यौ सिद्धं समीहितम् ॥ ३०२ ॥
शुकं जीवयुतं कृत्वा नीत्वाऽन्यत्र विमुच्य च ।
प्रतिज्ञां पूरयित्वाऽस्याः प्रविक्ष्यामि निजां तनुम् ॥३०३॥
इत्येकान्ते तनुं मुक्त्वा कीरमाविश्य सोऽललत् ।
नृपोऽपि गृहगोधाङ्गं त्यक्त्वा स्वतनुमाविशत् ॥ ३०४ ॥
विक्रान्ताभ्रपटलीमिव तेजस्विनीं तनुम् ।
दधानो विक्रमनृपो लघु देव्यन्तिके ययौ ॥ ३०५ ॥
दर्शनात् तस्य कमलमालेव कमलावती ।
सद्यो विकाशमापन्ना श्रिया च समलङ्कृता ॥ ३०६ ॥
मूर्त्तिर्जाया च सत्येव राज्यो याऽन्यनरागमे ।
निष्कला सकला चैव सद्यः स्वपतिसङ्गमे ॥ ३०७ ॥
दृष्ट्वा पूर्ववदालापं गतिं वेषं निरीक्षणम् ।
रुदन्ती पादयोः पत्युः सहसोत्थाय साऽलगत् ॥ ३०८ ॥
जगौ च जीवितं स्वामिन्नेकं देशान्तरेण ते ।
बभूव दुःखमपरं तव कूटप्रपञ्चतः ॥ ३०९ ॥
कथं कथान्तरेणाऽहं वराकी विप्रतारिता ।
देशान्तरकलालाभपरीक्षा मयि कीदृशी ? ॥ ३१० ॥
यदेवमपि निर्व्यूढं महिलामात्रया मया ।
प्रसादस्तदयं सर्वस्तव पादप्रसादजः ॥ ३११ ॥
अधुना मेऽखिलं तावत् स्वस्वरूपं निरूप्यताम् ।
नृपः प्राह तव प्रेयान् कीरोऽसौ कथयिष्यति ॥३१२ ॥
राज्याह देव ! को हेतुर्यदर्थे मृत्युराहृतः ।
स दृष्टोऽप्यधुना बाढमनिष्टो मेऽभवच्छुकः ? ॥ ३१३ ॥

नृपः कीरं करे कृत्वा जगाद किमिदं द्विज ! ।
सोऽप्याह यद् गुरु स्वामि-मित्रद्रोहकृती भवेत् ॥ ३१
त्वं मे स्वामी नरैश्वर्याद् गुरुर्विद्याप्रदापनात् ।
मित्रं विश्वासतः सर्वं तल्लुप्तं लोपवद् मया ॥ ३१५
राजा वदति भो विप्र ! किं हीनमिदमुच्यते ।
मयैव तत्र साहाय्यात् कृतो विद्यापरिश्रमः ॥ ३१६
स पुनः प्राह साहाय्यं यादृशं विहितं मया ।
तत् सर्वं वेत्सि देव ! त्वं न्यायसीमामहोदधे ! ॥ ३
निजगेहतनुभ्रष्टं मित्र-स्वामि-गुरुद्रुहम् ।
द्रष्टुं स्प्रष्टुं च मां पापं तव नाथ ! न युज्यते ॥ ३१
सती न कमलातुल्या न त्वया सदृशो महान् ।
मया समो न पापात्मा तत् त्वं राज्यं चिरं कुरु ॥३१
मां च वामांह्रिणा स्पृष्ट्वा मुञ्च क्वापि यथा निजम् ।
कर्म सेवे त्वयैतेन दुष्टशिक्षा कृता भवेत् ॥ ३२० ॥
तन्निशम्याऽनुकम्पार्द्रमना विस्मार्य दुष्कृतम् ।
नृपः प्रोवाच या विद्या ममाऽस्त्येषा तवाप्यहो ! ॥३
तत् कथं पादसंस्पर्शं त्वमर्हसि व्रजेप्सितम् ? ।
परोपकारी धर्मिष्ठः क्वापि द्रव्येश्वरो भव ॥३२२॥
इति तं विक्रमो मुक्त्वा देव्या कमलया युतः ।
राज्यं चक्रे भद्रकात्मा धर्मकर्मपरायणः ॥३२३॥
इत्येवं विनयादाप्ता विद्या निर्वाहसुन्दरा ।
अभूत् सैवाऽविनीतस्य महाऽनर्थविधायिनी ॥३२४॥
इयता विनयः प्रोक्तो विवेकः कथ्यतेऽधुना ।
यं विना शोभते न श्री रूपं चक्षुर्विना यथा ॥३२५
यथाद्रिषु गुरुर्मेरुर्ग्रहेषु दिवसाधिपः ।
चिन्तामणिश्च रत्नेषु विवेकोऽपि गुणेष्विति ॥३२६॥
भोज्ये वचसि दानादौ सद्विवेकान्नरः पराम् ।

प्रतिष्ठां लभते लोके दिव्यघाटादिवोपलः ॥३२७॥
विवेकेनाऽविवेकेन धर्मो यैर्विहितः पुरा ।
तेऽत्र क्रमेण जायन्ते पतयः पत्तयः श्रियः ॥३२८॥
विवेकदीपकालोकसम्प्रकाशीकृतेऽध्वनि ।
चरन्तो न स्खलन्त्येव कलिध्वान्तेऽपि कोविदाः ॥३२९॥
विवेको गुरुवत् सर्वं कृत्याकृत्यं प्रकाशयेत् ।
सन्मित्रवदकृत्याच्च वारयेत् सुमतिर्यथा ॥३३०॥
तथाहि--
श्रीसेनः श्रीपुरेऽस्ति स्म राजा राज्यमहारथम् ।
यो निर्वाहितवान् पुष्टन्यायधर्मवृषः सुखम् ॥ ३३१ ॥
पुरोधास्तस्य सोमाख्यः सद्गुणक्रमिको हितः ।
कुलोद्द्योतनदीपाभः पुत्राभावात् स दुःखितः ॥३३२॥
अन्यदा तं नृपः प्राह तवेयमनपत्यता ।
यथा मां बाधते बाढं भवन्तं सोम ! नो तथा ॥३३३॥
निर्व्यूढोऽयमियत्कालमावयोरन्वयक्रमः ।
अतः परं मत्पुत्रस्य कः पुरोधा भविष्यति ? ॥ ३३४ ॥
अवंशपतिते तस्मिन् विश्वासः कीदृशो भवेत् ? ।
तदेवमपि कस्मात् त्वं निश्चिन्त इव दृश्यसे ॥३३५॥
स प्राह चिन्तया देव ! किं परायत्तवस्तुनि ? ।
जीवितं सन्ततिर्द्रव्यं दैवायत्तमिति त्रयम् ॥३३६॥
उक्तं च-
आत्मायत्ते गुणाधाने नैर्गुण्यं वचनीयता[1] ।
दैवायत्ते पुनः कार्ये पुंसः का नाम वाच्यता ? ॥३३७॥
नृपोऽजल्पदुपायोऽस्ति दैवस्याऽप्यनुकूलने ।
आराधय निजां कृत्वा साहसं कुलदेवताम् ॥३३८॥
धर्माय पूज्यते देवो विघ्नशान्त्यै तु देवता ।

---

१ निन्दनीयता ।

तत् तस्यास्तामकुर्वत्याः किं वृथा पूजनेन भोः ! ? ॥३३९॥
इति राज्ञार्पितोपायः स देव्या भवनं गतः ।
शुचिर्भूत्वा पुरस्तस्या दर्भस्रस्तरके स्थितः ॥ ३४० ॥
पुत्रदानप्रसादं मे यदा देवि ! करिष्यसि ।
तदाहं भोजनं कर्तास्मीत्यभिग्रहमग्रहीत् ॥ ३४१ ॥
तृतीयदिवसे देवी क्षुभिता तस्य सन्ततिम् ।
अपश्यन्ती गता सिद्धयक्षस्यान्तिकमब्रवीत् ॥ ३४२ ॥
किं कुर्वे भद्र ! कष्टं मे वर्ततेऽत्र यतो द्विजः ।
पुत्रं मां याचते नास्ति स त्वस्य ननु तादृशः ॥ ३४३ ॥
ततोऽसौ मरणं कर्ता स्यादपूजा जने मम ।
इति श्रुत्वा जगौ यक्षो मुग्धे ! सुकरमुत्तरम् ॥ ३४४ ॥
तं ब्रूहि यदहो विप्र ! तव पुत्रोऽस्ति किन्त्वसौ ।
परदाररतश्चौरो द्यूतकारश्च निश्चितम् ॥ ३४५ ॥
एषामेकतमो दोषो विश्वाऽविश्वासहेतवे ।
दोषत्रयजुषा त्वेष किं सुतेन करिष्यसि ? ॥ ३४६ ॥
सा प्रहृष्टा गता यक्षोदितमाख्यत् पुरोधसः ।
सोऽपि प्रष्टुं गतो राज्ञो देव्यादेशं शशंसिवान् ॥ ३४७ ॥
तद्विमृश्य महादक्षो राजोचे सोम ! याच्यताम् ।
देवी यदीदृशोऽप्यस्तु पुत्रः किन्तु विवेकवान् ॥ ३४८ ॥
यतः—
एकस्यैव विवेकस्य तेजसा नाशमञ्जसा ।
यान्ति दोषा महान्तोऽपि सिंहस्येव मतङ्गजाः ॥ ३४९ ॥
शिक्षामादाय तां विप्रो गत्वा देवीमयाचत ।
तयाऽप्यनुमतं सोऽथ स्वगृहं गन्तुमुद्यतः ॥ ३५० ॥
अथ तस्य द्वितीयाऽस्ति पण्यनारी परिग्रहे ।
साऽपि तावद्दिनान्यस्थाद् भूस्वापा मुक्तभोजना ॥३५१॥
तत्स्वरूपं निवेद्याऽसौ चेट्याऽऽनीतो बलादपि ।

तद्गृहे सोऽपि तत्रैव स्नातभुक्तोऽवसद् निशि ॥ ३५२ ॥
प्रभाते स्वगृहं गच्छन् सोमो दध्यौ विषण्णधीः ।
धिङ् मां सुकुलजां जायामुपेक्ष्याऽत्रस्थितोऽत्र यः ॥३५३॥
देव्याः प्रसादमासाद्य यदत्रैवावसं निशि ।
तन्मे कुक्षेत्रजः पुत्रो भावी भाव्यं हि नाऽन्यथा ॥३५४॥
धिङ् ममाऽजातपुत्रस्य पुत्रजन्मन्यपि स्फुटम् ।
नोत्सवो भविता हृष्टलोकः स्वज्ञातिवीक्षितः ॥ ३५५ ॥
ज्ञात्वेदं मयि भूपोऽपि विरागं यास्यति ध्रुवम् ।
तथाप्यस्य सुनाथत्वात् कथनीयं यथातथम् ॥ ३५६ ॥
इत्यागच्छन् नृपेणासौ तादृशो वीक्ष्य जल्पितः ।
हर्षस्थाने कथं सोम ! विषण्ण इव दृश्यसे ? ॥ ३५७ ॥
किं विप्रतारितो देव्या किं व्यलीकं तवाऽथवा ? ।
देव्यादेशं स्वदोषं च स स्वं निन्दन् तमाख्यत ॥ ३५८ ॥
राजोचे कुरु मा खेदमीदृश्येव कुले यतः ।
तादृशा देवतादिष्टा भवन्ति तव का क्षतिः ? ॥ ३५९ ॥
परं जन्मादितः कृत्वा प्रकाश्यस्तावदेष न ।
दोषध्वान्तहरो यावन्न विवेकरविः स्फुटः ॥ ३६० ॥
इति राज्ञो हितादेशसुधाविध्यातमानसः ।
गत्वा स्वभवने जायां सुगुप्तां तामकारयत् ॥ ३६१ ॥
समयेऽजनि पुत्रोऽस्य नृपस्याऽऽशु निवेदितः ।
प्रच्छन्नकृतसंस्कारो व्यवर्धिष्ट क्रमेण च ॥ ३६२ ॥
अथाऽध्ययनयोग्यं तं ज्ञात्वा शास्त्रविचक्षणः ।
अध्यापयितुमारेभे स्वयमेव पिता सुतम् ॥ ३६३ ॥
तस्य भूमीगृहस्थस्योपरिद्रुफलकासनः ।
छात्राणां च पुरो बाह्ये शास्त्रमर्थापयत्यसौ ॥ ३६४ ॥
निजाङ्गुष्ठे दवरकं बद्ध्वाऽर्पयति सूनवे ।
संदेहे सति चाल्योऽयमिति सङ्केतपूर्वकम् ॥ ३६५ ॥

महाप्राज्ञः पुनः पुत्रो भिनत्ति स्तोकतो बहु ।
अन्यदा नीतिशास्त्रस्य श्लोक एकोऽयमागतः ॥ ३६६ ॥
दानं भोगस्तथा नाशः स्याद् द्रव्यस्य गतित्रयम् ।
यो न दत्ते न भुङ्क्ते च तृतीयाऽस्य गतिर्भवेत् ॥३६७॥
तस्य व्याख्यानमाकर्ण्य सूत्रं चालयते सुतः ।
पुनः स्पष्टमुपाध्यायो व्याख्यानयति पूर्ववत् ॥३६८॥
भूयोऽपि चालिते सूत्रे पुरोधा रोषतोऽखिलान् ।
छात्रान् विसृज्य पुत्रं स्वमाकृष्य बहिरुक्तवान् ॥३६९॥
रे ! समुद्रसमं शास्त्रं तरित्वा गोष्पदोपमे ।
श्लोकेऽतिसुगमार्थेऽस्मिन्नित्थं मूढः कथं भवान् ? ॥३७०॥
सुतोऽप्याह नतस्तात ! भण्यते हि गतित्रयम् ।
वित्तस्य वर्णितं तत् तु विचारे मे न पूर्यते ॥ ३७१ ॥
यतः--
आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ ३७२ ॥
तच्च सर्वोत्तमं पात्रे दयाधर्माय दुःखिते ।
याचके कीर्तिघोषाय स्नेहपोषाय बन्धुषु ॥ ३७३ ॥
भूतादौ विघ्ननाशाय वैरघाताय वैरिषु ।
औचित्येन नृणां दत्तं दानं न क्वापि निष्फलम् ॥ ३७४ ॥
भोगेन केवलं सौख्यमैहिकं क्षणिकं भवेत् ।
लोकद्वयविनाशाय तस्य नाशस्तु निश्चितम् ॥ ३७५ ॥
पुरोधास्तद् निशम्याऽस्य विचारचतुरं वचः ।
मुदा हृदि न माति स्म गत्वा चाख्यद् महिभुजे ॥३७६॥
नृपोऽप्याह च भो भद्र ! विवेकः सोऽयमुद्गतः ।
पूरयिष्यति येनासौ मम ते च मनोरथम् ॥ ३७७ ॥
अहो ! विचार्यगाम्भीर्यमहो ! अस्याद्भुता मतिः ।

उपाध्यायं च शास्त्रं च याऽतिक्रम्य प्रवर्तते ॥ ३७८ ॥
यत्किञ्चित् खन्यमानस्य यथा कूपस्य कस्यचित् ।
नालमुद्घटते येन खनकः श्लाघ्यते जनैः ॥ ३७९ ॥
तथाच्छात्रस्य कस्यापि शिक्ष्यमाणस्य किंचन ।
उन्मीलति तथा ज्ञानं येन विस्माप्यते गुरुः ॥ ३८० ॥
तत् त्वं गजेन्द्रमारोप्य सत्वरं त्वमिहानय ।
तथा सुमतिरित्यस्य नामास्तु स्वगुणार्जितम् ॥ ३८१ ॥
इत्यादिश्य नृप. प्रैषीत् परिवारं सहस्तिनम् ।
सोमोऽपि स्वगृहे गत्वा निजबन्धूनमेलयत् ॥३८२॥
अथ कारितशृङ्गारं कृतकौतुकमङ्गलम् ।
हस्त्यारूढं महर्ध्याऽसौ सुतं निन्ये नृपौकसि ॥ ३८३ ॥
राजा सम्मुखमभ्येत्य कृत्वा सत्कारमुज्ज्वलम् ।
पौरोहित्ये[1] नियोज्यैतं गृहं प्रति व्यसर्जयत् ॥ ३८४ ॥
राजमान्यतयैवं स ययौ लोकेऽपि पूज्यताम् ।
पित्रादिबन्धुषु नतो याति राज्ञोऽन्तिके सदा ॥ ३८५ ॥
करोति साधुसंसर्गं शृणोति विविधं श्रुतम् ।
सार्थनामा क्रमाज् जज्ञे सुमतिः सुकृतार्जनात् ॥ ३८६ ॥
विवेकमन्यदा ज्ञातुं बहुश्रुतमिमं नृपः ।
पप्रच्छ वद भोः ! कस्माद् जीवानां विविधा स्थितिः? ॥३८७॥
सुमतिः प्राह राजेन्द्र ! यत् त्वं तत्त्वं विदन्नपि ।
मां पृच्छसि प्रसादोऽत्र हेतुस्तत् किंचिदुच्यते ॥ ३८८ ॥
स्वस्वकर्मवशाद् देव ! जीवा वैचित्र्यभाजिनः ।
अभिनेयवशाद् नानावेषं कुर्युर्यथा नटाः ॥ ३८९ ॥
पुण्य-पापमयं कर्म तद्वशेन नृणां भवेत् ।
विवेकश्चाऽविवेकश्च ताभ्यां सर्वं शुभाऽशुभम् ॥ ३९० ॥

1 पुरोहितकर्मणि ।

हिंसा-ऽलीक परद्रव्य-नारी-द्रोहमयं तमः ।
प्रणश्यति विवेकार्का[1] तदस्ते तु विजृम्भते ॥ ३९१ ॥
श्रूयते भरतश्चक्री विवेकेन पुरा क्षणात् ।
राज्यपङ्कनिमग्नोऽपि प्राप पारं भवोदधेः ॥ ३९२ ॥
अविवेकात् पुनर्मत्स्यस्तण्डुलोऽन्यतिमिष्वलम्[2] ।
ग्रासार्त्याऽन्तर्मुहूर्तायुर्नरकं याति सप्तमम् ॥ ३९३ ॥
इत्यादिगदितैस्तस्य लावण्यादिगुणेन च ।
तुष्टेन सुमती राज्ञा सर्वत्राऽस्खलितः कृतः ॥ ३९४ ॥
अन्यदा देवतादिष्टदोषोदयवशादसौ ।
दृष्ट्वैकान्ते भूपहारं चलचित्तस्तमग्रहीत् ॥ ३९५ ॥
संगोप्यैतं हृतं यावत् सशङ्कस्तरलेक्षणः ।
प्रयातुमुद्यतस्तावद् विवेकेनाश्रितः क्षणात् ॥ ३९६ ॥
अचिन्तयच्च धिगहो ! यन्मया करवर्तिनि ।
राज्ये सराजके विश्वनिन्दितं कर्म निर्ममे ॥ ३९७ ॥
अहो ! चौर्यसमं नान्यत् पृथिव्यामस्ति भीषणम् ।
येनाहं राजपूज्योऽपि रङ्कादपि सभीः कृतः ॥ ३९८ ॥
इति व्याहारकेणेव विवेकेन निवर्तितः ।
हारं मुक्त्वा यथास्थाने स्तेयवृत्तिमपाकृत ॥ ३९९ ॥
अथ लावण्यपुण्याङ्गो राज्ञीभिः सस्पृहं सदा ।
वीक्ष्यमाणोऽन्यदा राजपत्न्या स्नेहेन भाषितः ॥ ४०० ॥
सुमतिः कुमतीभूय तत्र गन्तुं प्रवृत्तवान् ।
यावत् तावद् विवेकेन बन्धुनेव निबोधितः ॥ ४०१ ॥
अहहा ! मे महामोहो भोगसौस्थ्येऽपि यद्विभोः ।
प्रेयस्यां मातृकल्पायां सविकारं मनोऽजनि ॥ ४०२ ॥
परस्त्रीसङ्गिनोऽमुत्र नरकोऽत्र शिरश्छिदा ।
अयशश्च यथाऽहल्यासङ्गिनः स्वःपतेरपि[3] ॥ ४०३ ॥

---

१ विवेकार्काऽभावे । २ तिमिमत्स्य । ३ इन्द्रस्याऽपि ।

स महात्मा महाविद्वान् यः सदा दूरतश्चरेत् ।
एताभ्यः कुटिलाङ्गीभ्यो भुजङ्गीभ्य इव त्रसन् ॥ ४०४ ॥
दाक्षिण्यमपि नैतासु श्रेयसे तदतः परम् ।
परनारीसहोदर्यं[1] पालनीयं मया व्रतम् ॥ ४०५ ॥
कदापि द्यूतकाराणां स्थानेऽगाद् द्यूतकौतुकी ।
तत्र केनाऽपि नाऽऽह्लोपि प्रत्युतोत्त्रासितः स तैः ॥४०६॥
किंच दुर्वचनं क्षोभं कलिं क्रौर्यं कुदृश्यताम् ।
अङ्गच्छेदादिकं तेषां वीक्ष्य बाढं व्यरज्यत ॥४०७॥
दध्यौ च यदहो द्यूतं व्यसनानां धुरीक्ष्यते ।
तत् त्याज्यमीदृशं यस्य प्रत्यक्षं दृश्यते फलम् ॥४०८॥
यद्वा किमुच्यतेऽमीषां द्यूतेनेह नलादयः ।
अवस्थां प्रापितास्तां[2] तामत्र स्थित्वाऽप्यलं ततः ॥४०९॥
इत्थं विवेकसाहाय्यात् तथाऽसौ सद्गुणोऽजनि ।
यथा धुरि सुशीलानां दृष्टान्ते कथ्यते जनैः ॥४१०॥
सोऽन्यदा नृपमप्राक्षीद् विश्वासो देव ! नोच्यते ।
नृपधर्मे कथं तत् ते विश्वासोऽयं मयीदृशः ? ॥४११॥
नृपः प्रोवाच वत्स ! त्वमस्मद्वंशपुरोधसः ।
वरलब्धस्ततः कस्माद् विश्वासस्त्वयि नो भवेत् ?॥४१२॥
नाथ ! तत् किं धृतो बाल्ये गुप्तोऽस्मीति तदीरिते ।
नृपः प्राह विवेकस्योद्भेदं त्वयि प्रतीक्षितुम् ॥४१३॥
सदोषा अपि निर्दोषाः कुलिना दुष्कुला अपि ।
विवेकेनात्र जायन्ते दृश्यते स त्वयि स्फुटः ॥४१४॥
उक्तं च—
कुलादपि वरं शीलं वरं दारिद्र्यमामयात् ।
राज्यादपि वरं विद्या तपसोऽपि वरं क्षमा ॥४१५॥
यस्य तस्य प्रसूतोऽत्र गुणवान् पूज्यते नरः ।

---

१ महाव्रतमित्यपि । २ खेददायिनीम् ।

सुवंशोऽपि धनुर्दण्डो निर्गुणः किं करिष्यति ? ॥४१६॥
किञ्च,
रूप-लक्ष्मीवतां शीलमनुत्सेकः[1] कलावताम् ।
प्रभविष्णोः सहिष्णुत्वमुष्णकाले हिमागतिः ॥ ४१७ ॥
इत्यादि स्वस्य वृत्तान्तं श्लाघ्यं च नृपतेर्मुखात् ।
स श्रुत्वाऽधोमुखस्तस्थौ लज्जया भारितो भृशम् ॥४१८॥
इत्येवं सद्विवेकेन ध्वस्तदोषः सतां मतः ।
क्रमात् सद्धर्ममासाद्य सुमतिः सुगतिं ययौ ॥ ४१९ ॥
सुसंसर्गस्य माहात्म्यमद्भुतं कथ्यतेऽधुना ।
प्रायो जगति येन स्यादपि दैवकमन्यथा ॥ ४२० ॥
आस्तामौपाधिको दोषः सहजोऽपि सुसङ्गतः ।
अपयाति यथा कर्म जीवस्य ज्ञानसङ्गमात् ॥ ४२१ ॥
पश्य सत्सङ्गमाहात्म्यं स्पर्शपाषाणयोगतः ।
लोहं स्वर्णीभवेत् स्वर्णयोगात् काचो मणीयते ॥४२२॥
विकाराय[2] भवत्येव कुलजोऽपि कुसङ्गतः ।
जलजातोऽपि दाहाय शङ्खो वह्निनिषेवणात् ॥४२३॥
आस्तां सचेतसां सङ्गात् सदसत् स्यात् तरोरपि ।
अशोकः शोकनाशाय कलये तु कलिद्रुमः ॥ ४२४ ॥
निःस्वोऽपि सङ्गतः साधुर्नरमृद्धोऽपि नाधमः ।
अश्वः कृशोऽपि शोभायै पुष्टोऽपि न पुनः खरः ॥ ४२५ ॥
एकमातृ-पितृत्वेऽपि श्रूयते शुकयोर्द्वयोः ।
भिल्लानां च मुनीनां च सङ्गाद् दोष-गुणोदयः ॥४२६॥
सुसङ्गस्योपदेशोऽपि लभ्यते न यथा तथा ।
इत्यर्थे लोकविख्याता प्रभाकरकथोच्यते ॥ ४२७ ॥
अस्त्यत्र भरते वीरपुरे षट्कर्मकर्मठः ।
विप्रो दिवाकरो नाम तस्य पुत्रः प्रभाकरः ॥ ४२८ ॥

---

१ गर्वराहित्यम् । २ विवेकी न, एवमपि ।

स धातुं धमति, द्यूते रमते, कुरुते कलिम् ।
स्वैरं भ्रमति सर्वत्र निरङ्कुश इव द्विपः ॥ ४२९ ॥
पिता शिक्षयते वत्स ! किमात्मा व्यसनेऽस्यते[1] ।
आत्माऽपि यदि नात्मीयस्ततः कोऽन्यो भविष्यति?॥४३०॥
अवगाहस्व शास्त्राणि, पिब काव्यरसामृतम् ।
शिक्षयस्व कलाः, धर्मं कुरूद्धर निजं कुलम् ॥ ४३१ ॥
यतः—
वस्तूद्द्योतयते दीपः प्रत्यक्षं निजतेजसा ।
निष्कलङ्कः पुनः पुत्रः परोक्षानपि पूर्वजान् ॥ ४३२ ॥
किञ्च,
धनाशा धातुवादेन जीविताशा रसायनैः ।
गृहाशा पण्यनारीभिर्मतिभ्रंशत्रयं नृणाम् ॥ ४३३ ॥
इत्यादिशिक्षया स्पृष्टो मालिन्यादिव मानसे ।
हसित्वाऽऽह सुतस्तात ! कः पठित्वा दिवं गतः ? ॥४३४॥
न शास्त्रेण क्षुधा याति न च काव्यरसेन तृट्[2] ।
एकमेवार्जनीयं तु द्रविणं, निष्फलाः कलाः ॥ ४३५ ॥
एवमुल्लुण्ठनैस्तस्य विलक्षोऽसौ व्यचिन्तयत् ।
पुत्ररूपेण मे जज्ञे किमिदं कुलवैशसम्[3] ॥ ४३६ ॥
अकिञ्चनकरोऽपि स्याद् नाऽकुलीनः कुलोद्भवः ।
भस्माऽपि पावकोद्भूतं पावित्र्यं कुरुते जने ॥ ४३७ ॥
अयं च मत्सुतो[4] भूत्वा बभूव यदि निर्गुणः ।
ततः कथं कुशीलोऽभूत् कर्मणः कोऽथवा बली ? ॥४३८॥
परदोषच्छिदोऽप्येके स्वाङ्गजं दोषमक्षमाः ।
हर्तुमित्यत्र सूर्ये-न्दु-मेघा एव निदर्शनम् ॥ ४३९ ॥
इत्युदासीनवृत्त्यैव जन्म निर्वाह्य स द्विजः ।
पर्यन्ते वत्सलत्वेनाऽऽकार्य पुत्रमभाषत ॥ ४४० ॥

---

१ क्षिप्यते । २ तृषा । ३ विघ्नरूपम् ।४ मत्पुत्र , इत्यपि ।

वत्स ! यद्यपि ते नास्था मम वाक्ये तथाप्यमुम् ।
गृहाण श्लोकमेकं त्वं समाधिमृतये मम ॥ ४४१ ॥
कृतज्ञस्वामिसंसर्गमुत्तमस्त्रीपरिग्रहम् ।
कुर्वन् मित्रमलोभं च नरो नैवावसीदति ॥ ४४२ ॥
ओमित्युक्त्वा गतो यावद् द्यूतस्थानं प्रभाकरः ।
मित्रेण तावदागत्य पितृमृत्युर्निवेदितः ॥ ४४३ ॥
विपन्नो मे पिता तत्र क्षोभोऽत्र तु समागतः ।
किं कर्तव्यं मया सोऽपि ध्यात्वैवं मित्रमूचिवान् ॥४४४॥
सखे ! विधाय यत्कृत्यं त्वमेव पितरं मम ।
आनयाऽनेन मार्गेण यथा पश्यामि तं दृशा ॥ ४४५ ॥
सख्या तथाकृते पश्चात् पितृकृत्ये निवर्तिते ।
पित्रादिष्टं हृदि स्मृत्वा शिक्षाश्लोकं व्यभावयत् ॥४४६ ॥
पित्रा यदिदमादिष्टं कुर्वतो मे तदन्यथा ।
किमु स्यादिति निर्णेतुं परदेशं प्रतस्थिवान् ?॥ ४४७ ॥
श्रुत्वा मार्गे व्रजन् सिंहाभिधानं ग्रामठक्कुरम् ।
कृतघ्नं तुच्छप्रकृतिं स्तब्धं तुष्टस्तमाश्रयत् ॥ ४४८ ॥
तस्यैका दासिका तेन विहिता गृहिणी गृहे ।
अज्ञानभावतो रूक्षात्मिका सर्वाधमा च या ॥ ४४९ ॥
तथा तत्रैव वास्तव्यो निर्दाक्षिण्यशिरोमणिः ।
अर्थैकलुब्धो मित्रत्वे लोभनन्दिर्वणिक् कृतः ॥ ४५० ॥
आकारितोऽन्यदा राज्ञा सिंहस्तेन समं ययौ ।
प्रभाकरो नृपं विद्वत्प्रियं ज्ञात्वेदमूचिवान् ॥ ४५१ ॥
मूर्खा मूर्खैः समं सङ्गं गावो गोभिर्मृगा मृगैः ।
सुधीभिः सुधियो यान्ति समशीले हि मित्रता ॥ ४५२ ॥
दत्तं तुष्टेन राज्ञाऽस्य बहुग्रामयुतं पुरम् ।
सोऽपि दापितवान् सिंहस्वामिने जीवनं नृपात् ॥ ४५३ ॥
ग्रामेशोऽपि कृतस्तेन सिंहो देशाधिपो द्रुतम् ।

अन्यान्यप्यस्य कार्याणि दुष्कराण्यपि सोऽकरोत् ॥४५४॥
लोभनन्देरपि स्वामी तथा तेनाऽनुकूलितः ।
यथा निःस्वोऽप्यसौ जज्ञे महर्द्धिभरभासुरः ॥ ४५५ ॥
अथ सिंहस्य पुत्रादप्यधिकोऽस्ति मयूरकः ।
उत्सङ्गलालितो नित्यं पोषितो भूषितश्च यः ॥ ४५६ ॥
अभूत् तस्यामिषे तस्या दास्या गर्भानुभावतः ।
दोहदस्तेन सोऽपूरि तत्तुल्याऽन्यमयूरतः ॥ ४५७ ॥
ठक्कुरस्य मयूरस्तु क्वापि यत्नादगोप्यत ।
एवं महोपकाराणि तेन सर्वाणि[1] चक्रिरे ॥ ४५८ ॥
अथ भोजनवेलायां ठक्कुरस्तं मयूरकम् ।
अदृष्ट्वा मानुषान् प्रेष्य वीक्षयामास सर्वतः ॥ ४५९ ॥
यावन्न क्वापि लब्धोऽसौ तावदाकुलितो भृशम् ।
स उच्चैः कारयामास पटहाऽऽघोषणामिति ॥ ४६० ॥
मयूरं स्वामिसिंहस्य यः कोऽपि कथयिष्यति ।
दिनाराष्टशतं लब्धा सोऽभयं च न संशयः ॥ ४६१ ॥
तत् श्रुत्वा चिन्तितं दास्याऽनेन वैदेशिकेन किम् ?।
गृह्णामि द्रविणं, भर्ता ममाऽन्योऽपि भविष्यति ॥४६२॥
इति सा पटहं स्पृष्ट्वा गत्वा सिंहान्तिकेऽवदत् ।
शृणु देव ! पुरो भर्तुः कथनीयं यथातथम् ॥ ४६३ ॥
निशि मे दोहदो जज्ञे मयूरामिषभक्षणे ।
प्रभाकरेण कुत्रापि स तु नासादितोऽपरः ॥ ४६४ ॥
वारयन्त्यामपि मयि ततः स्नेहाऽतिरेकतः ।
वराकस्त्वत्के[2] एवायं शिखी हत्वा ममार्पितः ॥ ४६५ ॥
अत्यासङ्गविनष्टोऽयमरे ! किं कृतवानिति ?।
रुष्टः सिंहो भटान् प्रैषीन्निग्रहीतुं प्रभाकरम् ॥४६६॥
सोऽपि मित्रपरीक्षार्थं लोभनन्दिगृहं गतः ।

---

१ कार्याणि, इति शेष । २ त्वदीय ।

उवाच कम्पमानाङ्गो मित्र ! भो रक्ष रक्ष माम् ॥४६७॥
लोभनन्दिस्तमप्राक्षीत् किं त्वया भोः ! विनाशितम् ? ।
स उवाच कलत्रार्थे स्वामिबर्ही हतो मया ॥ ४६८ ॥
ततो मित्राधमः प्राह स्वामिद्रोहविधायिनः ।
स्थानं नास्त्यत्र कः पूलं ज्वलन्तं स्वगृहे क्षिपेत् ? ॥४६९॥
एवं वदन्तमप्येनं क्षिप्त्वा यावत् प्रभाकरः ।
प्रविवेश गृहं तावत् पूच्चक्रे लोभनन्दिना ॥ ४७० ॥
आगताश्च भटास्तैः स बद्ध्वा नीतो बहिस्ततः ।
निग्रहायोद्यतास्तेन सदैन्यमिति भाषिताः ॥४७१॥
बान्धवाः ! न मया कोऽप्युपकारो वः कृतः परम् ।
अप्रियं यदि नो चक्रे तदा मां रक्षतैकदा ॥ ४७२ ॥
किं वा नयत मां तत्र यथा विज्ञपये प्रभुम् ।
इत्युक्ते तैः स सिंहान्ते नीतः सकरुणं जगौ ॥ ४७३ ॥
देव ! त्वं मे पिता स्वामी शरणं त्वं च सर्वथा ।
क्षमस्वैकं व्यलीकं यद् गुरवो न गुरुक्रुधः ॥ ४७४ ॥
तत् श्रुत्वा भ्रकुटीभङ्गभीषणः सिंह उक्तवान् ।
अरेऽर्पय मयूरं वा स्मर वाऽभीष्टदेवताम् ॥ ४७५ ॥
तदा तस्यापदि प्रायो जनोऽभूदाकुलोऽखिलः ।
विना मित्र-कलत्राभ्यां, ते हि दर्शितविक्रिये ॥ ४७६ ॥
स ऊचे दैवतप्रायं पितुरेव वचः स्मृतम् ।
यदतिक्रमणे सद्यो ममाभूदीदृशं फलम् ॥ ४७७ ॥
इति श्लोकं पठित्वाऽसौ तं मयूरं यथास्थितम् ।
समर्प्य सिंहमापृच्छ्य प्रसन्नास्यस्ततोऽचलत् ॥ ४७८ ॥
सवैलक्ष्यं स सिंहेन बोधितोऽपि न स स्थितः ।
प्रत्यक्षदृष्टदोषाणां करोत्यनुनयः किमु ? ॥ ४७९ ॥
गच्छंश्च चिन्तयामास धिगेषां दुष्टचेष्टितम् ।
किम्पाकवृक्षच्छायैव दुरन्ता खलसङ्गतिः ॥ ४८० ॥

भस्माहुतमिवाऽमीषु तत् तथोपकृतं मया ।
सर्वमेकपदे नष्टं भव्यं वा जीवितोऽस्मि यत् ॥ ४८१ ॥
नृणां मृत्युरपि श्रेयान् पण्डितेन सह ध्रुवम् ।
न राज्यमपि मूर्खेण लोकद्वयविनाशिना ॥ ४८२ ॥
किञ्च,
शिरसा सुमनःसङ्गाद् धार्यते तन्तवोऽपि हि ।
तेऽपि पादेन मृद्यन्ते पटेषु मलसङ्गताः ॥ ४८३ ॥
स्वामि मित्र-कलत्राणामधमानां परीक्षणम् ।
कृतं तावदिदानीं तु करिष्यामि पितुर्वचः ॥ ४८४ ॥
इति गच्छंस्ततः प्राप सुन्दरं नगरं क्रमात् ।
तत्र हेमरथो राजा तत्पुत्रो गुणसुन्दरः ॥ ४८५ ॥
त्यक्तकुव्यसनासङ्गः कृतज्ञः कोविदप्रिय ।
जनानुरागसुभगो लघीयानपि विश्रुतः ॥ ४८६ ॥
बहिः खलूरिकायां तं शस्त्राभ्यासरतं सदा ।
दृष्ट्वा हृष्टोऽन्तिके गत्वा चोपतस्थे प्रभाकरः ॥ ४८७ ॥
कुमारोऽपि तमालप्य श्रमान्ते स्वच्छया गिरा ।
भोज्यागमे सह स्वेन भोजयामास गौरवात् ॥ ४८८ ॥
यतः—
प्रसन्ना दृग् मनः शुद्धं ललिता वाग् नतं शिरः ।
सहसाऽर्थिष्वियं पूजा विनापि विभवं सताम् ॥ ४८९॥
पप्रच्छ च कुमारस्तं मित्र ! कस्ते मनोरथः ? ।
सोऽप्युवाच महाभाग ! तवाऽवस्थातुमन्तिके ॥ ४९० ॥
तर्हि स्वच्छमनास्तिष्ठेत्युक्ते नृपतिसूनुना ।
तस्थौ प्रभाकरस्तत्र हृष्टो दध्यौ स्वचेतसि ॥ ४९१ ॥
अस्याहो ! विशदा मूर्त्तिर्मितं च मधुरं वचः ।
नव्यमौचित्यचातुर्यं कटरे ! स्वच्छतात्मनः ॥४९२॥

१ श्रमस्थानम् । २ अद्भुतार्थमव्ययमेतत् ।

बाल्येऽपि मधुराः केऽपि द्राक्षावत् केऽपि चूतवत् ।
विपाकेन कदापीन्द्रवारुणीफलवत् परे ॥ ४९३ ॥
आकृतौ हि गुणा नूनं सत्यीभूतमिदं वचः ।
अमुष्य दर्शनेनाऽपि सफलो मे श्रमोऽजनि ॥ ४९४ ॥
तदस्य सङ्गमात्[1] प्राच्यमघं कुस्वामिसङ्गजम् ।
अधुना क्षालयिष्यामीति निश्चित्य तथाऽकरोत् ॥४९५॥
उत्तमप्रकृतिः स्थैर्य-गाम्भीर्य-विनयान्विता ।
श्रीरभूत् गृहिणी तस्य कुमाराऽर्पितवेश्मनः ॥ ४९६ ॥
महेभ्यः स्वजनाधारः परोपकरणे रतः ।
पौरमुख्यो वसन्ताख्यस्तस्य मित्रमजायत ॥ ४९७ ॥
विपन्ने राज्ञि कालेऽथ राजाऽभूद् गुणसुन्दरः ।
प्रभाकरः पुनर्मन्त्री सर्वकार्येषु यत् कृती ॥४९८॥
अन्यदा शासतस्तस्य प्रजा नीत्या प्रजापतेः ।
ढौकनीये कृतौ हेडावित्तैर्जात्यतुरङ्गमौ ॥४९९॥
सल्लक्षणधरौ किन्तु वैपरीत्येन शिक्षितौ ।
तत्स्वरूपमजानानस्तावत् पर्याणयद् नृपः ॥ ५०० ॥
एकस्मिन् स्वयमारूढो द्वितीयेऽमात्यमादिशत् ।
जग्मतुः संपरीवारौ शनैकैस्तौ[2] पुराद् बहिः ॥ ५०१ ॥
वाहयित्वा क्षणं वाहौ वाह्याल्यां वेगमीक्षितुम् ।
कशाघातं नृपा-ऽमात्यौ कर्कशं चक्रतुस्तयोः ॥ ५०२ ॥
सहसोत्प्लुत्य तौ तस्मादलिदष्टौ कपी इव ।
प्रवृत्तौ वेगतो गन्तुं प्रमातुमिव मेदिनीम् ॥ ५०३ ॥
यात यात द्रुतं भृत्याः ! शीघ्रं धावत सादिनः[3] ! ।
दिव्येनेवैष केनाऽपि हयेन ह्रियते नृपः ॥ ५०४ ॥
पूत्कुर्वतो जनस्यैवं धावतामपि सादिनाम् ।
पापाद् निधिरिवाऽदृष्टः सामात्योऽभूद् नृपः क्षणात् ॥५०५॥

---

१ सेवया, इत्यपि । २ शनैरित्यर्थः । ३ धावत, एतदपि ।

यथा यथा नृपा-ऽमात्यौ वल्गामाकर्षतो हठात् ।
तथा तथा चटद्वेगं गच्छतस्तौ तुरङ्गमौ ॥ ५०६ ॥
संग्रामयोर्महीटव्यामामलक्यास्तरोरधः ।
गच्छतैव करेणात्तं मन्त्रिणाऽऽमलकत्रयम् ॥ ५०७ ॥
अतिदूरं गतौ यावद् विलक्षीभूय तौ श्रमात् ।
वल्गां मुमुचतुस्तावदश्वौ तत्रैव संस्थितौ ॥ ५०८ ॥
उत्तीर्णौ च नृपा-ऽमात्यौ प्राणैर्मुक्तौ च वाजिनौ ।
किमेताभ्यां निजस्वामिद्रोहकाभ्यामिवाथ तौ ? ॥ ५०९ ॥
तयोः खेदं क्षणं धृत्वा परदुःखाऽसुखी नृपः ।
क्षुत्-तृष्णापीडितो बाढं मनस्येवं व्यभावयत् ॥ ५१० ॥
पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् ।
मूढैः पाषाणखण्डेषु रत्नसंज्ञाऽभिधीयते ॥ ५११ ॥
ध्रुवं सत्यमिदं वाक्यं यत् पर्याणे तनौ च मे ।
सत्स्वप्येतेषु रत्नेषु तृष्णा शाम्यति नाधुना ॥ ५१२ ॥
उवाच च महामात्य ! तृषां[1] यान्ति ममाऽसवः[2] ।
मन्त्र्युवाचाऽऽकुलो देव ! मा भू रक्षामि ते तृषाम् ॥५१३॥
एकमामलकं मन्त्री ददौ त्रिभ्यो महीभुजे ।
निर्वृत्तात्मा तदाहारात् तस्थौ स्वस्थः क्षणं नृपः ॥५१४॥
भूयस्तापार्दितः प्राह मित्र ! पृष्टोऽसि सम्प्रति ।
तथा मां बाधते तृष्णा यथा नूनं न जीव्यते ॥ ५१५ ॥
इति मूर्छागतो भूमौ पतन् धृत्वाऽशु मन्त्रिणा ।
द्वितीयामलकं दत्त्वा पुनः सज्जीकृतो नृपः ॥ ५१६ ॥
एवं तृतीयवेलायामप्यामलकमर्पितम् ।
पदानुलग्नं दैवाच्च पृष्ठे सैन्यमथाऽगमत् ॥ ५१७ ॥
अग्रेसराश्ववारैस्तौ दृष्ट्वा चक्रे जयध्वनिः ।
मन्त्रिणोचे भटास्तावद् नीरमानीयतां द्रुतम् ॥ ५१८ ॥

---

१ तृतीयान्तम् । २ प्राणा. ।

ततो व्याघुट्य तैः सैन्यं विवर्ध्यानीय तत्र च ।
जला-ऽन्नाहारसंतुष्टः सद्यश्चक्रे महीपतिः ॥ ५१९ ॥
राजाऽथ सपरीवारो जगाम नगरं निजम् ।
पुनर्जन्मोत्सवं राज्ञश्चक्रुः सामन्त-नागराः ॥ ५२० ॥
अथ राज्ञः सुतः पञ्चवर्षीयो मन्त्रिमन्दिरम् ।
क्रीडार्थं नित्यमायाति बालहारेण संयुतः ॥ ५२१ ॥
सुस्वाम्यादिपरीक्षार्थमथ मन्त्री तमन्यदा ।
एकान्ते गोपयामास सान्नपानं सयामिकम् ॥ ५२२ ॥
कुमारो नेक्ष्यते क्वापि निशम्येदं वचो नृपः ।
सर्वत्रालोकयामासाऽत्याकुलः प्रेष्य पूरुषान् ॥ ५२३ ॥
यावन्न क्वापि लब्धोऽसौ तावद् घुर्णितमानसः ।
शोकपङ्काविलो राजाऽधोमुखीभूय तस्थिवान् ॥ ५२४ ॥
दध्यौ च किमिदं हन्त ! कुमारो मन्त्रिमन्दिरम् ।
गतो न दृश्यते कुत्राऽप्यसंभाव्यमदोऽखिलम् ॥ ५२५ ॥
राजलोकः समग्रोऽपि दुःखकृष्णमुखो नृपम् ।
आसनस्थं समभ्येति मुक्त्वा मन्त्रिप्रभाकरम् ॥५२६॥
अत्रान्तरे मन्त्रिपत्नी पतिं पप्रच्छ नाथ ! किम् ।
नाऽद्य राजकुले यातः सदुःखमिव सोऽब्रवीत् ? ॥५२७॥
प्रिये ! दर्शयितुं नात्ममुखं शक्नोमि भूपतेः ।
यद् मया तादृशो जघ्ने कुमारो हतबुद्धिना ॥ ५२८ ॥
संभ्रान्ता सा जगौ शान्तं पापमेतत् किमुच्यते ?।
पापं शान्तमशान्तं वा परमेतद् मया कृतम् ॥ ५२९ ॥
इत्युक्ते तेन साऽप्योचत् कथंकारमिदं कृतम् ?।
सोऽप्यूचे यत् त्वयाऽतीतदिने मे कथितं पुरः ॥५३०॥
गर्भवैरानुभावेन केनाप्येष नृपाङ्गजः ।
दशोदाहाय मे चक्रे त्वन्मोहात् तन्पयेदृशम् ॥ ५३१ ॥
तच्छ्रुत्वा किं वृथा कार्ये विनष्टे परिदेवनैः ।

करोमि प्राप्तकालीनं ध्यात्वैवं धीरमानसा ॥५३२॥
गत्वाऽसौ भर्तृमित्रस्य वसन्तस्य तदाख्यत ।
सोऽपि भाव्यमिदं नूनं ध्यात्वैवं धीरमब्रवीत् ॥५३३॥
अये सुन्दरि ! मा भैषीर्जीवितेन धनेन च ।
विपदं निजमित्रस्य रक्षाम्येव न संशयः ॥५३४॥
जातीपुष्पसमस्याऽस्य जीवितस्य धनस्य च ।
मित्रार्थे यदि नाशः स्यात् किं न प्राप्तं फलं तदा ? ॥५३५॥
इत्युक्त्वा स ययौ राजकुलं नत्वा नरेश्वरम् ।
कृताञ्जलिर्वसन्ताख्यः सावष्टम्भं व्यजिज्ञपत् ॥५३६॥
विकल्पं देव ! मा कार्षीस्त्वत्पुत्रनिधने खलु ।
अहं हेतुरतो वित्तं जीवितं च गृहाण मे ॥५३७॥
निशम्येदं नृपो यावदास्ते संशयितो हृदि ।
मन्त्रिपत्नी समागत्य तावदेवं व्यजिज्ञपत् ॥५३८॥
वसन्तो मित्रदारार्थे देव ! विज्ञपयत्यदः ।
परं मद्दोहदस्यार्थे त्वत्पुत्रस्य वधोऽजनि ॥५३९ ॥
इति किंकृत्यतामूढो नृपः शून्य इवाभवत् ।
ततो मन्त्री समागत्य कम्पमान इवावदत् ॥ ५४० ॥
मदीयपीडया देव ! मित्र-पत्न्याविमे मम ।
स्वं निवेदयतो नूनमपराधोऽत्र नैतयोः ॥ ५४१ ॥
आसन्नविपदा किन्तु जातदुर्मतिना मया ।
कुमारो निहतो नाथ ! योग्यं दण्डं कुरुष्व मे ॥ ५४२ ॥
अग्रेऽपि मन्त्रिशङ्काऽऽसीत् तत्रार्थे भूभुजो हृदि ।
तन्निशम्य पुनर्बाढं प्रत्ययोऽजनि निश्चलः ॥ ५४३ ॥
ततः स्पष्टमुखो वीक्ष्य मन्त्रिणं नृपतिर्जगौ ।
येन मे जीवितं दत्तं को दण्डस्तस्य युज्यते ? ॥५४४॥
मित्र ! त्वं यदि नाऽदास्यस्तदा धात्रीफलानि मे[1]

---

१ आमलकानि ।

तदा क्वाहं क्व राज्यं च क्व सुतः क्व परिच्छदः ? ॥५४५॥
मन्त्र्याह सुप्रभो ! जज्ञे कृतज्ञत्वं तवेयता ।
कार्य एव पुनर्दण्डः पुत्ररत्नापहस्य मे ॥५४६॥[1]
एकमामलकं तर्हि वलितं त्रयमध्यतः ।
इत्युक्ते भूभुजा मन्त्री जगौ प्रीतिसगद्गदम् ॥५४७॥
देव ! सर्वगुणाधार ! जगतीमौलिमण्डन ! ।
यद्येवं ते कृतज्ञत्वं तदास्त्वामलकत्रयी ॥५४८॥
चिरं कुरु कुमारेण सहितो राज्यमक्षतम् ।
इत्युक्त्वाऽनाययत् तत्र पुत्रं प्रेष्य निजान् नरान् ५४९॥
भूषिताङ्गं स्मितमुखं ललमानं तथैव तम् ।
सुतं दृष्ट्वा नृपो हर्षं विस्मयं च परं ययौ ॥५५०॥
किमेतदिति राज्ञोक्ते मन्त्री लोकसमक्षतः ।
वृत्तान्तं पितुरादेशादारभ्याऽखिलमाख्यत ॥५५१॥
तन्निशम्य भृशं राजा लज्जितः सत्स्वभावतः ।
मन्त्रिणं च करे कृत्वा सप्रणयमिवाब्रवीत् ॥५५२॥
अमूल्यामलकं यत् ते पुत्रतुल्यं कृतं मया ।
मर्षणीयोऽपराधो यत् त्वया मित्र ! महानिति ॥५५३॥
इत्यसौ लब्धसुस्वामि-सुकलत्र-सुमित्रजम् ।
अन्वभूत् सुखमैकात्म्यमापन्नो भूभुजा सह ॥५५४॥
तौ भूप-सचिवौ राज्यं भुक्त्वा सत्सङ्गतत्परौ ।
सद्गुरोर्धर्ममासाद्य हितोद्युक्तौ बभूवतुः ॥५५५॥
सुसंसर्गस्य माहात्म्यं व्यवहारेण कीर्तितम् ।
सर्वार्थसिद्धिकृत् सत्त्वविषयं वर्ण्यतेऽधुना ॥५५६॥
सत्त्वमेव नृणां तत्त्वं सत्त्वं सिद्ध्यै भवद्वये ।
विना सत्त्वं सजीवोऽपि निर्जीव इति कथ्यते ॥५५७॥
विशीर्णोऽपि यथा वृक्षः सति मूले प्ररोहति ।

१ पुत्ररत्नमपहन्तीति पुत्ररत्नापहस्तस्य ।

प्रक्षीणोऽपि तथा भूयो नरः सत्त्वाद् विवर्धते ॥५५८॥
यद् दूरं यद् दुराराध्यं दुर्घटं दुर्लभं च यत् ।
सर्वं सिध्यति तत् सत्त्वात् तद्विना तु सदप्यसत् ॥५५९॥
श्रूयते हि पुरा लोके श्रीमदिक्ष्वाकुवंशभूः ।
उदारचरितः सत्त्वे हरिश्चन्द्रो महान् नृपः ॥५६०॥
तथाहि-
अस्त्यत्र भरतेऽयोध्या पुरी वप्रांशुकोज्ज्वला ।
प्रासादमण्डना नान्यैरभिभूता सतीव या ॥५६१॥
सूर्यवंशभवक्ष्मापवृत्तोज्ज्वलयशःश्रिया ।
जातच्छत्रा महैश्वर्यं दधाति नगरीषु या ॥५६२॥
नतिरेवोन्नतिर्येषां दानमेव धनार्जनम् ।
परार्थ एव तु स्वार्थः क्षमैव हि समर्थता ॥५६३॥
एवंविधनरोत्तंसै वृक्षैरुद्यानभूरिव ।
या सदालंकृता हर्षं न केषां कुरुतेतराम् ? ॥५६४॥
(युग्मम्)
एकनक्षत्रमालेन्दुस्त्रीणां हारमुखेन्दुभिः ।
प्रतिबिम्बच्छलाद् व्योम यया सौधेष्वधःकृतम् ॥५६५॥
बभूव नृपतिस्तस्यां हरिश्चन्द्रो महाभुजः ।
धर्मेणोद्वाहिता कीर्तिर्येनर्ते[1] करपीडनम् ॥५६६॥
तथा नीतिगवी तेन पोषिता सुकृतात्मना ।
विश्वप्रीत्यै यथाऽद्यापि यशो दुग्धं तदुद्भवम् ॥५६७॥
अन्यदा रात्रिपर्यन्ते पल्यङ्कस्थः स बन्दिना ।
पठ्यमानमिमं श्लोकं सत्त्वोत्तेजनमाशृणोत् ॥५६८॥
विपद्यपि गतः सत्त्वाद् ध्रुवं स्यात् संपदां पदम् ।
गतोऽप्यस्तं रविर्मार्गादच्युतोऽभ्युदयी पुनः ॥५६९॥
इमं श्रुत्वा पठन्नेव समुत्तस्थौ महीपतिः ।

---

१ ऋते विना ।

पुनः पुनस्तदीयार्थं मुदा हृदि विभावयन् ॥ ५७० ॥
कृत्वा प्राभातिकं राजा यावदास्थानमाययौ ।
तावत् कोऽपि नरोऽभ्येत्य संभ्रान्त इदमूचिवान् ॥५७१॥
महाराज ! हरिश्चन्द्र ! त्वयि शासति मेदनीम् ।
न श्रुतावपि[1] लोकानां भयमित्यक्षरद्वयम् ॥५७२॥
किन्त्वेकः शूकरः शक्रावतारवनमध्यगान् ।
कुतोऽप्यागत्य भीष्माङ्गो भञ्जन्नास्ते लताद्रुमान् ॥५७३॥
तापसाश्चाभवंस्तत्र सर्वे भयविसंस्थुलाः ।
ततो दध्यौ नृपोऽमीषां किमभूद् हा ! तपस्विनाम् ? ॥५७४
यथा लोकः करं दत्ते स्वधनस्याऽवनिपतेः ।
मुनयोऽपि तथा धर्मषष्ठभागमिति श्रुतिः ॥ ५७५ ॥
ततो रक्ष्या मयैवेते ध्यात्वेत्युत्थाय संभ्रमात् ।
अब्रवीदहहा ! कोऽयं मयि सत्यप्युपप्लवः ॥ ५७६ ॥
श्रीमन्नाभेयदेवस्यारामशत्रुं मुनिद्रुहम् ।
तमद्य शूकरं हन्मि प्रतिज्ञां चाऽकरोदिति ॥ ५७७ ॥
अथो यथागतं क्वापि वराहावेदके गते ।
प्रतिश्रवमिव[2] प्रोच्चै राजाऽऽरोहत् तुरङ्गमम् ॥ ५७८ ॥
सैन्यं संनह्यदेवाऽसौ विमुच्य स्वयमेव तम् ।
निग्रहीतुमनाः क्रोडं[3] त्वरितं निर्ययौ पुरात् ॥ ५७९ ॥
मनोवेगेन यात्यश्वे भूपतिः प्राप तत्क्षणात् ।
वनं शक्रावताराख्यं मुदेवाऽभिमुखागतम् ॥ ५८० ॥
अपश्यत् स्मेराब्जमुखीं कलहंसकमण्डिताम् ।
मृदुवीचीभुजां तत्र शरयूमुदधिप्रियाम् ॥ ५८१ ॥
राजा पप्रच्छ पार्श्वस्थौ स कपिञ्जल-कुन्तलौ ।
अहो ! क्वाऽसौ वराहस्तावूचतुर्नन्वयं पुरः ? ॥५८२॥
वराहस्तद्वचः श्रुत्वा घुर्घुराऽऽरवमुच्चकैः ।

१ कर्णेऽपि । २ प्रतिज्ञामिव । ३ वराहम् ।

कुर्वाणोऽपि नृपं क्रोधाद् दधावे वनगह्वरात् ॥ ५८३ ॥
लघुहस्तस्ततो राजा जानुलम्बभुजोऽपि हि ।
रोमाञ्चकवचं बिभ्रद् निर्भयोऽपि भृशं तनौ ॥ ५८४ ॥
करे चापमलंकृत्य पूरयंस्तद्वपुः शरैः ।
वराहं पातयामास पूरयामास संश्रवम्[1] ॥ ५८५ ॥
( युग्मम् )
ततः कपिञ्जलं प्राह राजा पश्याग्रतः कियत् ।
लक्षमेतद्बलं भिन्नं सोऽप्युपेत्य तथाऽकरोत् ॥५८६॥
स्वेनैत्य पश्य मित्रेति प्रोक्तस्तेन नृपो द्रुतम् ।
ददर्श रुधिरार्द्रं तं ज्वलद्दवमिवाचलम् ॥५८७॥
उवाच च यथास्यैवमतैरिश्चीयमाकृतिः ।
तथा मन्ये वराहेण भाव्यं दिव्येन केनचित् ॥५८८॥
कपिञ्जलोऽवदद् देव ! द्वीपी चाऽयं हतः पुरा ।
राजाऽह पुनरयं किं विलोक्याह कपिञ्जलः ॥५८९॥
इदमज्ञातमेवाऽस्तु राजा प्राह तथापि किम् ।
कुन्तलोऽप्याह किं ज्ञातेनाऽमुना देव ! चल्यताम् ॥५९०॥
उपसृत्य स्वयं राजा लुठद्गर्भां मृगीं हताम् ।
वीक्ष्य प्राह विषण्णः सन्नकृत्याचरणं हहा ! ॥५९१॥
न्यायः कोऽयमशस्त्रो यद् दधानो वदने तृणम् ।
इत्थं निःशरणो दीनो हन्यते सुभटैः पशुः ? ॥५९२॥
धिग् धिग् मां हरिणीभ्रूणघातकं गुरुपातकम् ।
धिगिमा मेऽखिलक्षोणीकरार्जितजन्मिताः श्रियः ॥५९३॥
विकलाक्षत्वकृत् पञ्चेन्द्रियाणामपि या नृणाम्[2] ।
कृत्याकृत्यमतिं या च मदिरेव विलुम्पति ॥५९४॥
कुलटेव न यैकत्राऽवस्थाना तामपि श्रियम् ।
इच्छवो मार्गमुज्झन्ति मुनिभिः श्लाघितं जडाः ॥ ५९५ ॥

---

१ प्रतिज्ञाम् । २ क्षतेन्द्रियकारिणी ।

धन्यास्ते मुनयो हित्वा महासंसारकर्द्दमलम् ।
निष्पङ्के संवृतात्मानो मोक्षमार्गे चरन्ति ये ॥ ५९६ ॥
तद् गच्छाम्याश्रमं पुण्यं यत्र सन्ति तपोधनाः ।
इयतः कल्मषात् शुद्धिः कथं मे भविताऽन्यथा ? ॥५९७
इति राज्याद् विरक्तात्मा पादचारेण भूपतिः ।
व्रजित्वा सह मित्राभ्यां विवेश द्रुतमाश्रमम् ॥ ५९८ ॥
दृष्ट्वा कुलपतिं तत्र ननाम मुदितो नृपः ।
पृष्ठे पाणिं निधायाऽस्य मुनिरप्याशिषं ददौ ॥ ५९९ ॥
क्षतात् त्राणेन लोकानां स्वस्य क्षत्र इति प्रथाम् ।
कुर्वाणः सार्थिकां पुण्यैः प्रवर्धस्व सदा नृप ! ॥ ६०० ॥
राजा पप्रच्छ भगवन् ! ज्ञान-ध्यान-तपांसि वः ।
निर्वहन्त्यहतं कच्चित् कुशलं मृग-भूरुहाम् ॥ ६०१ ॥
मुनिरूचे महाराज ! भरतान्वयभूषण ! ।
त्वयि प्रशासति क्षोणीं कुतोऽस्माकमुपद्रवः ? ॥ ६०२ ॥
मही राजन्वती तेजः प्रबलं विमलं यशः ।
वर्णाश्रम ! महीरक्षा दक्षा वृत्तिस्तवाऽखिला ॥ ६०३ ॥
अस्मिन्नवसरे क्काऽपि जातः कोलाहलो महान् ।
किमेतदिति संभ्रान्तौ मुनि-भूपौ बभूवतुः ? ॥ ६०४ ॥
अब्रह्मण्यमब्रह्मण्यमिति च व्याकुलं वचः ।
श्रुत्वा कुलपतिः शिष्यं तं ज्ञातुं प्राहिणोद् द्रुतम् ॥६०५॥
पुनरार्तस्वरो जज्ञे स्त्रीणां शोकस्पृशामिति ।
मातश्चेद् मे मृगी मर्ता करिष्येऽनशनं तदा ॥ ६०६ ॥
माताऽपि प्राह चेद् वत्सेऽनशनं त्वं करिष्यसि ।
तदाहमपि कर्तास्मि[1] विना त्वां जीवितेन किम् ? ॥ ६०७ ॥
श्रुत्वा कुलपतिश्चैतद् हृदयं स्फोटयद् वचः ।
किं नः प्राणप्रिया पुत्री वञ्चनाऽनशनीयति[2] ? ॥ ६०८ ॥

---

१ कृत्वा इदमपि । २ अनशनमिच्छति ।

इयं च निकृतिर्नूनमस्मत्सधर्मचारिणी ।
वत्सामनुसरन्त्येतद् ब्रूते किमसमञ्जसम् ? ॥ ६०९ ॥
ततोऽङ्गारमुखादाशु स तापस्यावजूहवत् ।
आजग्मतुरथो तारं ते रुदत्यावुभे अपि ॥ ६१० ॥
उवाच वञ्चनां मायी मुनिः किं पुत्रि ! रोदिषि ? ।
साऽह जानाति तातो यदस्ति क्रीडामृगी मम ॥६११॥
सोऽप्याह या त्वया बाल्यात् पोषिता स्वकरार्पितैः ।
नीवारकवलैस्तस्यास्ततः किमभवत् सुते !? ॥ ६१२ ॥
इत्युक्ते वञ्चना तारस्वरं रोदिति केवलम् ।
ततः प्रविश्य संभ्रान्तः शिष्यः कुलपतिं जगौ ॥६१३॥
भूरराजन्वती[1] सेयमब्रह्मण्यमहो ! महत् ।
मृगयाव्यसनात् पापः कोऽप्यहन् गर्भिणीं मृगीम् ॥६१४॥
सास्रं कुलपतिः प्रोचे हहा ! किं भाव्यतः परम् ? ।
यतस्तां निघ्नता तेनाऽऽनीतोऽस्माकं कुलक्षयः ॥ ६१५ ॥
विना मृगीं कथं जीवेद् वत्सा तज्जीविता ततः ।
न प्राणिति विना पुत्रीमस्मत्प्राणप्रिया खलु ॥ ६१६ ॥
विना सधर्मचारिण्या कुतो मे तपसां विधिः ? ।
तपोविधिं विना मे स्याद् ऋषित्वमनघं नहि ॥ ६१७ ॥
राजन्निक्ष्वाकुराजेन्द्र ! कौतस्त्योऽयं तपस्विनाम् ।
इत्थमाकस्मिकः शोकशङ्कुस्त्वय्यपि भूपतौ ? ॥ ६१८ ॥
ततः कुतोऽपि तं ज्ञात्वा साधुबाधाकरं परम् ।
श्वपाकं शाधि[2] येन त्वं लोकपालोऽसि पञ्चमः ॥ ६१९ ॥
वञ्चना त्वाह मां तात ! चितामारोढुमादिश ।
किं न वेत्सिममैण्या हि मरणं क्रकचायते ?॥ ६२० ॥
सविषादं नृपः प्रोचे मुने ! कुर्वेऽहमत्र किम् ।

१ न्यायिनृपरहिता । २ शिक्षय ।

परेषां दण्डमाधातुमलमेषोऽस्मि नात्मनः ? ॥ ६२१ ॥
ससंरम्भं च सौत्सुक्यं मुनिः प्रोवाच नन्वहो ! ।
इयता स्यात् किमुक्तं यद् मया व्यापादिता मृगी ? ॥६२२॥
पश्चात्तापात् स्वमात्मानं प्रणिन्दति महीपतौ ।
पिधाय वल्कलेनास्यं पूच्चक्रेऽथ स मायिकः ॥ ६२३ ॥
ऊचे च कुपितो भूपमाः ! पाप ! वहसि ध्रुवम् ।
कोदण्ड-शरधी हन्तुं ध्यानलीनांस्तपस्विनः ?॥ ६२४ ॥
निपत्य पादयो राजा विनयाद् मुनिमब्रवीत् ।
त्वमेकमपराधं मे क्षमस्व त्वं क्षमानिधे ! ॥ ६२५ ॥
मुनिः पराङ्मुखो भूत्वा चुक्रोश नृपमुच्चकैः ।
भरतान्वयचन्द्राङ्क ! व्रज व्रज ममाश्रमात् ॥ ६२६ ॥
युष्मादृशां निर्घृणानां श्रुता वागपि पाप्मने ।
किं पुनः कर्मचण्डाल ! वाचाल ! सङ्गमस्त्वया ॥६२७॥
राजा सविनयं प्राह मुने ! ब्रूहि करोमि किम् ? ।
विशाम्यग्निं त्यजामि क्ष्मा चरामि व्रतमेव वा ॥ ६२८॥
सकोपं मुनिरप्यूचेऽद्यापि श्रावयसे गिरम् ।
मायाविन् ! हरिणीभ्रूणघातपातकपङ्किलाम् ?॥ ६२९ ॥
ततोऽङ्गारमुखोऽवादीत् प्रसादं ! कुरु मा रुषः ।
तपस्तेजोनिधे ! नायमपमानं नृपोऽर्हति ॥ ६३० ॥
किन्तु दुष्कर्मणोऽमुष्य पवित्रीकारकारणम् ।
शास्त्रानुपाति यत् किञ्चित् तदेवाऽऽशु समादिश ॥६३१॥
मुनिरूचेऽङ्गारमुख ! शुद्धिरस्य तदा भवेत् ।
सर्वस्वं यद्यसौ दत्ते दानं ह्यघनिवृत्तये ॥ ६३२ ॥
सोच्छ्वासं नृपतिः प्रोचे प्रसीद भगवन् ! मयि ।
सर्वस्वं मे गृहाण त्वं विलयं यात्वघं मम ॥ ६३३ ॥
किं न प्राप्तं मया त्रातः ! शुध्यामि यद् यतस्ततः ।

१ पापाय ।

सग्रामाऽश्वेभकोशा भूर्दत्ता तेऽम्बुधिमेखला ॥ ६३४ ॥
प्रणम्य मुनिमङ्गारमुखः प्राह कृताञ्जलिः ।
राजा यदभिधत्ते तद् भगवन् ! प्रतिपद्यताम् ॥६३५॥
अथाऽपसार्य राजानमूचतुः सुहृदौ मृदु ।
अकाण्डे कोऽयमुत्पातो राजन् ! विमृश मा मुहः ? ॥६३६॥
राजाऽवज्ञाय तद्वाचमूचे संप्रश्रयं मुनिम् ।
यदुक्तं भगवन्नस्तु गृहाण वसुधामिमाम् ॥६३७॥
क्षामाक्षरं मुनिः प्राह दत्ताऽस्मभ्यं मही त्वया ।
नार्हस्यतः परं पृथ्व्या भोगमामिति सोऽब्रवीत् ॥६३८॥
तदा तत्रागतं वाराणसीतः शिष्यमात्मनः ।
मुनिं कौटिल्यनामानमाजूहवत् स तापसः ॥ ६३९ ॥
हरिश्चन्द्रेण मे पृथ्वी दत्ता जलधिमेखला ।
इत्यर्थे खलु साक्षी त्वमिति तं मुनिरादिशत् ॥६४०॥
कौटिल्योऽप्यवदद् राजन्नत्रार्थे साक्षिणो वयम् ।
ओमित्युक्ते नृपेणाऽगात् स स्वं स्थानं मुदा नृपः ॥६४१॥
अथ व्यजिज्ञपत् कोऽपि शिष्यो यावदियं मृगी ।
तिष्ठेत् तावद् विपन्ना न पाठस्तत् क्रियतां किमु ? ॥६४२॥
सखेदं मुनिरूचेऽस्याः कारयाऽनलसंस्कृतिम् ।
वञ्चनाऽऽह मया सार्धमस्याः स्यादग्निसंस्कृतिः ॥६४३॥
राजा तां विनयादूचे ममैकं दुर्नयं सह ।
अहं तुभ्यं प्रदास्यामि स्वर्णलक्षमसंशयम् ॥ ६४४ ॥
कष्टादिव तयाऽप्योमित्युक्ते प्राह मुनिस्ततः ।
दीयतां तर्हि हेमाऽस्यै राजा प्राहैतं मत्पुरे ॥ ६४५ ॥
प्रातः सन्ध्याविधिं कृत्वा पश्यैते वयमागताः ।
इत्याकर्ण्य मुनिं राजाऽवोचत् तर्ह्यधुना वयम् ॥ ६४६ ॥
इक्ष्वाकुवंशभूपालगुरुं श्रीनाभिसंभवम् ।

१ सानन्दम् । २ एत आगच्छत ।

देवं शक्रावतारस्थमर्चित्वा याम धामनि ॥ ६४७ ॥
( युग्मम् )
एवं कृत्वा च पाश्चात्यागतसैन्येन संयुतः ।
हरिश्चन्द्रनृपोऽयोध्यां प्रविवेश दिनात्यये ॥ ६४८ ॥
अथ राज्यमहास्तम्भः सर्वनीतिविशारदः ।
मन्त्री मित्रं च तस्यासीद् वसुभूतिर्महीपतेः ॥६४९॥
कुन्तलाद् ज्ञातवृत्तान्तः स दध्यौ हृदि हा ! कथम् ।
अपर्यालोचयन्तोऽर्थं राजानः स्वोपघातकाः ? ॥६५०॥
ददता वसुधां तस्मै तापसाय दुरात्मने ।
देशाद् देशप्रवासो हि स्वीकृतो भूभुजा स्वयम् ॥६५१॥
यदन्येनाऽदृष्टचरो वराहं कोऽप्यवेदयत् ।
भूभुजे तद् ध्रुवं किञ्चिद् दिव्यमेतद् विजृम्भितम् ॥६५२॥
अविमृष्टायतिर्भूपः क्षीयते न्यायवानपि ।
अत एव विमृष्टारः सन्निधेयाः सुमन्त्रिणः ॥६५३॥
किं कुर्मो दुर्धियः कुर्युर्यत् किञ्चन महीभुजः ।
तत्तत्प्रतिक्रियाव्यग्रैः क्लिश्यते सचिवैः पुनः ॥६५४॥
विमृश्यैवं तदामात्यः सशल्य इव निःश्वसन् ।
विलासमण्डपेऽह्नाय सचिन्तो नृपतिं ययौ ॥ ६५५ ॥
नत्वोपविष्टे तस्मिंश्च मन्त्रिणि प्राह भूपतिः ।
वराहाऽऽवेदकस्याग्रे प्रतिज्ञातमकृष्महि ॥ ६५६ ॥
मन्त्र्याह देव ! तत् सर्वं वृत्तान्तं ज्ञातवानहम् ।
राज्ञोचे सस्मितं तर्हि कुन्तलस्तद् न्यवेदयत् ॥६५७॥
मन्त्री प्राह विभो ! कस्य प्रभुत्वं न मुदे भुवि ।
अनौचित्यमपि स्तौति यत्रौचित्यमिवाऽनुगः ॥६५८॥
किन्तु विज्ञपयिष्यामि कर्णयोः कटु किञ्चन ।
नाथाऽयं वसुधात्यागो नहि मे प्रतिभासते ॥ ६५९ ॥
राज्ञोचे सत्यं किन्त्वेतत् युक्तं नो युक्तमेव वा ।

प्रारम्भाद् युज्यते पूर्वं निर्वाहोऽङ्गीकृते पुनः ॥ ६६० ॥
किञ्च यान्तु श्रियो नाशं प्रयातु निधनं कुलम् ।
प्रवासो वाऽस्तु निर्वाहः प्रतिज्ञाते भवेद् यदि ॥ ६६१ ॥
अलं तदेतया पूर्वकृतमीमांसयाऽधुना ।
स्वर्णलक्षं हि ढौकस्व स्वेनाऽयाति मुनिर्यतः ॥ ६६२ ॥
ततः सशिष्यः स मुनिः कुर्वन्नागाद् नृपस्तुतिम् ।
अहो ! अगोचरे वाचां राज्ञोऽस्य चरितं महत् ॥ ६६३ ॥
पूरोभूय नृपस्याऽसौ सकोप इव मायया ।
अयाचत स्वशिष्येण स्वर्णलक्षं महीपतिम् ॥६६४ ॥
नृपाऽऽदेशादथादिक्षत् स मन्त्री कुन्तलं ततः ।
सोऽपि स्वर्णं समादाय मुमोच नृपतेः पुरः ॥ ६६५ ॥
राज्ञोक्तः सचिवस्तस्मै तापसाय ह्युपानयत् ।
सोऽपि वीक्ष्य किमेतद् भोः ! पप्रच्छेति नृपं मुनिः ॥६६६॥
राज्ञोचे वञ्चनास्वर्णं, कुत एतन्मुनिर्जगौ ।
अथाख्यद् नृपतिः कोशात्, बहिरन्तः स वा क्षितेः ? ॥६६७॥
इत्युक्ते मुनिना राजा प्राह मध्ये क्षितेर्मुनिः ।
ब्रूते स्वामी क्षितेः कोऽत्र राजाख्यत् त्वं न चाऽपरः ?॥६६८॥
मुनिरूचे ततः कोऽयं प्रकर्षः कौशलस्य ते ।
यन्मदीयेन हेम्ना मेऽनृणीभवितुमिच्छसि ? ॥ ६६९ ॥
तदास्तां काञ्चनं यामो दृष्टं सत्यं तवेयता ।
इत्युदित्वा मुनौ याति राजा तस्य पुरोऽवदत् ॥ ६७० ॥
विलम्बध्वं क्षणं यावदानयाम्यन्यदन्यतः ।
सकष्टमिव तस्थौ च स मुनिर्भूभुजाऽर्थितः ॥ ६७१ ॥
ततो राजा मन्त्रिकर्णे किमप्याचष्ट मन्त्र्यथ ।
केनचित् पुरुषेणाऽऽश्वऽजूहवद् वणिजोऽखिलान् ॥६७२॥
मुनिना दिव्यशक्त्या ते हरिश्चन्द्रे द्विषः कृताः ।
संभूय मन्त्रयामासुः स्वामी नोऽतः परं मुनिः ॥ ६७३ ॥

हरिश्चन्द्रस्य दत्तेन किं द्रव्येण वृथाऽधुना ?।
यो हि स्वामी पुरस्याऽस्य देयोऽस्माभिः करोऽस्य तत् ६७४
इति मन्त्रयतो मन्त्री तानूचे रहसि स्थितः।
राजा वोऽर्थयते स्वर्णमधमर्णो मुनेः स यत् ॥ ६७५ ॥
पश्यतस्तान् मिथो वक्तुं स्वर्णदाने कृतोत्तरान्।
हरिश्चन्द्रस्ततोऽभ्येत्य स्वयमर्थयते स्म तान् ॥ ६७६ ॥
हे पौराः! वोऽञ्जलिर्बद्धो दत्त स्वर्णं कियन्मम।
कुतश्चिदपि याचित्वा दास्ये वः काञ्चनं पुनः ॥ ६७७ ॥
अल्पद्रव्या वयं दातुं स्वर्णलक्षं न शक्नुमः।
इत्यूचिवांसो वणिजो राज्ञादिष्टा ययुर्गृहान् ॥ ६७८ ॥
विलक्षोऽथ नृपो दध्यौ किं करोमि कुतः पुनः।
समानयामि तत् स्वर्णं हा! धिक् कीदृगुपस्थितम्? ६७९
ततः कुलपतिः कोपकम्पमानाधरोऽवदत्।
विलम्बः कोऽयमद्याऽपि राजन्! विसृज मां ततः?॥६८०॥
वसुभूतिर्मुनिं प्राह विश्वदृश्वा त्वमस्यथ।
हरिश्चन्द्रसमः क्वापि दृष्टः किं कोऽपि सात्त्विकः?॥६८१॥
सोपहासमुवाचाऽथाङ्गारवक्त्रो न मन्त्र्यपि।
दृष्टोऽभूत् त्वादृशो नाऽपि हरिश्चन्द्रसमो नृपः॥ ६८२ ॥
नृपं प्रति मुनिः प्रोचे मायाविन्! किं वृथोदितैः।
हंसि मध्याह्नसंध्यां नः सत्त्वं सत्यं च ते ह्यदः?॥ ६८३ ॥
ऊचेऽङ्गारमुखो राजन्! वाञ्छसि त्वं किमात्मनः।
कुलस्य यशसो लोकस्याकस्मिकमिह क्षयम्?॥६८४ ॥
प्रणम्योचे नृपो भीतेस्त्वत्तः किं स्यात् क्षयोऽपि नः?।
उपपूर्वाचलं नैव ग्रहाणामस्तसम्भवः॥ ६८५ ॥
निहन्ति पार्ष्णिना भूपं मुनिस्तं नतवान् नृपः।
कोपे क्षान्तौ च तावेव तदाऽभूतां निदर्शने ॥ ६८६ ॥
सरोषमङ्गारमुखो भूपं प्राह नृपाधम!।

विप्लावयसि किं नस्त्वं मृषाभाषामहोदधे ! ॥ ६८७ ॥
आहाङ्गारमुखं मन्त्री विरोधस्ते मिथः कथम् ।
केदृक् तपो रुषः कैमास्तन्मा ब्रह्म कलङ्कय ? ॥६८८॥
प्राहाऽङ्गारमुखः कोपादस्थापितमहत्तर ! ।
कस्त्वमपि मम ब्रह्मचिन्तायां सचिवाधम ! ? ॥ ६८९ ॥
अरे ! राजंस्त्वमेनं किमन्तरालापिनं बटुम् ।
न निवारयसे किं मे न प्रयच्छसि काञ्चनम् ? ॥६९० ॥
राज्ञाचे त्वं मुनिः स्वैरं ब्रूहि सर्वसहोऽस्मि यत् ।
सूर्यवंश्या हि नैवेर्ष्यां भजन्ते यतिषु क्वचित् ॥ ६९१ ॥
ऊचेऽङ्गारो यतिर्नाहं किन्त्वेष ब्रह्मराक्षसः ।
ततो यद्यस्ति ते शक्तिस्तदा प्रहर सत्वरम् ॥६९२ ॥
नृपो दध्यौ स्वप्रतिज्ञाघातिना कलहेन किम् ? ।
तापसेन सहाऽनेन क्रियते कृत्यमेव हि ॥६९३ ॥
कर्णे च कथिते भूपेनाऽऽनीयाभरणान्यपि ।
कुन्तलेनाऽर्पितान्येष राज्ञोऽमूनीत्यपाकरोत् ॥६९४ ॥
कुन्तलो वसुभूतिश्चाहतुः कुलपते ! नृपः ।
यावद् ददाति ते स्वर्णं तावदावां गृहाण भोः ! ॥६९५॥
मुनिराह त्वया जूर्णमार्जारेण करोमि किम् ।
अल्पेन कुन्तलेनाऽपि कः स्वर्णं स्वमुपेक्षते ? ॥ ६९६ ॥
आदिक्षत् कुन्तलं राजा देवीभूषणमानय ।
स ययाचे ततो देवीं देव्याहैष्याम्यहं स्वयम् ॥ ६९७ ॥
तेन दर्शितमार्गाऽसौ रोहिताश्वेन संयुता ।
आययौ सदसि क्षिप्रं सुतारा सावगुण्ठना ॥ ६९८ ॥
प्रणम्यैषा मुनिं प्रोचे गृहाणाभरणं मम ।
मुनिराह पितुर्भर्तुर्वैतान्येषाऽब्रवीदिति ॥ ६९९॥

---

१ स्वर्णमिहानय, इत्यपि । २ समुखाच्छादना ।

आर्यपुत्रेण मे योग्यं नेपथ्यमिदमर्पितम् ।
मुनिराह ततः केयं दक्षता ते पतिव्रते !? ॥ ७०० ॥
ऊचेऽङ्गारमुखः किं न जानासि त्वमियं किल ।
महाकूटनिवासस्य हरिश्चन्द्रस्य गेहिनी ॥ ७०१ ॥
त्वदीयमेत्राऽर्प्यते वस्तु येत्युदितेऽमुना ।
आबद्धभ्रकुटीभङ्गः कुन्तलोऽथ रुषाऽवदत् ॥ ७०२ ॥
अरे ! तापस ! नो वेत्सि देवीमेतां महासतीम् ।
तदेष त्वं न भवसीत्युक्त्वा सोऽप्यवदद् नृपम् ॥ ७०३ ॥
विमृशाऽद्यापि मा मुह्यः किं यतेः स्यात् परिग्रहः ।
वाचश्चेमाः स्युरेते हि मुनिव्याजेन राक्षसाः ? ॥ ७०४ ॥
ततः कुलपतिः क्रोधादूचे कर्मकराधम ! ।
आसादितपरज्ञानानधिक्षिपसि तापसान् ? ॥ ७०५ ॥
यदि मेऽस्ति तपःसत्यं तदा त्वमधुना द्रुतम् ।
श्मशानवासी गोमायुर्भवेत्युक्त्वा शशाप तम् ॥ ७०६ ॥
कुन्तलो जम्बूको भूत्वा शब्दं कुर्वन् ययौ क्वचित् ।
प्रसीद मा कुपः स्वामिन् ! मुनिमित्यानमद् नृपः॥ ७०७ ॥
पादेनाहत्य परतः क्षिपति क्ष्मापतिं मुनौ ।
रोहिताश्वो रुदन्नाह मा स्म हन् पितरं मम ॥ ७०८ ॥
किन्तु मां हि गृहाण त्वमिति श्रुत्वा शिशोर्वचः ।
मुनिः साश्रुदृशीभूय प्रोचेऽङ्गारमुखं मृदु ॥ ७०९ ॥
बाष्परुद्धगलो नाऽस्मि शक्तोऽहं दातुमुत्तरम् ।
ऊचेऽङ्गारमुखो मैवं मुञ्च स्वमधुनैव हि ॥ ७१० ॥
क्रूरीभूय मुनिः प्राह सुतारां शिक्षितस्त्वया ।
बालोऽयं, साऽऽह कृत्येषु नाऽयं शिक्षामपेक्षते ॥ ७११ ॥
:—वृद्धोपास्तिं विनाऽपि स्याद् दक्षः स्फूर्तिमयः पुमान् ।
मणिः किं गारुडेऽधीती यदसौ हरते विषम् ? ॥ ७१२ ॥
राजाऽथ सास्रं दध्यौ च यत् सजीवमजीवकम् ।

चेद् दत्तं प्राग् भुवा सार्धं ततः स्वर्णं ददे कुतः ? ॥७१३॥
विलम्ब्य काञ्चनं कृत्वा कथञ्चिद् दातुमुत्सहे ।
इत्याह दैन्यात् स मुनिं मासमेकं सहस्व मे ॥ ७१४ ॥
मुनिरूचे कथं पश्चाद् भिक्षयित्वा प्रदास्यसि ? ।
राजाहैक्ष्वाकवो भिक्षां दातुं दक्षा न याचितुम् ॥७१५॥
कुतस्तर्हीति तेनोक्ते राजोचे मुनिपुङ्गव ! ।
विक्रीय स्वमपीत्येतद् मुनिः श्रुत्वा विसिष्मिये ॥७१६॥
वाचा तु कठिनः प्राह पृथ्वीं मुञ्च ममाऽधुना ।
राज्ञोचे कुत्र याम्याह सः, न यत्रोपलक्ष्यसे ? ॥ ७१७ ॥
राज्ञोक्तं मे भुवं मुञ्च त्वमितीदं कियद् वचः ? ।
हन्त ! पूरयितुं सन्धां त्यजन्तीक्ष्वाकवो ह्यसून् ॥७१८॥
ततोऽपवार्य ते प्रोचुस्तापसा मुदिता मिथः ।
अहो ! सत्त्वमहो ! सत्यमहो ! सात्विकसूश्च भूः ॥७१९॥
देव्याह किमिदं मन्त्रिन्नरिष्टं नः समापतत् ।
सोऽप्याह किमिदं वेद्मि दैवं पृच्छ नृपप्रिये ! ॥७२०॥
विमृश्याह नृपो देवीं गच्छान्तःपुरमात्मनः ।
सुताराऽऽह समेष्यामि युष्माभिः सार्धमप्यहो ! ॥ ७२१ ॥
सास्रं प्राह नृपो देवि ! सुकुमारः शिशुः सुतः ।
पन्थानो विषमास्तत् त्वं तिष्ठाऽत्रैव व्रजाम्यहम् ॥ ७२२ ॥
सावष्टम्भं सुताराऽऽह यद् भाव्यं तद् भवत्विह ।
आगमिष्याम्यहं सार्धं त्वया च्छायेव निश्चितम् ॥ ७२३ ॥
पतिव्रते ! क चलिताऽसीत्युक्ते मुनिनाऽऽह सा ।
प्रवासे सह नाथेन येन पत्यनुगाः स्त्रियः ॥ ७२४ ॥
ममायत्तां हरिश्चन्द्रो नेष्यते, त्विदमद्भुतम् ।
इत्युक्ते मुनिना प्राह वसुभूतिः क्रुधा ज्वलन् ॥७२५॥
अरे ! तापस ! नासि त्वं विज्ञो लोकस्थितेः खलु ।

१ प्रतीक्षस्व । २ प्रतिज्ञाम् ।

विद्धीदानीं स्त्रियो भर्तृदेवता न परात्मिकाः ॥७२६॥
यत् प्राह व्यवहारज्ञस्त्वन्मन्त्री तत्र ते मतम् ।
इत्युक्ते तापसेनाह राजाऽपि मुनिपुङ्गवम् ॥ ७२७ ॥
मम स्त्रैणस्य[1] पौंस्नस्य[2] देश-कोशा-ऽश्व-हस्तिनाम् ।
किमन्यद् देव्याः पुत्रस्य त्वमेव स्वाम्यतः परम् ॥७२८॥
तत् त्वं चेन्मन्यसे देवी तदायातु मया सह ।
देव्याह विसृज त्वं मां मुने ! स प्राह याहि तत् ॥७२९॥
किन्तु मुक्त्वाऽऽभरणानि यातेति मुनिनोदिते ।
मुमोच नृपतिः सर्वं नेपथ्यं मुकुटादिकम् ॥ ७३० ॥
सुताराऽऽह पुनः किञ्चिदस्त्ववैधव्यलक्षणम् ।
भूषणं भगवन्नेवं निशम्य मुनिरब्रवीत् ॥७३१॥
तव भद्रे ! हरिश्चन्द्र एवाऽवैधव्यलक्षणम् ।
इति वाचि मुनौ सास्रा सुताराऽप्यभवत् ततः ॥७३२॥
मन्त्री प्राह मुनिं कोपादरेरे ! ब्रह्मराक्षस ! ।
नृपो विज्ञो ददत् ते क्ष्मां, किं वा गृह्णन्नितो भवान्? ॥७३३॥
क्रुधा प्रोचे मुनिर्नाऽयं कृत्येषु विदुरो नृपः ।
नचाऽहमपि विज्ञोऽस्मि, विज्ञस्त्वं योऽन्तरायकृत् ॥७३४॥
मुनिः क्रुधाऽक्षिपद् भूमौ गृहीत्वाम्भः कमण्डलोः ।
आह चास्ति तपश्चेन्मे तदा त्वं द्राक् शुको भव ॥ ७३५ ॥
ततश्च सचिवः कीरो भूत्वाऽगाद् नभसा क्वचित् ।
राजा तु सभयं नत्वाऽवोचदेष गतोऽस्म्यहम् ॥ ७३६ ॥
निवार्य रुदतो भूपः पूर्लोकानन्वयप्रियान् ।
क्षमयित्वा स्वापराधान् प्रतस्थे सप्रिया-सुतः ॥ ७३७ ॥
अनुरागाल्लुठद्बाष्पमनुयान्तं पुरीजनम् ।
कष्टान्निवर्तयामास राजा स्नेहगिरा मृदुः ॥ ७३८ ॥
प्रचलन् सात्त्विकः पुत्र-कलत्राभ्यां समन्वितः ।

---

१ स्त्रीसमूहस्य । २ नरनिकरस्य ।

कथं कथमपि श्रान्तमध्वनः प्राप भूपतिः ॥ ७३९ ॥
दूरमार्गपरिश्रान्ता सुतारा नृपमब्रवीत् ।
कियदद्यापि गन्तव्यं खिन्नान्यङ्गानि नाथ ! मे ? ॥७४०॥
उवाच नृपतिर्देवि ! मा ताम्यः[1] किं न पश्यसि ।
अभ्रंलिहगृहाकीर्णामाराद् वाराणसीं पुरीम् ? ॥ ७४१ ॥
अतीव यदि खिन्नाऽसि वहन्ती पुत्रमात्मना ।
अनुगङ्गातटं रूढं तदा चम्पकमाश्रय ॥ ७४२ ॥
देव्या तथाकृते राजा स्वेनैव समवाहयत् ।
यथासुखं तदङ्गानि ततो देवी व्यचिन्तयत् ॥ ७४३ ॥
यदा हि संपदः पुंसां तदा सर्वोऽनुगच्छति ।
इदानीमार्यपुत्रं यन्न कोऽप्यागादनुव्रजन् ॥ ७४४ ॥
स्तुत्यः स्तौतीहते काम्योऽनुगम्योऽप्यनुगच्छति ।
नरं यस्यां प्रसन्नायां को हि नेच्छति तां श्रियम् ? ॥७४५॥
स्वप्नदृश्या ततोऽभूद् नः सा संपद् यां विनाऽधुना ।
पद्भ्यां यानं क्षितौ शय्या कदाहारो[2] मनःक्लमः ॥ ७४६ ॥
इत्यूचाना पिधायाऽऽस्यं रुरोदोच्चैर्नृपप्रिया ।
रोहिताश्वस्ततोऽरोदीद् भूत्वा साश्रुर्नृपोऽवदत् ॥ ७४७ ॥
मा रोदीर्भव धीरा त्वं सात्त्विकत्वमुरीकुरु ।
मा मा शोकपिशाचोऽस्मान् गृह्णातु परितो भ्रमन् ॥७४८॥
रोहिताश्वस्ततोऽवोचदहं तात ! बुभुक्षितः ।
राजाऽऽदिक्षदरे ! क्षिप्रं देहि वत्साय मोदकम् ॥ ७४९ ॥
न कोऽपि यावदायाति विलक्षो नृपतिस्ततः ।
किमेतदिति देव्योक्तः पूर्वाभ्यासोऽब्रवीदिति ? ॥७५०॥
रोहिताश्वः पुनः प्राह हे ! मातः ! क्षुधितोऽस्म्यहम् ।
रुदती तारतारं सा सुतारा सुतमब्रवीत् ॥ ७५१ ॥
चक्रवर्तित्वप्रतिभूलक्षणोपेतवर्ष्मणः[3] ।

---

१ खिद्य. एवमपि । २ कुत्सितभोजनम् । ३ वर्ष्म शरीरम् ।

भरतान्वयज! तस्याऽवस्था केयं तवागता ? ॥ ७५२ ॥
अथ दध्यौ नृपः कीदृग् राज्यस्यैतादृशः फलम् ।
रुदतो यत् तनूजस्य प्रातराशे[1]ऽप्यशक्तता ॥ ७५३ ॥
आस्तां विनोदयाम्येनं कौतुक-प्रेक्षणादिभिः ।
पश्येतः पुत्र ! गङ्गायां मिथः क्रीडन्ति पक्षिणः ॥ ७५४ ॥
हंसोऽयं सारसोऽयं च कोकद्वन्द्वमिदं पुरः ।
कलापं पूरयित्वा च नृत्यत्येष शिखी कथम् ? ॥७५५॥
तन्नामोच्चारपूर्वं तु वीक्षमाणः सविस्मयम् ।
रोहिताश्वः पुनः प्राह ताताऽहं क्षुधितो भृशम् ॥७५६॥
सवैलक्ष्यं पुनर्भूपे बोधयत्येवमेव तम् ।
आगादकस्मात् काप्येका वृद्धा पाथेयमस्तका ॥७५७॥
पृच्छन्ती नगरीमार्गं भूपं साऽऽहेदमद्भुतम् ।
चक्रिणो लक्षणान्यङ्गेऽवस्था च कथमीदृशी ? ॥ ७५८ ॥
कथा नः श्रूयमाणाऽपि कातराणां भयावहा ।
तन्मा पृच्छ पुरो गच्छ राज्ञेत्युक्ते चचाल सा ॥७५९॥
मोदकं देहि मे तात ! सुतरामितिभाषिणि ।
रोहिताश्वे ततो वृद्धा निवृत्य तमढौकयत् ॥ ७६० ॥
स्वयं निर्लेपटत्वेन सात्त्विकस्य सुतत्वतः ।
बुभुक्षितोऽपि बालोऽपि रोहिताश्वोऽग्रहीन्न तम् ॥७६१॥
नानुकम्पाप्रदानं ते गृह्णीमो वयमम्बगे ! ।
प्रत्याख्यातेति राज्ञा सा ययौ क्वापि क्षणादपि ॥७६२॥
देवि ! चेद् गतखेदाऽसि तदोत्तिष्ठ पुरीं प्रति
याम इत्थं नृपेणोक्ते सुताराऽऽह सगद्गदम् ॥७६३ ॥
निजराज्यपरिभ्रंशलज्जासज्जमनाः कथम् ।
प्रवेक्ष्यत्यार्यपुत्रोऽत्र वैरिपुर्यां स्थितद्विषि ? ॥ ७६४ ॥
सावष्टम्भं नृपः प्राह का लज्जा सत्त्वशालिनाम् ? ।

---
1 प्रातर्भोजने ।

पूर्णीकर्तुं निजां सन्धामापदो यदि तन्महः ॥ ७६५ ॥
सुताराऽऽह भवेद् दैवात् सा काऽप्यापदतर्किता ।
यत्र स्वस्य पराभूतिर्वैरिवर्गस्य तूत्सवः ॥ ७६६ ॥
राजा प्रोवाच देवि ! त्वं न विचार्य प्रभाषसे ।
लक्ष्म्या बलेन वा हीनो यदि स्यां तत् पराभवः ॥७६७॥
इदं पुराकृतं कर्म प्रभवत् केन वार्यते ? ।
तत्प्रभावाद् दशाऽस्माकं यद्येषा तद् द्विषां किमु ? ॥७६८॥
ततः प्रति पुरीं राजा प्रतस्थे प्रियया सह ।
तामाह स्यात् कुतः स्वर्णं यदासन्नोऽवधिर्मुनेः ?॥७६९॥
मां विक्रीयाऽऽर्यपुत्राऽस्मै तद् यच्छेति तयोदिते ।
राज्ञोक्तं विक्रयश्चेत् तत् सर्वेषां नहि कस्यचित् ॥ ७७० ॥
रोहिताश्वोऽब्रवीत् सास्रं मा विक्रैष्टाऽस्तु मां पितः ! ।
मातर्वारय तातं मां विक्रीणानं पुरे धनैः ॥ ७७१ ॥
सुतारा रोदिति क्ष्मापो बाष्पं रुद्ध्वाऽऽह वत्स ! कः ।
विक्रेष्यते त्वां, सोऽप्याह तात ! विक्रेष्यते भवान् ? ॥७७२॥
त्वदन्तिकेऽम्ब ! स्थास्यामि यास्याम्यन्यगृहे न तु ।
वरं मे मोदकं मा दा इत्यूचानो रुरोद सः ॥ ७७३ ॥
राज्ञोचे देवि ! नैवाहं पुत्रस्य करुणं वचः ।
श्रोतुं शक्नोमि तदिमं कथञ्चिदपि वारय ॥ ७७४ ॥
रुदत्याह सुतारा त्वं चक्रवर्ती भविष्यसि ।
मा रोदीस्तिष्ठ वत्स ! त्वां विक्रेष्यति न कश्चन ॥ ७७५ ॥
रोहिताश्वस्य वाचाऽथ मनोमर्माविधा रुदन् ।
पुरीभृतकवीथ्यां स तस्थौ श्रेण्यां नृपस्ततः ॥ ७७६ ॥
किञ्चिद् विमृश्य च क्षिप्रं तृणान्यानीय भूपतिः ।
न्यसन् मूर्ध्नि सुतारोक्तः प्राहैषा भृतकस्थितिः ॥ ७७७ ॥
रोहिताश्वं धुनानं स्वं शिरः प्राह ततो नृपः ।
विधेहि मद्वचो वत्स ! तुभ्यं दास्यामि हस्तिनम् ॥७७८॥

दध्यौ सुतारा धिग् दैवं भवे भवशतानि यः ।
दत्ते यन्नः क्व सा लक्ष्मीः क्वैषा विक्रयवाच्यता ? ॥७७९॥
राजाऽप्यचिन्तयद् दत्ता न तथाऽकीर्तये मही ।
यथा ह्यकीर्तये पत्नी-पुत्रयोरिह विक्रयः ॥ ७८० ॥
विसृजामि सुतारां तत् सपुत्रां पितृवेश्मनि ।
यद्भाव्यं तदहं सोढा ध्यात्वेत्यूचे च तां नृपः ॥ ७८१ ॥
देवि ! याहि पितृकुलं पुत्रमादाय सम्प्रति ।
यथा तथाऽप्यहं स्वर्णं दास्यामि मुनये खलु ॥ ७८२ ॥
साक्षेपं प्राह देवी तु किन्तु स्यात् प्रलयेऽप्यदः ?।
विमुच्य त्वामहं यान्ती सत्यं जाताऽस्मि दुर्जना ॥७८३॥
सरसीव पयःपूर्णे सर्वमृद्धौ समं भवेत् ।
नैःस्व्ये स्व-परयोर्भेदः शुष्केऽस्मिन्नुच्च नीचवत् ॥७८४॥
किञ्च—
वरं मृत्युर्वरं भिक्षा वरं सेवाऽपि वैरिणाम् ।
दैवाद् विपदि जातायां स्वजनाऽभिगमो न तु ॥ ७८५ ॥
अपिच—
सा सती या ह्रिया भर्तुः संमुखे दिवसेऽनुगा ।
तनुच्छायेव धैर्येण प्रतीपेऽस्मिन् पुरो भवेत् ॥ ७८६ ॥
इतश्च ब्राह्मणः कोऽपि वीक्षमाण इतस्ततः ।
भृतिकां काञ्चिदायासीदुपभूपं स उन्मुखः ॥ ७८७ ॥
दृष्ट्वा च भूपमापादमस्तकं चाक्रिलक्षणम् ।
ऊचे कस्त्वं कथं देहं श्रीगेहं भृतकीयसि ? ॥ ७८८ ॥
शुचाऽऽत्तमौनं भूपालमालप्याऽगच्छदग्रतः ।
दृष्ट्वा सुतारां सास्रोऽभूदुच्चैर्दैवं निनिन्द च ॥ ७८९ ॥
रतेरपि शिरोरत्नमेतां निर्माय सुन्दरीम् ।
कथं नयसि रे ! दैव ! हन्त ! दास्यविडम्बनम् ॥७९०॥
:-स्निग्धमङ्गं सतीरूपं सुवर्णं साधुभाषितम् ।

धत्ते किमपि लावण्यमसंस्कृतमपीतरत् ॥ ७९१ ॥
सुताराया: पुर: पुण्यं रोहिताश्वं सुलक्षणम् ।
दर्भाङ्कशिरसं प्रेक्ष्य धिक् शास्त्रमिति सोऽब्रवीत् ॥७९२॥
शास्त्रेषु लक्षणानीह कथ्यन्ते यानि कानिचित् ।
सन्ति सर्वाणि तान्येषामवस्था पुनरीदृशी ॥ ७९३ ॥
नृप: स्वानुभवं प्राह मा मैवं त्वं द्विज ! ब्रवी: ।
शास्त्रं नहि मृषाभाषि किन्तु मे कर्मवैभवम् ॥ ७९४ ॥
पूर्वे जन्मनि यश्चक्रे ददतामदतां स्वयम् ।
श्रेयश्च कुर्वतामन्तराय: स इह भुज्यते ॥ ७९५ ॥
तद्वशादीदृशी चेत् तेऽवस्थैषा तच्छुचाऽत्र किम् ।
सर्वं विषहमाणो हि कर्मभिर्मुच्यते जन: ॥ ७९६ ॥
किमस्या मूल्यमित्युक्ते ब्राह्मणेन मुहुर्मुहु: ।
कथञ्चिद् रुद्धबाष्पोऽथ राजाऽऽख्यदुचितं हि यत् ॥७९७॥
तत: स्वर्णसहस्राणि पञ्चाऽस्या मूल्यमस्तु भो: ! ।
वदतीति द्विजे राजा लज्जयाऽधोमुखोऽभवत् ॥७९८ ॥
अनिषिद्धमनुज्ञातमिति विप्रे नृपाञ्चले ।
स्वर्णं बध्नाति राजाख्यद् मोक्षोऽस्या द्विगुणेन भो: !॥७९९॥
तत् प्रपद्य द्विज: प्राह सुतारामग्रतो भव ।
चलितायां सुतारायां रोहिताश्वोऽञ्चलेऽलगत् ॥ ८०० ॥
रुदतीदं सुताराऽऽह तिष्ठ त्वं पितुरन्तिके ।
आनेतुं मोदकं तुभ्यं वत्स ! यान्त्यस्मि सम्प्रति ॥८०१॥
अमुञ्चत्यञ्चले तस्मिन् मुहुर्मात्राऽपि बोधिते ।
भृतिके ! किं विलम्बोऽयमिति क्रुद्धो द्विजोऽवदत् ॥८०२॥
सुतारां सभयं यान्तीं यावद् मुञ्चति नार्भक: ।
तावत् करतलेनैतमाहत्याऽपातयद् द्विज: ॥ ८०३ ॥
सबाष्पं पुनरुत्थाय मातुर्वस्त्राञ्चलेऽलगत् ।
पुनर्द्विजेन भूमौ स पादेनाऽऽहत्य पातित: ॥८०४॥

राजा सास्रं ततो दध्यौ धिगापदमिमां मम।
इन्द्रस्याऽप्यङ्कलालयोऽयं पदा[1] विप्रेण हन्यते ॥८०५॥
ततः प्रोचे नृपो विप्र! न तिष्ठेद् मातरं विना।
शिशुः किमपि ते कर्म कर्ता क्रीणीह्यमुं ततः ॥ ८०६ ॥
नैतं मुधाऽपि गृह्णामीत्युच्चानं द्विजमब्रवीत्।
सुताराऽऽर्य! गृहाणैनं विधाय मय्यनुग्रहम् ॥ ८०७ ॥
विप्रोऽपि कृपया स्वर्णसहस्रं तस्य वेतने।
कृत्वा दत्त्वा च राज्ञे, तावादाय स्वगृहं ययौ ॥ ८०८ ॥
राजा दध्यौ न लप्स्येऽहं पुरे वासं ततो मुनिः।
यद्येति स्वर्णमेतस्मै दत्त्वा स्यामकुतोभयः ॥ ८०९ ॥
ततः कुलपतिः कुर्वन्नाज्ञामिव समाययौ।
कोपात् पराङ्मुखीभूय प्रोचे द्राग् देहि हेम मे ॥ ८१० ॥
गृहाण कियदप्येतादित्युक्ते भूभुजा मुनिः।
उवाच कुपितस्त्वैतद् ग्रहीष्येऽल्पं न काञ्चनम् ॥ ८११ ॥
मासोपरि गताः पञ्च दिना यदि तदाऽपि हि।
कियदेव ब्रुवाणस्त्वमदृश्यास्य! न लज्जसे ॥ ८१२ ॥
दध्यौ राजाऽधमर्णं धिगुत्तमर्णस्य दुर्गिरः।
यः सहन्नपि भूयोऽपि तं प्रीणयति चाटुभिः ॥ ८१३ ॥
ऊचे च भगवन्नैव काऽपि मे चित्तदुष्टता।
विक्रीय दयिता-पुत्रौ यत् प्राप्तं तत् समर्पये ॥ ८१४ ॥
ऊचेऽङ्गारमुखो मूर्ख! राजानं प्रार्थय द्रुतम्।
चन्द्रशेखरमत्रत्यं किं विक्रीतौ प्रिया-सुतौ? ॥ ८१५ ॥
राजाऽऽख्यत् किमिदं ब्रूषेऽनुचितं सत्त्वशालिनाम्।
शतशो हि पराभूतान्नाहं प्रत्यर्थिनोऽर्थये ॥८१६॥
प्रतिज्ञया भ्रष्ट! वाचाट! पुरो नः स्वं विकत्थसे।
इत्युक्ते मुनिना प्राह राजा मा स्म मुने! कुपः ॥ ८१७ ॥

---

1 पादेन।

चण्डालस्याऽपि कर्माऽहं कृत्वा दुष्करमप्यथ ।
दास्ये स्वर्णमिति क्ष्मापोक्तेऽभूद् रोमाञ्चितो मुनिः ॥८१८॥
ततः कौपीनवासोभृल्लघुपिङ्गकचोच्चयः ।
दृढयष्टिकरो वृद्धो निषादः कोऽपि चाऽगमत् ॥ ८१९ ॥
राजानं वीक्ष्य स प्रोचे रे ! त्वं कर्मकरोऽसि किम् ?
करिष्यसि च मे कर्म तत् श्रुत्वाऽचिन्तयद् नृपः ॥८२०॥
रविरस्तङ्गतो लोकः क्रायको नास्ति नो मुनिः ।
क्षमते तन्निषादस्यापि कुर्वे कर्म सम्प्रति ॥८२१॥
करिष्ये कर्म तेऽवश्यं राज्ञेत्युक्तेऽथ सोऽवदत् ।
किं किं कर्ताऽसि मे कर्म राजाऽऽहाऽऽदिशसीह यत्॥८२२॥
रक्षितव्यं श्मशानं च लातव्यं मृतकाम्बरम् ।
अर्धदग्धानि काष्ठानि ग्राह्याणि च चितिचयात् ॥ ८२३ ॥
यत् तत्रोत्पद्यते तस्यार्धं हि गृह्णाति भूपतिः ।
अन्यस्यार्धस्य भागौ द्वौ ममैकस्ते तु दास्यते ॥ ८२४ ॥
राजाऽऽदिशति यत् किञ्चित् तच्च कार्यं त्वया सदा ।
गङ्गासन्नश्मशानेशः कालदण्डाभिधोऽस्म्यहम् ॥ ८२५ ॥
इति श्रुत्वा नृपः स्माह तं त्वदाज्ञाकृदस्म्यहम् ।
यदत्र मां प्रति स्यात् तद् दातव्यं मुनये खलु ॥ ८२६ ॥
अपवार्य मुनिः प्रोचे नमस्ते सत्त्वशालिने ।
नमस्ते सत्यसन्धाय नमस्ते धैर्यसद्मने ॥ ८२७ ॥
कालदण्डोऽपि तद्वाचं प्रपन्नः साक्षिणं मुनिम् ।
कृत्वा सह नृपेणासौ श्मशानमगमद् निजम् ॥ ८२८ ॥
इतश्च पुर्यामेतस्यामकस्मादपि देहिनाम् ।
जीवितव्यं हरन् मृत्युरुपतस्थे खलो यथा ॥ ८२९ ॥
ततश्च परितः प्रोद्यदाक्रन्दध्वनिभिर्जितः ।

---

१ भागिन्यर्थे द्वितीया ।

निलीयाऽस्थादिव क्वापि नगरे मङ्गलध्वनिः ॥ ८३० ॥
मृत्योर्भीता जना रक्षां विदधत्यात्मनो यथा ।
तथा प्रेरितवन्मृत्युस्तान् गृह्णाति सहस्रशः ॥ ८३१ ॥
श्रुत्वाऽथ दुःसहलोकाऽऽक्रन्दं मरणजं पुरे ।
आह्वत् सत्यवसुं भूपो मन्त्रिणं चन्द्रशेखरः ॥८३२॥
राजादेशात् समायान्तं मन्त्रिणं कोऽपि पूरुषः ।
अन्तरा मिलितोऽनंसीत् कीरपञ्जरपाणिकः ॥८३३॥
कलहंस ! त्वया कीरो लब्धोऽयं क्वेति मन्त्रिणा ।
पृष्टे स प्राह चम्पाया वने देवैनमाप्नुवम् ? ॥८३४॥
चन्द्रशेखरभूपाय सदाप्रियविप्रश्रिते ।
सर्वशास्त्रनदीष्णत्वादिहाऽऽनैषं शुकोत्तमम् ॥८३५॥
इति तद्वचनं शृण्वंस्तेनैव सह मन्त्रिराट् ।
ययावुपनृपं नत्वा यथास्थानमुपाविशत् ॥ ८३६ ॥
सखेदं प्राह भूपालो मन्त्रिन् ! पश्य पुरीजनः ।
संकोचितायुर्दैवेन याति वातेन दीपवत् ॥ ८३७ ॥
न वयं दुर्नया नाऽपि श्लथधर्मः पुरीजनः ।
नृणामकालमृत्युश्च तदन्वेषय कारणम् ॥ ८३८ ॥
ततश्च कुट्टिनी काचित् पुत्रीमरणविह्वला ।
उरस्ताडं समागत्य साक्षेपं नृपमब्रवीत् ॥ ८३९ ॥
सदैवाऽन्यायकारी त्वं सदा पीडयसि प्रजाः ।
सदाऽपि पापनिष्ठोऽसि तेनाऽयं म्रियते जनः ॥ ८४० ॥
मत्पुत्री नामतोऽनङ्गसुन्दरी स्मरमञ्जरी ।
प्रक्रीड्य सुखशय्यायां सुप्ताऽकस्माद् मृताऽस्ति हा ! ॥८४१॥
अहो ! कर्कशता ह्यस्या अहो ! निर्लज्जता गिराम् ।
इति ध्यायन्नृपेणोक्ते मन्त्री किं क्रियतामिति ? ॥८४२॥
मन्त्र्याह स्वामिन्नत्रार्थे प्रगल्भन्ते हि मान्त्रिकाः ।
राजा प्राहाऽऽगतोऽस्तीहोज्जयिन्या मान्त्रिको महान्॥८४३।

तत आकार्यतामेष इत्युक्तो मन्त्रिणा नृपः ।
आजूहवत् तदैवैनं सोऽप्यागत्य समाविशत् ॥ ८४४ ॥
राजोचे मान्त्रिकं किं नः पुर्यां मारिविजृम्भितम् ? ।
सोऽप्याह नाटयन् ध्यानं राक्षसीललितं ह्यदः ॥ ८४५ ॥
वृद्धवेश्याऽऽह साऽऽश्वासं पुत्रिका मम मान्त्रिक ! ।
मृताधुनैव, स प्राह जीवयिष्यामि तां खलु ॥ ८४६ ॥
सा वस्त्राञ्चलमादाय भ्रमयित्वा शिरस्यधात् ।
मदाशिषः प्रभावेन चिरं त्वं जीव मान्त्रिक ! ॥ ८४७ ॥
ततो दासी समागत्य कुट्टिन्यै समचीकथत् ।
मातस्त्वं वर्धसे दिष्ट्या यतो जीवति मे स्वसा ॥ ८४८ ॥
ततः प्रत्ययतो राजा सादरं प्राह मान्त्रिकम् ।
आनेतुं प्रभवस्येनां राक्षसीमथ सोऽब्रवीत् ॥८४९ ॥
किमेवं कथ्यते देव ! मन्त्रेणाऽऽकृष्य वासुकिम् ।
पातालाद्, वासवं स्वर्गाद्, अब्धेर्लङ्कामिहानये ॥ ८५० ॥
यद्यस्ति कौतुकं तत् त्वं सामग्रीमुपढौकय ।
माष-सर्षप-लवणान्युत्खड्गानष्ट पूरुषान् ॥ ८५१ ॥
क्षणात् तथाकृते राज्ञा मान्त्रिको मण्डलं व्यधात् ।
तदन्तरुपविश्याथ किञ्चिद् ध्यानमनाटयत् ॥ ८५२ ॥
दिक्पालाह्वानमर्चानां मन्त्रानुच्चैरथोच्चरन् ।
मान्त्रिको राक्षसीं मन्त्रैराचकर्ष विहायसा ॥ ८५३ ॥
आयान्ती साऽनुगान् प्राह रे ! ग्रासः क्वचिदीक्ष्यताम् ।
येनाऽस्मि सुचिराद् बाढं क्षामकुक्षिर्बुभुक्षया ॥ ८५४ ॥
मण्डले मन्त्रशक्त्याथ सनिर्घातं पपात सा ।
सर्वेऽप्यबिभयुस्तस्या बिडाल्या इव मूषिकाः ॥ ८५५ ॥
सविस्मयं नृपः प्राह मन्त्रोत्कर्षावधिस्त्वयम् ।
य एनां राक्षसीं मन्त्रैरानैषीत् पश्यतां हि नः ॥ ८५६ ॥
मान्त्रिकः प्राह कर्तव्यमस्माभिः कृतमेव हि ।

उचितं यत् कुरु त्वं तन्निग्रहे त्वमसि प्रभुः ॥८५७॥
साक्षेपमादिशद् राजा मन्त्रिन् ! श्वपचमाह्वय ।
कलहंसं तमाह्वातुमादिक्षत् सचिवस्ततः ॥ ८५८ ॥
कलहंसोऽपि तत्रैव विमुच्य शुकपञ्जरम् ।
जगामाऽथ नृपोऽवादीद् मन्त्रिन् ! किं न्वस्ति पञ्जरे ? ८५९॥
मन्त्रिणांचे महाराज ! शुकराजोऽस्ति सर्ववित् ।
उपश्लोकय राजानमित्युक्तश्च शुकोऽपठत् ॥ ८६० ॥
सद्धर्म ! जय काशीन्द्र ! यस्याऽऽकृष्टा गुणैर्भृशम् ।
नयन्ति मार्गणा लक्ष्मीमेकेऽन्ये त्वानयन्ति ताम् ॥८६१॥
राज्ञा किं पठितोऽसीति पृष्टोऽसावाख्यदात्मनः ।
तर्क-लक्षण-साहित्य-गणित स्मृतिकौशलम् ॥ ८६२ ॥
मान्त्रिकः प्राह भो राजन् ! राक्षसी वोऽन्यचेतसाम् ।
प्रभविष्यति तत् कोऽयं विलम्बोऽस्या विनिग्रहे ? ॥८६३॥
ततश्चागात् सचण्डालो हरिश्चन्द्रसमन्वितः ।
हरिश्चन्द्रं शुको दृष्ट्वाऽभूदुत्फुल्लाक्षमानसः ॥ ८६४ ॥
प्राह च स्वस्ति ते नाथ ! भरतान्वयभूपते ! ।
हरिश्चन्द्र ! नमद्भूपमौलिरत्नाङ्कितक्रम ! ॥ ८६५ ॥
सरोषं प्राह राजाऽपि किमबद्धं प्रभाषसे ? ।
क्व साकेतपतिर्ह्यत्र कीर ! त्वं विह्वलोऽसि किम् ? ॥८६६॥
अथाह श्वपचं मन्त्री कुर्वऽनाच्छादनामिमाम् ।
तेनाऽपि हरिरादिष्टस्तां कृत्वाऽनवगुण्ठनाम् ॥ ८६७ ॥
प्रत्यभ्यज्ञासीत् किं नाम सुतारा देव्यसौ हहा ! ? ।
किमेतेन हि दैवेन हन्तव्या वयमेव हा !? ॥ ८६८ ॥
नास्मिन् कर्मणि देव्येषा करणं स्यात् कथञ्चन ।
किन्तु मे कोऽपि दुष्कर्मप्रेरितः कुरुते ह्रदः ॥८६९॥
प्रविश्याऽग्निं ततो देव्या दोषमुत्सारयाम्यहम् ।
अथवाऽरिसभायां मे नात्मा योग्यः प्रकाशितुम् ॥८७०॥

मुनिभ्यः पृथिवी दत्ता विक्रीता ससुना प्रिया ।
यत् करिष्यति दैवं तद् हरिश्चन्द्रः सहिष्यते ॥८७१॥
दृष्ट्वा तां बाह्यनेपथ्यैरदूषितवपुर्लताम् ।
मन्त्रिणे पृथिवीनाथः स्ववितर्कं न्यवेदयत् ॥८७२॥
चन्द्रकान्तं मुखं यस्याः सुवर्णं वपुरेव हि ।
पद्मरागौ करावेव किमस्या मण्डनान्तरैः ? ॥८७३॥
उपलक्ष्य शुकोऽथैनां ननाम नतमस्तकः ।
उशीनरसुते ! देवि ! सुतारे ! स्वास्ति ते सति ! ॥८७४॥
राज्ञोचे किं मुहुः कीर ! प्रलपस्येवमुच्चकैः ।
क्व साऽत्रोशीनरसुता किं न्वं कीरोऽसि मद्यपः ? ॥८७५॥
सावष्टम्भं शुकः प्राह हरिश्चन्द्रनृपो ह्ययम् ।
अस्य पत्नीयमित्यर्थोऽन्यथा स्यात् प्रलयेऽपि न ॥८७६॥
राज्ञा पृष्टो हरिर्ब्रूते हरिश्चन्द्रो नृपोऽस्मि न ।
किन्त्वहं श्वपचस्याऽस्य द्रव्यक्रीतोऽस्मि कर्मकृत् ॥ ८७७॥
राज्ञा पृष्टाऽङ्गना प्राह न सुताराऽस्मि राज्यहम् ।
किन्तु द्विजन्मनो वज्रहृदयाख्यस्य दासिका ॥ ८७८ ॥
अरे ! विप्लावयस्यस्मानित्युक्ते भूभुजा शुकः ।
प्राह किं स्वं हरिश्चन्द्रः प्रकाशयति ते पुरः ? ॥ ८७९ ॥
यतः—
सतो वाऽप्यसतो वाऽपि स्वान् स्वयं कीर्तयन् गुणान् ।
ब्रह्मापि हास्यतां याति किं पुनः प्राकृतो जनः ? ॥८८०॥
हरिं प्रत्याह राजा भो मा भैषीः सत्यमुच्यताम् ।
ननु यद्यप्यहं वैरी त्राताऽऽपदि तथाऽपि ते ॥ ८८१ ॥
हरिश्चन्द्रोऽब्रवीद् देव ! वचसा पक्षिणोऽस्य किम् ।
पुनरायस्यते स्वं, यद् दासोऽस्याऽस्मीत्यवोचत ? ॥८८२॥
रूप-लावण्य-धैर्यादिगुणविस्मितचेतसा ।
राज्ञा पृष्टा पुनर्नारी तदेवोत्तरमाख्यत ॥ ८८३ ॥

मन्त्री प्राहाऽऽकृतावस्यां राक्षसी कर्म किं भवेत् ? ।
ततो विचार्य कर्तव्यं स्वामिना यद्यथोचितम् ॥ ८८४ ॥
पृष्टश्च श्वपचो राज्ञा प्राहाऽयं मम कर्मकृत् ।
इति निश्चित्य राजाऽमुं रासभानयनेऽब्रवीत् ॥ ८८५ ॥
तेनाऽप्युक्तो हरिश्चन्द्रस्तत्र रासभमानयत् ।
शक्तोऽपीष्टोऽपि किं कुर्यान्नरः परवशः खलु ? ॥ ८८६ ॥
विचार्य कार्यमाचर्यमिति मन्त्रि शुकादिभिः ।
वार्यमाणोऽपि तां राजा खरमारोपयद् द्रुतम् ॥ ८८७ ॥
अहो ! अक्षत्रमक्षत्रमित्याक्रन्दन् शुकोऽब्रवीत् ।
राजन् ! विज्ञापनामेकां शृणु नीत्यनुयायिनीम् ॥ ८८८ ॥
राज्ञोचे ब्रूहि रे ! स्वैरं कीरः प्रोवाच यद्यसौ ।
सुतारा राक्षसी स्यात् तद् विशाम्यग्निं पुरस्तव ॥८८९॥
सदैन्यं प्राह सर्वोऽपि सभालोकः शुकस्य गीः ।
अस्तु प्रमाणमामेति राज्ञाऽप्यूचेऽनुरोधतः ॥ ८९० ॥
सोत्साहं प्राह कीरोऽपि मन्त्रिन् ! कारय तच्चिताम् ।
तथा तेन कृते कीरः स्नात्वाऽगच्छच्चितां प्रतिम् ॥ ८९१ ॥
ततो दिग्नायकानाह यद्येषा राक्षसान्वया ।
भवेद् नृपसुता तन्मां प्रदहत्वाशु हव्यवाट् ॥ ८९२ ॥
इत्युक्त्वा पश्यतामेव तेषां गतभयः शुकः ।
झम्पामदाच्च विध्यातोऽग्निश्चास्थादक्षतः शुकः ॥ ८९३ ॥
आश्चर्यमिदमाश्चर्यमित्यूचाना जनाः स्फुटम् ।
सतीयं राक्षसी न स्यादित्यदुः शुद्धितालिकाम् ॥ ८९४ ॥
मन्त्र्यूचे नाथ ! मन्येऽहं मान्त्रिकस्य विजृम्भितम्
तत् केनाऽप्यपदेशेन मान्त्रिकोऽयं विसृज्यताम् ॥ ८९५ ॥
तथेमां रासभादाशु समुत्तारय सम्प्रति ।
इत्युक्तो मन्त्रिणा भूपः सविस्मयमदोऽवदत् ॥ ८९६ ॥
किं कुर्मः किमु जानीमः कस्येदं कैतवं महत् ।

संदिग्धेऽर्थे किलैतस्मिन् विचारं कुर्महे च किम् ? ॥८९७॥
इति विकल्प-कोपाभ्यां संश्लिष्टो नृपतिः स्वयम् ।
व्यसृजद् मान्त्रिकं, कीरं पञ्जरेऽथ न्यधापयत् ॥ ८९८ ॥
उदतारयदेनां च रासभाद् वनिता ततः ।
इति सर्वं विसृज्याऽथ नृपः पल्यङ्कमासदत् ॥ ८९९ ॥
हरिश्चन्द्रोऽपि सूर्यास्ते चण्डालस्य नियोगतः ।
व्रजन् श्मशानं दध्यौ भोः ! कीदृग् दुर्दैवनाटकम् ?॥९००॥
देव्याः कर्मकरीत्वेन स्थिताया विप्रसद्मनि ।
राक्षसीवचनं कीरो दैवदत्तं न्यवर्तयत् ॥ ९०१ ॥
दैवमेव ततो मन्ये बलवन्नापरः पुनः
यत् तेन विहिता ह्यापत् तेनैव हि निवर्त्यते ॥ ९०२ ॥
तमस्यसूचीभेद्येऽपि प्रविशन्निर्भयो हरिः ।
ददर्श भीषणाकारं श्मशानं निशि सर्वतः ॥ ९०३॥
क्वचित् फेरण्डफेत्कारं[1] क्वचिद् राक्षसडम्बरम् ।
क्वचिद् बिभीषिकोद्द्योतं क्वचित् कौशिकवासितम् ॥९०४॥
क्वचित् प्रेतपरित्रस्तशबसंस्कारकूज्जनम् ।
क्वचिच्च डाकिनीमुच्यमानोत्किलकिलारवम् ॥ ९०५ ॥
क्वचित् कापालिकैर्गृह्यमाणसत्पुण्यमस्तकम् ।
सर्वतोऽपि च दुर्गन्धपूरपूरितनासिकम् ॥ ९०६ ॥
उपर्युपरि पर्यस्तमुण्डतुण्डस्खलद्गमम् ।
इतस्ततः श्मशानं स पश्यन् शुश्राव दुर्ध्वनिम् ॥ ९०७ ॥
अहो ! आर्तध्वनिः सैषा मृतपत्याः स्त्रियाः खलु ।
रुदतीं वारयाम्येनामित्यगात् तत्पुरो नृपः ॥ ९०८ ॥
उवाच च शुभे ! किं ते कारणं परिदेवने ? ।
साऽऽह पश्याग्रतो गत्वा न्यग्रोधे कारणं मम ॥ ९०९ ॥

---

१ फेरण्डा शृगाला. ।

हरिर्गत्वा ततोऽपश्यत् पुमांसं पूर्णलक्षणम् ।
ऊर्ध्वपादमधोवक्त्रं वटशाखानियन्त्रितम् ॥ ९१० ॥
सोढाऽहं पुरुषः कान्ते! त्वं पुनर्भाविनी कथम् ? ।
तत्प्रलापमिति श्रुत्वा दध्यौ राजाऽस्य सा प्रिया ॥९११॥
अस्योपकारं कुर्वे यद् दत्ता भूर्मुनये मया ।
मुनिकन्याधनोपाये विक्रीतौ दयिता-सुतौ ॥ ९१२ ॥
जीवितस्याऽस्य निर्विण्णः स्वयमेव पुराऽस्म्यहम् ।
कृत्वा परार्थं चेद् यामि तत् किं नाप्तं फलं मया ? ॥९१३॥
इति ध्यात्वा हरिः प्रोचे तमुद्बद्धं नरं मृदु ।
अहो ! कस्त्वं कथं चेयमवस्था ते सुदुःसहा ? ॥९१४॥
जानन्नस्मीति यद् वक्तुमुद्बद्धेन न शक्यते ।
परं त्वदाकृतिः पुण्या प्रयुङ्क्ते प्रष्टुमत्र माम् ॥ ९१५ ॥
तदाख्याहि न शक्तोऽस्मि द्रष्टुं ते दुस्सहां दशाम् ।
इति तत् प्रणयं दृष्ट्वा प्रोवाचोद्बद्धपूरुषः ॥ ९१६ ॥
नाहमेतां दशां दीनां कस्याऽपि हि निवेदये ।
तच्छ्रोता वेत्ति किं मत्तो यत् परित्राणमीहते ? ॥ ९१७ ॥
परन्त्वन्यभवस्नेहानुबन्धादथवोत्तमात् ।
उपकारपरत्वात् ते पृच्छते कथयामि भोः ! ॥ ९१८ ॥
महासेनोऽस्मि काशीन्द्रचन्द्रशेखरनन्दनः ।
विद्याधर्याऽत्र पल्यङ्कादानीतः प्रियया युतः ॥९१९॥
किमर्थमिति तेनोक्ते नरः प्राहाऽत्र सम्प्रति ।
मन्मांसेन महाहोमं सा करिष्यति खेचरी ॥९२०॥
क्व गता साऽधुना विद्याधरीति हरिणोदिते ।
स्नातुं गङ्गां नदीं व्योम्ना जगामेत्यवदद् नरः ॥९२१॥
ततो दध्यौ नृपो हर्षाद् गत्वरैश्चेन्ममाङ्गकैः ।
विद्याधर्या भवेत् सिद्धिर्जीवितं चाऽस्य चारु तत् ॥९२२॥

---

१ चतुर्थ्यन्तम् ।

तमुवाच हरिश्चन्द्रः प्रार्थये त्वां किमप्यहो ! ।
स प्राहैवंविधावस्थं किं त्वं प्रार्थयसेऽत्र माम् ? ॥ ९२३ ॥
राज्ञोचे यदलं दातुं प्रार्थ्यसे त्वं तदेव हि ।
स प्राह तर्हि याचस्व यदभीष्टं नरोत्तम ! ॥ ९२४ ॥
हरिः प्राह प्रयाहि त्वं स्वं राज्यं स्वीकुरु क्षणात् ।
यत् कार्यं तत् करिष्यामि विद्याधर्याः स्ववर्ष्मणा ॥९२५॥
पुरुषः प्राह किं ब्रूषे नात्मनीनमिदं खलु ।
अधमः कः स्वयं स्वार्थे परप्राणान् व्ययिष्यते ? ॥ ९२६ ॥
किञ्च स्वं मे यथाभीष्टं यथा मे मृत्युभीरुता ।
यथैषा दयिता मेऽस्ति तवाऽप्येवं तथाऽस्ति भोः ! ॥९२७॥
तद् याहि त्वमतः स्थानादधुनैष्यति खेचरी ।
तेनेत्युक्ते हरिश्चन्द्रः सदैन्यमिव तं जगौ ॥ ९२८ ॥
मा मा मे प्रार्थनां व्यर्थां कुरुष्व पुरुषोत्तम ! ।
स्वेनाऽप्यहं महाकष्टान्मर्तुकामोऽस्मि तद् यदि ॥ ९२९ ॥
त्वादृशस्योपकृत्याऽथ म्रिये स्यां सफलस्तदा ।
उपकारः परो धर्म इत्याख्यान्ति बहुश्रुताः ॥ ९३० ॥
न जातौ न जनिष्येते द्वाविमौ पुरुषौ भुवि ।
अर्थितो यः करोत्येव यश्च नाऽर्थयते परम् ॥ ९३१ ॥
इत्येवं बहुशोऽभ्यर्थ्य स्वयमुन्मोच्य बन्धनात् ।
याहीति प्रेषितस्तेन स जगाम प्रियायुतः ॥ ९३२ ॥
नूपुरक्वाण-कल्पद्रुपुष्पस्रक्सौरभादिभिः ।
ज्ञात्वा विद्याधरीं आरादायान्तीं नृपतिः क्षणात् ॥९३२॥
बद्ध्वा न्यग्रोधशाखायां स आत्मानमधोमुखम् ।
गतमृत्युभयं तस्थौ रोमाञ्चकवचाञ्चितः ॥ ९३४ ॥
ततो विद्याधरी व्योम्नोऽवततारार्द्रचीवरा ।
अग्निकुण्डत्रये वह्निमुज्ज्वलं समाचिस्करत् ॥ ९३५ ॥

१ आत्मने हितमात्मनीनम्, 'तत्र ।

सज्जीकृत्य च पूजादि विद्याधर्याह पार्श्वगान्।
चित्राङ्गद! समीक्षस्व किंलक्षणधरो नरः॥ ९३६ ॥
चित्राङ्गदोऽप्युपागत्य हरिश्चन्द्राङ्गलक्षणम्।,
वीक्ष्योचे देवि! मोदस्व येनाऽयं चक्रिलक्षणः॥९३७॥
हुत्वा कुण्डत्रये मांसमस्य प्रान्ताहुतीकृते।
शीर्षे विश्ववशीकारविद्याऽऽविर्भविता स्वयम्॥ ९३८ ॥
इत्यूचाना मुदोत्थायाऽऽनर्च सर्वाङ्गमप्यमुम्।
ऊचे च स्मर किञ्चित् त्वं देवं यत्राऽसि भक्तिमान्॥९३९॥
भवेश्च सात्त्विको येन, विद्या सिध्यति मेऽधुना।
यत् त्वन्मांसैर्हुतैः सा स्यात् प्रीता च वरदा च मे॥९४०॥
हरिश्चन्द्रस्ततोऽवादीद् ध्वस्तसंसारवैशसम्।
स्मरामि निष्ठितक्लेशं देवं नाभिसमुद्भवम्॥ ९४१ ॥
इदानीं मा विलम्बस्व होमः स्याद् बहुविघ्नभूः।
स्वेनैवोत्कृत्य[1] मांसं स्वं यच्छाम्येष गृहाण तत्॥९४२॥
सा प्राह सिद्धिर्मन्त्रस्य जातैवं त्वं यदुत्तमः।
मत्तोऽप्युत्साहवानीदृक् समवायो हि पुण्यतः॥९४३॥
ततः प्रवृत्ता कुण्डेषु ज्वलज्ज्वालाऽऽकुलेषु सा।
हरिश्चन्द्रार्पितं मांसं प्रक्षेप्तुं मन्त्रपूर्वकम्॥ ९४४ ॥
ऊचे च परितः खड्गहस्तान् विद्याधरोत्तमान्।
मा दत्ताऽत्र प्रवेशं भोः! श्वापदस्य नरस्य वा॥९४५॥
कियत्यपि कृते होमेऽभूदाविर्देवतामुखम्।
मध्यकुण्डात् ततो जातौ सोत्साहौ तावुभौ मुदा॥९४६॥
अथ गोमायुरटितं कुण्डानि परितोऽभवत्।
विषादार्त्ता ततो विद्याधर्यूचेऽयं निवर्त्यताम्॥९४७॥
यद्यस्य घोरफेत्कारैर्निद्रां त्यक्ष्यति तापसः।
होमध्वंसं तदागत्य स करिष्यति निश्चितम्॥९४८॥

---

१ आकृष्य, इत्यपि।

सर्वैः स नाश्यमानोऽपि प्रत्युताऽऽगात् समीपगः ।
जजागार ततश्चाऽऽरादाश्रमे तापसः क्षणात् ॥९४९॥
किञ्चित् क्रिञ्चित् ततो विद्यामुखं नीचैर्ममज्ज च ।
खेचर्युवाचाऽपर्याप्तहोमा हा ! हा ! हतास्म्यहम् ॥९५०॥
सावष्टम्भं हरिः प्राह मा विषीद गृहाण मे ।
छित्त्वा शिरोऽपि पर्यन्ताहुतिहोमं समापय ॥९५१॥
ऊचे विद्याधरी होमः क्रमात् स्यान्ननु नाऽक्रमात् ।
क्रमं च क्षमते नैष तापसः क्रोधमावहन् ॥९५२॥
अरे ! किमिदमारब्धमस्मदाश्रमभूमिषु ।
इत्याक्रोशन्[1] विवेशोच्चैरुद्धतस्तत्र तापसः ॥ ९५३ ॥
ममज्ज तन्मुखं देव्या मध्येकुण्डाग्नि सत्वरम् ।
भीता विद्याधरी साऽथ क्वाऽप्यगात् सपरिच्छदा ॥९५४॥
ततः क्रोधात् परिभ्राम्यन् तापसस्तत्र जग्मिवान् ।
यत्राऽऽस्ते कृत्तसर्वाङ्गः शाखाबद्धो हरिः श्वसन् ॥ ९५५ ॥
क्षणेन तापसः किञ्चिदुपलक्ष्याऽऽह विस्मयात् ।
अरे ! भवान् हरिश्चन्द्रः सोऽप्याख्यदोमिति स्फुटम् ॥९५६॥
तमाह तापसः क्रुद्धः स्वर्णं कुलपतेरदाः ? ।
नृपः प्राह दिनैः कैश्चित् प्रभो ! पूर्णीभविष्यति ॥९५७॥
उपलक्षयासि त्वं मे प्रोक्तस्तेन नृपोऽवदत् ।
कौटिल्यस्त्वं महीदाने साक्षी कुलपतेरासि ॥ ९५८ ॥
अरे ! कुलपतेः स्वर्णमनापूर्येति किं त्वया ।
आरब्धमित्यूचानेऽस्मिन् राड् ह्रियाऽधोमुखोऽभवत् ९५९॥
ततो मा भून्मुनेः स्वर्णहानिरस्मिन् मृते त्विति ।
औषध्या व्रणरोहिण्या स्वेनालिम्पत् स तद्वपुः ॥९६०॥
अभूच्च तत्क्षणादेवाऽऽरूढव्रणवपुर्नृपः ।
ययौ च तापसः स्थाने स्वे दध्यौ हरिरप्यथ ॥९६१॥

---

१ आक्रोशान् ददाबु- ।

नाऽपूर्णं मे भवत् किञ्चित् सर्वस्वं ददतो मुनेः।
विद्याधर्या न यत् सिद्धिः संजाता तद् दुनोति माम् ॥९६२॥
अरे! क्व त्वं गतोऽसीति प्राऽऽहूतः श्वपचेन सः?।
उपसृत्याह कर्तव्यं मम स्वामिन्! समादिश ॥ ९६३ ॥
स प्राहैष मृतः कोऽपि समायाति, ततो भवान्।
वस्त्रं गृह्णातु गत्वेति प्रेरितोऽगाद् नृपस्ततः ॥ ९६४ ॥
अशृणोच्छब्दमेकस्याः करुणार्त्तं सुतव्ययात्।
हा! पुत्र! क्व गतोऽसीति मूर्च्छन्त्याश्च मुहुः स्त्रियाः ॥९६५॥
अहो! दैवेन निर्मुक्तकरुणेन किलाऽङ्गजम्।
व्यापादयता निर्भाग्याऽभीष्टाऽपत्या त्वसौ हता ॥९६६॥
अहो! असारः संसारो मर्त्यवाचामगोचरः।
यदिष्टं देहिनां तत् तु ग्राहयत्येव यो यमात् ॥९६७॥
कथं चाऽहं ग्रहीष्यामि बालस्योर्ध्वात् किलाम्बरम्?।
इति मन्दपदः प्रोक्तः श्वपचेनाशु गच्छ रे! ॥ ९६८ ॥
सभयं परिचक्राम हरिश्चन्द्रः सुतं स्मरन्।
न शुध्येद् यदि देवी मे तदा वत्सो म्रियेत सः ॥ ९६९ ॥
ततः शुश्राव करुणं रुदतीं वनितामिति।
निर्भाग्यशेखराया मे मृतो वत्सो हताऽस्मि हा! ॥९७०॥
वत्सो मृत इमां वाचं प्रतिघ्नन् मङ्गलोक्तिभिः।
वामाक्षिस्पन्दनेनाऽथ बभूवाऽऽशङ्किमानसः ॥९७१॥
सर्वस्वं मुनये दत्तं विक्रीतौ दयिता-सुतौ।
चण्डालकर्मकर्ताऽहं किं मे वा भाव्यतः परम्? ॥९७२॥
इति चिन्तातुरो यावद् मार्गे याति नृपस्ततः।
चाण्डालपतिना प्रोक्तो व्याघुट्येति व्यजिज्ञपत् ॥९७३॥
आगतोऽस्ति मृतो बाल इति वस्त्राऽऽहृतौ त्रपा।
स प्राह का त्रपाऽस्माकमाचारोऽयं गृहाण तत् ॥९७४॥
निवृत्याऽथ हरिर्दध्यौ धिग् लोभं यद्वशाज्जनः।

वेत्ति कृत्यमकृत्यं वा नैव दैवहतो हहा ! ॥ ९७५ ॥
यदादिशति मे स्वामी तत् कर्तव्यं मया खलु ।
विचारो युज्यते नैव स्वाम्यादिष्टेऽनुजीविनाम् ॥ ९७६ ॥
स गच्छन्निति शुश्राव स्त्रीविलापं तमुच्चकैः ।
हा ! हा ! पुत्र ! त्वमेको मे तन्मे मृत्युस्त्वया सह ॥९७७॥
त्वं ममैवाऽसि कुपितो रे ! दैव ! यत् पतिर्मम ।
बभूव कर्मकृन्नीचगेहेऽहमपि तादृशी ॥ ९७८ ॥
परमस्य स्वपुत्रस्य भरतान्वयशालिनः ।
आलम्बने न जीवन्त्या भविता काऽद्य मे गतिः ? ॥९७९॥
हरिश्चन्द्रोऽपि विज्ञाय सुतारां त्वरितो व्रजन् ।
मुञ्चन्नश्रूण्यथोऽवादीद् निन्दन्नात्मानमात्मना ॥ ९८० ॥
निर्भाग्यशेखरे ! देवि ! वज्रघातः क एष नौ ? ।
वनिता वीक्ष्य भर्तारं तारं तारं रुरोद सा ॥ ९८१ ॥
हरिश्चन्द्रोऽप्यरोदीच्च धैर्यं कस्य सुतव्यये ? ।
रोहिताश्वं हरिर्मोहादाश्लिष्यत् किल पूर्ववत् ॥ ९८२ ॥
सुतारां प्राह देवि ! त्वं किं रोदिषि तथा कथम् ? ।
वत्सो मां भाषते नैव भवत्या रोषितः किमु ? ॥ ९८३ ॥
किं त्वया मोदको नास्मै दत्तः, किं परिधापितः ? ।
नाऽद्य रत्नाङ्कितं हारं किं हस्ती नाऽर्पितो मया ? ॥९८४॥
क्षमस्व वत्सलो हि त्वं स्वेच्छया यत् तु रोचते ।
इति स्वं सान्त्वयन् पुत्रं देव्याऽसौ परिदेवितः ॥९८५॥
किं न पश्यसि मूढ ! त्वं गतासुं तनयं निजम् ।
गतासुश्च कथं पश्येदाश्लिष्येन्निगदेदथ ? ॥ ९८६ ॥
किमारब्धं त्वया सार्धं नार्या किं नैषि सत्वरम् ? ।
इत्युक्तः श्वपचेनाऽसौ भयाच्चैतन्यमासदत् ॥ ९८७ ॥
अज्ञासीच्च मृतं पुत्रं चेष्टयाऽथाश्रुलोचनः ।

१ आवयोः ।

सुतारा पुत्रवृत्तान्तमप्राक्षीत् साऽप्यचीकथत् ॥ ९८८ ।
अद्याऽयं प्रातरेवाऽगाः समित्-पुष्पकृते वने ।
विप्रेण प्रेषितो मन्दभाग्यो दष्टोऽहिना प्रिय ! ॥९८९॥
विनाऽऽत्मीयान्न कोऽप्यस्य विषस्योत्तारणं व्यधात् ।
विना बन्धुं जगच्छून्यं जीवो धर्मं विना यथा ॥ ९९० ॥
हरिश्चन्द्रस्ततो दध्यौ धिग् मां व्यसनपातिनम् ।
एकत्र श्वपचः क्रुद्धोऽन्यत्र पुत्रव्ययक्लमः ॥ ९९१ ॥
प्रवासोऽरिपुरीवासो नीचदास्यं सुतव्ययम् ।
हरिश्चन्द्रोऽखिलं सोढा देवी त्वेकसुता हता ॥ ९९२ ॥
किञ्च मे वेक्ष्यतो हस्तौ पुत्रवस्त्राहृतौ कथम् ? ।
स्वाम्यादेशमकर्तुं च नैवौजस्वि मनो मम ॥ ९९३ ॥
अथवा पुत्रमृत्यौ को मे विचारो यदस्म्यहम् ।
श्वपचाधीनदेहस्तत् स यद् ब्रूते करोमि तत् ॥ ९९४ ॥
अन्यथा स्यां प्रतिज्ञातभ्रष्टः सत्त्वकलङ्कितः ।
सत्त्वैकतानवृत्तीनां नाऽपत्याद्यानुरागिता ॥ ९९५ ॥
व्यापन्नस्य सुतस्याऽस्य न गृह्णाम्यम्बरं यदि ।
निर्वाहयामि नो सन्धां लज्जते तरणिस्तदा ॥ ९९६ ॥
इति सत्त्वानिलोद्धूताऽपत्यबन्धः स सात्त्विकः ।
भूत्वा पराङ्मुखोऽशक्तो याचितुं स्फुटया गिरा ॥ ९९७ ॥
अर्पयाऽऽच्छादनमिति संज्ञया प्रतिपादयन् ।
हस्तं प्रसारयामास हरिश्चन्द्रः प्रियां प्रति ॥ ९९८ ॥
सुताराऽपि च तदभिप्रायं स्फुटमजानती ।
उच्चिक्षेप करे दातुं रोहिताश्वं मुहुर्मुहुः ॥ ९९९ ॥
अगृह्णति हरिश्चन्द्रे पुत्रं साऽऽह ब्रवीषि किम् ? ।
न जानामि तवैतां हि संज्ञां ब्रूहि ततः स्फुटम् ॥१०००॥
धैर्यसंदंश[1]काकृष्टवचनः सात्त्विकोऽवदत् ।

---

१ आकर्षणसाधनम् ।

देवि ! तिष्ठतु वत्सोऽयं वत्साऽऽच्छादनमर्पय ॥ १००१ ॥
यावदेवं हरिश्चन्द्रो वदत्यात्मप्रियां प्रति ।
तावत् तस्य शिरस्याशु पुष्पवृष्टिरभूद् दिवः ॥ १००२ ॥
अहो ! सत्त्वमहो ! धैर्य हरिश्चन्द्रमहीपतेः ।
एवमुद्घोषणापूर्वं दुन्दुभिध्वानिरत्यभूत् ॥ १००३ ॥
राजाऽप्यपश्यदात्मानमयोध्यायां निजौकसि ।
अलङ्कृतमहासिंहासनं स्वसदसि स्थितम् ॥ १००४ ॥
रोहिताश्वमपश्यच्च क्रोडे क्रीडन्तमात्मनः ।
अश्रान्तकान्तिरत्नाङ्कहारस्फारश्रियं मुदा ॥ १००५ ॥
वसुभूतिं महामात्यं कुन्तलाख्यं च सेवकम् ।
द्वावप्येतौ स्वस्वरूपौ पुरोऽद्राक्षीत् कृताञ्जली ॥ १००६ ॥
यवनिकान्तरे चैव द्रष्टुं नाटकमागताम् ।
सुतारां भाषमाणां च सख्या शुश्राव भूपतिः ॥ १००७॥
पुरतश्च सुसङ्गीतरसनिर्मग्नचेतसाम् ।
नृपा-ऽमात्यप्रभृतीनामपश्यत् संसदं[1] निजाम् ॥ १००८ ॥
प्रतिमन्दिरमैक्षिष्ट क्रियमाणं च नागरैः ।
नृत्यत्पुरन्ध्रिविश्राण्यमानदानमहोत्सवम् ॥ १००९ ॥
प्रतीहारमुखप्राप्तान् [2]विजिज्ञपयिषून् जनान् ।
दूरतो नमतः प्रेक्ष्य किमित्येतदचिन्तयत् ॥ १०१० ॥
किं नु स्वप्नो मया दृष्टः किं वा मे मनसो भ्रमः ।
किं वा कस्याऽपि देवस्य चित्रमेतद् विजृम्भितम् ॥१०११॥
ततश्च प्रकटीभूय चन्द्रचूड-मणिप्रभौ ।
पुरः स्थित्वा सुरौ राज्ञः सहर्षमिदमूचतुः ॥ १०१२ ॥
त्रिशङ्कुनन्दन ! श्रीमदिक्ष्वाकुकुलमण्डन ! ।
भरतान्वयभूपाल ! हरिश्चन्द्र ! चिरं जय ॥ १०१३ ॥
धन्यः सुग्राह्यनामा त्वं यस्य वास्तोष्पतिः[3] स्वयम् ।

---

१ सम्पदम्, एवमपि । २ विज्ञपयितुमिच्छून् । ३ इन्द्रः ।

सत्त्वं स्तवीति मूर्धानं धुनानो द्युसदां पुरः ॥१०१४॥
यादृशः कथितो राजन्नचाल्यो द्युसदामपि ।
शक्रेण, तादृगेवाऽसि सात्त्विकेषु शिरोमणिः ॥ १०१५ ॥
माहात्म्येन तवैवेदं पुना राज्यं तथैव हि ।
अढौकत निजस्फीत्या निर्जिताऽमर-दानवम् ॥ १०१६ ॥
वसुभूतिः स एवाऽयं मन्त्री मित्रं च ते नृप ! ।
शुकरूपः प्रविश्याऽग्नौ यो देव्याः शुद्धिमातनोत् ॥१०१७॥
कुन्तलश्चैष ते सेवां करोति रचिताञ्जलिः ।
जम्बूकीभूय ते होमसङ्कटे यस्तदाऽरटत् ॥ १०१८ ॥
शूकरोदन्तमारभ्य यावदद्य, नरेन्द्र ! यत् ।
अनुभूतं त्वया विद्धि तदस्मत्कूटनाटकम् ॥ १०१९ ॥
एतत् सर्वं भवत्सत्त्वपरीक्षारसिकैः खलु ।
अस्माभिर्विहितं तत् ते क्षन्तव्यं महतां गुरो ! ॥१०२०॥
चित्रं परोपकाराय मर्त्यत्वेऽपि भवादृशाम् ।
अवतारः परोत्तप्त्यै स्वर्गेऽप्यस्मादृशां पुनः ॥ १०२१ ॥
किं वा कोऽपि गुणोऽस्माकमपि ते सत्त्वदीपनात् ।
सुवर्णस्य कथं रेखा कषपट्टं विना भवेत् ? ॥ १०२२ ॥
तव सत्त्वेन सत्येन हरिश्चन्द्र ! महानृप ! ।
जलदो वर्षति स्फीतशस्या भूर्मुदितो जनः ॥ १०२३ ॥
स्वस्यैव सुकृतेनेदं राज्यमाप्तं पुनस्त्वया ।
अस्मत्तः परितुष्टेभ्यः किञ्चिद् याचस्व साम्प्रतम् ॥१०२४॥
लज्जितस्त्रिदशोपज्ञवर्णनाकर्णनाद् नृपः ।
उवाच न कदाऽप्यस्मि शिक्षितो याचितुं परम् ॥ १०२५॥
किञ्च सत्त्वं न मुक्तं स्वं सूर्यवंशो न लज्जितः ।
सत्यवाचः कृतश्चेन्द्रः किमतः परमर्थये ? ॥ १०२६ ॥
पुनरप्यूचतुर्देवौ नृप ! तन्वन् यशः सितम् ।

१ देवानाम् । २ उदन्तो वृत्तान्तः । ३ प्राप्तम् ।

दिव्यशक्तिः श्रियां पात्रं सदाऽऽनन्दमयो भव ॥ १०२७॥
प्रभावमिति तौ तत्र न्यस्य स्वास्पदमीयतुः ।
इन्द्रोऽपि परमां प्रीतिमवाप ससुरासुरः ॥ १०२८ ॥
राजाऽथ श्रीहरिश्चन्द्रस्तत्प्रभृति विशेषतः ।
दयालुर्जगदानन्दस्त्यक्तव्यसनकौतुकः ॥ १०२९ ॥
शक्रावतारतीर्थस्य सर्वज्ञस्य कृपानिधेः ।
श्रीवृषध्वजदेवस्य पर्युपास्तिपरायणः ॥१०३०॥
दिव्यशक्तिप्रभावेण गगनक्रीडनादिकम् ।
महर्द्धि दर्शयन् लोके पालयामास काश्यपीम् ॥ १०३१ ॥
( त्रिभिर्विशेषकम् )

विनयादिगुणा लोकेऽप्येवमद्भुतसिद्धये ।
लोकोत्तरे नु ते धर्मे न कथं मोक्षसिद्धये ? ॥ १०३२ ॥
जिनधर्मरथारूढैरतो मुक्तिं यियासुभिः[1] ।
विनयादिगुणा योज्याश्चत्वारोऽपि हया इव ॥ १०३३ ॥
गुरुणा लौकिकैरेवं कृतो धर्मगुणास्तिकः ।
कुबेरः श्रद्धया नत्वाऽपृच्छल्लोकोत्तरान् गुणान् ॥ १०३४ ॥
गुरुरप्याह भो भद्र ! त एव विनयादयः ।
स्युः सर्वज्ञोक्तमार्गेण नीता लोकोत्तरा गुणाः ॥ १०३५ ॥
तथाहि—

विनयः सुव्रताचारे गुरौ सद्धर्मदेशके ।
शुश्रुषा प्रणतिश्चाज्ञामाननं मृदुभाषणम् ॥ १०३६ ॥
विवेको देवपूजादौ मनो-वाक्-कायशोधनम् ।
सुसङ्गस्त्वेष यो धर्ममित्रेण सह सङ्गमः ॥ १०३७ ॥
सुसत्त्वं च जिनाख्याततत्त्वश्रद्धाननिश्चयः ।
लोकोत्तरगुणैरेवं भवेल्लोकोत्तरं सुखम् ॥ १०३८ ॥

---
१ यातुमिच्छुभि ।

कुबेरः पुनरप्राक्षील्लोकशास्त्रोन्मुखः कियत् ।
मत वो नियमाद् धर्मः स च शास्त्रेण योगिनाम् ? ॥१०३९॥
तथा च—
अत्याहारस्तथायासः प्रजल्पो नियमग्रहः ।
लोकसङ्गश्च दैन्यं च षड्भिर्योगी विवर्जितः ॥१०४०॥
मुनिरप्याख्यदस्तीदं किं तु बाल इवाऽङ्गुलिम् ।
धृत्वाऽऽदौ नियमं जीवोऽनालम्बोऽपि क्रमाचरेत् ॥१०४१॥
किञ्च ग्रन्थान्तरेऽप्युच्यते—
भूषितोऽपि चरेद् धर्मं यत्र तत्राश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं तत्र कारणम् ॥ १०४२ ॥
क्रिययैव भवेद् योगी न योगोच्चारमात्रतः ।
कतकस्याह्वयेनैव न हि वारि प्रसीदति ॥१०४३॥
हृष्टः प्राह कुबेरोऽपि प्रभो ! सुव्रतधारणात् ।
इत्थं धर्मोपदेशाच्च गुरुस्तावत् त्वमेव मे ॥ १०४४ ॥
धर्ममित्रं कुमारोऽयं कथ्यतां किन्तु मेऽधुना ।
को देवः काऽस्य पूजा च किं तत्त्वं किं च तत्फलम् ? १०४५
गुरुः प्राह जिनो देवो रागद्वेषविवर्जितः ।
हतमोहमहामल्लः केवलज्ञान-दर्शनः ॥ १०४६ ॥
सुरासुरेन्द्रसंपूज्यः सद्भूतार्थप्रकाशकः ।
कृत्स्नकर्मक्षयं कृत्वा संप्राप्तः परमं पदम् ॥ १०४७ ॥
स सम्यग् हृदये धार्यो वश्यमन्त्रः शिवश्रियः ।
पूजा च विविधा तस्य द्रव्य-भावविभेदतः ॥१०४८॥
द्रव्यपूजा जिनेन्द्रस्य गन्ध-पुष्पा-ऽक्षतादिभिः ।
तथा तद्बिम्बचैत्यादौ शुद्धद्रव्यनियोजनम् ॥१०४९॥
भावपूजा तु सर्वज्ञैर्व्रतरूपा प्रकीर्तिता ।
देश सर्वविरत्याख्या भेदतस्तत् पुनर्द्विधा ॥ १०५० ॥

---

१ जलशुद्धिकृच्चूर्णम् ।

तत्र देशव्रतं जीवहिंसादीनां प्रदेशतः ।
निषेधेन सर्वथा तु स्यात् सर्वविरतिव्रतम् ॥ १०५१ ॥
जिनपूजा द्विधाऽपीत्थं तदाज्ञाराधनात् सताम् ।
फलदा स्याद् निजोत्कर्ष-परदोषपरित्यजाम् ॥ १०५२ ॥
जीवाऽजीवौ तथा पुण्यं पापमाश्रव-संवरौ ।
बन्धो विनिर्जरा-मोक्षौ नव तत्त्वानि तन्मते ॥ १०५३ ॥
तत्र जीवः कर्मकर्ता भोक्ता कर्मफलस्य च ।
चैतन्यलक्षणस्तस्मादजीवो वैपरीत्यभाक् ॥ १०५४ ॥
सत्कर्मपुद्गलाः पुण्यं, पापं त्वेतद्विपर्ययः ।
आश्रवश्चित्त वाक्-कायव्यापारा बन्धहेतवः ॥ १०५५ ॥
संवरस्तन्निरोधस्तु तथा जीवस्य कर्मणा ।
यः संबन्धस्तयोरैक्यकृत् स बन्धः प्रकीर्तितः ॥ १०५६ ॥
बद्धस्य कर्मणः शाटो यस्तु सा निर्जरा मता ।
आत्यन्तिको वियोगस्तु देहादेर्मोक्ष उच्यते ॥ १०५७ ॥
एतानि नव तत्त्वानि यः श्रद्धत्ते स्थिराशयः ।
सम्यक्त्वज्ञानयोगेन तस्य चारित्रयोग्यता ॥ १०५८ ॥
तथा भव्यत्वपाकेन यस्यैतत् त्रितयं भवेत् ।
सम्यग्ज्ञान-क्रियायोगाज्जायते मोक्षभाजनम् ॥१०५९॥
फलं च मोक्षस्त्रैलोक्योपर्यवस्थानलक्षणः ।
यत्र जीवस्य न जरा न मृत्युर्न पुनश्च्यवः ॥ १०६० ॥
मनो-वचन कायानामभावान्नाऽऽधिसंभवः ।
न विवादो न च व्याधिर्न चाऽऽबाधा परस्परम् ॥१०६१॥
गतपङ्कं यथा तुम्बं जले यात्युपरि स्वयम् ।
क्षीणकर्ममलो जीवस्तथा याति शिवालयम् ॥ १०६२ ॥
तत्राऽसौ परमानन्दरूपं नष्टाऽखिलक्रियः ।
स्वस्वरूपगतं शुद्धं शाश्वतं सुखमश्नुते ॥ १०६३ ॥

१ विशरणम् । २ नाश. ।

जीवस्य राजपुरुषैरिव रुद्धस्य कर्मभिः ।
तस्थुषो भवसौख्येऽपि विना मुक्तिं कुतः सुखम् ? ॥१०६४॥
इत्याराध्य वीतरागं भव्या आराधका मताः ।
आराधना तु तस्याऽऽज्ञा तत्फलं त्वपुनर्भवः ॥ १०६५ ॥
चिन्त्यं न चैवं यन्नैव वीतरागः प्रसीदति ।
प्रसादाभावतश्चाऽस्मात् कथं प्राप्यं फलं बुधैः ? ॥१०६६॥
ईदृग् माहात्म्यमेवाऽस्य येनाऽऽराधकसिद्धये ।
अचेतनोऽपि किं नाऽत्र दत्ते चिन्तामणिः फलम् ? १०६७
इति तत्त्वोपदेशाख्याद् भिन्नजाड्यः सदौषधात् ।
लब्धाऽन्तरङ्गचैतन्यः प्रोन्मीलितहृदीक्षणः ॥ १०६८ ॥
गृहिधर्मं गुरुश्रद्धः कुबेरो गुरुसन्निधौ ।
गतरोग इवोत्पन्नक्षुधयाऽऽहारमग्रहीत् ॥ १०६९ ॥
( युग्मम् )

अथ नत्वा मुनिं धाम सकुबेरः कुमारराट् ।
ययौ गुरुगुणग्रामहंसकेलिसरोमनाः ॥ १०७० ॥
योग्यं ज्ञात्वाऽन्यदा तस्मै वज्रवीर्यनराधिपः ।
राज्यं दत्त्वा स्वयं पत्न्या सह व्रतमुपाददे ॥ १०७१ ॥
नृपः श्री वज्रनाभोऽपि महीं न्यायेन पालयन् ।
दिग्भ्यः श्रियः समानीय ताः कीर्त्या पर्यपूरयत् ॥१०७२॥
अभूच्च तनयस्तस्य विजयाकुक्षिसंभवः ।
गुणैरञ्चितभूपालचक्रश्चक्रायुधाभिधः ॥ १०७३ ॥
अन्यदा सुस्थिते राज्ञः पयसीवाऽमले हृदि ।
उन्मिमील विचारः प्राग् यः श्रुतो भवगोचरः ॥ १०७४ ॥
दध्यौ च स तटे स्थित्वा धिया भवमहोदधेः ।
अहो ! भवसमुद्रस्य वीचिभिः क्षिप्यते न कः ? ॥१०७५॥
उत्पद्यन्ते विपद्यन्ते सर्ववस्तूनि वीचिवत् ।
तत्र किं गृह्यते किं च मुच्यते किं च गण्यते ? ॥ १०७६ ॥

अतः स्वभावेनैवाऽस्मिन्नुच्चैः कलकलायितम् ।
कुर्वाणे यदि कोऽपि स्वं बहिः कर्षत्यसौ कृती ॥ १०७७॥
तच्च चारित्रयानस्य विनाऽऽधारं न जायते ।
श्रयणीयं तदेवाऽतः किं समुद्रावगाहने ? ॥ १०७८ ॥
इति प्रबोधवैराग्याज्जिघृक्षुर्नृपतिर्व्रतम् ।
पुत्रं मित्रमिवाऽऽकार्य स्वाभिप्रायमचीकथत् ॥ १०७९ ॥
चक्रायुधोऽब्रवीत् तात ! किं भाग्यमियदेव मे ।
त्वत्पदैकाश्रयं यद् मां मैवं परिजिहीर्षसि ? ॥ १०८० ॥
कः प्रस्तावोऽधुना, युक्तं व्रतं वयसि पश्चिमे[1] ।
युज्यते त्वधुना लोकपालनं लालनं मम ॥ १०८१ ॥
ततः प्राह नृपो वत्स ! मैवं वद सदाशय ! ।
प्रथमं पश्चिमं वाऽपि वयः को वेत्ति बालक ! ॥१०८२॥
किञ्च,
नागवल्लीदले पक्वे रसो रङ्गश्च चर्विते ।
यादृशस्तादृशो धर्मः पुंसोऽतिजरसो[2] व्रते ॥ १०८३ ॥
साधिता भूः कृतं राज्यं दत्तं दानं यशोऽर्जितम् ।
किं कृतैहिककृत्यस्य पुनश्चर्वितचर्वणैः ? ॥१०८४॥
सुवर्णनिगडप्रायादतो मे राज्यबन्धनात् ।
निर्यातो[3] मोक्षसौख्याय त्वं मा भूरन्तरायकृत् ॥ १०८५ ॥
त्यक्त्वा कथंचनोपाधिं स्वभावस्रुत्वमीयुषः ।
मा मनो मर्कटस्याऽस्य पुनः पद्यां प्रदर्शय ॥ १०८६ ॥
पूर्वक्रमागतं राज्यभारं धेहि धुराक्षम ! ।
यथाऽहं तव साहाय्याद् भवेयं स्वार्थसाधकः ॥ १०८७ ॥
इति श्रुत्वा मौनपरं राज्ये न्यस्य सुतं नृपः ।
उपादत्त परिव्रज्यां क्षेमङ्करजिनान्तिके ॥ १०८८ ॥
बहिरङ्गाद् विधेरन्तरङ्गः सबल इत्यसौ ।

---

१ वार्धक्ये । २ जरामतिक्रान्तस्य । ३ पञ्चम्यन्तम् ।

बाह्यं राज्यं परित्यज्याऽन्तरङ्गं धर्ममाददे ॥ १०८९ ॥
यत्राऽस्ति विरतिर्भार्या विवेको मन्त्रिपुङ्गवः ।
प्रियः कुमारः संवेगः प्रतीहारश्च संवरः ॥१०९०॥
आर्जवं पट्टहस्ती च विनयस्तु तुरङ्गमः ।
रथः शीलाङ्गनामाऽत्र भृत्याः शम-दमादयः ॥ १०९१ ॥
सम्यक्त्वं सौधं सद्धर्म-शुक्लध्याने सुचामरे ।
सिंहासनं च संतोषो यशश्छत्रं तु विस्तृतम् ॥ १०९२ ॥
(कलापकम्)

द्वादशाङ्ग्यामथाऽधीती तपःक्षपितविग्रहः ।
स गुर्वनुज्ञयैकाकिविहारप्रतिमां दधौ ॥ १०९३ ॥
तपस्तेजोभवव्योमयानलब्धिवशादसौ ।
विहरन्नन्यतोऽन्येद्युः सुकच्छविजयं ययौ ॥ १०९४ ॥
अहिजीवोऽपि नरकादुद्वृत्त्याऽभूद् भवं भ्रमन् ।
ज्वलनाद्रौ सुकच्छस्थे भिल्लो नाम्ना कुरङ्गकः ॥१०९५॥
पापपिण्ड इवाऽध्यक्षः करालाक्षो मषीनिभः ।
आस्तां हस्तेन दृष्ट्याऽपि संहरन् वर्ततेऽङ्गिनः ॥१०९६॥
वज्रनाभमुनीन्द्रोऽपि तस्मिन्नेव विधेः वशात् ।
ज्वलनाद्रौ गतो रात्रौ कायोत्सर्गेण तस्थिवान् ॥१०९७॥
ध्वान्तेन मलिनेनैकाकारे जगति निर्मिते ।
सर्वतः प्रसृतं तस्य स्पर्धयेव निशाचरैः ॥ १०९८ ॥
फेत्कारैर्द्वीपिनां घूकघूत्कारैश्च शिवारवैः ।
यक्ष-रक्षोऽट्टहासैश्च तदाऽऽसीदति भीषणम् ॥ १०९९ ॥
सुतरां हृदि देदीप्यमानध्यानप्रदीपकः ।
धर्मजागरणात् तस्थौ स मुनिर्निर्भयः स्थिरम् ॥११००॥
पुनः प्रातस्ततोऽचालीत् स यावत् तावदग्रतः ।
कुरङ्गकेण पापर्द्धिव्यग्रेण ददृशे मुनिः ॥११०१॥
प्राच्यद्वेषवशस्फूर्जत्कोपः पापः शरेण तम् ।

अनिष्टोऽयमिति ध्यात्वा हत्वा भिल्लो न्यपातयत् ॥११०२॥
गाढप्रहारेणाऽऽर्तोऽपि नार्तध्यायी मनागपि ।
दध्यौ सहस्व रे ! जीव ! तवैवेदं पुराकृतम् ॥११०३॥
यतः—
उपेक्ष्य लोष्टक्षेप्तारं लोष्टं दशति मण्डलः ।
सिंहस्तु शरमप्रेक्ष्य शरक्षेप्तारमीक्षते ॥११०४॥
किञ्च,
स्मृत्वा पञ्चनमस्कारं सिद्धानां पुरतः स्फुटम् ।
सम्यगालोचनां कृत्वा विहिताऽनशनः स्वयम् ॥११०५॥
मध्यग्रैवेयके मृत्वा ललिताङ्गाऽभिधः सुरः ।
बभूव निर्मलानन्दसागरे मग्नमानसः ॥११०६॥
(युग्मम्)
हृष्टो धनुर्धरंमन्यः कालेन कियताऽप्यसौ ।
कुरङ्गकः कुरङ्गात्मा मृत्वाऽगात् सप्तमावनौ ॥११०७॥
विश्वश्रीशिरसो विभूषणविधौ दिव्येन्द्रनीलप्रभः ।
शश्वत् शस्यपरम्पराप्रसरणे निर्मोघमेघोपमः ॥११०८॥
संसाराध्वनि खिन्नभव्यमनसां विश्रामसान्द्रद्रुमः ।
पार्श्वो भाव सुखं तनोतु भगवांस्तापापहारी जिनः ॥११०९॥

इति श्रीकालिकाचार्यसन्तानीय-श्रीभावदेवसूरिविरचिते श्रीपार्श्वनाथ-चरित्रे महाकाव्येऽष्टसर्गे भावाङ्के श्रीपार्श्वनाथषष्ठ-सप्तमभवव्या-वर्णनो नाम तृतीयः सर्गः ॥ ३ ॥



१ श्वा ।

अर्हम्

# अथ चतुर्थः सर्गः ।

अथाऽस्ति जम्बूद्वीपेऽस्मिन् प्राग्विदेहस्य भूषणम् ।
पुरं सुरपुरं नाम येन स्वर्गायते मही ॥ १ ॥
यस्मिन् कुमणिषु त्रासस्तापः स्वर्णे, ग्रहो गुणे ।
छत्रेषु दण्डः प्रायेण, वास्तव्ये न पुनर्जने ॥२॥
यत्र स्फटिकहर्म्येषु प्रतिबिम्बच्छलान्निशि ।
रम्यत्वादिव लीयन्ते यान्तो विद्याधरा दिवि ॥३॥
निर्दयाः पापसंहारे, निर्दाक्षिण्याः स्वजीविते ।
लुब्धा यशसि, दोषेभ्यो भीरवो यत्र पूरुषाः ॥ ४ ॥
मणिगेहाङ्गणोद्भूतप्रभाजालजले स्थिताः ।
यत्राऽब्जिन्य इवाऽऽभान्ति स्त्रियः स्मेरमुखाम्बुजाः ॥५॥
तत्रोज्ज्वलयशश्चन्द्रधवलीकृतदिग्मुखः ।
भूभृद्दलनवज्राभो वज्रबाहुर्महीपतिः ॥६॥
अकलङ्को दृढः शुद्धपरिवारो गुणान्वितः ।
यः सद्दक्षः स्वखड्गेन बद्धमुष्टिः पुनर्नहि ॥७॥
औदार्य-धैर्य-गाम्भीर्य-स्थैर्यप्रभृतयो गुणाः ।
यस्याऽन्योऽन्यमभूष्यन्तोपवनस्येव पादपाः ॥८॥
रूप-लावण्य-माधुर्य-लज्जा-विनयशालिनी ।
नामतो रूपतोऽप्यासीत् तस्य पत्नी सुदर्शना ॥ ९ ॥
चित्रं यदस्य महिषी साऽभवन्नृपतेः प्रिया ।
तदारभ्य मुमोचैष विशेषात् खलसंग्रहम् ॥ १० ॥
अन्योऽन्याऽबाधया तस्य पुरुषार्थत्रयीजुषः ।

चतुर्थोऽपि पुमर्थोऽभून्नृपतेः सङ्गमोत्सुकः ॥ ११ ॥
अथ ग्रैवेयकात् काले वज्रनाभाऽमरश्च्युतः ।
सुदर्शना कुक्षिशुक्तौ स मुक्तेवाऽवतीर्णवान् ॥ १२ ॥
ततो ददर्श सा राज्ञी निशान्ते शयनस्थिता ।
चतुर्दश महास्वप्नांश्चक्रभृज्जन्मसूचकान् ॥ १३ ॥
राज्ञा विचारितैः स्वप्नैः सा हृष्टाऽगमयद् दिनान् ।
दिवाकरमिव प्राची समयेऽसूत चात्मजम् ॥ १४ ॥
कृत्वा जन्मोत्सवं भूयोऽप्युत्सवेन महीयसा ।
सुवर्णबाहुरित्याख्यां तस्य चक्रे नराधिपः ॥ १५ ॥
अङ्कादङ्कसमारोपादङ्गसङ्गमलालसाः ।
सर्वे राजान एवाऽस्य बभूवुर्बालधारकाः ॥ १६ ॥
समीन-मकराद्यङ्के स्फुरन्नखमणिप्रभे ।
अङ्गुलीवेत्रवल्लीके पाटलाधरविद्रुमे ॥ १७ ॥
लावण्यजलसंपूर्णे गम्भीरे स्वयमेव हि ।
समुद्रसदृशे तस्मिन् कला नद्य इवाऽविशन् ॥१८॥
( युग्मम् )
बाल्यमुल्लङ्घ्य स प्रोच्चैरारूढो यौवनं नभः ।
चेतःसरसि नो कस्य भानुवत् प्रतिबिम्बितः ? ॥१९॥
भवोद्विग्नः क्षमाधीशः क्षमं ज्ञात्वा च तं सुतम् ।
उपरुध्य न्यधाद् राज्ये प्रव्रज्यां जगृहे स्वयम् ॥२०॥
शेषोपस्करनिर्मुक्ता क्षमाखण्ड-शमाज्ययुक् ।
धन्यैरेवाऽऽर्हती दीक्षा क्षैरेयी प्रोज्ज्वलाऽऽप्यते ॥२१॥
स्वीकृताशावधूकर्णपूरीकृतयशोऽम्बुजः ।
सुवर्णबाहुरुद्बाहुः शशास क्ष्मां सुखैकभूः ॥२२॥
अन्यदा प्राभृताऽऽयातमश्वमेकं ददर्श सः ।
तुच्छश्रवसमप्युच्चैःश्रवोलक्षणलक्षितम् ॥२३॥

---

१ कर्णपूर कुण्डलम् । २ आजानुबाहुः । ३ तुच्छकर्णम् ।

तमारुह्य वृतो भूपैः क्रीडया निर्ययौ पुरात् ।
जघान कशया चाश्वं वेगज्ञानाय भूपतिः ॥२४॥
ततस्तथा प्लुतो वेगाद् यथाऽऽकृष्टोऽपि वल्गया ।
सोऽश्वः प्रतीपशिक्षत्वादधाविष्टाऽधिकाधिकम् ॥२५॥
चक्रारूढमिवाऽमंस्त तदा भूवलयं नृपः ।
महीरुहानपि जवादायात इव संमुखान् ॥२६॥
समग्रपरिवारस्याऽदृश्यीकृत्य क्षणाद् नृपः ।
निन्ये तेनाऽटवीं जीवः कर्मणेव भवान्तरम् ॥२७॥
तत्र दृष्ट्वा सरः स्वच्छजलं तृष्णार्तिशान्तये ।
तस्थावश्वः स योगीव मुञ्चन्नापूरितानिलम् ॥२८॥
उत्तीर्य राज्ञाऽप्युत्तार्य पर्याणं स्नानपूर्वकम् ।
अश्वोऽम्भः पायितः सन्तो दुःखेऽप्याश्रितवत्सलाः ॥२९॥
स्नात्वा पीत्वा स्वयं चाऽऽपः क्षणं विश्रम्य पार्थिवः ।
वलितः पुरतोऽपश्यद् रम्यमेकं तपोवनम् ॥ ३० ॥
भृङ्गकण्डूयनं पृष्ठे कुर्वद्भिर्जरठैर्मृगैः ।
बालैश्चाङ्कगतैर्दृष्ट्वा मुनींस्तत्राऽतुषद् नृपः ॥ ३१ ॥
स्फुरितं दक्षिणं चक्षुस्तदिष्टाऽऽशंसि चिन्तयन् ।
अतीवमुदितो राजा प्रविवेश तपोवनम् ॥ ३२ ॥
गच्छंश्च पुरतोऽपश्यद् दक्षिणेन सखीयुताम् ।
लतासेकं पयस्कुम्भैः कुर्वतीं मुनिकन्यकाम् ॥[1] ३३ ॥
तस्या विश्वाऽतिगं रूपं दृष्ट्वा दध्यौ नृपो ननु ।
केयं जित्वा द्विधा रम्भां[2] सौकुमार्यं विजृम्भते ? ॥ ३४ ॥
नाग-विद्याधरा-ऽमर्त्यस्त्रीभ्रमं यत् करोत्यसौ ।
तन्मन्ये विधिना तासां कृतोऽयं सारसंग्रहः ॥ ३५ ॥
ततश्च वृक्षान्तरितो यावदेवं व्यचिन्तयत् ।
माधवीमण्डपं तावत् सह सख्या विवेश सा ॥ ३६ ॥

---

१ द्वितियाबहुवचनम् । २ कदली देवाङ्गना च ।

दृढबद्धं श्लथीकृत्य वल्कलं तत्र बालिका ।
बकुलं सेक्तुमारेभे बकुलामोदभृन्मुखी ॥ ३७ ॥
भूयोऽप्यचिन्तयद् राजाऽमुष्याः कमलचक्षुषः ।
क्वेदं रूपं क्व कर्मेदं प्राकृतस्त्रीजनोचितम् ? ॥ ३८ ॥
न च तापसकन्येयं यदस्यां रागि मे मनः ।
काऽपि भूपालपुत्रीयं कुतोऽप्यत्रागता ध्रुवम् ॥ ३९ ॥
अत्रान्तरे मुखे तस्याः पद्मभ्रान्त्या मधुव्रतः[1] ।
पपात जनयंस्त्रासं धुन्वत्याः पाणिपल्लवौ ॥ ४० ॥
कथञ्चिन्नाऽपयात्यस्मिन् सखीमुद्दिश्य साऽवदत् ।
वैरिणो भ्रमरादस्माद् रक्ष रक्ष सहायिनि ! ॥ ४१ ॥
सख्यूचे रक्षितुं कोऽन्यः क्षमस्त्वां स्वर्णबाहुतः ।
लीलयाऽवति यः पृथ्वीं तमेवाऽनुसर प्रभुम् ॥ ४२ ॥
को नाम त्वामुपद्रोता पौत्युर्वीं[2] वज्रबाहुजे ।
इति ब्रुवंस्तदा दक्षः प्रकटोऽभूत् तयोर्नृपः ॥ ४३ ॥
पुरस्तं वीक्ष्य सहसा संभ्रान्ते ते बभूवतुः ।
नोचितं चक्रतुः किञ्चिन्न च किञ्चिद् जजल्पतुः ॥४४॥
भीते इव नृपो जानंस्ते भूयोऽपि ह्यभाषत ।
निष्प्रत्यूहं तपो भद्रे ! कच्चिन्निर्वहतीह वाम्[3] ? ॥ ४५ ॥
धैर्यमालम्ब्य सख्यूचे स्वर्णबाहौ महीपतौ ।
तापसानां तपोविघ्नमत्र कः कर्तुमीश्वरः ? ॥ ४६ ॥
अधुना किन्त्वियं बाला पद्मभ्रान्त्या मुखेऽलिना ।
दश्यमाना कातराक्षी रक्ष रक्षेत्यभाषत ॥ ४७ ॥
तरुमूले तया दत्तासने राजा निवेश्य च ।
आपृच्छयत स्वच्छधिया गिरा पीयूषकल्पया ॥ ४८ ॥
लक्ष्यसे त्वमसामान्यो मूर्त्याऽपि निरवद्यया ।
तथाऽप्याख्याहि कोऽसि त्वं देवो विद्याधरोऽथवा ? ॥४९॥

---

१ भ्रमर. । २ सहस्यन्तिम् । ३ युवयोः ।

आत्मानमात्मना ख्यातुमक्षमः क्ष्मापतिर्जगौ ।
अहमस्मि महीभर्तुः स्वर्णबाहोः परिग्रहे ॥ ५० ॥
तदादेशादिहागच्छमाश्रमे विघ्नकारिणाम् ।
निवारणकृते येन राजरक्षं तपोवनम् ॥ ५१ ॥
अयं स एव राजेति ध्यायन्तीं तां सखीं नृपः ।
उवाच किमियं बाला क्लिश्यते कर्मणाऽधुना ? ॥ ५२ ॥
अथ निःश्वस्य साऽवोचत् इयं रत्नपुरेशितुः ।
खेचरेन्द्रस्य पद्माऽऽख्या कन्या रत्नावलीसुता ॥५३॥
पिताऽस्यां जातमात्रायां विपेदे तत्पदार्थिनः ।
सुता युयुधिरेऽन्योऽन्यं तत्राऽभूद् राजविड्वरः[1] ॥५४॥
रत्नावली गृहीत्वेमां बालां स्वभ्रातुराश्रमे ।
गालवस्य कुलपतेर्निकेतनमुपागमत् ॥ ५५ ॥
अन्यदा साधुरेकोऽत्र दिव्यज्ञानी समागतः ।
पद्मायाः कः पतिर्भावीत्यपृच्छद् गालवश्च तम् ? ॥५६॥
मुनिरप्याख्यदश्वापहृतोऽत्रागतवानिमाम् ।
चक्रवर्ती स्वर्णबाहुर्बालिकां परिणेष्यति ॥ ५७ ॥
दध्यौ राजाऽप्यकस्मान्मेऽश्वापहारो बभूव यत् ।
तदेतया संघटनोपायं खलु विधिर्व्यधात् ॥ ५८ ॥
पप्रच्छ चाऽधुना कुत्र भद्रे ! कुलपतिर्वद ।
तद्दर्शनेन कुर्वेऽद्य चित्तमानन्दमेदुरम् ॥५९॥
सोऽप्याचख्यौ विहर्तुं तमन्यतः प्रस्थितं मुनिम् ।
अनुगन्तुं गतोऽस्त्यद्य तं नमस्कृत्य चैष्यति ॥ ६० ॥
पद्मामानय हे ! नन्दे ! कुलपत्यागमक्षणः ।
वर्ततेऽसाविति तदा काऽप्याख्यद् वृद्धतापसी ॥६१॥
राजाऽप्यश्वखुरवज्ञातसैन्यागमोऽवदत् ।
यातं युवामहं सैन्यमाश्रमादन्यतो नये ॥ ६२ ॥

---

१ राज्यक्लेश ।

पद्माऽथ नन्दया निन्ये ततः स्थानात् कथञ्चन ।
पश्यन्ती वलितग्रीवं स्वर्णबाहुं महीपतिम् ॥६३॥
नन्दया कथिते स्वर्णबाहुराजाऽऽगमे मुदा ।
ऊचे कुलपतिर्जैनमुनेर्ज्ञानं महाद्भुतम् ॥ ६४ ॥
ममाऽतिथिरयं तावद् वर्णाश्रमगुरुस्तथा ।
पद्मायाश्च वरो भावी तत् पूज्यः सर्वथा नृपः ॥६५॥
ततो रत्नावली-पद्मा-नन्दाभिः सहितो ययौ ।
गालवो भूभुजः पार्श्वे राज्ञा चोत्थाय सत्कृतः ॥६६॥
बभाषे चाऽहमेवैष्यं[1] किं यूयं स्वयमागता ? ।
स प्राह किं न नः पूज्यो वर्णाश्रमगुरुर्भवान् ? ॥६७॥
मज्जामेयी च पद्माऽसौ पत्नी ते ज्ञानिनोदिता ।
अस्याः पुण्यैस्त्वमायासीस्तदिमामुद्वहाऽधुना ॥६८॥
इत्युक्तो मुनिना तेन पद्मां पद्मामिवाऽपराम् ।
गान्धर्वेण विवाहेन परिणिन्ये स भूपतिः ॥६९॥
तदा पद्मोत्तरो भ्राता पद्मायाः परमातृजः ।
सम्प्राभृतः खेचरेशो विमानैश्छादयन्नभः ॥७०॥
तं प्रदेशमुपेयाथ रत्नावल्या निवेदितः ।
स्वर्णबाहुं नमस्कृत्य जगादैवं कृताञ्जलिः ॥७१॥ (युग्मम्)
त्वद्वृत्तान्तमिमं ज्ञात्वा देव ! त्वामेव सेवितुम् ।
इहाऽगच्छं नराधीश ! तदादेशं प्रयच्छ मे ॥ ७२ ॥
वैताढ्याद्रौ प्रतापाढ्य ! समागच्छ च मे पुरे ।
तत्र विद्याधरैश्वर्यलक्ष्मीरुत्कण्ठिताऽस्ति ते ॥ ७३ ॥
राजाऽपि तद्वचस्तस्योपरोधादन्वमन्यत ।
स मेऽस्तु विषमेऽप्यर्थे सन्तः प्रणयिवत्सलाः ॥ ७४ ॥
अपृच्छद् गालवं रत्नावलीं च विनतो नृपः ।
पद्मोत्तरोपनीतं च विमानमधिरूढवान् ॥ ७५ ॥

---
१ इण्क् गतौ ।

पद्माऽपि जननीं नत्वा बाष्परुद्धगलेक्षणा ।
भविष्यत्तद्वियोगातिदुःखितेदमभाषत ॥ ७६ ॥
पत्या सह गमिष्यामि मातर्नातः परं मम ।
स्थानमन्यत्र तद् ब्रूहि द्रक्ष्यामि त्वां पुनः कदा ? ॥७७॥
भ्रातृतुल्यानिमान् वृक्षान् मृगीः प्रियसखीसमाः ।
मुनिकन्याश्च स्वसृवदहं त्यक्ष्यामि ही ! कथम् ? ॥ ७८ ॥
असौ गर्जति पर्जन्ये षड्जस्वरमनोज्ञवाक् ।
कलापी ताण्डवकलां कस्याग्रे दर्शयिष्यति ? ॥ ७९ ॥
बकुला-ऽशोक-माकन्दान् कः पाता मां विना पयः ? ।
शिशूनिवाह्वानपरांश्चलपल्लवपाणिभिः ॥ ८० ॥
रत्नावल्यप्युवाचैव वत्से ! त्वं चक्रवर्तिनः ।
पत्न्यऽभूर्विस्मर ततो धिग् वृत्तिं वनवासजाम् ॥ ८१ ॥
खेचरेन्द्रसुते ! भर्ताऽनुगम्योऽसौ त्वयाऽधुना ।
त्वं भविष्यसि देव्यस्य किं विषादो मुदः क्षणे ? ॥ ८२ ॥
इत्युक्त्वा मूर्ध्नि चुम्बित्वा समालिङ्ग्याऽथ निर्भरम् ।
अङ्कमारोप्य मुक्तास्राऽन्वशाद् रत्नावलीति ताम् ॥ ८३ ॥
गता पतिगृहं वत्से ! गुरूणां विनता भवेः ।
कुर्यास्त्वं भोजनं भुक्ते, स्वापं सुप्ते च भर्तरि ॥ ८४ ॥
सरोषे कथमप्यस्मिन् प्राञ्जलाऽऽस्या विशेषतः ।
पतिभक्ते सहर्षा च रुष्टेव पतिविद्विषि ॥ ८५ ॥
पिकीव मधुरं ब्रूयाः स्त्रीणां वत्से ! पतिष्विदम् ।
मूलमन्त्रादि पापेन मुक्तं कार्मणमुत्तमम् ॥ ८६ ॥
नीरङ्गीछन्नवदना नित्यं नीचैर्विलोचना ।
वत्से ! कुमुदिनीव त्वमसूर्यपश्यतां श्रये ॥ ८७ ॥
चक्रिपत्नि ! सपत्नीषु सापत्न्यं दधतीष्वपि ।
त्वया प्राञ्जलया भाव्यं महत्त्वस्योचितं ह्यदः ॥ ८८ ॥

शासूक् अनुशिष्टौ ।

सापत्न्यान्यप्यपत्यानि स्वाङ्गजानिव लालयेः ।
कदापि मा कृथा गर्वं चक्रिपत्नीत्वसम्भवम् ॥ ८९ ॥
सन्धये सगुणा शूची वक्रा च्छेदाय कर्तरी ।
अतो विमुच्य वक्रत्वं गुणानेव समाश्रयेः ॥ ९० ॥
इयं त्वदेकचित्ता च दत्ता नन्दोत्तरा सखी ।
सर्वकार्येषु ते सज्जा धार्यं दुःखं न तन्वपि ॥ ९१ ॥
इति शिक्षां प्रगृह्याऽम्बां कुलपतिप्रमुखानपि ।
नत्वाऽऽपृच्छ्य च पद्माऽप्यारूढा यानं पतिश्रितम् ॥ ९२
स्वर्णबाहुरपि प्राप्य भृत्यं पद्मोत्तरं क्षणात् ।
वैताढ्याद्रौ गतः श्रेणीद्वयं चक्रे वशंवदम् ॥ ९३ ॥
खेचरैः खेचरैश्वर्येऽभिषिक्तोऽनेककन्यकाः ।
खेचराणामुपायंस्त कियत् तस्थौ च तत्र सः ॥ ९४ ॥
गुणैः स्थानच्युतस्याऽपि जायते महिमा महान् ।
अपि भ्रष्टं तरोः पुष्पं न कैः शिरसि धार्यते ? ॥ ९५ ॥
अथ पद्मादिपत्नीभिः समस्ताभिः समन्वितः ।
ययौ बहुपरीवारः स्वर्णबाहुर्निजं पुरम् ॥ ९६ ॥
तत्र तस्याऽतिशक्रस्य[1] विधिना शासतो महीम् ।
चतुर्दश महारत्नान्यभूवन् क्रमशो यथा ॥९७॥
चक्र-चर्म-च्छत्र-दण्डाः कृपाणः काकिणिर्मणिः ।
गजाऽश्व-गृह-सेनानी-पुरोधः-स्थपति-स्त्रियः ॥९८॥
महर्ध्या विहिते राज्ञा तदष्टाहमहोत्सवे ।
चक्रमायुधशालातः पूर्वस्यां प्रस्थितं दिशि ॥९९॥
तद् नृपोऽनुव्रजन्नब्धौ तीर्थमासाद्य मागधम् ।
कृताष्टमो रथस्थोऽनुतीर्थेशं बाणमक्षिपत् ॥१००॥
मागधेशः सभासीनस्तं दृष्ट्वा पतितं पुरः ।
अरे ! कस्य यमः क्रुद्धो ब्रुवन्निति रुषाऽग्रहीत् ॥१०१॥

१ शक्रमतिक्रान्तस्य ।